हृदयेन दूयमानेन सभ्यान् साष्टाङ्गं प्रणमेत्। ततस्तैः किं ते कार्य्यमिति पृष्टे पर्षदग्रे गोवृषयोः प्रत्येकं प्रत्याम्नायत्वेन यथाशक्ति स्वर्णरौप्ययोर्निष्कं तदर्द्धं तदर्द्धं वा निधाय बालनाशादिजन्यदुःखेनातिपीड़ितस्य मे चिकीर्षिते विष्णुश्राद्धादावधिकारसिद्ध्यर्थं प्राचीनापुत्त्वादिनिदानदुरितनिरासार्थञ्च प्रायश्चित्तमुपदिश्य मां*मनुगृह्णन्तु भवन्त इति पुनः प्रणमेत्।

ततस्ते तमुत्थाप्य तस्य शरीरद्रव्यादिशक्तिमुत्तममध्यमादिपक्षांश्च विचार्य्य अस्मिन् पक्षे अयं शक्त इति निश्चित्य पुस्तकवाचनपूर्व्वकं कथयेयुः। स च पुस्तकपूजां चन्दनपुष्पादिभिर्विधाय सभ्यपूजाञ्च कृत्वा निबन्धपूजात्वेन किञ्चिद्यथाशक्ति द्रव्यं निधाय कृताञ्जलिपुटस्तिष्ठन् नम्रस्तदुपदिष्टं शृणुयात्। सभ्याश्च षड़ब्दत्र्यब्दसार्द्धैकाब्दचान्द्रायणद्वयैकचान्द्रायणेषु कञ्चन पक्षं शक्त्यनुसारेणोपदिशेयुः। स चोपदेश एकेन पर्षद्वृद्धेन सर्व्वानुमत्या कार्य्यः। इदन्ते प्रायश्चित्तं साङ्गेऽस्मिन्ननुष्ठिते कृतार्थो भविष्यसीति प्रत्याम्नायांश्च होमगवादौ यथाशक्ति कल्पयेयुः।

तत्र गायत्र्ययुतजपे तिलहोमसहस्रे द्वादशब्राह्मणभोजने तीर्थयोजनयात्रायाम् एकगोदाने सुवर्णरूप्यनिष्कतदर्द्धतदर्द्धानां शक्त्या दाने शुष्ककेशस्य द्वादशस्नाने द्वादशब्राह्मणानामामान्नदानादौ† एकैकः प्राजापत्यः। तत्र शक्तस्य द्रव्याम्नाययो‡र्द्वि-

---

* उपदिश्य मामित्यत्र उपदिश्यतामिति ख-पुस्तके पाठः।

† आमान्नदानादावित्यत्र अन्नदानादाविति ग-पुस्तके पाठः।

‡ द्रव्याम्नाययोरित्यत्र द्रव्यामान्नयोरिति ख-पुस्तके पाठः।

अथास्य पद्धतिः ।

लक्षहोमे अयुतहोमादेतावान् विशेषः । सङ्कल्पादि पूर्ब्ववत् । कुण्डन्तु समन्ततो यजमानस्य द्विहस्तविस्तृतं कार्य्यम् । तच्च क्षेत्रफलेन चतुर्हस्तं भवति । तस्मेखलास्तु क्रमेण द्विविचतुरङ्गुलोच्छ्रायाः । तावद्विस्ताराश्च तिस्रः कार्य्याः । वेदिस्तु तद्देशान्यां मूर्द्ध्नि षट्त्रिंशदङ्गुलविस्तारा चतुरस्रा प्रागुदक्प्रवणा वप्रत्रयोपरि दशाङ्गुलोच्चा कार्य्या । तस्याः प्रथमो वप्रो द्वादशाङ्गुलोच्छ्रायः द्वितीयतृतीयौ त्र्यङ्गुलोच्छ्रायौ त्रयोऽपि द्व्यङ्गुलविस्ताराः कार्य्याः । एवञ्च वप्रैः सह अष्टादशाङ्गुलोच्छ्रिता भवति । तत्र देवतावाहनकाले प्रागुक्ताः सूर्य्याद्या द्वात्रिंशद्देवता आवाह्य सर्व्वेषामुत्तरतः ।

सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः ।

विषपापहरो नित्यमतः शान्तिं प्रयच्छ मे ॥

इति पुराणमन्त्रेण गरुडमावाहयेत् । पूजादि कलसस्थापनञ्च पूर्व्ववत् कार्य्यम् ।

अन्वाधाने पूर्व्वोक्तप्रधानदेवताकीर्त्तनान्ते गरुत्मानधिकः कीर्त्तनीयः । निर्व्वापेऽपि तदर्थमधिको निर्व्वापः कार्य्यः । प्रोक्षणेऽप्येवम् । त्रयस्त्रिंशत्स्थाल्यो दशैका वा स्थाली ।

पूर्व्वोक्तवदेव समिदाज्यचरुपकल्पितद्रव्यैर्दशाहुतिहोमः कार्य्यः । प्रोक्षणे सर्व्वेषां गरुत्मतश्च पूर्व्वोदिता मन्त्राः । गरुत्म-

# विधानपारिजातः

स्मृतिनिबन्धः

काण्वशाखीय-श्रीनागदेवभट्टात्मज-

## श्रीमदनन्तभट्ट-

विरचितः

कलिकातास्थ-संस्कृतविद्यालयाध्यापकेन

श्रीताराप्रसन्न-विद्यारत्नेन

सम्पादितः

पार्क वर्त्मनि सप्तपञ्चाशत् संख्याक-भवन प्रतिष्ठितया

आसियाटिक-समित्या

प्रकाशितश्च

प्रथमः खण्डः

कलिकाताराजधान्यां

गिरिश विद्यारत्न वर्त्मनि चतुस्त्रिंश-सङ्ख्याक सद्मनि

गिरिश-विद्यारत्न-यन्त्रे

श्रीशशिभूषण कविरत्न भट्टाचार्य्येण मुद्रितः

१९०५

BIBLIOTHECA INDICA

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, NOS. 1034, 1046, 1057, 1066, 1082,
1096, 1107 and 1122.



# THE VIDHĀNA-PĀRIJĀTA

## A SYSTEM OF HINDU LAW

BY

## ANANTABHAṬṬA.

EDITED BY

PAṆḌITA TĀRĀPRASANNA VIDYĀRATNA

*Professor, Sanskrit College, Calcutta.*

VOLUME I.

CALCUTTA:

PRINTED BY SAŚIBHŪṢAṆA KṚTIRATNA BHAṬṬĀCĀRYA
AT THE GIRIŚA-VIDYĀRATNA PRESS,
24, Giriśa-Vidyāratna's Lane;

AND PUBLISHED BY THE ASIATIC SOCIETY OF BENGAL,
57, PARK STREET.

1905.

# विज्ञापनम् ।

खञ्जोऽपि यस्य कृपया गतिमेति सद्यो
मूकोऽपि वाग्मिवरतां बधिरोऽपि कर्णौ ।
ज्ञातं विधानदिविषद्द्रुमतत्त्वजातं
तं देवमीशमनघं प्रणतोऽस्मि भक्त्या ॥

विधानपारिजातोऽयं स्मृतिनिबन्धानां प्रायशः शीर्षस्थान-मधिकरोतीति पठितैतन्निबन्धानां सर्व्वेषामेव मतिरुदेष्यतीति सम्भावयामि । पारिजातपुष्पाणां स्तवकरूपत्वात्तन्नाम्नैवास्य परिच्छेदसंज्ञा कृता । सन्ति चात्र पञ्च स्तवकाः, तत्र—

"प्रथमे स्तवके स्वस्तिवाचादिकमुच्यते ।
द्वितीये दुष्टऋक्षादिजातशान्तिकर्मोर्य्यते ॥
तृतीये गुरुशान्त्यादि व्रतबन्धविवाहयोः ।
प्रकीर्णानि विधानानि कीर्त्त्यन्तेऽत्र चतुर्थके ।
मरणस्य विधानानि कीर्त्त्यन्ते पञ्चमेऽत्र तु ॥"

इत्यनेन सङ्ग्रहेणैव विषयसूचिः सङ्क्षेपेण प्रदर्शिता ।

प्रसिद्धसङ्ग्रहकारेभ्यो रघुनन्दनादिभ्योऽधस्तनत्वेन अस्य वचनानि न तेषां केनापि प्रमाणतया उद्धृतानि । यद्ययं तेभ्यः प्राचीनतमोऽभविष्यत्, तदा तैः सर्व्वैरेव अस्य वचनानि प्रमाणतया बाहुल्येन उद्धृतान्यभविष्यन् । न केवलमयमेवास्य कृतिः; दानपारिजातः, शान्तिपारिजातः, आह्निकपारिजातः, दानसागरः, कुण्डमण्डपविधानम्, कुण्डमण्डपहोमविधानम्, ग्रह-

यज्ञविधानम्, कथामृतनिधिः (पर्वोपाख्यानसङ्ग्रह), एतान्यप्यस्य कृत ... न्ति। यद्यप्येतानि वङ्गदेशे विरलप्रचाराणि, तथाप्येतेषामुपयोगित्वं प्राधान्यञ्च देशान्तरेष्वनुभूततया विराजत इति दृष्टैतत्करेवश्यमङ्गीकार्य्यम्।

[...]न्थः पुनरयं विस्तीर्णतमः, बहुप्रकरणसमन्वितश्च। अत्र यावन्ति प्रकरणानि सन्ति, तानि सर्व्वाण्येव विस्तीर्णानि सयुक्तिकं सप्रमाणञ्च मीमांसितानि। श्राद्धयज्ञप्रकरणन्तु विशेषतो विस्तीर्णतमम्, न क्वापि एतादृशमेतत्प्रकरणं दृश्यते। इत्यादिगुणबाहुल्यात्तु प्रायस्यास्य संस्करणमवश्यकर्त्तव्यमिति मन्यमानेन विलुप्तप्रायप्रत्नपुस्तकनिवहसंस्करणोत्सर्गीकृतजीवनेन शास्त्राम्बुधिमन्थनमन्दरायमाणधीरधिषणेन कलिकातास्थराजकीयसंस्कृतविद्यालयाध्यक्षेण महामहोपाध्यायोपाधिभाजा श्रीमता हरप्रसादशास्त्रिणा संस्करणभारोऽस्य मयि न्यधायि, प्रदायिषत च चत्वार्य्यादर्शपुस्तकानि कलिकातास्थराजकीयसंस्कृतविद्यालयात् आसियाटिक सोसाइटीसमितेश्च। तेषां द्वे असम्पूर्णे ग-वर्णेन चिह्निते, सम्पूर्णे च क ख वर्णाभ्यां चिह्निते। तत्र क-चिह्नितं संस्कृतविद्यालयपुस्तकं, ख चिह्नितं सोसाइटीपुस्तकञ्च। यत्र यत्र पाठवैषम्यं दृष्टं, तत्र प्रायशः सर्व्वत्रैव अधिकपुस्तकधृतः पाठो मूले (उपरि) न्यवेशि, इतरश्चाधस्तात्। यत्र यत्र च सङ्गृहीता वैदिकानां पौराणादीनाञ्च मन्त्राणां पादमात्रं प्रतीकमात्रं वोद्धृतं, तत्र तत्र प्रायशो यथाशक्ति तत्तद्देभ्यः पुराणादिभ्यश्च संगृह्य सम्पूर्णा एव ते अधस्तान्निवेशिता मया। अङ्किताश्च

स्ततमण्डलसूक्तगणादिसंख्याङ्कनैः । यद्यपि वैदिकमन्त्राणां तत्तच्छाखाभेदाद्बहवो भेदा उपलभ्यन्ते, तथापि तेषां सर्व्वेषा-मुद्धरणं ग्रन्थकलेवरविस्तृतिहेतुरनतिप्रयोजनकञ्चेति विविच्य एकरूपा एव ते उद्धृताः ।। तत्तद्भेदाश्च तत्तच्छाखिभिस्तत्तत्-पद्धतिभ्यो ज्ञातव्याः ।

एवं वर्षद्वयं यावत् संस्करणेन समाप्तिं गतमसम्पूर्णमादर्श-पुस्तकद्वयं वीक्ष्य संस्करणकार्य्यस्यासौकर्य्यमुपलब्धवता मया पुनरपि आदर्शपुस्तकान्तरदानाय अनुरुद्धाः शास्त्रिमहोदयाः मत्प्रार्थनां सङ्गतां मन्यमानाः पुनरपि पञ्चविंशत्यधिकेन मुद्रा-शतेन सम्पूर्णमेकमादर्शपुस्तकं वाराणस्याः क्रीत्वा मम समर्पित-वन्तः । पुस्तकमिदं च वर्णेन किञ्चितं विशुद्धतमञ्च सर्व्वेषाम् ।

सङ्ग्रहीता त्वस्य निबन्धस्य अनन्तभट्टः कस्मिन् समये कतमं देशमलञ्चकारेति निर्णयस्य नास्त्युपायान्तरम् । परन्तु अस्य निबन्धस्य पञ्चमस्तवकीयौ —

श्रीमत्काण्वकुलाब्धिशीतकिरणो विद्याकलानां निधिः
श्रीमद्विष्णुपदाश्रितः स्मरगुरुर्विद्वच्चकोरप्रियः ।
अङ्कुभट्ट इति ह्यभूत् पृथुयशास्तस्यात्मजोऽभून्महां-
श्चन्द्राच्चन्द्रकलेव शुभ्रगुणभृच्छ्रीनागदेवाभिधः ॥
तस्माच्छ्रीमदनन्त आविरभवद्यज्ज्ञानभक्त्यादिके-
ष्वन्तो नास्ति गुणेषु यस्य च हरिः प्रेष्ठो वरीवृत्यते ।
तेनायं रचितो विधानदिविषद्वृक्षोऽर्थिसर्व्वप्रदः
शाके द्व्यष्टषडेकलाङ्कविमिते काश्यामगात् पूर्णताम् ॥

श्रीकाविमावालोक्य एवं निर्णीयते यदयं जह्नुभट्टसूनोर्नारायणदेव-
भट्टस्यात्मजः कारवशाखीयः (१६८२) शाकीत्यधिकषोडशशततम-
शकाब्दीयो वाराणसीवास्तव्यश्चेति ।

निबन्धस्यास्य संस्कारभारोऽयमतिदुर्वहोऽपि यत् समूढ़ो
मया, तत्र प्रभुसम्भावनैव हेतुत्वेन प्रतीयते ।

तथाच कालिदासः—

सिध्यन्ति कर्म्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम् ।
किं प्राभविष्यदरुणस्तमसां वधाय
तञ्चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥

अणुरप्युपकारः स्यात्संस्कृत्या चेन्मामानया ।
तदा सफलतां यायाच्छ्रमो मे संस्कृतावयम् ॥

भ्रमात्प्रमादादथवाज्ञताया
यदत्र किञ्चित्स्खलितं ममाभूत् ।
विमृश्यतां शुद्धहृदो दयार्द्री-
नयन्तु तद्विज्ञवराः समस्तम् ॥

मूलाजोडसंस्कृतविद्यालयाध्यापकचरस्य कलिकातास्थ-
राजकीयसंस्कृतविद्यालयाध्यापकानामन्यतमस्य
भट्टपल्लीवास्तव्यस्य वशिष्ठवंशकरीरस्य
विद्यारत्नोपाधिकस्य विनीतस्य
श्रीताराप्रसन्नशर्म्मणः ।

विधानपारिजातस्य प्रथमखण्डे

## धृतानामृषीणां संग्रहकाराणाञ्च

### अकारादिवर्णानुक्रमेण नामनिर्घण्टः ।




### अ

अगस्त्यः ७३८,१४ । ७४०,१२ ।

अत्रिः ४८७,८ । ५०१,१ । ७६८,१८ ।

### आ

आपस्तम्बः ४६८,१ । ४७०,१७ । ४८७,१६ । ४९५,४ ।
५००,१५ ।

आश्वलायनः ४५४,१२ । ४९२,५,१२ । ५२५,११ ।

### उ

उशनाः ५३,१४ । ५३०,१५ ।

### क

कश्यपः ४८,८ । ५२,२ । ५३,१ । २४०,१२ । ७१५,२ ।

कात्यायनः ५०,१८ । ४३०,१२ । ४८०,१६ । ४९५,१७ ।
४९९,४ । ५११,२ । ५१३,१५ । ५१७,१ । ७२२,१२ ।
७२५,७ । ७३३,१५ । ७६२,२० ।

कात्यायनिः ७५७,८ ।

कार्ष्णाजिनिः ९७,७ । २६७ १६ । ५१५,५ । ७२४,१८ ।

काश्यपः ४९१,१ । ६८६,१ ।

कुक्कुटाचार्य्यः ८६१,७ ।

## ग

गर्गः २४४,८ । २४५,३ । ३०८,१९ । ३११,७ । ३२२,१४ । ३२३,१ । ३२९,५ । ४०१,१९ । ४२२,२ । ४४२,१६ । ४५१,२० । ४६१,१० । ४६३,१३ । ४७१,६ । ४७२,६ । ४७५,१२ । ४७८,११ । ४७९,१९ । ५०७,११ । ५१४,१ । ७२३,२० । ७२४,२१ । ७२६,१० । ७३०,७ । ७३३,१८ । ७४२,१३ । ७४३,१५ । ७४४,२ ।

गार्ग्यः ५१०,१६ ।

गोभिलः ४७५,४ । ५१४,१० । ५१६,२० ।

गौतमः ५४,१४ । २४९,१४ । ४६७,२,१९ । ४६८,३,१४,१९ । ४९७,१३ । ५३०,१ । ५३३,२२ । ६९८,१२ । ७२७,१४ । ७३९,१९ ।

## च

चण्डेश्वरः ४७५,१७ ।

## ज

जातूकर्ण्यः ९५,११ । ९८,१ ।

जाबालः २७२,६,१६ ।

जैमिनिः ४८०,१७ । ४८१,३ ।

ज्योतिःपराशरः ५१३.१० ।

ज्योतिर्वसिष्ठः २४४,१४ ।

त

त्रिकाण्डमण्डनः ७१०,७ । ७६०,४ ।

द

दक्षः ४८,२ । ४६२,१३ । ५०८,३ ।

देवराजः २५०,४ ।

देवलः ५४,१५ । ४१४,१८ । ४४५,८ । ७२७,२१ । ७४०,४ ।

न

नारदः २६९,१७ । २७३,८ । ३२९,७ । ४०३,१७ । ४०५,१० । ४४६,२.११ । ४७३,४ । ४७४,३,७ । ४७६,६ । ४७७,८,२२ । ४७८,१५ । ५२६,७ । ५२९,५ । ६७६,१९ । ७२२,६ । ७२८,८ । ७३०,१० । ७३१,८ । ७३२,१२ । ७४१,२० । ७४२,१० । ७५३,१,१७ । ७५४,२१ । ७५६,९ । ७५७,४ । ७६१,१६ । ७६२,१३ । ७६३,२० ।

नृसिंहः ४७३,८ ।

नृसिंहप्रसादः ४७९,९ ।

प

पराशरः ४९,२० । ९८,९ । २५०,१ । ४८३,१५ । ४९०,१५ । ४९१,६ । ४९६,९ । ५२२,११ । ६९७,१९ । ७६३,८ ।

पाराशरः ४६७,१० । ५०८,१२ । ७२३,१ । ७२७,२ ।

पुलस्त्यः २४७,३ । २७१,३ ।

पैठीनसिः ६८४,५ । ६९८,१६ ।

प्रजापतिः ५२,१२ । २६८,२० ।

प्रवरसङ्ग्रहकारः ७०१,२० ।

प्रवरसूत्रकारः ७००,१२ ।

ब

बौधायनः ७१,१ । २३१,१३ । २७४,१६ । ४८९,१५ । ५१५,८ । ५२९,११ । ६२४,१६ । ६६७,९ । ६७०,६ । ६७६,८ । ६९५,१७ । ७०१,१३ । ७६०,१,९ ।

भ

भृगुः ४८३,१९ । ५११;६ । ७४४,१४ ।

म

मण्डनः ४८०,९ ।

मनुः ५४,६ । २६७.१० । ३०९,८ । ३१०,१४ । ४६६,२ । ४६८,२१ । ४७०,७ । ४७१,३ । ४८८,१६ । ४९१,१७ । ४९५,६ । ४९६,१७ । ४९८,३,१८ । ५००,२ । ५०१,४,१३ । ५०४,४,९ । ५०७,१७ । ५१२,६,११ । ५१९,४ । ५२१,४ । ६६५,१४ । ६६८,११ । ६६९,११ । ६७१,१३ । ६७३,१२ । ६७४,१२ । ६७६,१ । ६९०,५ । ६९१,१५ । ६९५,२ । ६९९,१,६ । ७२३,९,१६ । ७५८,१२ । ७५९,१७ ।

मरीचिः २७४,८ । ७३०,१ । ७५७,१२ ।

माण्डव्यः ७६५,१० ।

मार्कण्डेय: ३०६,१२ । ४४७,११,२० । ४९०,१० ।

मिहिर: ७१८,१७ ।

मुद्गल: २४९ १८ ।

मेधातिथि: ७६५,१३ ।

य

यज्ञपार्श्व: २७२,१९ ।

यम: ९५,१९ । ४६१,५ । ४९१,२० । ४९४,१२ । ४९७,३ । ५००,७ । ५०५,११ । ५२२,१८ ' ५२९,१७ । ५३०,६ । ६७५,८ । ७१६,६ । ७२७,७ । ७६३,११ ।

याज्ञवल्क्य: २३,१४ । ३०,१७ । ३३,४ । ५४,४ । ९२,३ । २४३,१ । ३०८,५ । ४७०,३ । ४८२,४,२० । ४९७,१६ । ५०५,१ । ५०७,१४ । ५१७,९ । ५१८,२ । ५२१,२ । ५२३,४ । ५३१,१४ । ५५१,१ । ६६४,१४ । ६८५,१६ । ७१७,४ । ७२२,३ । ७५६,१८ । ७५८,१५ । ७६३,१५ ।

योगीश्वर: ५०३,१७ ।

र

राघवभट्ट: २७३,१७ ।

राजमार्त्तण्ड: ४६३,८ । ४७२,९ । ४७४,१६ । ४७७,१९ ।

ल

लल्ल: ४७८,१९ । ७३९,८ । ७४०,९ । ७४२,१ । ७५५,५ ।

लिङ्गातु: ४६२,४ ।

लौगाक्षि: ४४६,७ । ६९९,१३ ।

## व


वराहमिहिरः ७३५,५ ।

वसिष्ठः १४,२ । ९७,१७ । २४९,११ । २६७,८ । ४२९,५ । ४४७,६ । ४६७,१६ । ४७३,११ । ४७४,१० । ४९५,२ । ५०४,११ । ५११,९ । ५१९,७ । ७२६,४ । ७२७,८,१७ । ७१४,७,१० । ७६०,१ । ७६३,५ ।

विश्वामित्रः २७१,१४ ।

विश्वकर्म्मा ६४६,१ ।

विष्णुः ४७०,९ । ४८८,१९ । ४९१,९ । ५००,१८ । ६७५,२० ।

वृद्धगार्ग्यः ३९९,५ । ४१२,१३ । ४१४,११ । ४८१,१५ ।

वृद्धगौतमः २३६,४ । ४९०,७ ।

वृद्धमनुः ५१०,२१ । ७२१,२ । ७५९,९ ।

वृद्धवसिष्ठः ३३३,१० । ७२४,९ । ७३२,१२ ।

वृद्धशौनकः ७६५,२ ।

वृद्धपराशरः १९२,११ । ५८२,१ । ५८४,१२ । ५८८,५ ।

वृद्धयमः ५०७,२ ।

वृद्धविष्णुः ४८५,६ । ६८९,४ ।

बृहस्पतिः ९५,१६ । २४२,१८ । २६९,२० । ३०८,२ । ४३१,७ । ४३७,४ । ४३८,१५ । ४४२,१३ । ४७१,१९ । ४७३,२१ । ४७६,२० । ४७७,११ । ४८०,१ । ४९४,२० । ५११,१८ । ६९५,८ । ७४०,१६ । ७४१,११ । ७४२,१६ । ७४३,६ ।

बैजवापः २६७,१६ । २६८,७ ।

व्यास: २४८,४,८ । २६८,३ । ३०६,५ । ४४३,१ । ४७५,७ ।
४८१,६ । ४६५,२० । ५१०,३ । ५१५,११ । ५१६,१,१७ ।
५१६,१६ । ५२२,१५ ।

## श

शङ्ख: २७३,६ । ४४५,११ । ४४६,६ । ४८३,८ ।
शातातप: ६४,६ । २०१,१० । ४८६,१ । ५०५,१४ । ५०७,२० ।
६७६,१६ । ६६१,१२ । ६६५,५ । ७२४,१४ ।
शालङ्कायन: ४४५,१४ ।
शौनक: ६७,१७ । ६७,१८ । २३६,६ । ४२६,५ । ४८१,६ ।
४८४,१ । ४८७,१८ । ५०६,१३ । ५३५,७ । ६५३,१० ।
६६६,५ । ६७१,१ । ७२८,११ । ७५७,१८ ।
शौनकेय: २२०,१२ ।
श्रीधर: २७०,१ । ३०६,३ । ४१२,७ । ४१७,८ । ४४२,८ ।
४४३,५ । ४४६,१७ । ४६४,८ ।
श्रीनृसिंह: ४१२,१४ ।
श्रीपति: ४११,१४ । ४७८,४ । ७१६,३ । ७५३,७ । ७५४,११ ।

## स

संवर्त्तः ५४,६ । ४६५,१२ । ७२६,१५ ।
सत्यव्रत: ६८,४ ।
सत्याषाढ: ६६७,४ ।
सुदर्शनभाष्यकार: ४७०,१५ ।
सुमन्तु: ७२४,१२ ।

## ह

हरदत्तः ४३८,६ ।

हारीतः २६८,१० । ४०९,१४ । ५०५,४ । ५०८,१७ ।
५१७,१२ । ५३०,९ । ५३३,१२ । ७२४,३ । ७५७,१५ ।

हेमाद्रिः ९८,१५ । १२०,९ । १२५,५ । २०४,१६ । २६७,१३ ।
३८१,७ । ४२९,५ । ४४५,८ । ४७१,१४ । ४९०,७ ।
५१४,९ । ५३६,२ । ५७१,१२ । ५७६,२ । ५७८,२ ।
५८१,२२ । ५८८,७ । ६१३,३ । ६४६,१९ ।

---

# ग्रन्थनामनिर्घण्टः ।



## अ


अद्भुतसागरः १८०,१३ ।

अर्णवः ४४६,६ ।


## आ


आदित्यपुराणम् २६८,१४ ।

आदिपुराणम् ४९०,१ ।

आपस्तम्बगृह्यम् ६७१,१२ ।

आपस्तम्बसूत्रम् ९७,६ । ४७०,१२ ।

आश्वलायनकारिका ९६,१३ । ४६२,८ । ४८६,११ । ४९८,११ ।
५१४,१६ । ६५३,६ । ६६३,१७ । ६७४,२ ।

आश्वलायनगृह्यम् ४८७,७ । ६७१,११ । ७१५,१० । ७४५,२१ ।
७५२,२ ।

आश्वलायनगृह्यपरिशिष्टम् १०८,१४ । ६८५,८ । ६९१,४ ।
७६०,१६ ।

आश्वलायनगृह्यसूत्रम् ९४,१५ । ९६,९ ।

ऋ

ऋग्विधानम् २४०,५ । २५०,११ । २६५,११ । २७६,४ ।
६६८,१५ । ६७२,४ । ७२१,५ ।
ऋग्वेदः ६८३,१ ।
ऋग्वेदपरिशिष्टम् ६२,१२ ।

क

कपिलसंहिता ४४८,५ ।
कर्म्मविपाकसमुच्चयः २५४,१५ ।
कात्यायनगृह्यम् ६६८,८ । ७५२,६ ।
कात्यायनसूत्रम् ८५,१ । ८६,११ । १०८,१० । ११०,७ ।
कालविधानम् ७७,११ ।
कालादर्शः ४७१,१६ । ५१६,१० ।
कालिकापुराणम् ४२५,१४ ।
काशीखण्डम् ६७०,१५ । ७१८,१६ ।
काश्यपीयम् ५१२,१४ ।
कूर्म्मपुराणम् ४८४,१५ । ५२४,१४ । ६७१,४ ।
कौर्म्मम् ५३४,८ ।
क्रियाकालोत्तरम् २५२,३ । २५५,११ ।

ख

खादिरगृह्यम् ५१७,१५ ।

च

चिन्तामणिः ५७१,४ ।

छ

छन्दोगपरिशिष्टम् १७,७ ।
छन्दोगश्रुतिः ६६६,१ ।

ज

ज्योतिःप्रकाशः ७६६,२ ।
ज्योतिःशास्त्रम् ३०७,११ । ४३१,६ । ५२०,२ । ६५६,८ । ६५७,८ । ६६७,२ । ७१२,१७ ।
ज्योतिःसागरः ७६६,१० ।
ज्योतिरर्णवः ७३४,१६ ।
ज्योतिर्निबन्धः ३०८,१६ । ४००,१० । ४०३,१७ । ४७३,८ । ४७४,१६ । ४७५,७ । ४७६,१२ । ४७७,८,१४ । ४७८,२२ । ६७२,१२ । ७३३,१५ ।

त

तत्त्वसागरसंहिता १७८,१६ ।
तापनीयश्रुतिः ६६६,४ ।
तैत्तिरीयम् ७७,१ । ६७३,८ ।
तैत्तिरीयारण्यकम् ६६८,३ । ६७०,११ ।
त्रिस्थलीसेतुः ४६०,४ ।

द

दीपिका ४४७,१ । ४६४,२० ।
देवीपुराणम् ५८८,७ ।

न

नारदसंहिता ३५०,१२ । ६८०,१२ ।
नारायणपद्धतिः ३१०,२१ ।
नृसिंहपुराणम् ५९२,१० ।

प

पद्मपुराणम् १३,१८ । २४०,१३ । २४५,१४ । ४२०,२० ।
पाणिनीयशिक्षा ५२२,६ ।
पारस्करसूत्रम् २५०,१५ ।
प्रतिष्ठासारसङ्ग्रहः ६४५,११ । ६४७,१२ ।
प्रयोगपारिजातः २१,४ । २३९,९ । २४७,८ । २६७,८ ।
३०६,५ । ३१३,७ । ४०१,१९ । ४२२,२ । ४२५,८ ।
४३३,१८ । ४४०,१४ । ४८२,५ । ५१०,१५ । ६५३,६ ।
७३०,७ । ७३९,३ ।
प्रयोगरत्नम् ४६९,१२ । ४८१,१८ ।
प्रयोगसारः ४१२,१ ।

ब

बालतन्त्रम् ३०४,२ ।
बौधायनसूत्रम् ६८६,७ ।
ब्रह्मयामलम् ४२१,२ ।
ब्रह्माण्डपुराणम् ५३३,४ ।
ब्राह्मम् ४५२,१४ । ४८१,१२ ।

भ

भविष्यपुराणम् ३०८,७। ४३१,१०। ४९६,२। ५०१,१०। ५९६,१५।

भविष्योत्तरम् ९८,१५। १२५,५। ५१४,१९। ६०२,१७। ६०५,९।

भागवतम् ४१५,१।

भृगुसंहिता ७६४,२२।

म

मत्स्यपुराणम् २०४,१६। ५३१,१। ५७१,२।

मदनमहार्णवः ४०,१७। २०१,१०। २३६,४। ४३६,८।

मदनरत्नम् ४४६,७। ४९०,१४। ७३३,१। ७३४,७।

महार्णवः २३८,१०।

मात्स्यम् ५३६,१७। ५३७,१०,१९। ५३९,२०। ५४३,७। ५४६,१। ५५१,२०। ५७८,२। ६८६,१०।

मानवसंहिता ३८३,९।

मार्कण्डेयपुराणम् ४५०,२। ६९०,१६। ७३६,११।

मिताक्षरा ५०,४।

मुहूर्त्तदीपिका २४३,१२।

मेधातिथिनिबन्धः ७६४,११। ७६६,१३।

य

यजुर्वेदः ६६८,६,८।

## र

रत्नकोषः २४४,११ । ७५३,१२ ।

रत्नमाला ३१२,७ । ५२०,११ ।

रत्नसङ्ग्रहः ४७३,१७ । ४७४,३ ।

रामवाजपेयं ६४७,७ ।

## ल

लक्षणसङ्ग्रहः ६४६,१० ।

लिङ्गवाशिष्ठम् २०५,१२ ।

लुब्धजातकम् ४५८,१ ।

लैङ्गम् (लिङ्गपुराणम्) ७१६,११ ।

## व

वराहसंहिता ४२,२ । ७३१,१४ ।

वशिष्ठसंहिता ६२४,२ । ६८५,२ ।

वाक्यसारः ४८०,५ ।

वाजसनेयकम् १५,१८ ।

वायुपुराणम् ४८८,११ । ५१५,२० ।

विधानमाला १७१,१७ । २५१,५ । ४२२,१४ । ४३४,६ ।
७६४,८ । ७७०,१ ।

विधानरूपनिबन्धः ६८७,७ ।

विद्यादर्शः ८६,१ । ७०८,१ ।

विष्णुधर्म्मोत्तरम् २३,३ । ५५,२ । १७८,१८ । ४२९,५ । ४४४,११ । ४५३,१ । ४६४,१३ । ४६९,८ । ५४१,१० । ५४८,५ । ६०८,१८ । ६१३,३ ।

विष्णुपुराणम् ५३१,९ । ६७७,१२ । ६८८,१६ ।

वृत्तशतकम् ४७१,२२ ।

वृद्धगार्ग्यसंहिता ३९४,२ ।



## श

शतपथब्राह्मणम् ६९२,११ ।

शान्तिकाण्डम् १२०,९ ।

शारदातिलकम् ३३,६ । ६०६,१ । ६१३,७ । ६४७,२,१४ ।

शिशुरक्षारत्नम् २५१,५ ।

शुल्वकारिका ६२४,५ ।

शौनकीयम् २१,३ । ३३३,५ । ४०८,२ । ४५४,१७ । ४५७,३ । ६५५,७ । ६६२,१७ ।

श्रीधरीयम् ९५,४ । २४९,८ । ४३८,१५ । ४५०,१३ । ६६६,९ । ७५२,१० । ७६१,१६ ।



## ष

षटत्रिंशन्मतम् ६९३,१६ । ७०८,४ ।



## स

संहिताप्रदीपः ७३३,१० ।

संहितासारावली ७२२,१ ।

सायनीयम् ४५४,३ । ७३३,४ ।

सारसङ्ग्रहः ६५३,४ ।

सिद्धान्तशेखरः ६४६,१२ ।

स्कन्दपुराणम् ३७,१ । ९२,१० । १८०,१३ । २७८,२ ।
२९४,११ । ७१९,१६ ।

स्कान्दम् ३३४,१३ । ५१८,२१ । ५३६,२ । ५३७,६ । ५३८,१ ।
५३९,१३ । ५४२,५ । ५४३,१२ । ५४६,१० ।

स्मृतिचन्द्रिका ४७,१४ । ४६७,२ । ४८९,१५ । ४९५,१२ ।
७१६,१ । ७६४,१७ ।

स्मृतिदीपिका ४६८,७ ।

स्मृतिभामती ५१५,११ ।

स्मृतिभास्करः २४४,८ । ५१३,३ । ७२९,९ ।

स्मृतिरत्नावली ४८,११ । ७६५,१६ ।

स्मृतिसङ्ग्रहः १७,१६ । २६९,६ । ३०९,११ ।

स्मृतिसमुच्चयः ५१७,२२ । ५१८,४ ।

स्मृतिसारः ५२५,२२ । ५३२,१५ ।

स्मृत्यर्थसारः ५०,१४ । ५३,११ । २६९,८ । ४७४,२२ ।
५०१,१६ । ५११,२१ । ५२४,२ ।

ह

हरिवंशम् ४४९,६ ।

हारीतस्मृतिः ६६६,६ ।

---

# विषयसूची ।



## अ


| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| अक्षरस्वीकारविधानम् | ४६४ | १ |
| अग्निकार्य्यविधिः | ४८८ | १२ |
| अग्निनामानि | १२ | ७ |
| अग्नेर्जिह्वासप्तकनामानि | १२ | १६ |
| अध्ययनतिथिनिर्णयः | ५२० | ४ |
| अध्ययनधर्म्माः | ५२४ | १० |
| अध्ययनलक्षणनिरूपणम् | ५२० | १७ |
| अध्ययनप्रकारः | ५२१ | १ |
| अध्ययनविधानम् | ५१८ | १ |
| अध्यापकधर्म्माः | ५२९ | १६ |
| अनध्यायनिरूपणम् | ५२१ | ७ |
| अनध्यायनिर्णयः | ५३० | १४ |
| अनध्यायापवादः | ५३४ | ५ |
| अनुपनीतधर्म्मकथनम् | ४६७ | १ |
| अन्नप्राशनम् | ४४६ | १ |
| अपुष्पवतीगमननिषेधः | ४१ | १४ |

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| अपुष्पवतीत्वहरं विधानम् | ४० | १६ |
| अप्रतिरथसूक्तम् | ३३९ | ४ |
| अभिवादनविधिः | ५०० | ६ |
| अम्बिकाया उपस्थानम् | २५ | १८ |
| अयुतलक्षादिहोमविधानम् नृसिंहपुराणोक्तम् | ५९२ | ९ |
| अयुतहोमविधानम् | ५५६ | १२ |
| अर्घदानमन्त्रः | २१० | ११ |
| अब्दपूर्त्तिविधानम् | ४५० | १२ |
| अशुद्धस्य उदक्यादिस्पर्शे शुद्धिविधानम् | ५४ | १८ |
| अश्लेषाजननशान्तिः | ३८३ | ८ |
| अश्वत्थध्यानम् | १८५ | ६ |
| अश्वत्थवृक्षपूजनविधानम् | १७१ | १६ |
| अश्वत्थसेवनम् अथर्वणोक्तम् | १८० | १४ |
| अश्वत्थस्तोत्रम् | १८५ | १४ |
| अश्वदानमन्त्रः | ५६२ | २ |

आ

| | | |
|---|---|---|
| आचमनदानमन्त्रः | २१० | १४ |
| आचार्यप्रार्थनामन्त्रः | ५६ | १६ |
| आदित्यशान्तिः | ६६२ | १६ |

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| आद्यगर्भस्य ज्येष्ठमासादौ विवाहनिषेधकथनम् | ७५३ | ८ |
| आभ्यन्तरलक्षणानां ज्ञानोपायकथनम् | ७४५ | २० |
| आयाष्टककथनम् | ६५३ | १ |
| आसनदानमन्त्रः | २१० | १५ |
| **उ** | | |
| उत्सर्जनविधानम् | ५१७ | ८ |
| उपनयनविधानम् | ४७० | १० |
| उपनयनोपयुक्तविचारः | ४८५ | ४ |
| उपाकरणविधानम् | ५०९ | १२ |
| **ऊ** | | |
| ऊर्ध्वदन्तजननशान्तिः | ४२१ | १ |
| **ऋ** | | |
| ऋतुस्वरूपम् | ४५ | ११ |
| ऋतौ गुरुशुक्रोदयफलम् | ४७ | ३ |
| ऋतौ मङ्गलाचारः | ४७ | १३ |
| ऋतौ योगादिफलम् | ४५ | १८ |
| ऋतौ राशिफलम् | ४६ | ९ |
| ऋतौ लग्नफलम् | ४६ | १७ |

## ए


| विषय: | पृष्ठे | पंक्ती |
|---|---|---|
| एकनक्षत्रजननशान्तिविधानम् | ३९८ | ४ |
| एकमातृजानामेकदिनादौ विवाहनिषेधकथनम् | ७१० | ६ |
| एकमुखकोटिहोमविधानम् | ६०६ | ७ |
| एकराशिनक्षत्रनिर्णय: | ७४४ | १ |


## क


| | | |
|---|---|---|
| कन्यादाननिर्णय: | ७५६ | ८ |
| कन्यानर्हपात्रकथनम् | ७२२ | १३ |
| कन्यानां शुभाशुभलक्षणानि | ६७० | १६ |
| कर्णवेधविधानम् | ४४२ | ७ |
| कुण्डमण्डपविधानम् | ६२५ | १२ |
| कुण्डलक्षणम् | ६१३ | ६ |
| कुमार्यादीनां स्वस्तिवाचने वर्ज्यताकथनम् | १८ | ६ |
| कुलापकर्षकारणकथनम् | ६७६ | १ |
| कूटनिर्णय: | ७४३ | ५ |
| कृच्छ्रादिनिरूपणम् | ८ | १६ |
| कृष्णचतुर्दशीजननशान्तिविधानम् | ३२२ | १५ |
| कोटिहोमविधानं बृहत्पराशरोक्तम् | ५८२ | १ |
| कोटिहोमविधानं हेमाद्र्युक्तम् | ५८८ | ६ |

ख

| विषयः | | | पृष्ठे | पंक्तौ |
|---|---|---|---|---|
| खट्वारोहणविधानम् | | | ४३१ | ६ |

ग

| विषयः | | | पृष्ठे | पंक्तौ |
|---|---|---|---|---|
| गणाध्यक्षस्थापनम् | | | १७५ | १ |
| गन्धदानमन्त्रः | | | १५९ | ७ |
| | | | २११ | ६ |
| गरुडावाहनमन्त्रः | | | ५६५ | १४ |
| गर्भधारणतद्रक्षणविधानानि | | | २३९ | ८ |
| गर्भधारणविधानम् | | | २४७ | ७ |
| गर्भरक्षाविधानम् | | | २५१ | ४ |
| गर्भस्य अष्टममासे वेदनाहरमौषधम् | | | २५९ | ६ |
| „ | चतुर्थमासे | „ | २५४ | ७ |
| „ | तृतीयमासे | „ | २५३ | २० |
| „ | दशममासे | „ | २६१ | १५ |
| „ | द्वितीयमासे | „ | २५३ | १ |
| „ | नवममासे | „ | २६० | ७ |
| „ | पञ्चममासे | „ | २५६ | १२ |
| „ | प्रथममासे | „ | २५१ | १८ |
| „ | षष्ठमासे | „ | २५७ | १२ |
| „ | सप्तममासे | „ | २५८ | ४ |
| गर्भस्रावहरमन्त्राः | | | २३७ | १९ |

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| गर्भस्रावहरविधानम् | २३६ | ३ |
| गर्भाधाननक्षत्राणि | ८३ | ८ |
| गर्भाधानविधानम् | ८२ | १ |
| गर्भिणीधर्म्माः | २४० | १२ |
| गर्भिणीपतिधर्म्माः | २४३ | १ |
| गुरुशान्तिविधानम् | ६५५ | ६ |
| गुरोः सिंहस्थातिचार्य्यादित्वे कर्त्तव्याकर्त्तव्यविधानम् | ७३८ | १ |
| गोत्रनिर्णयः | ७०० | १ |
| गोदानव्रतविधानम् | ६६३ | १७ |
| गोमुखप्रसवशान्तिः | ३१३ | १३ |
| ग्रहणजननशान्तिविधानम् | ४१२ | १२ |
| ग्रहनिर्म्माणधातवः | ५३८ | ८ |
| ग्रहमण्डलकथनम् | ६०८ | ७ |
| ग्रहयज्ञसाधारणविशेषाः | ५७६ | १ |
| ग्रहयज्ञस्वरूपम् | ५३५ | १ |
| ग्रहशान्तिविधानम् | ३० | १ |
| ग्रहस्थानानि | ५३८ | ३ |
| ग्रहाणां दक्षिणाकथनम् | ३२ | ११ |
| ग्रहाणां नैवेद्यकथनम् | ३२ | ७ |
| ग्रहाणां समिन्निर्णयः | ३२ | ३ |

## घ


| विषय: | पृष्ठे | पंक्ती |
|---|---|---|
| घटिकाभिषेकविधानम् | १२५ | ४ |


## च


| | | |
|---|---|---|
| चूड़ाकरणम् | | |


## छ


| | | |
|---|---|---|
| छागदानमन्त्र: | ५६२ | ११ |
| छुरिकाबन्धविधानम् | ६७२ | १२ |


## ज


| | | |
|---|---|---|
| जननक्षत्रफलम् | ६८५ | १ |
| जन्मनक्षत्रकर्त्तव्यविधानम् | | |
| जन्ममातृकानामानि | १५ | ८ |
| जलयात्रा | १४ | ९ |
| जातकर्म | २६७ | ७ |
| जीवपुत्रोत्पादनम् | ६५ | १ |
| जीवमातृकानामानि | १५ | १० |
| ज्येष्ठाजननशान्तिविधानम् | ३८४ | १ |


## त


| | | |
|---|---|---|
| ताम्बूलदानमन्त्र: | १६० | १२ |
| ताम्बूलदानमन्त्र: (शिवस्य) | २१२ | १४ |

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| ताम्बूलभक्षणविधानम् | ४३३ | १८ |
| तिथ्यादिगण्डान्तशान्तिविधानम् | ४०३ | १४ |
| त्रसरेखादिपलपर्य्यन्तमाननिरूपणम् | ७ | १४ |
| त्रिकप्रसवशान्तिविधानम् | ४१७ | ११ |
| | | |
| दत्तकपुत्रविधानम् | ४२५ | ७ |
| दर्शजननशान्तिविधानम् | ३२८ | ६ |
| दशमुखकोटिहोमविधानम् | ६०४ | १८ |
| दिनक्षयादिगण्डशान्तिविधानम् | ४०५ | १७ |
| दीपदानमन्त्रः | १६० | १ |
| „ | २११ | १५ |
| दुग्धपानविधानम् | ४३२ | ६ |
| देशभेदे कार्य्यभेदानां धर्म्माधर्म्मत्वकथनम् | ६८५ | १ |
| द्विमुखकोटिहोमविधानम् | ६०५ | १० |

ध

| | | |
|---|---|---|
| धान्यमानम् | ८ | १२ |
| धूपदानमन्त्रः | १५८ | १५ |
| „ | २११ | १२ |
| धेनुदानमन्त्रः | ५६१ | ६ |
| ध्वजारोपणविधानम् | ६४० | १ |

न

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| नक्षत्रगण्डान्तशान्तिविधानम् | ४०१ | १४ |
| नक्षत्रदेवताकथनम् | ३१२ | ६ |
| नक्षत्राणां शान्तिविधानम् | ७७ | १ |
| नग्निकालक्षणम् | ७२८ | ८ |
| नवरत्ननामानि | ११ | ५ |
| नामकरणविधानम् | ३०८ | १ |
| निष्क्रमणविधानम् | ४३७ | १ |
| नीराजनमन्त्रः | १६० | १७ |
| नैवेद्यदानमन्त्रः | १६० | ५ |
| नैवेद्यदानमन्त्रः (शिवस्य) | २११ | १८ |
| नैष्ठिकब्रह्मचारिधर्म्माः | ५०४ | १ |

प

| | | |
|---|---|---|
| पञ्चमे मासि बालकोपवेशनविधानम् | ४४० | १३ |
| पञ्चरत्ननामानि | ११ | २ |
| पद्मिन्यादिलक्षणम् | ६८४ | ४ |
| परिवेत्त्रादिनिर्णयः | ७७१ | ८ |
| पात्रलक्षणम् | ६४८ | ६ |
| पाद्यदानमन्त्रः (शिवस्य) | २१० | ५ |
| पार्थिवशिवलिङ्गपूजनविधानम् | २०५ | ११ |

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| पुंसवनविधानम् | ९४ | १२ |
| पुंस्त्वपरीक्षोपायकथनम् | ७२२ | ६ |
| पुण्याहवाचनम् | १७ | १६ |
| पुनरुपनयनविधानम् | ४८६ | १० |
| पुराणश्रवणविधानम् | ७४६ | २० |
| पुरुषसूक्तम् | १९४ | २० |
| पुरुषस्य पञ्चोपचारपूजनम् | १९४ | २ |
| पुरुषस्य स्तोत्रम् | १९७ | ८ |
| पुष्पदानमन्त्रः (शिवस्य) | २११ | ९ |
| पुष्पाञ्जलिदानमन्त्रः | १६० | १८ |
| पूर्णाहुतिविधानम् | ६५३ | ५ |
| प्रथमरजोदर्शनविधानम् | ४२ | १ |
| प्रथमरजोदर्शने तिथिफलम् | ४२ | १४ |
| „ दृष्टफलम् | ४४ | ७ |
| „ नक्षत्रफलम् | ४४ | १६ |
| „ मासफलम् | ४१ | ३ |
| „ वस्त्रफलम् | ४२ | ५ |
| „ वारफलम् | ४३ | ११ |
| „ वेलाफलम् | ४३ | १८ |
| „ स्थानफलम् | ४४ | ४ |
| प्रदक्षिणमन्त्रः | १६१ | ६ |

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| प्रवरनिर्णयः | १०० | १२ |
| प्रस्रवद्योनिशोषितश्चरं विः | १९८ | ८ |
| प्राचीसाधनम् | २५ | ५ |

ब

| | | |
|---|---|---|
| बन्ध्यात्वहरविधानानि | ९८ | ११ |
| बन्ध्याभिषेकविधानम् | १२० | ७ |
| बालपितृधर्म्माः | ४६८ | ७ |
| बालपीड़ाशमनविधानम् (रावणोक्तम्) | २८५ | १५ |
| बालसम्बन्धीनि विधानानि | २७८ | १ |
| बालस्य दन्तसञ्चर्षदोषे तत्परिहारविधानम् | ४५० | १ |
| बालानाम् अष्टम-दिनमासाब्ददेवतापीड़ा- शमनविधानम् | २८८ | ८ |
| „ एकादश- „ | २९३ | ५ |
| „ चतुर्थ- „ | २८४ | १५ |
| „ तृतीय- „ | २८१ | १३ |
| „ दशम- „ | २९१ | १८ |
| „ द्वादश- „ | २९४ | ११ |
| „ नवम- „ | २९० | १६ |
| „ पञ्चम- „ | २८६ | ४ |
| „ द्वितीय- „ | २८२ | १७ |

| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| बालानां प्रथम-दिनमासाब्ददेवतापीडा-शमनविधानम् | २८० | १४ |
| „ षष्ठ- „ | २८७ | ८ |
| „ सप्तम- „ | २८८ | १० |
| बाल्यवैधव्ययोगे शान्तिविधानम् | ७३६ | ११ |
| ब्रह्मचर्य्यकालः | ५०३ | १० |
| ब्रह्मचारिधर्म्माः | ४८१ | १६ |
| ब्रह्मचारिप्रायश्चित्तविधानम् | ५०५ | १२ |

भ

| | | |
|---|---|---|
| भूमिदानमन्त्रः | ५६३ | १० |
| भूमिमानम् | ८ | ५ |

म

| | | |
|---|---|---|
| मण्डलदेवताकथनम् | ३७ | १२ |
| मतिमान्द्यादिदोषादध्ययनाशक्तस्य प्रायश्चित्तम् | ५२६ | १८ |
| मन्वन्तराकथनम् | ५३१ | १ |
| मयूर्य्यादिमुद्रापञ्चकलक्षणम् | ६ | ११ |
| महायुतयज्ञहोमविधानम् | ५७८ | १ |
| महालक्षमहाकोटिहोमः | ५८२ | १ |
| मातृणां नामानि | ३०५ | २ |

| विषय: | पृष्ठे | पंक्तौ |
|---|---|---|
| माल्यदानमन्त्र: | १५९ | ११ |
| मूलजननशान्ति: कात्यायनपरिशिष्टोक्ता | ३८१ | ६ |
| मूलादिजननदोषशान्ति: शौनकोक्ता | ३३३ | ४ |

य

| | | |
|---|---|---|
| यक्षपूजाविधानम् | ५९५ | ९ |
| यज्ञोपवीतदानमन्त्र: | १५८ | १५ |
| | २११ | ३ |
| यमलजननशान्तिविधानं कात्यायन-परिशिष्टोक्तम् | ४१५ | १५ |
| यमलजननशान्तिविधानं देवलोक्तम् | ४१४ | १७ |
| युगाद्यानिर्णय: | ५३१ | १० |
| योनिमेखलाप्रकरणम् | ६४५ | १२ |
| योनिलक्षणम् | ६४९ | १९ |
| योनिलेपनमन्त्र: | २६४ | ९ |

र

| | | |
|---|---|---|
| रक्षामन्त्र: | ३४० | १ |
| रक्षोघ्नसूक्तम् | ३४० | ३ |
| रज:कालसन्देहे कर्त्तव्यनिर्णय: | ५२ | १५ |
| रज:कालाज्ञाने कर्त्तव्यनिर्णय: | ५२ | १२ |
| रजस्वलाया ज्वरादिसम्भवे शुद्धिविधानम् | ५३ | १० |

| विषयः | पृष्ठे | पङ्क्तौ |
|---|---|---|
| रजस्वलाशौचनिर्णयः | ५० | १९ |
| रजस्वलास्पर्शशुद्धिविधानम् | ४८ | १० |
| रजोदर्शने शान्तिविधानम् | ६७ | ५ |
| रजोदोषशान्तिविधानम् | ५७ | १४ |
| बौधायनोक्तम् (चन्द्रसूर्यग्रहणे) | ७१ | १ |
| रजोदोषशान्त्यर्थं प्रायश्चित्तविधानम् | ५५ | ३ |
| रत्नदानमन्त्रः | ५६३ | ७ |
| रात्रिसूक्तजपविधानम् | २७४ | १८ |
| रात्रिसूक्तम् | २७६ | १४ |
| रात्रौ रजोदर्शने विशेषः | ५२ | १८ |
| रुद्रसूक्तम् | ३३५ | १ |
| रुद्रस्नानम् (बौधायनोक्तम्) | १०५ | १ |
| (भविष्योत्तरोक्तम्) | ९८ | १४ |
| रुद्रानुवाकः | ३४० | १ |
| रेखाफलकथनम् | ७२१ | २० |

ल

| | | |
|---|---|---|
| लक्षहोमकोटिहोमविधानं हेमाद्र्युक्तम् | ५८८ | ६ |
| लक्षहोमविधानम् | ५६४ | १४ |
| वृहत्पराशरोक्तम् | ५८४ | १२ |
| लक्ष्मीसूक्तम् | ३६४ | ३ |
| लौहदानमन्त्रः | ५६२ | ८ |

## व


| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| वंशपत्रदानविधानम् | ५६ | २० |
| वरलक्षणानि | ७१५ | ८ |
| वरुणप्रार्थनामन्त्रः | १६ | ४ |
| वस्त्रदानमन्त्रः | १५८ | ३ |
| | २१० | २० |
| | ५६१ | १८ |
| वाग्दानविधानम् | ७६० | १५ |
| वाग्दानानन्तरमाकस्मिकप्रतिकूलशान्तिविधानम् | ७६७ | १ |
| वाग्दानं जाते प्रतिकूलविधानम् | ७६४ | ७ |
| वाग्दानोपयुक्तविधानकथनम् | ७६२ | १२ |
| विकृतजननशान्तिः | ४२२ | १३ |
| विनायकशान्तिविधानम् | २३ | १० |
| विवाहकालनिरूपणम् | ७२८ | ७ |
| विवाहकालविधानम् | ७५२ | ८ |
| विवाहनिर्णयः | ६८५ | ६ |
| विवाहभेदनिरूपणम् | ७५८ | ११ |
| विवाहविधानम् | ६७३ | ५ |
| विषघटिकाजननशान्तिविधानम् | ४१२ | १२ |
| विष्णुमूर्त्तिदानविधानम् | ७३७ | १५ |

| विषयः | पृष्ठं | पंक्ती |
|---|---|---|
| वृषदानमन्त्रः | ५६१ | १३ |
| वेदिनिर्म्माणविधानम् | ६३८ | १४ |
| वैकृतप्रसवशान्तिः | ४२२ | १ |
| वैष्णवचरुविधानम् | २०१ | १ |
| व्यतीपातादिजननशान्तिविधानम् | ४०८ | १ |

श

| | | |
|---|---|---|
| शङ्खदानमन्त्रः | ५६१ | १० |
| शतमुखादिकोटिहोमविधानम् | ६०२ | १६ |
| शय्यादानमन्त्रः | ५६३ | ४ |
| शिशुरक्षाविधानम् | ४४८ | ४ |

ष

| | | |
|---|---|---|
| षष्ठीपूजनविधानम् | ३०४ | १ |
| षष्ठीप्रार्थनामन्त्रः | ३०५ | १६ |
| षष्ठ्यावाहनमन्त्रः | ३०५ | ६ |

स

| | | |
|---|---|---|
| संस्कारातिपत्तिप्रायश्चित्तम् | ४८३ | १८ |
| सदन्तोपरिदन्तजननशान्तिविधानम् | ४१८ | १ |
| समावर्त्तनविधानम् | ६६४ | १३ |
| सर्पसंस्कारविधानम् (बौधायनोक्तम्) | २११ | १४ |

| विषयः | पृष्ठे | पङ्क्तौ |
|---|---|---|
| सर्पसंस्कारविधानम् (शौनकोक्तम्) | २२० | १ |
| सर्व्वतोभद्रादिमण्डलकथनम् | ३१ | ५ |
| सर्व्वौषधिस्वरूपकथनम् | १० | ११ |
| सामगानां रुद्रसाम | ३३८ | २ |
| सामुद्रकलक्षणानि | ७१८ | १ |
| सिनीवालीकुहूजननशान्तिविधानम् | ३२६ | १४ |
| सीमन्तोन्नयनविधानम् | ८६ | ८ |
| सुखप्रसवोपायः | २६३ | १२ |
| सूतकिधर्म्मकथनम् | २४६ | ७ |
| सूतकिधर्म्मविशेषकथनम् | २७० | ११ |
| सूतिकागृहनिर्म्माणविधानम् | २४४ | ७ |
| सूतिकास्नानविधानम् | ३०७ | १० |
| स्त्रीस्तन्याहरणहरविधानम् | ४३६ | ७ |
| स्थण्डिललक्षणम् | ६२४ | १ |
| स्थलमातृकानामानि | १५ | १२ |
| स्नातकधर्म्मनिरूपणम् | ६६८ | ४ |
| स्नानानां नानाविधत्वकथनम् | १७८ | १७ |
| स्नानीयदानमन्त्रः | २१० | १७ |
| स्रुग्लक्षणम् | ६४८ | ७ |
| स्रुवलक्षणम् | ६५० | ८ |
| स्वर्णदानमन्त्रः | ५६१ | १६ |

## ह


| विषयः | पृष्ठे | पंक्तौ |
|---|---|---|
| हरिवंशश्रवणदेशादि | २०४ | ६ |
| हरिवंशश्रवणविधानम् | २०१ | ८ |


---

# विधानपारिजातः ।



## प्रथमः स्तवकः ।



श्रीगणेशाय नमः ।

श्रीरस्तु ।

वन्दे श्रीमदनन्तसंज्ञगिरिपं लक्ष्मीनिवासं हरिं
विघ्नध्वान्तदिवाकरं सुरगुरुं सर्व्वार्थसिद्धिप्रदम् ।
ब्रह्मा शर्व्वसुरेन्द्रपूर्व्वकसुरा यस्य प्रसादात्सदा
सर्व्वारम्भसमाप्तिमीयुरमलं महंशदेवं परम् ॥

नत्वा लक्ष्मीपतिं कृष्णं तथा ब्रह्मादिकान् सुरान् ।
गणेशं विघ्नहर्त्तारं वन्दे हैमवतीसुतम् ॥

चतुर्द्दशसु विद्यासु निष्णाताः शुद्धमानसाः ।
अपरोक्षब्रह्मतत्त्वा जयन्ति गुरवो मम ॥

श्रुतिसकलरहस्यं विम्बितं यस्य चित्ते
मुकुर इव विशुद्धे दोषमालिन्यशून्ये ।

खपटु*विमलभक्त्या यस्य तुष्टो रमेशो
जनकजनकपद्मं भट्टमेनं नतोऽस्मि ॥

जातोऽहमग्रेण मनोरथेन
यस्यानुकम्पामृतदृष्टिपुष्टः ।
पारं गतस्याखिलदर्शनानां
नागेशभट्टं जनकं नतोऽस्मि ॥

वन्दे भागीरथीमम्बां गुणैरम्बेव शालिनी ।
यत्प्रसादादहं प्राप्तः सञ्ज्ञातो जड़धीरपि ॥

श्रीमत्काण्वकुलाब्धिशीतकिरणो विद्याकलानां निधिः
श्रीमद्विष्णुपदाश्रितः सरसगुर्विद्वच्चकोरप्रियः ।
भट्टश्चन्द्र इमं पितृव्यमभिनम्यानन्तभट्टः सुधीः
नानाशान्तिविधानसत्सुरतरुं व्यारोपयद्भूतले ॥

विधानपारिजातोऽयं पञ्चस्तवकसंयुतः ।
नानाविधानगर्भात्मा: संसेव्यो विबुधैरिह ॥

प्रथमे स्तवके स्वस्तिवाचनादिक्रमुच्यते ।
द्वितीये दुष्टऋक्षादिजातशान्तिकमोर्च्यते ॥

तृतीये गुरुशान्त्यादिव्रतबन्धविवाहयोः ।
प्रकीर्णानि विधानानि कीर्त्यन्तेऽत्र चतुर्थके ॥

मरणस्य विधानानि कीर्त्यन्ते पञ्चमेऽत्र तु ।
जननादिक्रमेणैव शान्तिक्रम इहेरितः ॥

---

* खपटु इत्यत्र खपदेति ग-पुस्तके पाठ. ।

## प्रथमः स्तवकः ।

न पाण्डित्याभिमानेन न च वित्तस्य वाञ्छया ।
निबन्धो रच्यते किन्तु विदुषां परितुष्टये ॥
यत्किञ्चिन्मम चापल्यं क्षम्यतां तद्विचक्षणैः ।
गुणगृह्याः सदा सन्तो बालस्य पितराविव ॥
ग्रन्थस्थानि विकीर्णानि विधानानि समञ्जसा ।
सङ्ग्रथ्नामि सतां प्रीत्यै तेन प्रीणातु केशवः ॥
साधारणविधानानि प्रोच्यन्ते सर्व्वशाखिनाम् ।
असाधारणकल्पस्य सुज्ञानात् स्वस्वगृह्यतः ॥

## तत्र तावत्परिभाषाप्रकरणम् ।

दिशामनुक्तौ प्राची स्यात् तथा हस्तश्च दक्षिणः ।
शुभे काले शुभे देशे शान्तिकर्म्म समाचरेत् ॥
नैमित्तिकविशेषेण विहितं त्वन्यथापि च ।
यथा मूलादिका शान्तिर्यथा षष्ठ्यादिपूजनम् ॥
प्रवृत्तमन्यथा कुर्य्याद्यदि मोहात्कथञ्चन ।
यतस्तदन्यथाभूतं तदारभ्य पुनश्चरेत् ॥
प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः ।
तदङ्गस्याक्रियायान्तु नावृत्तिः सर्व्वकर्म्मणः ॥
यज्ञोपवीतिना कार्य्यं प्रागुदक्संस्थितेन च ।
शुद्धेन कर्म्म कर्त्तव्यं विष्णुस्मरणपूर्व्वकम् ॥

ईषद्धौतं नवं श्वेतं सदशं यन्नधारितम्* ।
निर्णेजकाक्षालितं यदहतं वास उच्यते ॥
सर्व्वेषु धर्म्मकार्य्येषु पत्नी दक्षिणतः शुभा ।
अभिषेके वामभागे सर्व्वत्रान्यत्र दक्षिणे† ॥
आर्षं छन्दो दैवतञ्च विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विपश्चिता ॥
अविदित्वा तु यः कश्चिद्याजनाध्यापने जपम् ।
यदन्यत्कुरुते किञ्चित् तत्सर्व्वं निष्फलं भवेत् ॥
अग्निप्रतिष्ठाकर्म्मादि स्वशाखोक्तं समाचरेत् ।
विशेषविहितं यत्तु तत्सर्व्वेषामपीष्यते ॥
यदाम्नातं स्वशाखायां पारक्यमविरोधि यत्‡ ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् ॥
पुण्याहवाचनं मातृस्थापनं श्राद्धमेव च ।
शान्तिकर्म्माङ्गमुद्दिष्टं शौनकस्य वचो यथा ॥
स्वस्तिवाचनमेवैके ब्रूयुः शान्तिककर्म्मणि ।
वृद्धिश्राद्धे न कर्त्तव्यं बौधायनवचो यथा ॥
शाखान्तरे स्वशाखायां यच्छान्त्यादिकमीरितम् ।
स्वशाखोक्तं तदा कार्य्यं परोक्तं न समाचरेत् ॥

---

* यन्नधारितमित्यत्र यन्नधारितमिति ग-पुस्तके पाठः ।

† सर्व्वत्रान्यत्र दक्षिणे इत्यत्र शेषेष्वनियमो मत इति, दक्षे सव्ये च वैयुषिदिति च ख-ग-पुस्तकयोः पाठौ ।

‡ पारक्यमविरोधि यदित्यत्र पारक्यस्ताविरोधि चेति ग-पुस्तके पाठः ।

स्वशाखाश्रयमुत्सृज्य परशाखोक्तमाचरन् ।
शाखारण्डः स विज्ञेयः सर्व्वकर्म्मवहिष्कृतः ॥
बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रचोदितम् ।
तेन तावति शास्त्रार्थे कृते सर्व्वः कृतो भवेत् ॥
इति कात्यायनेनोक्तमन्यैश्चैव तथर्षिभिः ।
अथ होम्यस्य द्रव्यस्य प्रमाणादीह कथ्यते ॥
खण्डत्रयन्तु मूलानां फलानां स्वप्रमाणतः ।
ग्रासमात्रमथान्नस्य पञ्चसूत्राणि होमयेत् ॥
पनसस्य फलस्याथ शतं भागाः प्रकीर्त्तिताः ।
शतं तथैव भागाश्च कुष्माण्डस्य प्रकीर्त्तिताः ॥
नारिकेलस्य विद्वद्भिर्भागाः प्रोक्तास्तु षोड़श ।
तावन्त एव भागाः स्युः कदलस्य क्रतूत्तमे ॥
खर्ज्जूरफलभागाश्च पञ्च प्रोक्ता मनीषिभिः ।
पत्रमेकैकमेव स्यात्तथा पुष्पञ्च हूयते ॥
तिलस्याशीतिसंख्याकास्तथा षष्टिर्यवाः स्मृताः ।
व्रीहयश्च शतं ग्राह्या गोधूमाः षष्टिसम्मिताः ॥
प्रियङ्गवश्च विज्ञेया विड़ालपदमात्रकाः ।
तथैव तण्डुलाः प्रोक्ता होमलक्षणकोविदैः ॥
फलानि बदरादीनि पञ्च पञ्चैव हावयेत् ।
पर्व्वमात्राश्च होमे स्युः पल्लवाः कोमलाः स्मृताः ॥
शर्कराश्च गुड़ाश्चैव विड़ालपदमात्रकाः ।
अतिसूक्ष्माणि वीजानि फलानि च तथैव च ॥

यज्ञकर्म्माङ्गसिद्ध्यर्थं वल्ल*मात्राणि हावयेत् ।
चतुर्द्दश वीजपूराणि दाड़िमानि तथैव च ॥
कन्दास्त्वेकैकशः प्रोक्ता आर्द्रमङ्कुरमेव च ।
कन्देष्वपि विशेषात्तु सूरणो दशधा भवेत् ॥
जम्बीरामलकद्राक्षास्तथा भल्लातकाः कणाः ।
अप्साभयाम्रउर्वाद्याः† प्रोक्ता ह्येकैकशो यजौ ॥
दूर्व्वास्तिस्रश्च होतव्याः समिधस्त्वेकिकाः स्मृताः ।
आज्यञ्च पृषदाज्यञ्च दधि दुग्धं तथैव च ॥

दधिमिश्रितमाज्यं पृषदाज्यम् ।

स्रुववक्त्रप्रमाणन्तु होतव्यं यज्ञकोविदैः ।
एवं वृहस्पतेरुक्तिरथ मुद्रा निगद्यते ॥
मयूरी कुक्कुटी हंसी शूकरी च मृगी तथा ।
पञ्च मुद्रा विजानीयात् होम्यद्रव्यग्रहे बुधः ॥
न्युब्जेन पाणिना द्रव्यं तर्ज्जनीरहितेन यत् ।
आदाय हूयते विप्रैर्मयूरीं तां विदुर्बुधाः ॥
अङ्गुष्ठयन्त्रिताः सर्व्वा अङ्गुल्युत्तानलक्षिताः ।
हवनं क्रियते ताभिः कुक्कुटी सा प्रकीर्त्तिता ॥

---

* वल्लः गुञ्जात्रयपरिमाणं सार्द्धगुञ्जापरिमाणं वा ।

† अप्सा-शब्दः कुत्रापि कोषे नास्ति, किन्तु आदर्शपुस्तकेषु सर्व्वेष्वेव धृतत्वात् स एवात्र निवेशितः । अनुमीयते चेदं यत् अक्षेत्यत्र अप्सेति पाठो लिपिकरप्रमादाज्जातः, तथा पाठे च अक्षशब्दस्य विभीतकार्थत्वात् यागोपयोगित्वेन तदर्थस्य सङ्गतिविरहो न भवेत् । आम्र इत्यत्र च आम्रा इत्येव पाठो युक्तः ।

प्रथमः स्तवकः ।

विकनिष्ठा तु हंसी स्यान्मुकुलाभा च शूकरी ।
मध्यमानामिकाङ्गुष्ठैर्मृगी सैवोच्यते बुधैः ॥
फलमूलयजौ श्रेष्ठा मुद्रा ज्ञेया शिखण्डिनी ।
जारणे मारणे चैव कुक्कुटी च प्रशस्यते ॥
वश्योच्चाटनपूर्व्वाणां कर्म्मणां शूकरी मता ।
शान्तिके पौष्टिके कार्य्ये मृगी हंसी प्रशस्यते ॥
कुक्कुटी पत्रपुष्पाणां शालिहोमे तु शूकरी ।
यवानाञ्च तिलानाञ्च हंसी प्रोक्ता मनीषिभिः
या यत्र विहिता मुद्रा तया तत्र तु होमयेत् ।
अन्यथा जुहुयाद्यस्तु न कर्म्मफलभाग्भवेत् ॥
द्रवद्रव्यं स्रुवेणैव पाणिना कठिनं हविः ।
स्रुचा घृतं तथा मांसं लाजानञ्जलिना यजेत् ॥
इत्यागमग्रन्थ उक्तो द्रव्यमानमथोच्यते ।
जालसूर्य्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ॥
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते ।
गौरस्तु ते त्रयः षट् च यवो मध्यस्तु ते त्रयः ॥
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोड़श ।
पलं सुवर्णाश्चत्वारः पञ्च चापि प्रकीर्त्तितम् ॥

अस्यार्थो यथा ।

जालान्तरं गते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥

इति वचनाज्जालान्तर्गतसूर्य्यकिरणसम्बन्धि सूक्ष्मं रजस्त्रसरेणुसंज्ञं

भवति, तेऽष्टौ त्रसरेणवो लिक्षा भवति, तास्तिस्रो लिक्षा राजसर्षपो भवति, ते त्रयो राजसर्षपा एको गौरसर्षपो भवति, ते षट् गौरसर्षपा एको मध्यमो यवः, ते मध्ययवास्त्रयः कृष्णलो भवति, कृष्णलो गुञ्जेति पर्य्यायः, ते कृष्णलाः पञ्च माषो भवति, ते षोडश माषाः सुवर्णो भवति,, चत्वारः सुवर्णा एकं पलम्। यद्वा पञ्च सुवर्णा एकं पलमिति ज्ञातव्यम्। इति हैमपरिमाणम्।

रौप्यपरिमाणमथोच्यते।

द्वे कृष्णले रूप्यमाषो धारणं षोडशैव ते।
शतमानस्तु दशभिर्धरणैः पलमेव वा॥
निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः।
इति यांगीश्वरेणोक्तं कृष्णलः पञ्च गुञ्जकाः॥
रूप्यमाने नियोक्तव्यः धान्यमानमथोच्यते।
व्रीहयश्च यवाश्चैव गोधूमाः कङ्गुसर्षपाः॥
माषा मुद्गाः समभाश्च अष्टमाश्च कुलत्थकाः।
श्यामाकाश्चैव नीवारा जर्त्तिलाः* सगवेधुकाः॥
कोविदारसमायुक्तास्तथा वेणुयवाश्च ये।
ग्राम्यारण्याः स्मृता ह्येते औषधाश्च चतुर्दश॥
पलद्वयन्तु प्रसृतं मुष्टिरेका पलं स्मृतम्।
अष्टमुष्टि भवेत्किञ्चित्किञ्चिदष्टौ तु पुष्कलम्॥
पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः।
चतुराढको भवेद्द्रोणः कुम्भो द्रोणद्वयं स्मृतः॥

* जर्त्तिलः कथ्यते अष्टिररण्यप्रभवतिल इति शब्दार्थचिन्तामणिः।

इति भविष्यपुराणोक्तम् । खारी द्रोणास्तु षोडश ।
यद्वा ।

पलञ्च कुडवः प्रस्थ आढ़को द्रोण एव च ।
धान्यमाने नियोक्तव्याः क्रमशोऽमी चतुर्गुणाः ॥
इत्येव धान्यमानोक्तिर्भूमिमानमथोच्यते ।
परमाणु परं सूक्ष्मं त्रसरेणुर्महीरजः ॥
जालाग्रश्चाथ लिक्षा च यूका चाथ यवोऽङ्गुलम् ।
क्रमादष्टगुणान्याहुर्यवानष्ट ततोऽङ्गुलम् ॥
षड़ङ्गुलं पदं प्राहुर्वितस्तिर्द्विगुणः स्मृतः ।
द्वौ वितस्ती ततो हस्तो ब्रह्मतीर्थौ द्विवेष्टनः ॥
चतुर्हस्तो धनुर्दण्डो नालिका तद्युगेन तु ।
क्रोशो धनुःसहस्रे द्वे गव्यूतिश्च चतुर्गुणा ॥
द्विगुणं योजनं तस्मात् प्रोक्तं संख्याविशारदैः ।
दशहस्तेन वंशेन त्रिंशद्धस्तो निवर्त्तनम् ॥
दश तान्येव गोचर्म्ममानमाह प्रजापतिः ।
इति मत्स्यपुराणोक्तिरथ कृच्छ्रादि कथ्यते ॥
एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ॥
यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ।
प्रातः पञ्चदश ग्रासाः सायन्तु द्वादश स्मृताः ॥
चतुर्विंशतिरायाच्याः परं निरशनं स्मृतम् ।

इति ग्रासपरीमाणं* मुखाविकृतिकारणम् ॥
एकैकं ग्रासमश्नीयादहानि त्रीणि पूर्व्ववत् ।
अहश्चोपवसेदन्त्यमतिकृच्छ्रं चरन्नरः ॥
इत्यादि धर्म्मशास्त्रोक्तमथान्यत्परिभाष्यते ।
सम्मार्ज्जिते भूप्रदेशे षोड़शं वाष्टहस्तकम् ॥
मण्डपं वाथ कुण्डं वा कृत्वा वेदिं प्रकल्पयेत् ।
मण्डलं सर्व्वतोभद्रं स्वस्तिकं पद्ममेव वा ॥
रजोभिः पञ्चवर्णैश्च लिखित्वा तत्र धान्यकम् ।
राशीकृत्य तथा कुम्भं धवलं तत्र निक्षिपेत् ॥
उदकेनाथ सम्पूर्य्य औषधानि च निक्षिपेत् ।
मदनं मधु पुष्पाणि पत्रपालाशसर्षपाः ॥
अपामार्गो गुड़ूची च विड़ङ्गी शङ्खपुष्पिका ।
विष्णुक्रान्ता महादेवी सर्व्वौषध्यं शतावरी ॥

यद्वा ।

कोष्ठं† मांसं हरिद्रे द्वे मुराशैलेयचन्दनम् ।
वचा कचोरी मुस्ता च सर्व्वौषध्यः प्रकीर्त्तिताः ।
सर्व्वासामप्यलाभे तु शतमूली प्रशस्यते ॥

यद्वा ।

यथा यथा च सम्प्राप्तं वस्तु तत्र विनिक्षिपेत् ।
न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः ।

* परिमाणमिति ख-पुस्तके पाठः ।

† कोष्ठमित्यत्र कुष्ठमिति ग-पुस्तके पाठः ।

पल्लवाः पञ्च चैते स्युस्त्वचस्तेषामपि क्षिपेत् ॥
वज्रमौक्तिकवैदूर्य्याः प्रवालञ्चेन्द्रनीलकम् ।
उक्तानि पञ्चरत्नानि नारदेन महर्षिणा ॥

यद्वा ।

मुक्ताफलं हीरकञ्च वैदूर्य्यं पद्मरागकम् ।
पुष्परागञ्च गोमेदं नीलं गारुत्मतं तथा ॥
प्रवालमुक्तान्येतानि महारत्नानि वै नव ।
अभावे सर्व्वरत्नानां हेम सर्व्वत्र योजयेत् ॥
यवव्रीहितिला माषाः कङ्गुश्यामाकमुद्गकाः ।
इमानि सप्त धान्यानि गदितानि महर्षिभिः ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।
रथ्यागोष्ठोद्भृताश्चैव मृदः सप्त प्रकीर्त्तिताः ॥
पञ्चामृतानि गव्यानि मूत्रादीनि विनिक्षिपेत् ।
पूर्व्वपात्रं न्यसेत्तत्र राजतं ताम्रमेव वा ॥
यद्वा वंशमयं पात्रं धान्यपूर्णं तथैव च ।
वस्त्रं शुभ्रं न्यसेत्तत्र कलसे वरुणं न्यसेत् ॥
प्रतिमां विन्यसेत्तत्र कर्षार्द्धार्द्धविनिर्म्मिताम् ।
तत्तल्लिङ्गकमन्त्रेण कर्म्म कार्य्यं विचक्षणैः ॥
एतेनेदं कर्म्म कार्य्यं मन्त्रेण नियमो यदि ।
तेन मन्त्रेण तत्कर्म्म कार्य्यं नान्येन निश्चयः ॥
इदं कार्य्यमनेनेति दृश्यते च क्वचिद्विधिः ।*

* न कश्चिद्दृश्यते विधिरिति ख-पुस्तके पाठः ।

लिङ्गादेवेदमर्थत्वमेतेषां मन्त्रसंज्ञका: ॥*
प्राजापत्यमुपांशु स्यान्मन्त्र: सावित्र एव च ।
इत्युक्तं शौनकीये तु शौनकेन महर्षिणा ॥
इत्येवं सर्व्वकर्म्मोपयोगिशास्त्रं समीरितम् ।
विशेषो वक्ष्यते तत्र शान्तिकर्म्मणि† सर्व्वत: ॥

अथ अग्निनामानि ।

लौकिक: पावको ह्यग्नि: प्रथम: परिकीर्त्तित: ।
अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्त्तित: ॥
पुंसवे चमसो नाम शोभन: शुभकर्म्मसु ।
सीमन्ते ह्यनलो नाम प्रगल्भो जातकर्म्मणि ॥
पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचि: ।
सभ्यनामा तु चूडायां व्रतादेशे समुद्भव: ॥
गोदाने सूर्य्यनामा स्यात् केशान्ते याजक: स्मृत: ।
वैश्वानरो विसर्गे स्याद्विवाहे धनद: स्मृत: ॥
चतुर्थीकर्म्मणि शिखी धृतिरग्निस्तथापरे ।

अपरे कर्म्मणीत्यर्थ: ।

आवसथ्यस्तथाधाने वैश्वदेवे तु पावक: ॥
ब्रह्माग्निर्गार्हपत्ये स्यादृक्षिणाग्निरथेश्वर: ।
विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नय: ॥
लक्षहोमेऽभीष्टद: स्यात्कोटिहोमे महाशन: ।

---

* किं लिङ्गादेवमर्थत्वमेषां ते मन्त्रसंज्ञका इति च क-पुस्तके पाठ: ।

† तत्रच्छान्तिकर्म्मणि इति च ग-पुस्तके पाठ: ।

एके घृतार्चिषं प्राहुरग्निध्यानपरायणाः ॥
रुद्रादौ तु मृडो नाम शान्तिके शुभकृत्तथा ।
आदिशब्दाल्लघुरुद्रमृत्युरुद्रातिरुद्रा लभ्यन्ते* ।
पौष्टिके धनद†श्चैव क्रोधाग्निश्चाभिचारके ॥
वश्यार्थे वशकृत्प्रोक्तो वनदाहे तु पोषकः‡ ।
उदरे जाठरो नाम क्रव्यादः शवभक्षणे ।
समुद्रे बाडवो नाम लये संवर्त्तकस्तथा ॥
सप्तविंशतिसंख्याता अग्नयः कर्म्मसु स्मृताः ।
तं तमाहूय होतव्यं यो यत्र विहितोऽनलः ॥
अन्यथा विफलं कर्म्म सर्व्वं तद्राक्षसं भवेत् ।
आदित्यादिग्रहाणाञ्च साम्प्रतं ह्यग्निरुच्यते ॥
आदित्ये कापिलो नाम पिङ्गलः सोम उच्यते ।
धूमकेतुस्तथा भौमे जठरोऽग्निर्बुधे स्मृतः ॥
बृहस्पतौ शिखी नाम शुक्रे भवति हाटकः ।
शनैश्चरे महातेजा राहौ केतौ हुताशनः ॥
कराली धूमिनी श्वेता लोहिता नीललोहिता ।
[illegible]र्णा पद्मरागा च सप्त जिह्वाः प्रकीर्त्तिताः ॥
इति विधानपारिजाते अग्निनामानि । पाद्मे ।

इति परिभाषाप्रकरणम् ।

---

* [illegible]भ्यन्ते इत्यत्र लप्स्यन्ते इति ख-पुस्तके पाठः ।

† ध[illegible]द इत्यत्र वनद इति ग-पुस्तके पाठः ।

‡ शोषक इति ग-पुस्तके पाठ. ।

अधुना वक्ष्यमाणसर्व्वविधानोपयोगिजलयात्राविधानम्।

वशिष्ठः।

शान्तिकं पौष्टिकं वापि जलयात्रां विना बुधः।
कुरुते यदि वा मोहात्कर्म्म तस्य च निष्फलम्॥
तड़ागादिप्रतिष्ठासु देवतायतनादिषु।
लक्षहोमे कोटिहोमेऽयुतहोमे तथैव च॥
व्रतोत्सर्गे महादाने यज्ञे वा वितते शुभे।

व्रतोत्सर्गे व्रतोद्यापने इत्यर्थः।

जलयात्रां पुरा कृत्वा श्रेष्ठकर्म्म समाचरेत्॥
अथातः सम्प्रवक्ष्यामि जलयात्राविधिं शुभम्।
यज्ञशालामतिक्रम्य ऋत्विग्भिर्ब्राह्मणैः सह॥
यजमानः सपत्नीकः सुहृद्बन्धुजनैर्वृतः।
अश्वारूढ़ो गजारूढ़ो वस्त्रालङ्कारभूषितः॥
गृहीत्वोपस्करं सर्व्वं गन्धपुष्पाक्षतादिकम्।
सुवासिन्योऽग्रतः कृत्वा सर्व्वालङ्कारभूषिताः॥
जलाशयं ततो गच्छेद्गीतवादित्रनिस्वनैः।
अनिन्द्यञ्च ह्रदं गच्छेन्नदीञ्चाथ* समुद्रगाम्॥
हैमराजतताम्रान् वा मृण्मयान् कलशान् शुभान्।
गृहीत्वा गन्धपुष्पाद्यैरर्च्चितान् सुदृढ़ान्नवान्॥
जलाशयं समासाद्य तीरे गोमयलेपिते।

* चाथ इत्यत्र वाथ इति क-पुस्तके पाठः।

चतुरस्रे कृते चैवं तत्र स्वस्तिकमालिखेत् ॥
यवैर्वा तण्डुलैर्वापि पद्ममष्टदलं लिखेत् ।
चत्वारः कलशाः स्थाप्यास्तद्दिक्षु विचक्षणैः ॥
तावन्तश्च* पुनः स्थाप्याः कोणेषु च समाहितैः ।
तत्र सम्पूजयेद्देवं वरुणं यादसां पतिम् ॥
जलमातृस्तु सम्पूज्य जीवमातृस्तथैव च ।
कलशाग्नेयकोणे च स्वस्तिकादिकमण्डले ॥
मत्सी कूर्म्मी च वाराही दर्दुरी मकरी तथा ।
जलूकी तन्तुकी चैव सप्तैता जलमातृकाः ॥
कुमारी धनदा नन्दा विमला मङ्गला बला ।
पद्मा चेति च विख्याताः सप्तैता जीवमातृकाः ॥
ऊर्म्मिर्लक्ष्मीर्महामाया यानदेवी तथैव च ।
वारुणी निर्म्मला गोधा सप्तैताः स्थलमातरः ॥
एता अपि प्रपूज्याथ दिक्पालान् दिक्षु चार्च्चयेत् ।
दीपान् समन्तात्प्रज्वाल्य देवतानां विसर्ज्जनम् ॥
घृतेन वाथ दध्ना वा जले दद्यात्ततो बलिम् ।
प्रयु[illegible] स्वाहेत्यादिमन्त्रैर्द्वादशसुवकैन तु ॥
ते च मन्त्रा [illegible]जसनेयके अश्वमेधप्रकरणेऽधीताः ।
अद्भ्यः स्वा[illegible], वार्भ्यः स्वाहा, उदकाय स्वाहा, तिष्ठ-न्तीभ्यः स्वा[illegible], स्रवन्तीभ्यः स्वाहा, स्यन्दमानाभ्यः स्वाहा, कूप्[illegible]भ्यः स्वाहा, सूद्याभ्यः स्वाहा, धार्य्याभ्यः

* तावन्त इत्यत्र चत्वार इति क-पुस्तके पाठः ।

स्वाहा, अर्णवाय स्वाहा, समुद्राय स्वाहा, सरिराय स्वाहा।

इति यथादैवतं त्यागः कार्य्यः।

ततो वरुणप्रार्थना।

प्रतीचीश नमस्तुभ्यं सर्व्वाघौघविनाशन।
पवित्रं कुरु मां देव सर्व्वकार्य्येषु सर्व्वदा॥
ज्ञानतोऽज्ञानतो वापि भगवन् यन्मया कृतम्।
तत्सर्व्वं पूर्णमेवास्तु त्वत्प्रसादाज्जलाधिप॥
ज्ञानतोऽज्ञानतो वापि यावान् विधिरनुष्ठितः।
स सर्व्वस्त्वत्प्रसादेन पूर्णो भवत्वपांपते॥
गृहीत्वा तु ततः कुम्भान् पञ्चपल्लवसंयुतान्।
कृत्वा सुवासिनीदोःषु गीतवादित्रनिस्वनैः॥

...षु हस्तेषु।

यागभूमिं समागच्छन् मध्ये मार्गे बलिं क्षिपेत्।
उपलिप्य तथा भूमिं मृतेनामेन वा तथा॥

तत्र मन्त्रः।

ॐ नमो भगवते क्षेत्रपाल भासुर त्रिनेत्र ...लामुख अवतर अवतर कपिल पिङ्गल ऊर्द्ध... जिह्वाललन छिन्धि छिन्धि भिन्धि भिन्धि कुरु कुरु मुरु मुरु चल चल लल लल क्रौं क्रौं हूं ह्रः बलिं गृह्ण स्वाहा। इति।

यज्ञमण्डपद्वारे च कुर्य्यान्नीराजनं त...ः।
यज्ञमण्डपमध्ये च स्थापयेद्वेदिकोप...॥

कुर्य्यानिति शेषः।

द्वारेण पश्चिमेनैव प्रवेशो नेतरेण तु ।

इति जलयात्रा ।

अथ सर्व्वकर्म्माङ्गभूतपुण्याहवाचनविधिः

तत्र येषां शाखायां कल्पसूत्रादौ विस्तृतं सङ्क्षिप्तं वा अभिहितमस्ति तैस्तदेव अनुष्ठातव्यम् ।

बह्वल्पं वा स्वशाखोक्तं यस्य यावत्प्रचोदितम् ।

तेन तावति शास्त्रार्थे कृते सर्व्वः कृतो भवेत् ॥

इति छन्दोगपरिशिष्टे कात्यायनस्मरणात् । येषां वाजसनेयीप्रभृतिशाखिनां गृह्यादौ नोक्तं तैस्तु बह्वृचपरिशिष्टोक्तं शौनकाद्युक्तं वा ग्राह्यं सर्व्वशाखाप्रत्ययमेकं कर्म्मेति जैमिनिस्मरणात् ।

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।

विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत् ॥

इति मलङ्गवचनाच । स्मृतिप्रणेतॄणां मन्वादीनां सर्व्वसाधारणेन प्रवृत्तेश्च ।

अथ पुण्याहवाचनम् । स्मृतिसङ्ग्रहे ।

पुण्येऽहनि गर्भाधाने विवाहे चौलके तथा ।

व्रतबन्धे च श्राद्धे तथा अन्नकर्म्मणि ॥

गृहारम्भे प्रवेशे तीर्थाभिगमने तथा ।

नवगृहमखे शान्तौ अद्भुतानां तथैव च ॥

6003

गृहप्रवेशने चैव ग्रामस्याभिनिवेशने ।
गजबन्धे तुरङ्गाणां दासेराणाञ्च सङ्ग्रहे ॥
सर्व्वेषु कर्म्ममात्रेषु प्रारम्भे स्वस्तिवाचनम् ।
महतिश्राद्धमात्रेषु न कुर्य्यात्पुण्यवाचनम् ॥
वाचनीया द्विजाः सम्यग्वेदशास्त्रपरायणाः ।
न तत्र कुनखी काणो हीनाङ्गोऽङ्गाधिकस्तथा ॥
क्षयरोगी च कुष्ठी च श्यावदन्तोऽभिशस्तकः ।
वन्ध्यश्च विधुरो वाग्मी क्रूरस्तु खलसेवकः ॥
बकवृत्तिश्च दम्भी च हैतुको ज्ञानदुर्बलः ।
सहोपपति*रव्यक्तो व्यसनी सोमविक्रयी ॥
कन्याविक्रयकृद्वाजिविक्रयी पिशुनोऽनृतः ।
लोकदुष्टः पराधीनो राजद्रोहपरायणः ॥
एते चान्ये च विप्राश्च न वाच्याः स्वस्तिवाचने ।
ताम्बूलमक्षता द्रव्यं दूर्व्वा पुष्पाणि चन्दनम् ॥
कुङ्कुमाक्तानि पात्राणि अक्षताः कुङ्कुमान्विताः ।
पुण्यतीर्थोदकं सम्यङ्निधाय कलशे शुभे ॥
सुवर्णं फलपुष्पाणि द्रव्यमात्रं निधापयेत् ।
उदङ्मुखः प्राङ्मुखो वा यजमानः समाहि
निषण्णो मङ्गले पीठे स्थिता अन्ये द्वि (१८ अ. ११ म. यजुः।)
सुदूर्व्वापाणयः सर्व्वे शुचयः शुचिव (१०म. ८सू. ५ऋक्।)
॥ (८म. ५८सू. १ऋक्।)

* सहोपपतिरिति ख-पुस्तके पाठः । (८म.७सू.८ऋक्।)

कालप्रज्ञादिकं कुर्य्यादनुज्ञातो द्विजातिभिः ।
उद्धृत्य सपिधानन्तु कलसं हेमपूरितम् ॥
पद्मासनसमाविष्टो नमस्कुर्य्यात्प्रयत्नतः ।
पश्चात्प्रजापतिरिति ब्रूयुः प्रयतमानसाः ॥
पुण्याहं वाचयिष्येऽहमिति वाचयिता वदेत् ।
वाच्यतामिति भाषन्ते वक्तारश्च सुतेजसः ॥
अथो जाते च शकुने सामगायसि-पूर्व्वकम् ।
ऋचं सर्व्वे सह ब्रूयुस्ततो वाचयिता द्विजः ॥
ओमुक्तिपूर्व्वं पुण्याहं भवन्त इति भाषते ।
परे ब्रुवन्त्विति ब्रूयुरों पुण्याहमितीतरे ॥
पुनरप्येवमेव द्विः कृत्वा पुण्याहवाचनम् ।
ततः स्वस्ति न इन्द्रेति* ऋचं ब्रूयुः सहोभये ॥
ततो वाचयिता पूर्व्वमों स्वस्तीत्यभिधाय तु ।
पश्चाद्भवन्त इति च ब्रुवन्त्विति प्रभाषते ॥
ॐ स्वस्तीति तथैवान्ये प्रतिब्रूयुस्ततः परम् ।
प्रारिप्सितं चतुर्थ्यौक्ता कर्म्म वाचयिता ततः ॥
प्राप्नस्तीत्याद्यं ब्रुवन्त्वेव† पूर्व्ववत्समुदीरयेत् ।
गर्भा[illegible] चतुर्थ्यन्त-तत्तत्कर्म्मोक्तिपूर्व्वकम् ॥
वदेत्पूर्व्वं[illegible] च प्रतिब्रूयुरथ सर्व्वेऽपि ते द्विजाः ।

---

* प्र[illegible]ज्ञश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्ट-
† ति[illegible]धातु । (२५ष, १८म. यजुः ।)
‡ सुम[illegible]धके पाठः ।

ऋध्याम स्तोममित्यादि* ऋचं ब्रूयुः सहर्त्विकैः ॥
ततो वाचयिता ऋद्धिं भवन्त इति-पूर्व्वकम् ।
ब्रुवन्त्विति वदन्नन्ये† ब्रूयुरोमृध्यतामिति ॥
एवमेवोभयेऽपि हिरण्यमेयुरिदं पुनः ।
पुण्याहादेस्त्विरण्यासे मन्त्रमध्येवनिस्तनाः ॥
आग्नेयेरन्निमे सर्व्वं यथागमपरम्परम् ।
ततो वाचयिता कुम्भजलं संस्कार्य्यमूर्द्धनि ॥
किञ्चित्सिञ्चेत्तथैवान्ये ब्रूयुश्च विविधाशिषः ।
आपो हि ष्ठादयस्तिस्रः‡ शन्नो देवी§ ऋचैकया ॥
ईशानावार्य्याणामिति¶ शुचवत्यघमर्षणम् ।
तरत्स मन्दीति सूक्तं‖ सर्व्वपापप्रणोदनम् ॥
पवस्व सोम** इत्यादि ऋग्भिः प्रोक्ष्य समन्ततः ।
पुण्याहं वाचयित्वैवं सर्व्वकल्याणवान् भवेत् ॥

---

* ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोपयातम् ।
यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ (१०म. १०६सू. ११ऋक

† वदेदन्ये इत्येव भौमकोय: पाठ: समीचीन: ।

‡ आपो हि ष्ठा मयोभुवस्ता न ऊर्ज्जे दधात नः ।
महे रणाय चक्षसे ॥ (११अ. ५०म. यजुः ।)

§ शन्नो देवीरभिष्टये आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ १२म. यजुः ।)

¶ ईशानावार्य्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् १०. ९सू. ५ऋक् ।)

‖ तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति. ५८सू. १ऋक् ।)

** पवस्व सोम वीतये इन्द्रस्य हार्दि सोमधानमाविश ।
पुरा नो बाधाद्दुरितानि पारय क्षेत्रविद्धि दिश आहा विपृच्छते ९म. ७०सू. ९ऋक् ।)

स्वस्तिवाचनमेतत्तु सर्व्वेषामृद्धिकर्म्मणाम्।
आदावन्ते च कर्त्तव्यमिति यज्ञविदो विदुः॥
इति शौनकीये पुण्याहवाचनम्।

ोगपारिजाते हारीतेनात्र विशेष उक्तः।
पुण्याहवाचनं पूर्व्वं सतारं ब्राह्मणस्य च।
तदेव च निरोङ्कारं कुर्य्यात्क्षत्रियवैश्ययोः॥

पारिजाते यमः।

नीक्षतजातुमण्डल इत्यादि हेमाद्रिग्रन्थोक्तं सर्व्वकर्म्मसाधारणं

ाहवाचनम्। तथाच शौनकीये।
पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि।
योक्तव्यः* कर्म्मणामादौ चान्ते चोदयसिद्धये॥
अर्च्चिता ब्राह्मणाः पूर्व्वं गन्धमाल्यैः सदक्षिणैः।
तिष्ठेयुः प्राङ्मुखा युग्मा वक्तारो दर्भपाणयः॥
उदङ्मुखो वाचयिता तिष्ठेदेभ्यश्च† दक्षिणे।
बिभ्रत्पूर्णमपां कुम्भं पिहिताननमर्च्चितम्॥
तत्रादावाप इत्येवं वदेद्वाचयिता ततः।
प्रथाद्रोऽपि शिवा आपः सन्त्वित्येवं ब्रुवन्त्यथ॥
गन्धा इति वदेदेकः सुमङ्गल्यमितीतरे‡।
वदेत्पूर्व्वं [illegible]मनस इत्येवमपरेऽपि च॥

---

* प्र[illegible] इति ख-पुस्तके पाठः।
† ति[illegible]श्च इति ग-पुस्तके पाठः।
‡ सु[illegible]: पाश्चिमतीतरे इति ख-पुस्तके पाठः।

सौमनस्यमिति ब्रूयुरस्तुशब्दान्तमत्वराः ।*
पश्चादक्षत इत्येवं ब्रूयाद्वाचयिता ततः ॥
अन्येऽक्षतञ्चारिष्टञ्चास्त्वित्येवं ब्रूयुरर्चिताः ।
ततो वाचयिता विप्रो दक्षिणा इत्युदीरयेत् ॥
स्वस्तिशब्दाद्यमुच्चार्य्य दक्षिणाः पान्त्वितीतरे ।
बहु देयमिति ब्रूयुरस्तुशब्दान्तमत्वराः ॥
कर्त्ताथ दक्षिणं जानुं पातयित्वा महीतले ।
उदङ्मुखो जपेत्सूक्तं अश्वयेत्येवमादिकम् ॥
जपित्वोत्थाय तं कुम्भं बिभ्रत्तिष्ठन्नुदङ्मुखः ।
मनः समाधीयतामित्येवं वाचयिता वदेत् ॥
समाहितमनसः स्म इत्येवं प्रब्रुवन्त्यथ ।
प्रसीदन्तु भवन्त इत्येवं वाचयिता वदेत् ॥
प्रसन्नाः स्म इति प्रीताः प्रतिब्रूयुरथेतरे ।
शान्तिः पुष्टिस्तुष्टिर्वृद्धिरविघ्नमित्यनुक्रमात्* ।
आयुष्यमारोग्यमिति शिवं कर्म्म तथापि च ।
कर्म्मधर्म्मवेदशास्त्रधनधान्येष्टसम्पदः ॥
अस्तुशब्दान्तमुच्चार्य्य वाचयित्वा तथा परे ।
प्रजापतिः प्रीयतामित्येवं वाचयिता वदेत्
परे प्रथममुच्चार्य्य प्रीयतां भगवानिति,
गोमयेनोपलिप्योर्वीं रङ्गवल्लिकयार्च[illegible]त् ॥

---

* तथा तुष्टिर्वृद्धिरविघ्नमायुरनुक्रमादिति ग-पुस्तके पाठः ।

प्रत्यधान्योपरि स्थाप्यं पूर्णं हि कलशद्वयम् ।
दक्षिणे चोत्तरे चैव सुवर्णेन समन्वितम् ॥

प्रमाणमुक्तं विष्णुधर्म्मोत्तरे ।

यत्नोद्वाहप्रतिष्ठादौ कुम्भाः स्युरभिषेचने ।
पञ्चदशाङ्गुलविपुलमुत्सेधः षोड़शाङ्गुलः ॥
द्वादशाङ्गुलकं मूलं मुखमष्टाङ्गुलं स्मृतम् ।
पुण्याहवाचनञ्चैव ब्राह्मणस्य विधीयते ।
तदेव च निरोङ्कारं कुर्य्यात्क्षत्रियवैश्ययोः ॥

इति पुण्याहवाचने विशेषविधानम् ।

अथ सर्व्वकर्म्माङ्गभूत विनायकशान्तिविधानम्

तस्य अनिष्टनिवृत्तिफलकत्वेन काम्यत्वेऽपि

एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्म्मणां फलमाप्नोति

याज्ञवल्क्येन सर्व्वकर्म्माङ्गतोक्तेः ।

...प्रायः ।

वि... कः कर्म्मविघ्नसिद्ध्यर्थं विनियोजितः ।
गणाना...धिपत्ये च रुद्रेण ब्रह्मणा तथा ॥
तेनोपसृष्ट...यस्तस्य लक्षणानि निबोधत ।
स्वप्नेऽवगा...ऽत्यर्थं जलं मुण्डांश्च* पश्यति ॥

---

* मुण्ड...लक्ष मुण्डानिति शान्तिमयूख-पुस्तके पाठः ।

काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ।
अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते ॥
व्रजन्नपि तथात्मानं मन्यतेऽनुगतं परैः ।
विमना विफलारम्भः स सीदत्यनिमित्ततः ॥
तेनोपसृष्टो लभते न राज्यं राजनन्दनः ।
कुमारी न च भर्त्तारमपत्यं गर्भमङ्गना ॥
आचार्य्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ।
वणिग्लाभञ्च नाप्नोति कृषिञ्चापि कृषीवलः ॥

अथ तस्य प्रयोगो यथा ।

स्नापनं तस्य कर्त्तव्यं पुण्येऽह्नि विधिपूर्व्वकम् ।
गौरसर्षपकल्केन साज्येनोत्सादितस्य* तु ॥
सर्व्वौषधैः सर्व्वगन्धैर्विलिप्तशिरसस्तथा ।
भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजाः शुभाः ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।
मृत्तिकां रोचनां गन्धं गुग्गुलुञ्चाप्सु निक्षिपेत् ॥
या आहृतास्त्वेकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ।
चन्दनागुरुकस्तूरीकर्पूराद्याः सुगन्धयः ॥
चर्म्मण्यानडुहे रक्ते स्थाप्य भद्रासनं ततः ।
सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ।
भगन्ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः ॥

---

* उत्सादितस्य उद्वर्त्तितस्य ।

भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः।
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि॥
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा।
स्नातस्य सार्षपैस्तैलैः स्रुवेणौदुम्बरेण तु॥
जुहुयान्मूर्द्धनि कुशान्.सव्येन प्रतिगृह्य च।
मितञ्च सम्मितञ्चैव तथा शालकटङ्कटौ॥
कुष्माण्डो राजपुत्रश्चेत्येतैः* स्वाहासमन्वितैः।
नामभिर्बलिमन्त्रैश्च नमस्कारसमन्वितैः॥
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य्य सर्व्वतः।
कृताकृतांस्तण्डुलांश्च पललौदनमेव च॥
कृतान् सक्तुदवहृतान्, पललौदनं तिलपिष्ट मोदन इत्यर्थः।
मत्स्यान् पक्वांस्तथैवामा मांसमेतावदेव तु।
पुष्पं चित्रं सुगन्धञ्च सुराञ्च त्रिविधामपि॥
पैष्टी माध्वी चेति त्रिविधा सुरेत्यर्थः।
मूलकं पूरिकापूपांस्तथैवोण्डेरकस्रजः†।
दध्यन्नं पायसञ्चैव गुड़मिश्रं समोदकम्॥
एतानन् सर्व्वानुपाहृत्य भूमौ कृत्वा ततः शिरः।
विनी[illegible]स्य जननीमुपतिष्ठेत्ततोऽम्बिकाम्॥
दूर्व्वासर्[illegible]ष्पाणां दत्त्वार्घ्यं पूर्णमञ्जलिम्।

---

* मितेत्[illegible] अमी इति क-पुस्तके पाठः।

† वेर[illegible] इति च पाठः याज्ञवल्क्यसंहितायाम्।

रूपं देहि यशो देहि भगं भवति देहि मे ।
पुत्रान् देहि धनं देहि सर्व्वान् कामांश्च देहि मे ॥
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
ब्राह्मणान् भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥
एवं विनायकं पूज्येति ।

उण्डेरकास्तण्डुलविकारा अपूपविशेषाः ।

अथास्य स्पष्टप्रयोगः । राजा* गौरसर्षपकल्कादिसामग्रीं सम्पाद्य शुभे मुहूर्त्ते कृतनित्यक्रियोऽमुकप्रयोजनसिद्ध्यर्थं विनायकशान्तिं करिष्ये इति सङ्कल्प्य श्रुताध्ययनवन्तं ब्राह्मणमाचार्य्यत्वेन कृत्वा चतुरोऽन्यानृत्विजो कृत्वा च ऋत्विग्भिः सह आचार्य्येण कर्म्म कारयेत् । तत आचार्य्यः शुभे सम्मार्ज्जिते देशे पञ्चवर्णैः पिष्टैर्भद्रासनार्थमेकं स्वस्तिकं कृत्वा तत्र रक्तमानडुहं चर्म्म उत्तरलोमं प्राग्ग्रीवं संस्थाप्य तत्र श्रीपर्णादिपीठं निधाय श्वेतवस्त्रेणाच्छाद्य तस्य चतुर्दिक्षु कृतस्वस्तिकमण्डलेषु अव्रणानस्फुटितैकवर्णांश्चतुरः कलशांश्चन्दनादिचर्चितान् पुष्पमालावेष्टितकण्ठान् वस्त्रवेष्टितांश्च धान्यराशौ नि... ... शुद्धोदकेन नदीसङ्गमोदकेन वा कलशानापूर्य्य स[...] [...]स्थापयित्वा

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
पापकं मम गात्राणि सर्व्वं पापं प्रमार्ज्जय ॥

इति मन्त्रेण पञ्च मृदः प्रक्षिप्य

---

* राजा इत्यत्र यजमान इत्येव साधीयान् पाठः ।

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्व्वभूतानां त्वामिहोपह्वये श्रियम् ॥

इति मन्त्रेण चन्दनादिगर्भांश्चिक्षिप्य गुग्गुलमपि निक्षिप्य सहकारादिपल्लवान्विधाय पूर्णपात्रं विन्यस्य तेषु वक्ष्यं षोडशोपचारैः सम्पूज्य स्वशाखोक्तां शान्तिं पठित्वा भद्रासनस्योत्तरे देशे ऐशान्यां वा पीठादिषु विनायकम् अम्बिकाञ्च वक्ष्यमाणमन्त्राभ्यामावाहनप्रभृतिभिरुपचारैः सम्पूजयेत् ।

मन्त्रौ तु ।

ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्ती प्रचोदयात् ॥ १ ॥ ॐ सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयात् ॥ २ ॥ इति ।

अथ स्वशाखोक्तेन विधिना अग्निं प्रतिष्ठाप्य चरुं श्रपयित्वा आज्यभागान्तं कृत्वा गवाज्यलोडितेन गौरसर्षपकल्केन उद्वर्त्तिताङ्गं सर्व्वौषधिचूर्णचन्दनागुरुकस्तूरिकादिभिश्च विलिप्ताङ्गं यजमानं भद्रासने उपवेश्य स्वस्त्यादिमार्गेण स्वस्तिवाचनं कुर्य्यात् । अथ ऋत्विक्सहित आचार्य्यः पतिपुत्रवतीभिः पुरन्ध्रीभिः सनीराजनं यजमानमभिषिञ्चेत् । तत्र पूर्व्वदेशावस्थितं कुम्भमादाय

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥

इति मन्त्रेणाभिषिच्य ततो दक्षिणं कुम्भमादाय

भगं ते वरुणो राजा भगमिन्द्रो बृहस्पतिः ।

भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥

इत्यनेन मन्त्रेणाभिषिच्य पश्चिमदिगवस्थितं कुम्भमादाय

यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ।

ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा ॥

इति मन्त्रेणाभिषिच्य उत्तरं कुम्भमादाय

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।

तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥

इति मन्त्रैस्त्रिरभिषिञ्चेत् । अथाचार्य्यः स्वसव्यपाणिगृहीत-कुशान्तरिते यजमानशिरसि सार्षपं तैलमौदुम्बरेण स्रुवेणादाय षड़ाहुतीर्जुहुयात् ।

तत्र मन्त्रा यथा ।

ॐ मिताय स्वाहा । यथादैवतं त्यागः । ॐ सम्मिताय स्वाहा । ॐ शालाय स्वाहा । ॐ कटङ्कटाय स्वाहा । ॐ कुष्माण्डाय स्वाहा । ॐ राजपुत्राय स्वाहा ।

इति यजमानशिरसि हुत्वा एतैरेव षड़्भिर्मन्त्रैस्तस्मिन्नग्नौ पूर्व्वं-कृतं चरुं हुत्वा होमशेषं समाप्य अग्नेः समन्तात् प्रागादिदिक्षु इन्द्रादिब्रह्मान्तेभ्यो देशदेवेभ्यः*स्वस्वलिङ्गकैर्मन्त्रैः सदीप [illegible]ान् दत्त्वा यजमानं स्नापयेत् । अथ स्नातः शुक्लाम्बरध[illegible] यजमानो गुरुणा सहितो विनायकाय अम्बिकायै च कि[illegible]द्वहृतसम्पूर्णा-वहततण्डुलांस्तिलपिष्टमिश्रितोदनं पक्वापक्वा[illegible] मत्स्यान् तथा-

* देशदेवेभ्य इत्यत्र देशदेवेभ्य इति साधीयान् पाठ । देशा दिक्सम्बन्धीया देवाश्चेभ्य इत्यर्थः ।

विधमांसं मूलकं पूरिकापूपान् वर्त्तुलपिष्टविकारान् उण्डेरका अपूपभेदास्तत्स्रजः दध्यन्नं पायसं सगुडपिष्टमोदकांश्च उपहारत्वेन द्वयोर्गणेशाम्बिकयोर्विचित्राणि पुष्पाणि त्रिविधां सुरामपि निवेदयेत् प्रत्येकम्। मत्स्यस्थाने माषादिः, सुरास्थाने लवणसहितं क्षीरं देयमिति शिष्टाः। ततः पूर्व्वोक्तगायत्रीभ्यां दूर्व्वासर्षपयुक्तं पुष्पाञ्जलिं निवेद्य विनायकमुपतिष्ठेत्।

उपस्थानमन्त्रो यथा।

रूपं देहि यशो देहि भगवन् देहि मे भगम्।
पुत्रान्देहि धनं देहि सर्व्वान् कामांश्च देहि मे॥

अथ अम्बिकोपस्थानम्। तदुपस्थानमन्त्राः।

रूपं देहि यशो देहि भगं भवति देहि मे।
पुत्रान्देहि इत्यादि समानम्॥

अथाचार्य्यः शूर्पं कुशानास्तीर्य्य उपहारशेषं कृताकृतं तण्डुलादिद्रकान्नं तत्र निधाय चतुष्पथं गत्वा तत्रोपलिप्य वक्ष्यमाणमन्त्रैर्बलिं निदध्यात्।

मन्त्राश्च यथा।

प्रधानं ... त्विमे देवा आदित्या वसवस्तथा।
मरुतो ... श्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः॥
असुरा ... धानाश्च पिशाचा मातरस्तथा।
शाकिन्यो ... वेताला योगिन्यः पूतनाः शिवाः॥
जम्भकाः* ... गन्धर्व्वा नागा विद्याधरा नगाः।

---

* जृम्भका इति ख-पुस्तके पाठः।

दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥
जगतां शान्तिकर्त्तारो ब्रह्माद्याश्च महर्षयः ।
मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥

एवं बलिं दत्वा गृहमागत्य आचम्य वस्त्रद्वयसहितां दक्षिणां सप्रतिमामाचार्य्याय दत्वा ऋत्विग्भ्यश्च केवलां दक्षिणां दत्वा ब्राह्मणान् भोजयित्वा च तदाशिषो गृह्णीयात् ।

इति विनायकशान्तिविधानम् ।

## अथ सर्व्वकर्म्माङ्गभूतं ग्रहशान्तिविधानम् ।

तत्र श्रीकामः शान्तिकामो वेति फलसंयोगेऽपि
एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्म्मणां फलमाप्नोति

इति याज्ञवल्क्येन सर्व्वकर्म्मसाधारणत्वोक्तेः । तत्र येषां शाखिनां स्वगृह्यादावभिहितं तैस्तदेवानुष्ठेयम् । बह्वल्पं वा स्वगृह्योक्त-मित्यादि स्मृतेः । येषां च स्वगृह्यादौ नोक्तं तैर्याज्ञवल्क्यादिस्मृत्युक्तमनुष्ठेयं स्मृतीनां सर्व्वसाधारण्येन प्रवृत्तेः ।

याज्ञवल्क्यः ।

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।
वृष्ट्यायुः*पुष्टिकामो वा तथैवाभिचरन्नपि ॥

---

* वृष्ट्यायुरिति ख-पुस्तके पाठः ।

सूर्य्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः ।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥
ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ।
रजतादयसः सीसात्कांस्यात्कार्य्या ग्रहाः क्रमात् ॥
स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा ।
यथावर्णं प्रदेयानि वासांसि कुसुमानि च ॥

स्वर्णकादुभाविति द्वयोः स्वर्णमयत्वम् ।

गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलः ।
कर्त्तव्या मन्त्रवन्तश्च चरवः प्रतिदैवतम् ॥
आकृष्णेन* इमं देवा† अग्निर्मूर्द्धा दिवः ककुत्‡ ।
उद्बुध्यस्वेति§ च ऋचो यथासंख्यं प्रकीर्त्तिताः ॥

---

* आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥
(१म. ३५सू. २ऋक् ।)

† इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्ये-न्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा ।
(९अ. ४०म. यजुः ।)

‡ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति ॥ (८म. ४४सू. १६ऋक् ।)

§ उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥
(१५अ. ५४म. यजुः ।)

बृहस्पते अतियदर्य्य*स्तथैवान्नात्परिस्रुतः† ।
शन्नो देवी‡स्तथा काण्डात्§ केतुं कृण्व¶न्निमास्तथा ॥
अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।
उदुम्बरः शमी दूर्व्वा कुशाश्च समिधः क्रमात् ॥
एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा ।
होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युताः ॥
गुड़ौदनं पायसञ्च हविष्यं क्षीरषाष्टिकम् ।
दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥
दद्याद्ग्रहक्रमादेतद्द्विजेभ्यो भोजनं बुधः ।
शक्तितो वा यथालाभं सत्कृत्य विधिपूर्व्वकम् ॥
धेनुः शङ्खस्तथानड्वान् हेम वासो हयः क्रमात् ।
कृष्णा गौरायसञ्छाग एता वै दक्षिणाः क्रमात् ॥
यश्च यश्च यदा दुस्थः तदा यत्नेन पूजयेत्‖ ।
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥

---

* बृहस्पते अतियदर्य्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ (२म. २३[illegible] [illegible]सू ।)

† अन्नात् परिस्रुतो रस ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः [illegible]तेन सत्य-मिन्द्रियम् । विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ (१९अ.७५म.यजुः ।)

‡ शन्नो देवीरिति मन्त्रः २० पृष्ठे प्रदर्शितः ।

§ काण्डात्काण्डात्प्ररोहन्ति परुषः परुषस्परि ।
एवा नो दूर्व्वे प्रतनु सहस्रेण शतेन च ॥ (१३अ. २०म. यजुः ।)

¶ केतुं कृण्वन्न केतवे पेशो मर्य्या अपेशसे । समुषद्भिरजायथाः ॥ (१म. ६सू. ३ऋक् ।)

‖ स तं यत्नेन पूजयेदिति ख-पुस्तके पाठः ।

ग्रहाधीना नरेन्द्राणामुच्छ्रायाः पतनानि च ।
भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥
अन्यत्सर्व्वमङ्गजातं द्वितीयस्तवके वक्ष्यते ।

इति याज्ञवल्क्योक्तग्रहशान्तिविधानम् ।

अथ सर्व्वकर्म्मोपयोगि सर्व्वतोभद्रमण्डलादिकमुच्यते ।

तदुक्तं शारदातिलके ।

चतुरस्रे चतुष्कोणे* कर्णसूत्रसमन्विते ।
चतुर्थेष्वपि† कोष्ठेषु कोणे सूत्रचतुष्टयम् ॥
मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत्तथा ।
पूर्व्वापरायते द्वे द्वे मन्त्री याम्योत्तरायते ॥
पातयेत्तेषु मत्स्येषु समं सूत्रचतुष्टयम् ।
पूर्व्ववत्कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ॥
तदुद्भूतेषु मत्स्येषु दद्यात्सूत्रचतुष्टयम् ।
ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणि पातयेत् ॥
प्रागग्रोदगग्रगता रेखाः कुर्य्यात्त्रयोदशैव तु ।
एवं कृते द्वयं‡ मन्त्री षट्पञ्चाशद्वयान्यपि§ ॥

* चतुःकोणे इति शारदातिलके पाठः ।

† चतुर्ष्वपि चेति शारदातिलके पाठः ।

‡ यावच्छतद्वयमिति क-पुस्तके पाठः ।

§ पदान्यपीति क-पुस्तके पाठः ।

तावत्तेनैव विधिना तत्र सूत्राणि पातयेत् ।
षट्त्रिंशता पदैर्मध्ये लिखेत्पद्मं सलक्षणम् ॥
बहिःपंक्त्यां भवेत्पीठं पंक्तियुग्मेन वीथिका ।
द्वारशोभोपशोभाख्यान् शिष्टाभ्यां परिकल्पयेत् ॥
शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् ।
पद्मक्षेत्रस्य सन्त्यज्य द्वादशांशं बहिः सुधीः ॥
तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समविभागतः ।
आद्यं स्यात्कर्णिकास्थानं केशराणां द्वितीयकम् ॥
तृतीयं पद्मपत्राणां मुक्तांशेन दलाग्रकम् ।
बाह्यवृत्तान्तरालस्य मानं यद्विधिना सुधीः ॥
निधाय केशराग्रेषु परितोऽर्द्धनिशाकरान् ।
लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत् ॥
दलाग्राणाञ्च यन्मानं तन्मानाद्वृत्तमालिखेत् ।
तदन्तराले तन्मध्यसूत्रस्योभयतः सुधीः ॥
आलिखेद्वाह्यहस्तेन दलाग्राणि समं ततः ।
दलमूलेषु युगशः केशराणि प्रकल्पयेत् ॥
एतत्साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ।
पदानि त्रीणि पादार्थं पीठकोणेषु मार्ज्जयेत् ॥
अवशिष्टैः पदैर्विद्वान् गात्राणि परिकल्पयेत् ।
पदानि वीथिसंस्थानि मार्ज्जयेत् पंक्तिभेदतः* ॥

---

* पंक्त्यभेदतः इति ग-पुस्तके पाठः ।

दिक्षु द्वाराणि रचयेद्विचतुःकोष्ठकैस्ततः ।
पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ॥
उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ।
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ॥
रञ्जयेत्पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम् ।
पीतं हरिद्राचूर्णं स्यात्सितं तण्डुलसम्भवम् ॥
कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम् ।
बिल्वादिपत्रकं श्याममित्युक्तं पञ्चवर्णकम् ॥
अङ्गुलोत्सेधविस्ताराः समा रेखाः सिताः शुभाः ।
कर्णिकां पीतवर्णेन केसराण्यरुणेन च ॥
शुभ्रवर्णेन पत्राणि तत्सन्धीन् श्यामलेन च ।
रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका ॥
केशराः पीतवर्णाः स्युररुणानि दलानि च ।
सन्धयः कृष्णवर्णाः स्युः पीतेनाप्यसितेन च ॥
रञ्जयेत्पीठगर्भाणि पादाः स्युररुणप्रभाः ।
गात्राणि तस्य शुक्लानि चतसृष्वपि वीथिषु ॥
आलिखेत्कल्पलतिकां दलपुष्पफलान्विताम् ।
वर्णैर्नानाविधैश्चित्रैः सर्व्वदृष्टिमनोहराम् ॥
द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः ।
उपशोभाः पीतवर्णाः कोणाश्चासितभांसि च ॥
तिस्रो रेखा बहिः कुर्य्यात्सितरक्तासिताः क्रमात् ।
मण्डलं सर्व्वतोभद्रमेतत्साधारणं स्मृतम् ॥

चतुरस्रां भुवं भित्त्वा दिग्भागे द्वादशधा सुधीः ।
पातयेत्तत्र सूत्राणि कोष्ठानां दृश्यते शतम् ॥
चतुश्चत्वारिंशदाद्यं पश्चात् षट्त्रिंशताम्बुजम् ।
कोष्ठैः प्रकल्पयेत्पीठं पंक्त्या नैवात्र वीथिकाः ॥
द्वारशोभे यथापूर्व्वमुपशोभा न दृश्यते ।
अवशिष्टैः पदैः कुर्य्यात् षड्भिः कोणानि तन्त्रवित् ॥
विदध्यात्पूर्व्ववच्छेषमेवं वा मण्डलं शुभम् ।
चतुरस्रे चतुःषष्टिपदान्यारचयेत्सुधीः ॥
पदैश्चतुर्भिः पद्मं स्यान्मध्ये तत्परितः पुनः ।
वीथीश्चतस्रः कुर्व्वीत मण्डलान्तावसानिकाः ॥
दिगन्तेषु चतुष्केषु पङ्कजानि समालिखेत् ।
विदिग्गतचतुष्काणि भित्त्वा षोड़शधा सुधीः ॥
मार्ज्जयेत् स्वस्तिकाकारान्* श्वेतपीतारुणासितैः ।
रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादितः ॥
प्राक्प्रोक्तेनैव मार्गेण शेषमन्यत्समापयेत् ।
नवनाभमिदं प्रोक्तं मण्डलं सर्व्वसिद्धिदम् ॥
पश्चाब्जं मण्डलं प्रोक्तमेतत्स्वस्तिकवर्ज्जितम् ।
दीक्षायां देवयज्ञे च मण्डलानां चतुष्टयम् ।
सर्व्वतन्त्रानुसारेण प्रोक्तं सर्व्वसमृद्धिदम् ॥
इति शारदातिलके सर्व्वतोभद्रादिमण्डलप्रकारः ।

---

* स्वस्तिकाकार इति ग-पुस्तके पाठः ।

अथ स्कन्दपुराणोक्तं सर्व्वतोभद्रम् ।

प्रागुदीच्यां गता रेखाः कुर्य्यादेकोनविंशतिम् ।
खण्डेन्दुस्त्रिपदा कोणे पञ्चपादा तु शृङ्खला ॥
एकादशपदा वल्ली नवभिः पार्श्वभद्रकम् ।
चतुर्व्विंशत्पदा वापी परिधिर्विंशता पदैः ॥
मध्ये षोड़शभिः कोष्ठैः पद्ममष्टदलं स्मृतम् ।
शितेन्दुः शृङ्खला कृष्णा वल्लीं नीलेन पूरयेत् ॥
भद्राऽरुणासिता वापी कर्णिका पीतवर्णिका ।
गौरा कृष्णा तथा नीला रक्ता पीता तथैव च ॥
इमानि पञ्चवर्णानि चन्द्रादिक्रमतो न्यसेत् ।
परिधित्रयसंयुक्तं वाह्ये सत्त्वरजोऽसितैः ॥

अथ मण्डलदेवताः कथ्यन्ते । सङ्ग्रहे ।

ब्रह्मस्थानं श्रुतं मध्ये सोमस्तस्योत्तरे भवेत् ।
ईशान्यामीश्वरः प्रोक्त इन्द्रं पूर्व्वे प्रपूजयेत् ॥
आग्नेय्यामग्निमावाह्य दक्षिणस्यां यमं यजेत् ।
नैर्ऋत्यां निर्ऋतिः प्रोक्तः प्रतीच्यां वरुणं यजेत् ॥
वायव्यां चैव वायुञ्च सोमं चैवोत्तरे यजेत् * ।
ईशो धाता भगः पूषा मित्रोऽथ वरुणो यमः ॥
अंशुर्विवस्वांस्त्वष्टा च विष्णुर्वसव एव च ।
इन्द्रादिती च सोमश्च कुजश्च गुरुभार्गवाः ॥

* यजेदित्यत्र न्यसेदिति ग-पुस्तके पाठः ।

शनी राहुः केतुरग्निः पूर्व्वे* परिधिदेवताः ।
ऋतुः सत्यो वसुर्दक्षः कालः कामोऽनिलोऽनलः ॥
अङ्गिराः पुलहश्चैव क्रतुः प्राचेतसस्तथा ।
वशिष्ठश्च भृगुश्चैव तथा नारद एव च ॥
एताश्च देवताश्चैव दक्षिणे पंक्तिदेवताः ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
माहेन्द्री चैव चामुण्डा वरुणः सरितां पतिः ।
इक्षूदश्च सुरोदश्च दध्योदो गुड़सागरः ॥
घृतोदः क्षीरसिन्धुश्च पश्चिमे पंक्तिदेवताः ।
आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ॥
अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः ।
प्रत्यूषश्च प्रभासश्च कुवेरश्चैव देवताः ॥
एता उत्तरतः पूज्याः सर्व्वतोभद्रदेवताः ।
इन्द्राग्निमध्ये स्थाने च अश्विनौ परिपूजयेत् ॥
आग्नेययमयोर्मध्ये विश्वेदेवाः सपैतृकाः ।
यमनैर्ऋतयोर्मध्ये सप्त यक्षांश्च पूजयेत् ॥
नैर्ऋतवरुणयोर्मध्ये भूतनागांश्च† पूजयेत् ।
वरुणवायव्ययोर्मध्ये गन्धर्व्वाप्सरसस्तथा ।
वायव्यसोमयोर्मध्ये वसवोऽष्टौ तु कारयेत् ॥

---

* पूर्व्वे इत्यपि ख-पुस्तके पाठः ।

† भूतनागांश्च इत्यपि क-पुस्तके पाठः ।

सोमस्येशानमध्ये च रुद्रानेकादशान् यजेत् ।
ईशानस्येन्द्रमध्ये तु आदित्यान्द्वादशैव तु ॥
स्वयम्भूसोमयोर्मध्ये महादेवं प्रपूजयेत् ।
स्कन्दं नन्दीश्वरञ्चैव तत्रैव च प्रपूजयेत् ॥
द्रुहिणेशानयोर्मध्ये दक्षादीन् सप्त पूजयेत् ।
परमेष्ठीन्द्रयोर्मध्ये दुर्गां विष्णुञ्च पूजयेत् ॥
द्रुहिणाग्नेययोर्मध्ये स्वधां वै तत्र संयजेत् ।
ब्रह्मणः पादमूले तु पृथिवीं तत्र पूजयेत् ॥
विरिञ्चियमयोर्मध्ये मृत्युं रोगांश्च पूजयेत् ।
ब्रह्मनैरृतयोर्मध्ये पूजयेच्च गणाधिपम् ॥
ब्रह्मवायव्ययोर्मध्ये मरुतस्तत्र पूजयेत् ।
विरिञ्चिपाशिनोर्मध्ये अपां स्थानं विदुर्बुधाः ॥
गङ्गा गोदावरी कृष्णा यमुना च सरस्वती ।
तापी च नर्म्मदा चैव यजेत्तत्रैव सप्तकम् ॥
लवणेक्ष्वादिकान् सप्त सागरांस्तत्र वै यजेत् ।
कर्णिकोपरि मेरुः स्यात्तस्य परिधिकं ततः* ॥
सोमादिसन्निधौ चैव आयुधानि क्रमेण तु ।
गदां त्रिशूलं वज्रञ्च शक्तिदण्डासिपाशकम् ॥
अङ्कुशञ्चैव तद्बाह्ये उत्तरादिक्रमेण तु ।
गौतमोऽथ भरद्वाजो विश्वामित्रोऽथ काश्यपः ॥
जमदग्निर्वशिष्ठश्च अत्रिश्चैवाथ सप्तमः ।

---

* तस्य परिधिकं तत इति ख-पुस्तके पाठः ।

अरुन्धत्यष्टमी चैव प्रयष्टव्या अथान्तिमे* ॥
परिधौ प्राक्क्रमेणैव ऐन्द्राद्याश्चैव मातरः ।
मण्डलस्य वहिर्देशे पूर्व्वादिक्रमयोगतः ॥
मध्ये सूर्य्यं प्रतिष्ठाप्य सोमादिग्रहकान् यजेत् ।
स्थाप्यैवं देवताः सर्व्वाः सम्पूज्य च यथाविधि ॥
कुण्डे वा स्थण्डिले वाग्निं प्रतिष्ठाप्याथ होमयेत् ।
तिलाज्यैर्दशसंख्याका आहुतीः प्रतिदैवतम् ॥
क्षीरौदनं ब्रह्मणि तु इन्द्रादीनां यथाविधि ।
बलिं दद्यात्प्रयत्नेन यथालाभं विचक्षणः ॥
एवं मण्डलदेवांश्च पूजयेन्मण्डले शुभे ।
तस्य देवाः प्रसीदन्ति कृतं कर्म्म शुभावहम् ॥
अनिष्ट्वा मण्डले देवान् कर्म्म शान्तिकपौष्टिकम् ।
यः करोति स दुर्मेधा मोघं तत्तस्य चेष्टितम् ॥

इति सर्व्वतोभद्रादिमण्डलविधानम् ।

अथ स्त्रीसम्बन्धीनि विधानानि उच्यन्ते ।

तत्रादावपुष्पवतीत्वहरं विधानम् ।

मदनमहार्णवे पितामहः ।

क्षुत्पिपासातुरं नारी भर्त्तारमवमत्य या ।
मिष्टान्नं स्वयमश्नाति तेनापुष्पवती भवेत् ॥

---

* अथान्तरे इति ग-पुस्तके पाठः ।

तस्याः शान्तिं प्रवक्ष्यामि सविधानं द्विजोत्तम ।
पायसं जुहुयात्तत्र मधुसर्पिःसमन्वितम्* ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥
दुर्गां सम्पूजनीयाच्च नवग्रहपुरःसरम् ।
मिथुनानि च पञ्चाशद्भोजयेच्चाष्टमत्रकम् ।
दद्यात्सौभाग्यवस्तूनि तेभ्यः शक्त्यनुसारतः ॥
इक्षवस्तवराजश्च हरिद्राश्चैव धान्यकम् ।
विकारवच्च गोक्षीरं कुसुम्भं कुसुमं तथा ।
लवणञ्चाष्टमं ह्येतत्सौभाग्याष्टकमुच्यते ॥

तवराजं सौभाग्यकरं सुवर्णद्रावकं द्रव्यं, कर्पूरं शर्करा वा । विकारवद्गोक्षीरमामिक्षा दधि वा । एवं कृते विधाने तु चेद्रजो-दर्शनाभावस्तदा शक्त्यनुसारेण कर्मणामावृत्तिः कार्या ।

इति अपुष्पवतीत्वहरविधानम् ।

प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।
व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् ॥

इति प्रयोगपारिजातेऽभिहितत्वादवश्यं रजोदर्शनार्थं कर्म कर्त्तव्यमिति भावः ।

---

* समर्चितमिति क-पुस्तके पाठः ।

## अथ प्रथमरजोदर्शनविधानम्।

तत्रादौ शुभाशुभनिरीक्षणम्। वराहसंहितायाम्।

प्रथमर्त्तौ द्वितीये वा शुभाशुभनिरीक्षणम्।
कर्त्तव्यं ज्ञातिभिः सम्यग्धर्म्मशास्त्रविधानतः॥

अथ वस्त्रफलम्।

शुभाय श्वेतवस्त्राढ्या रोगिणी रक्तवाससा।
नीलाम्बरधरा नारी विधवा जायते ध्रुवम्॥
भोगिनी पीतवस्त्रा च दृढ़वस्त्रा पतिव्रता।
दुर्भगा शीर्णवस्त्रा च सुभगा क्षौमवस्त्रिणी॥
आलोहिते भवेद्वेश्या श्वेतवर्णे च पुत्रिणी।
कृष्णे च विधवा नारी रजस्येतत्तु लक्षणम्॥
ऊढ़ा संवत्सरार्द्धेन मासे पक्षे तथा खलु।
रजस्तु दृश्यते स्त्रीणां सर्व्वदैवाशुभावहम्॥

अथ तिथिफलम्।

वैधव्यदं प्रतिपदि द्वितीया पुत्रवर्द्धिनी।
सौभाग्यदा तृतीया च चतुर्थी सुखनाशिनी॥
पञ्चमी सुभगा चैव षष्ठी सम्पत्तिनाशिनी।
सप्तमी धननाशाय पुत्रदा सौख्यदाऽष्टमी॥
नवमी क्लेशदा स्त्रीणां दशमी च सुखप्रदा।
एकादश्यर्थनाशाय द्वादशी रतिवर्द्धिनी॥

त्रयोदशी शुभा ज्ञेया दुर्भगा च चतुर्द्दशी ।
पौर्णमासी त्वमावास्या दुःखरोगविवर्द्धिनी ॥

अथ मासफलम् । तत्रैव ।

चैत्रे मासि विशेषेण वैधव्यं लभते ध्रुवम् ।
वैशाखे बहुपुत्राढ्या ज्यैष्ठे रोगाहता भवेत् ॥
आषाढ़े ह्यप्रजा प्रोक्ता श्रावणे धनिनी भवेत् ।
भाद्रे तु दुर्भगा ज्ञेया ह्याश्विने च यशस्विनी* ॥
कार्त्तिके निर्धना बाला मार्गशीर्षे बहुप्रजा ।
पौषे स्यात्पुंश्चली नारी माघे पुत्रसुखान्विता ।
फाल्गुने सर्व्वसम्पन्ना प्रथमर्त्तौ फलं स्मृतम् ॥

अथ वारफलम् ।

आदित्ये विधवा नारी सोमे दैन्यमवाप्नुयात् ।
मङ्गले चात्मघाताय बुधे च धनिनी भवेत् ॥
गुरौ च भर्त्तृसुखदा कन्यापुत्रप्रसूर्भृगौ ।
पौंश्चल्यकारणं मन्दे म्रियते भर्त्तुरग्रतः ॥

अन्यत्र अन्यथापि ।

रोगी पतिव्रता दुःखी पुत्रिणी भोगभागिनी ।
पतिव्रता क्लेशभागी सूर्य्यवारादिषु क्रमात् ॥

अथ वेलाफलम् ।

प्रातःकाले रजः स्त्रीणां प्रथमं शोकवर्द्धनम् ।
सङ्गवे सुखसम्पत्तिर्मध्याह्ने धनसन्ततिः ।

---

* तपस्विनीत्यपि ख पुस्तके पाठः ।

अपराह्णे धनावाप्तिः सायाह्ने मध्यमं फलम् ।
पूर्व्वरात्रे सुखायालं मध्यरात्रे धनक्षयः ।
अपररात्रेऽर्थनाशाय प्रथमर्त्तुफलं स्मृतम् ॥

अथ स्थानफलम् ।

गृहमध्ये सुखावाप्तिर्गृहद्वारे वियोगिनी ।
शय्यायां सुखदा भूमावनेकापत्यसन्ततिः ॥

अथ द्रष्टृफलम् ।

पुरन्ध्रया दृश्यते यत्तु रजः स्त्रीणां सुखाय तत् ।
विश्वस्तया तु यद्दृष्टं रजो वैधव्यदं स्मृतम् ॥
रजः पश्यति चेत्कन्या पुमान् वा तत्सुखं भवेत् ।
स्वयं दृष्टं तथा स्त्रीणामात्मघाताय कल्पते ॥
पितुर्गेहे रजो दैन्यं विदधाति पितुः कुले ।
देवस्थाने पितृस्थाने धनस्थानेऽन्यवेश्मनि ।
मार्गे भर्तृवियोगे च चण्डालाद्ये मृतप्रजा ॥

विश्वस्तया विधवया ।

अथ नक्षत्रफलम् ।

अश्विनी सुखदा स्त्रीणां भरणी कामवर्द्धिनी ।
कृत्तिका दैन्यदा ज्ञेया रोहिणी सुखदा भवेत् ॥
मृगस्तु कामभोगाय सुखदं रुद्रदैवतम् ।
आदित्यर्क्षं सुखं दद्यात्पुष्यभं सुखवर्द्धनम् ॥
अश्लेषा सुखनाशाय हस्तः पुत्रविवर्द्धनः ।
चित्रा चित्रतनुं नारीं कुरुते नात्र संशयः ॥

स्वाती शुभाय नारीणां विशाखा सुखनाशिनी ।
अनुराधार्थभोगाय ज्येष्ठा भर्तृवियोगदा ॥
शुभदा चाशुभं मूलं पूर्व्वाषाढ़ार्थनाशिनी ।
सुखदा चोत्तराषाढ़ा श्रवणः सुखवर्द्धनः ॥
धनिष्ठापञ्चकं स्त्रीणां प्रथमर्त्तौ सुखप्रदम् ।
तिथिरेकगुणा प्रोक्ता नक्षत्रञ्च चतुर्गुणम् ॥
वारः षष्ठगुणो ज्ञेयो मासश्चाष्टगुणः स्मृतः ।
वस्त्रं दशगुणं विद्याद्दर्शनञ्च ततोऽधिकम् ॥
अशुभश्चेद्रजः स्त्रीणां प्रथमर्त्तौ हि दृश्यते ।
विधानं तत्र कर्त्तव्यमरिष्टघ्नं विशेषतः ॥ इति ।

अथ ऋतुस्वरूपम् ।

नाभीमूले स्थितं पुष्पं चतुर्द्दलसमन्वितम् ।
तस्मिन् सर्व्वाश्च दधते गर्भसम्भवकारणम् ॥
अधोमुखं स्थितं स्त्रीणां तद्बाल्ये मुकुलीकृतम् ।
बाल्यात्परवयःप्राप्तौ मुकुलं विकसद्भवेत् ॥
उत्फुल्लं कुसुमं स्त्रीणां स्वभावेन स्रवेद्रजः ।
तदाप्रभृति सर्व्वासां मासि मासि ऋतुर्भवेत् ॥

अथ योगादिफलम् ।

परिघस्य तु पूर्व्वार्द्धे व्यतीपाते च वैधृतौ ।
सन्ध्यासूपप्लवे* विद्यामशुभं प्रथमार्त्तवम् ॥

* व्याघातयूलयोरिति ग-पुस्तके पाठः ।

विष्टिर्भद्रेत्यर्थः ।

अन्यत्रापि ।

अमासंक्रान्तिविष्ट्यादौ व्यतीपाते च वैधृतौ ।
परिघस्य तु पूर्व्वार्द्धे षट् च* गण्डातिगण्डयोः ॥
व्याघाते नव शूले तु नाद्याः पञ्च चतुर्द्दश† ।
वैधव्यमर्थहानिश्च सुतनाशं मृदङ्गयम् ॥
वैधव्यं शत्रुवृद्धिश्च दारिद्र्यं क्षीणजीवनम् ।
तेजोहानिं समायाति एषु पुष्पवती क्रमात् ॥

अथ राशिफलम् ।

मेषे सव्यभिचारा स्याद्वृषभे परभोगिनी ।
मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥
पुष्पाढ्या सिंहराशौ तु कन्यायां श्रीमती तथा ।
विलक्षणा तुलायान्तु वृश्चिके तु पतिव्रता ॥
दुश्चारिणी च धनुषि तथा चाप्रियवादिनी ।
मकरे मानहीना च कुम्भे निर्धनवल्लभा ।
मीने विलक्षणे लग्ने ग्रहसंस्था विवाहवत् ॥

अथ लग्नफलम् । नारसिंहीये ।

लग्नस्य सप्तमे स्थाने सूर्य्यो वैधव्यकारणम् ।
पुत्रहानिकरस्त्वारो बुधः सत्पुत्रदो भवेत् ॥

आरो मङ्गल इत्यर्थः ।

---

* षट् चक्रिति क-पुस्तके पाठः ।

† पञ्चतुर्दशके इति ख-पुस्तके पाठः ।

बृहस्पतिर्धनायुष्यं शुक्रः सापत्न्यकारकः ।
शनैश्चरे च वन्ध्या स्याद्राहौ तु मरणं ध्रुवम् ॥

अथ गुरुशुक्रोदयफलम् ।

आयुः श्रीः प्रीतिरारोग्यमुदिते गुरुभार्गवे ।
मन्दोदये विरोधः स्यात्क्लेशः स्यात्तामसोदये ॥

तामसो राहुरित्यर्थः ।

अन्यच्च ।

सम्मार्ज्जनीकाष्ठतृणाग्निशूर्पान्
हस्ते दधाना कुलटा तदा स्यात् ।
तल्पोपभोगे तपसि स्थिता चेद्-
दृष्टं रजो भाग्यवती तदा स्यात् ॥

इत्यादि सर्व्वं ज्योतिःशास्त्रतोऽवगन्तव्यम् ।

### अथ प्रथमर्त्तौ मङ्गलाचारः ।

प्रयोगपारिजाते स्मृतिचन्द्रिकायाम् ।

प्रथमर्त्तौ तु पुष्पिण्याः पतिपुत्त्रवतीस्त्रियाः ।
अक्षतैरासनं कुर्य्यात्तस्मिंस्तामुपवेशयेत् ॥
हरिद्रागन्धपुष्पादीन्दद्यात्ताम्बूलकं स्रजम् ।
आशिषो वाचयेयुस्ताः पतिपुत्त्रवती भव ॥
दीपैर्नीराजनं कुर्य्यात्सदीपे वासयेद्गृहे ।
ताः सर्व्वाः पूजयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः ।

लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः ॥

अन्यच्च क्रतौ दक्षः ।

आर्त्तवाभिप्लुता नारी नैका वेश्मनि संविशेत् ।
न संसर्गं व्रजेत्सद्भिः स्नात्वा पापात्प्रमुच्यते ॥
अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् ।
न कुर्य्यात्सार्त्तवा नारी ग्रहाणामीक्षणं तथा ।
नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम् ॥

नेति सर्व्वत्र अनुषज्यते ।

दग्धे शरावे भुञ्जीत पेयञ्चाञ्जलिना पिबेत् ।

अथ प्रसङ्गाद्रजस्वलास्पर्शशुद्धिविधानम् ।

स्मृतिरत्नावल्यां दक्षः ।

उदक्ये वा सगोत्रे वा सवर्णे वाथवा पुनः ।
तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् ॥
सवर्णे योनिसम्बन्धे सगोत्रे वा रजस्वले ।
मिथः स्पृशेदमत्या तु स्नानमात्रेण शुध्यति ॥
मत्यैकरात्रं नाश्नीयात्पञ्चगव्यं पिबेत्ततः ।
उदक्ययोर्यदान्योऽन्यमसम्बन्धः सवर्णयोः ॥
स्पृशेदमत्या स्नात्वा च तस्मिन्नाद्यादशुचिर्भवेत् ।
मत्या तु नाद्यादाशुद्धेर्भुङ्क्ता चेत्प्रतिवासरम् ॥

तस्मिन् स्पर्शदिने ।

उपोषणं तदा केचिदाहुस्तद्दिनसंख्यया ।
उपवासे त्वशक्ता चेत्तत्समं दानमाचरेत् ॥
सवर्णेतां स्पृशेतां वां ब्राह्मणी च रजस्वले ।
आस्नानकालान्नाश्नीतो शुभे मत्या मिथः क्वचित् ॥
स्नात्वोपवासं कुर्यातां पञ्चगव्येन शुध्यतः ।
एवमभ्यासतस्त्वब्दप्रायश्चित्तं समाचरेत् ॥
मत्या रजस्वलान्योऽन्यं ब्राह्मणी वृषलीं स्पृशेत् ।
ब्राह्मण्याः कृच्छ्रमेकन्तु शूद्रा पादेन शुध्यति ॥

काश्यपः ।

रजस्वला सूतिका वा चाण्डालं यदि संस्पृशेत् ।
आस्नानकालान्नाश्नीयादतिकृच्छ्रं समाचरेत् ॥
चाण्डालं सार्त्तवा नारी संस्पृशेद्भोजनान्तरे ।
वाग्यता वहिरासीना स्नानकालादुपोषणम् ॥
प्राजापत्यं चरेत्पश्चात्पञ्चगव्यं ततः पिबेत् ।
विप्रान्द्वादशसंख्याकान् भोजयित्वा विशुध्यति ॥
पुष्पिणी संस्पृशेच्चोच्छादशुद्धं वा नरं स्त्रियम् ।
स्नानादर्वाङ्न भुञ्जीत भुक्त्वा कृच्छ्रं समाचरेत् ॥
स्पृष्टोदक्या पञ्चनखान्द्विशफैकशफांपशून् ।
षण्डजानि च सर्व्वाणि नाद्यादास्नानवासरात् ॥

पराशरः ।

रजस्वला यदा स्पृष्टा* शुना जम्बूकरासभैः ।

---

*स्पृष्टा दष्टेति क-पुस्तके पाठः ।

पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥
ऊर्द्धन्तु द्विगुणं नाभेर्वक्त्रे तु त्रिगुणं तथा ।
चतुर्गुणं स्मृतं मूर्द्ध्नि देशेऽन्यत्राव्रती भवेत् ॥ इति ॥

*कृच्छ्रप्रकारस्तु मिताक्षरायां यथा ।*

*एकभक्तेन नक्तेन तथैवायाचितेन च ।*
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ।
यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ॥

इत्याद्युक्तस्तत्प्रकारभेदस्तु तत्रैव द्रष्टव्यः ग्रन्थबाहुल्यभिया नात्र लिख्यते । कृच्छ्रादिव्रतन्तु स्नानोत्तरकाले कार्य्यम् ।

नैमित्तिकस्नानप्रकारस्तु स्मृत्यर्थसारे ।

स्नाने नैमित्तिके प्राप्ते रजोदर्शने पात्रान्तरिततोयेन स्नात्वाऽद्भिः सिक्तगात्रा साङ्गोपाङ्गा वस्त्रमनिष्पीड्य अन्य-वस्त्रधारणं कृत्वा व्रतं चरेदिति ।

अथ शुद्धस्नानं स्मृत्यर्थसार एव यथा ।

रजस्वला षष्टिमृत्तिकाभिः शौचं कृत्वा मलं प्रक्षाल्य दन्तधावनपूर्व्वकं सङ्गवे स्नायादिति ।

स्नानानन्तरमपि रजःस्रावे विशेषोऽभिधीयते ।

कात्यायनः ।

रजस्वला यदा नारी त्रिरात्रमशुचिर्भवेत् ।
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ॥
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ।
भर्त्तुः शुद्धा चतुर्थेऽह्नि स्नाता नारी रजस्वला ।

दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

इत्युक्ताऽभिहितम् ।

रागजं रोगजञ्चैव द्रव्यजं कालजं तथा ।

*यद्रागरोगद्रव्योत्थं तद्रजः* प्राह भार्गवः ।*

*कालजन्तु रजःसंज्ञं तस्मात्तत्रैव साऽशुचिः ॥*

एषां लक्षणानि यथा ।

अर्व्वाक् प्रसूतेस्तत्पञ्च मेदो वन्ध्याङ्गनासु यत् ।

तद्रागजमिति प्रोक्तं प्रजोद्भेदसमुद्भवम् ॥

पित्तादिदोषवैषम्यादसकृत्तत्प्रवर्त्तते ।

रोगजं तत्समुद्दिष्टमथ द्रव्यजमुच्यते ॥

रोगेण यद्रजः स्त्रीणामन्वहं सम्प्रवर्त्तते ।

नाऽशुचिः स्त्री ततस्तेन यतो वैकारिकं मलम्† ।

द्रव्यजं धातुवैषम्यहेतुद्रव्योपभोगजम् ॥ इति ।

आरभ्य चार्त्तवदिनादेकविंशतिवासरे ।

मासादूर्द्धं रजो यत्स्यात्तत्कालजमुदाहृतम् ॥

रजस्वला यदा नारी पुनरेव रजस्वला ।

सा विंशतिदिनादूर्द्धं त्रिरात्रमशुचिर्भवेत् ॥

ततः पूर्व्वन्तु ।

रजस्वला यदि स्नाता पुनरेव रजस्वला ।

अष्टादशदिनादर्व्वागशुचित्वं न विद्यते ॥

---

* तद्रज इत्यत्र तद्रक्तमिति ख-पुस्तके पाठः ।

† मलमित्यत्र हि तदिति क-पुस्तके पाठः ।

एकोनविंशतेरर्व्वागेकाहं स्यात्ततो द्व्यहम् ।
विंशप्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥ इति ।

कश्यपस्तु ।

रजस्वला यदा नारी पुनरेव रजस्वला ।
अष्टादशाहात्प्राग्वापि अशुचिः स्यात्त्रिरात्रकम् ॥
त्रयोदशदिनादूर्ध्वं रजसा युज्यते यदा ।
अष्टादशाहात्प्राग्वापि त्रिरात्रमशुचिर्भवेत् ॥
एकादशे त्वहोरात्रं द्विरात्रं द्वादशेऽहनि ।
ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिचोदितम् ॥

इत्यादिपरस्परविरुद्धवचनं जातिगुणवयोऽवस्थादेशभेदेन व्यवस्थापनीयम् ।

रजःकालाज्ञाने प्रजापतिराह ।

अविज्ञाते मले सा च मलवद्वसना यदि ।
ज्ञातं गेहेषु दुष्टं* स्याच्छुद्धिस्तस्यास्त्रिरात्रतः ॥

रजःप्राप्तकालसन्देहेऽपि स एवाह ।

निःसन्देहे परिज्ञाने आर्त्तवं शुद्धिकारणम् ।
सन्देहमात्रे स्नानं स्यादित्युवाच बृहस्पतिः ॥ इति ।

अथ रात्रौ रजोदर्शने विशेषः ।

अर्द्धरात्रपर्य्यन्तं पूर्व्वदिनमित्यपरे परदिनगणना वा । त्रिभागाया रात्रेर्भागद्वयं पूर्व्वदिनान्तर्गतमित्यन्ये । सूर्य्योदयावधि पूर्व्वदिनमित्यपरे ।

---

* दुष्टमित्यत्र शुद्धमिति क-पुस्तके पाठः ।

तदाह कश्यपः ।

उदिते तु यदा सूर्य्ये नारीणां दृश्यते रजः ।
जननं वा विपत्तिर्वा यस्याहस्तस्य शर्व्वरी ॥
अहोरात्रावधिः कालः सूतकादौ विधीयते ।
रात्रिं कुर्य्यात्त्रिभागान्तु द्वौ भागौ पूर्व्वगामिनौ ॥
उत्तरोऽंशः प्रभातेन युज्यते मृतसूतके ।
रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्व्वमेव दिनं ग्राह्यं यावन्नाभ्युदितो रविः ॥ इति ।

अत्रापि देशाचारादिना व्यवस्था द्रष्टव्या ।

अथ रजस्वलाया ज्वरादिरोगस्थले शुद्धिविधानम् ।

स्मृत्यर्थसारे ।

रजस्वलां ज्वरितां चतुर्थेऽहनि सचेलमवगाह्य आचम्य
दशकृत्वो द्वादशकृत्वो वा अन्या तां स्पृष्ट्वा आचामेदिति ।

उशना अपि ।

ज्वराभिभूता या नारी रजसापि परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्म्मणा ॥
चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा सचेलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दशद्वादशकृत्वो वा आचामेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति ।
आतुराणान्तु सर्व्वासामेवं शुद्धिर्विधीयते ॥ इति ।

अथोदक्यास्पृष्टानां चेतनानां सचेलं स्नानम्, अचेतनपीठादीनान्तु प्रक्षालनम्। तत्र उदक्यादिस्पृष्टाचेतनस्पर्शे आचमनम्।

उदक्याऽशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत्

इति याज्ञवल्क्यस्मरणात्। उदक्यादिस्पृष्टचेतनस्पर्शे तु द्वितीयस्यापि स्नानमेव।

यथाह मनुः।

दिवाकीर्त्तिमुदक्याञ्च पतितं सूतिकां तथा।
शवं तत्स्पर्शिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति॥

तृतीयस्य तु आचमनम्। यथाह संवर्त्तः।

तत्स्पर्शिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते।
ऊर्द्ध्वमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा॥ इति।

एतदमतिविषयम्। बुद्धिपूर्व्वस्पर्शे तु तृतीयस्यापि स्नानमेव।

पतितचाण्डालसूतिकोदक्याशवस्पर्शितत्स्पर्श्युपस्पर्शे सचेलमुपस्पर्शनाच्छुध्येदिति गौतमस्मरणात्।

चतुर्थस्य त्वाचमनम्। यथाह देवलः।

उपस्पृश्याशुचिस्पृष्टं तृतीयञ्चापि मानवः।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति॥

अशुचस्य उदक्यादिस्पर्शे तु देवलः।

अशुचाः स्वयमप्येतानशुचस्तु यदि स्पृशेत्।
स शुध्यत्युपवासेन तथा कृच्छ्रेण वा पुनः।
श्वादिस्पर्शे तूपवासः कृच्छ्रस्तु श्वपचादिके॥

इति स्मरणात्।

एवं प्रासङ्गिकं परिसमाप्य प्रकृतमुच्यते ।

विष्णुधर्म्मोत्तरे ।

पञ्चमे दिवसे स्नात्वा द्वाभ्यामप्यथ मङ्गलैः ।

द्वाभ्यां दम्पतिभ्यामित्यर्थः ।

उष्णैश्च वारिभिः श्रेष्ठैः पञ्चपल्लवसंयुतैः ।
तिलकल्केन शुद्धेन शुभकल्केन वै पुनः ॥
आह्निकञ्च विधिं कृत्वा विधानं नूनमाचरेत् ।
शुभाचारसमायुक्तः श्रद्धया परया युतः ॥
स्थण्डिलन्तु ततः कृत्वा स्वस्ति वाच्यं द्विजोत्तमैः ।
अग्निप्रतिष्ठापूर्व्वन्तु हवनं तत्र कारयेत् ॥
अष्टोत्तरसहस्रञ्च जुहुयात्तिलसर्पिषा ।
प्रधानं पायसं प्रोक्तं सघृतञ्च सशर्करम् ॥
आकृष्णेनेति* मन्त्रेण मूर्द्धानम्† इति वा पुनः ।
सूर्य्यसूक्तं‡ जपेद्विद्वान्विष्णुसूक्तं§ तथैव च ॥

---

* मन्त्रोऽयं ३१ पृष्ठे प्रदर्शितः ।

† मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥

(१३ अ. ८ म. यजुः ।)

‡ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम् ॥
अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥

इत्यादिकमृग्वेदीयब्रह्मकर्म्मणि ११ पत्रस्य पूर्व्वपृष्ठे मृग्यम् ।

§ विष्णोर्नु कं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥

इत्यादिकमृग्वेदीयब्रह्मकर्म्मणि १५ पत्रस्य परपृष्ठे मृग्यम् ।

सूर्य्यपूजापूर्व्वकञ्च कुसुमैः करवीरकैः ।
सुरभैर्गुग्गुलुर्देयो धूपार्थं दीप एव च ॥
वक्रेहत्तरतो विद्वान् स्थापयेत्कदलीं शुभाम् ।
हैमैः पञ्चपलाक्याञ्च पलस्यापि सुलक्षणाम् ॥
पलार्द्धेन तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ।
सुमृतश्यां पञ्चपत्राक्यां कदलीञ्च विराजिताम् ॥
राशौ कृतप्रतिष्ठान्तु तण्डुलानां नृपोत्तम ।
तण्डुलानां परीमाणमाढ़कानां चतुष्टयम् ॥
दद्यात्तां विप्रवर्य्याय सवस्त्राञ्च सदक्षिणाम् ।
अलङ्कृताय विदुषे श्रोत्रियाय कुटुम्बिने ॥

दानमन्त्रो यथा ।

सुपत्रे सुभगे देवि रम्भे भास्करवल्लभे ।
रक्ष मां रजसो दोषाद्दुष्टस्यास्य विगर्हितात् ॥
दानेन तव देवेशः सविता सप्तवाहनः ।
प्रीतो भवतु मे सद्यो दोषं हरतु दुष्टजम् ॥

अथ आचार्य्यप्रार्थनामन्त्रः ।

आचार्य्य त्वं महाभाग रजोदोषं विनाशय ।
दानस्यास्य प्रभावेण रजोदोषाच्च पाहि माम् ।
आचार्य्यं पूजयेद्भक्त्या वस्त्रैर्गन्धैश्च तोषणैः* ॥

ततो वंशपात्रदानम् ।

---

* तोषणैरित्यत्र तोषयेदिति ग-पुस्तके पाठः ।

गोधूमैः पूरयेद्वंशपात्रं पुष्पफलान्वितम् ।
ताम्बूलैस्ताड़पत्रैश्च सौभाग्यद्रव्यसंयुतम् ॥

तद्दानमन्त्रो यथा ।

अरिष्टविनिवृत्त्यर्थमात्मवंशाभिवृद्धये ।
रजोदोषापनुत्त्यर्थं सौभाग्यं देहि मे सदा ॥ इति ।
ततोऽभिषेचनं कार्य्यं दम्पत्योश्च विशेषतः ।
वेदविद्भ्यो धनं देयं यथाशक्त्या च तर्पणम् ॥
यस्मिन्मासि तद्दृष्टं रजो दुष्टं भयावहम् ।
तद्वासो यत्नतस्त्याज्यं ततः शान्तिकरं भवेत् ॥
पुत्रपौत्रादिसंयुक्तो धनधान्यसुतान्वितः ।
पत्न्या सह चिरं जीवेज्जीववत्सा च* मोदते ॥

इति विष्णुधर्म्मोत्तरे रजोदर्शनशान्तिविधानं समाप्तम् ।

अथ शौनकोक्तम् ।

आर्त्तवानान्तु नारीणां शान्तिं वक्ष्यामि शौनकः ।
तिथिवारर्क्षयोगेभ्यो लग्नसङ्क्रमात् ॥
ग्रहेभ्यो दुःस्थितेभ्यश्च तत्तद्दोषक्षयाय च ।
अन्नपुत्रादिलाभाय दम्पत्योरभिवृद्धये ॥
पञ्चमेऽह्नि चतुर्थे वा ग्रहातिथ्यपुरस्सरम् ।
तस्मिन्नहनि कर्त्तव्यमृतुहोमं विधानतः ॥
आचार्य्यं वरयेत्प्राज्ञं भुवनेश्वर्य्यनुष्ठितम् ।
होमार्थञ्च जपार्थञ्च वरयेदृत्विजो बहून् ॥

* जीववत्सश्चेति पाठो युक्तः । वत्सेति पाठे चेत्यध्याहार्य्यम् ।

यजमानो द्विजैः सार्द्धं शान्तिहोमं समाचरेत्।
गृहादीशानदिग्भागे देवतापूजनाय च॥
द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत्।
कुम्भत्रयं न्यसेद्राशौ तन्तुवस्त्रादिवेष्टितम्॥
पूरयेत्तीर्थसलिलैः प्रतिकुम्भं पृथक् पृथक्।
सूक्तेनाथ नवर्चेन* प्रसुव आपः† इत्यथ॥
ऋचापः‡ प्रयतस्तद्वद्गायत्र्या च ततः पुनः।
मध्येकुम्भं क्षिपेद्राज्यमौषधानि च हेम च॥
ततश्च पञ्चरत्नानि गन्धपुष्पाक्षतादिकान्।
औषधानि च वक्ष्यन्ते मुनिभिः शान्तिकारणात्॥
औडुम्बरं कुशा दूर्वा राजीववकविल्वकाः।
विष्णुक्रान्ताथ तुलसी वर्हिषं शङ्खपुष्पिका॥

---

* नवर्चसूक्तं यथा—आपो हि ष्ठा मयो भुवः। ता न ऊर्जे दधातन। महे रणाय चक्षसे। ओं यो वः शिवतमो रसः। तस्य भाजयतेह नः। उशतीरिव मातरः। तस्मा अरं गमाम वः। यस्य क्षयाय जिन्वथ। ओं आपो जनयथा च नः।
(११ अ. ५० म. यजुः।)

† प्रसुव आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः।
[illegible] त्रेधा हि चक्रमुः प्रसृत्वरीणामति सिन्धुरोजसा॥
(१० म. ७५ सू. ऋक्)

‡ आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम्।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम्॥
यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम।
सर्वं पुनन्तु मामापो ऽसताञ्च प्रतिग्रहं स्वाहा॥

शतावर्य्यश्च गन्धा च निर्गुण्डी सर्षपद्वयम्।
अपामार्गः पलाशश्च पनसो जीवकस्तथा॥
प्रियङ्गवश्च गोधूमा व्रीहयोऽक्षता एव च।
क्षीरञ्च दधिसम्मिश्रं पद्मपत्रं तथोत्पलम्॥
कुरण्टकत्रयं गुञ्जा वचाभद्रकमुस्तकाः।
द्वात्रिंशदौषधानीह यथासम्भवमाहरेत्॥
गजाश्वरथ्यावल्मीकसङ्गमाद्ध्रदगोकुलात्।
राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत्॥
कुम्भस्थापनमित्याद्यास्तत्तन्मन्त्रेण कारयेत्।
मृत्तिकाश्चौषधादीनि मन्त्रेण प्रक्षिपेत्क्रमात्॥
कुम्भोपरि न्यसेत्पात्रं कांस्यं वा ताम्रमेव वा।
मृन्मयं वेणुपात्रं वा स्वल्प*वित्तानुसारतः॥
पात्रोपरि न्यसेद्दस्तं प्रतिमां भुवनेश्वरीम्।
तन्मूर्त्तं वा न्यसेत्तत्र इन्द्राणीञ्च पुरन्दरम्॥
आचार्य्यः पूजयेद्देवीमङ्गाद्यावरणानि च।
अन्यो वा पूजनं कुर्य्याद्वाग्यतया मन्त्रसारया॥
इन्द्राणीं पूजयेद्देवीमिन्द्राणीमासु नारिषु†।
क्रमेण पूजयेदिन्द्रमिन्द्र त्वा वृषभं वयम्‡॥

---

* स्वल्प इत्यत्र स्वस्येति ख-पुस्तके पाठः।

† इन्द्राणीमासु नारिषु सुभगामहमश्रवम्। न ह्यस्या अपरञ्चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः। ऋग्वेदसंहितायाम्।

‡ स्नानविधानप्रकरणे दर्शयिष्यते। ६४ पृष्ठं द्रष्टव्यम्।

यजमानो द्विजैः सार्द्धं शान्तिहोमं समाचरेत् ।
गृहादीशानदिग्भागे देवतापूजनाय च ॥
द्रोणप्रमाणधान्येन व्रीहिराशित्रयं भवेत् ।
कुम्भत्रयं न्यसेद्राशौ तन्तुवस्त्रादिवेष्टितम् ॥
पूरयेत्तीर्थसलिलैः प्रतिकुम्भं पृथक् पृथक् ।
सूक्तेनाथ नवर्चेन* प्रसुव आप† इत्यथ ॥
ऋचापः‡ प्रयतस्तद्वद्गायत्र्या च ततः पुनः ।
मध्येकुम्भं क्षिपेद्राज्यमौषधानि च हेम च ॥
ततश्च पञ्चरत्नानि गन्धपुष्पाक्षतादिकान् ।
औषधानि च वक्ष्यन्ते मुनिभिः शान्तिकारणात् ॥
औदुम्बरं कुशा दूर्व्वा राजीववककविल्वकाः ।
विष्णुक्रान्ताथ तुलसी वर्हिषं शङ्खपुष्पिका ॥

---

* नवर्चसूक्तं यथा—आपो हि ष्ठा मयो भुवः । ता न ऊर्ज्जे दधातन । महे रणाय चक्षसे । ओँ यो वः शिवतमो रसः । तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वः । यस्य क्षयाय जिन्वथ । ओँ आपो जनयथा च नः ।
(११ अ. ५० म. यजुः ।)

† प्रसुव आपो महिमानमुत्तमं कारुर्वोचाति सदने विवस्वतः ।
[illegible] त्रेधा हि चक्रमुः प्रसृत्वरीणामति सिन्धुरोजसा ॥
(१० म. ७५ सू. ऋक् )

‡ आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम् ।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् ॥
यदुच्छिष्टमभोज्यञ्च यद्वा दुश्चरितं मम ।
सर्व्वं पुनन्तु मामापो असताञ्च प्रतिग्रहं स्वाहा ॥

शतावर्य्यश्च गन्धा च निर्गुण्डी सर्षपद्वयम्।
अपामार्गः पलाशश्च पनसो जीवकस्तथा॥
प्रियङ्गवश्च गोधूमा व्रीहयोऽक्षता एव च।
क्षीरञ्च दधिसम्मिश्रं पद्मपत्रं तथोत्पलम्॥
कुरण्टकत्रयं गुञ्जा वचाभद्रकमुस्तकाः।
द्वात्रिंशदौषधानीह यथासम्भवमाहरेत्॥
गजाश्वरथ्यावल्मीकसङ्गमाद्ध्रदगोकुलात्।
राजद्वारप्रवेशाच्च मृदमानीय निक्षिपेत्॥
कुम्भस्थापनमित्याद्यास्तत्तन्मन्त्रेण कारयेत्।
मृत्तिकाश्चौषधादीनि मन्त्रेण प्रक्षिपेत्क्रमात्॥
कुम्भोपरि न्यसेत्पात्रं कांस्यं वा ताम्रमेव वा।
मृण्मयं वेणुपात्रं वा स्वल्प*वित्तानुसारतः॥
पात्रोपरि न्यसेद्वस्त्रं प्रतिमां भुवनेश्वरीम्।
तन्मूर्त्यं वा न्यसेत्तत्र इन्द्राणीञ्च पुरन्दरम्॥
आचार्य्यः पूजयेद्देवीमङ्गाद्यावरणानि च।
अन्यो वा पूजनं कुर्य्याद्गायत्र्या मन्त्रसारया॥
इन्द्राणीं पूजयेद्देवीमिन्द्राणीमासु नारिषु† ।
क्रमेण पूजयेदिन्द्रमिन्द्र त्वा वृषभं वयम्‡॥

---

* स्वल्प इत्यत्र स्वस्येति ख पुस्तके पाठः।

† इन्द्राणीमासु नारिषु सुभगामहमश्रवम्। न ह्यस्या अपरं च न जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः। ऋग्वेदिनामकर्म।

‡ अग्निवक्ष्यमाणे दर्शयिष्यते। ६४ पृष्ठे द्रष्टव्या।

अनेन विधिनाचार्य्यः पूजयेद्देवतात्रयम् ।
आवाहनादिसकलैरुपचारैः पृथक् पृथक् ॥
तन्मध्ये संस्पृशन् कुम्भं मन्त्रेण भुवनेश्वरीम् ।
जपेदाचार्य्य आहोमाच्छ्रीसूक्तञ्च* जपेत्ततः ॥
स्पृशन्वै दक्षिणं कुम्भमृत्विगेको जपेत्तथा ।
चत्वारि रुद्रसूक्तानि† चतुर्मन्त्रान्तराणि च‡ ॥
संस्पृशन्नुत्तरं कुम्भं भद्रश्रीरुद्रसंख्यया ।
अत्र§ इन्द्राग्निसूक्तञ्च तत्रैव च स्पृशञ्जपेत् ॥
कुम्भस्य पश्चिमे देशे शान्तिहोमं समाचरेत् ।
अन्वाधानं ततः कुर्य्याद्धोमं तत्र समाचरेत् ॥
पूर्णपात्रनिधानान्तं कृत्वाचार्य्यो द्विजैः सह ।
दूर्व्वाभिस्तिलगोधूमैः पायसेन घृतेन च ॥

---

हरण्यवर्णां हरिणीं सुवर्णरजतप्रभाम् ।
न्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥
इत्यादिकं श्रीसूक्तम् ऋग्वेदपरिशिष्टे मृग्यम् ।

मा रुद्राय तवसे कपर्द्दिने क्षयद्वीराय प्रभरामहे मतीः ।
था असदद्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥
(१६ अ. ४८ म. यजुः ।)

तुर्मन्त्रोत्तराणि च इति ग-पुस्तके पाठः ।

अग्न इन्द्राणी भवता मनोभिः अस्म इन्द्रापूषणा रातहव्या ।
ामन्द्राणो मासु विताय मंथोः अस्म इन्द्रापूषणा वाजसातौ ॥
ऋग्वेदिनामर्थं ।

पायसं श्रपयेत्तत्र सावित्रं हि हविश्च तत् ।
कृत्वाज्यभागपर्य्यन्तं हविरुद्वासनादिकम्* ॥
तिसृभिश्चैव दूर्व्वाभिरेकैका चाहुतिर्भवेत् ।
याभिर्मन्त्रप्रयुक्ताभिर्गायत्र्या जुहुयात्क्रमात् ॥
अष्टोत्तरसहस्रन्तु शतमष्टोत्तरन्तु वा ।
तिलमिश्रैश्च गोधूमैर्द्रव्येणान्याहुतीर्हुनेत् ॥
जुहुयात्पायसेनैव आज्येनैव हुनेत्क्रमात् ।
हविश्चतुष्टयेनैव प्रत्येकं समसंख्यया ॥
गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयम् ।
ततः स्विष्टिकृतं हुत्वा रज्जुप्रहरणं तथा ॥
अयाश्चेत्यादिभिः† हुत्वा समुद्रादूर्म्मिसूक्ततः‡ ।
सन्ततामाज्यधारान्तां पूर्णाहुतिमथाचरेत् ॥
परिषेचनपर्य्यन्तं होमशेषं समापयेत् ।
सर्व्वौषधिस्थितैस्तत्र प्रतिकुम्भस्थितोदकैः ॥
ऋतुमत्याः स्त्रियाः आस्ये दम्पतिभ्यां सुखाय च ।
यथाभिषेकमन्त्राश्च प्रोच्यन्ते शौनकादिभिः ॥

---

* हविरुद्वसनादिकमिति ख-पुस्तके पाठः ।

† अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयासा वयसा कृतो यासन् हव्यमूहिषे या नो धेहि भेषजं स्वाहा । इत्यादयो मन्त्रा ऋग्वेदीयब्रह्मकर्मणि मन्त्राः ।

‡ समुद्रादूर्म्मिर्मधुमान् । उदारदुपांशु नाममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । (१७ अ. ८९ म. यजुः ।)

आपो हि ष्ठेति* नवभिः सूक्तेन च ततः परम् ।

इन्द्र आसां† त्र्यृचेनैव पावमान्यैः‡ क्रमेण तु ॥

उभयं शृणवच्च नः§ स्वस्तिदां विशश्च¶ एकया ।

त्र्यम्बकेन|| च मन्त्रेण जातवेदस** एकया ॥

समुद्रज्येष्ठा†† इत्यादि-चतुर्भिश्च प्रसिद्धकैः ।

---

* आपो हि ष्ठा मयो भुव इत्यादिभिः ५८ पृष्ठे उक्ताभिः ।

† इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥
इत्यादिकास्तिस्रः (१० म. १०३ सू. १ ऋक्)।

‡ ३७-३८ पृष्ठयोरुक्तैः ।

§ उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवा सोमपीतये धिया शविष्ठ आगमत् ॥
(८ म. ६१ सू. १ ऋक् ।)

¶ स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयङ्करः ॥
(१० म. १५२ सू. २ ऋक् ।)

|| त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥
(३ अ. ६० म. यजुः ।)

** जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
(१ म. ९९ सू. १ ऋक् ।)

†† समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिविशमानाः ।
इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥
इत्यादिकाश्चतस्र ऋचः (७ म. ४९ सू. १ ऋक्) ।

आयन्त्वामिति* मन्त्रैश्च त्रिभिश्चैव यथाक्रमम् ॥
इदमापस्तृचेनैव† देवस्य त्वेति‡मन्त्रतः ।
मन्त्रेणाथ तमीशानं§ त्वमग्ने रुद्र¶ इत्यथ ॥
तमुष्टुहीति‖ मन्त्रेण पितरं भुवनस्य च ।
या ते रुद्रेति** मन्त्रेण शिवसङ्कल्पमन्त्रतः ॥

---

* आयन्तमिव सूर्यं देवास्त्वायन्तो मरुतां गणाः ।
आयन्तां विश्वा भूतानि यथायमरपा असत् ॥
इत्यादिमन्त्रत्रयम् ऋग्वेदीयब्राह्मकर्मणि मृग्यम् ।

† इदमापः प्रवहत यत्किञ्च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥
इत्यादिकास्तिस्र ऋचः (१ म. २३ सू. २२ ऋक्)।

‡ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥ (१ अ. १० म. यजुः ।)

§ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥
(२५ अ. १८ म. यजुः ।)

¶ त्वमग्ने रुद्रो असुरो महोदिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नुत्मना ॥
(२ म. १ सू. ६ ऋक् ।)

‖ तमुष्टुहि यः स्विषुः सुधन्वा यो विश्वस्य क्षयति भेषजस्य ।
यक्ष्वामहे सौमनसाय रुद्रं नमोभिर्देवमसुरं दुवस्य ॥
(५ म. ४२ सू. ११ ऋक् ।)

** या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी ।
शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥ (१६ अ. ४९ म. यजुः ।)

इन्द्र त्वा वृषभं* पञ्चमन्त्रैश्चैवाभिषेचयेत् ।

सा च वस्त्रान्तरं धृत्वा पुनश्चोपवसेत्सती ॥

उपवासोऽत्र समीपावस्थानम् ।

ततश्च ।

विप्रानभ्यर्च्य विधिवद्गन्धपुष्पाक्षतादिभिः ।

धेनुं पयस्विनीं दद्यादाचार्याय च भूषणैः ॥

दक्षिणामप्यनड्वाहं प्रदद्याद्रुद्रजापिने ।

ऋत्विग्भ्यश्चापि सर्व्वेभ्यो दद्याद्वै दक्षिणां ततः ॥

महाशान्तिं प्रजप्याथ विप्राशीर्वचनं ततः ।

ब्राह्मणान् भोजयेत्पश्चात्प्रागृक्ष्णीत स्वजनैः सह ।

तदनिष्टन्तु सकलं सद्य एव विनश्यति ॥

प्रयोगपारिजाते अत्र विशेष उक्तः ।

एवं प्रभूतदोषहरां शान्तिं कृत्वा प्रशस्ततिथ्यादिषु पुनर्ऋतुदर्शनपर्य्यन्तं गमनं वर्ज्जयेदित्युक्तं ज्योतिर्वशिष्ठेन ।

प्रभूतदोषं यदि दृश्यते तत्

पुष्यं ततः शान्तिककर्म्म कार्य्यम् ।

विसर्ज्जयेदेव तथैकशय्यां

यावद्रजोदर्शनमिष्टकाले ॥

इति शौनकीये रजस्वलाशान्तिविधानम् ।

---

* इन्द्र त्वा वृषभं वयं सुते सोमे हवामहे ।

स पाहि मध्वो अन्धसः ॥

इत्यादिकाः पञ्च ऋचः (३ म. ४० सू. १ ऋक्) ।

## अथ जीवत्पुत्रोत्पादनम् ।

यथा शौनकीये ।

यस्या जाताः प्रमीयेरन् पुत्रा नैव भवन्ति वा ।
ऋतुकाले दिनेष्वेव दम्पती समलङ्कृतौ ॥
कृत्वाभ्युदयिकश्राद्धं स्वस्तिवाचनपूर्व्वकम् ।
पूर्णपात्रनिधानान्तमुपलेपादि पूर्व्ववत् ॥
श्वेतायाः श्वेतवत्साया गोः क्षीरेण चरुं पचेत् ।
कृत्वाज्यभागपर्य्यन्तमाज्यस्योत्पवनादिकम् ॥
जुहुयात्पायसं तत्र ऋग्भिः पञ्चदशाहुतीः ।
प्रजीवेत्सूक्तपञ्चभिर्जीवपुत्रस्य पञ्चभिः ॥
नेजमेषेति* तिसृभिः सोमो धेनुमृचैकया† ।

---

* ओं नेजमेष परापत सुपुत्रः पुनरापत ।
अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान् स्वाहा ॥ विष्णव इदम् ।
ओं यथेयं पृथिवी मह्युत्ताना गर्भमादधे ।
एवं तं गर्भमाधेहि दशमे मासि सूतवे स्वाहा ॥ विष्णव इदम् ।
ओं विष्णोः श्रेष्ठेन रूपेण अस्यां नार्य्यां गवीन्याम् ।
पुमांस पुत्रानाधेहि दशमे मासि सूतवे स्वाहा ॥ विष्णव इदम् ।
ऋग्वेदीयब्रह्मकर्म्मणि २०० पत्रस्य पूर्व्वपृष्ठे ।

† सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्म्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥
(१ म. ९१ सू. २० ऋक् ।)

इहैवस्त*मृचा चैका ततः स्विष्टकृदादिकम् ॥
अपश्यन्त्वेति† मन्त्राभ्यां होमशेषञ्च दम्पती ।
प्राशयेत्तत आचम्य दम्पत्योर्नाभिमालभेत् ॥
पिशङ्गभृष्टि‡मित्यृचा तावुभावभिमन्त्र्य च ।
प्रायश्चित्तादिसकलहोमशेषं समापयेत् ॥
सवत्सां दक्षिणार्थञ्च गां दद्याच्च पयस्विनीम् ।
पुण्यार्थमाचरेद्दानं विप्रेभ्यो होमवत्स्वयम् ॥
रात्र्यास्तु प्रथमे यामे शयीतां दर्भसंस्तरे ।
मनसा चतुर्होतारमनुद्रुत्योमिति ब्रुवन् ॥

चतुर्होतृमन्त्रस्तु यथा ।

पृथिवी होता द्यौरध्वर्य्युरुद्रोऽग्नीदित्यादिर्वाचस्पतय इत्य-
न्तस्तैत्तिरीये प्रसिद्धः§ ।

---

* इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।
क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ (१० म. ८५ सू. ४२ ऋक् )

† अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम ॥
अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे ॥
(१० म. १८३ सू. १।२ ऋचौ ।)

‡ पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र संमृण । सर्वं रक्षो नि बर्हय ॥
(१ म. १३३ सू. ५ ऋक् ।)

§ पृथिवी होता द्यौरध्वर्युः रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता वाचस्पते वाचो वीर्य्येण । इत्यादिस्तैत्तिरीयारण्यके तृतीयप्रपाठकस्य द्वितीयानुवाके द्रष्टव्यः ।

उपगम्य ततः पत्नीं व्यवेयाच यथाविधि ।
एवमुत्पादिताः पुत्रा न तुष्यन्ते कदाचन ॥

इति शौनकीये मृतप्रजाहरजीवत्पुत्रोत्पादनविधानम् । प्रसङ्गादिदमुक्तम् ।

अथ चन्द्रसूर्य्यग्रहणे रजोदर्शने विधानम् ।

था शौनकीये ।

ग्रहणे चन्द्रसूर्य्यस्य प्रसूतिर्यदि जायते ।
व्याधिः पीड़ा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥
इत्थं सञ्जायते यस्तु तस्य मृत्युर्न संशयः ।
व्याधिः पीड़ा च दारिद्र्यं शोकश्च कलहो भवेत् ॥
शान्तिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया ।
यस्मिनृक्षे विशेषेण ग्रहणं यदि जायते ॥
एतदृक्षाभिधं रूपं सुवर्णेन प्रकल्पयेत् ।
यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥
सूर्य्यग्रहे सूर्य्यरूपं सुवर्णेन स्वशक्तितः ।
चन्द्रग्रहे चन्द्ररूपं रजतेन विशेषतः ।
राहुरूपं प्रकुर्व्वीत नागेनैव विचक्षणः ॥

गेन सीसेनेत्यर्थः ।

शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत्* ।
तस्योपरि न्यसेत्क्षौमायवं वस्त्रं सुशोभनम् ॥

---

* गोमयेनोपलेपयेदिति ख-पुस्तके पाठः ।

अयाथाश्चैव कूपाणां स्थापनं तत्र कारयेत् ।
रक्ताक्षतं रक्तगन्धं रक्तपुष्पाम्बराणि च ॥
सूर्य्यग्रहे प्रदातव्यं सूर्य्यप्रीतिकराय च ।
श्वेतवस्त्रं श्वेतमाल्यं श्वेतगन्धाक्षतादिकम् ॥
चन्द्रग्रहे प्रदातव्यं चन्द्रप्रीतिकराय च ।
राहवे चैव दातव्यं कृष्णपुष्पाम्बरादिकम् ॥
दद्यान्नक्षत्रनाथाय श्वेतगन्धानुलेपनम् ।
सूर्य्यं सम्पूजयेद्धीमानाकृष्णेनेति* मन्त्रतः ॥
चन्द्रग्रहे तथा सम्यगाप्यायस्वेति† मन्त्रतः ।
स्वर्भानोरिति‡ मन्त्रेण राहुं यत्नेन पूजयेत् ॥
एवं सम्पूजयेद्धीमान् समिद्भिर्याकसम्भवैः ।
चन्द्रग्रहे च पालाशसमिद्भिर्जुहुयाद्बुधः ॥
दूर्वाभिर्जुहुयाद्धीमान्राहोः सम्प्रीणनाय च ।
समिद्भिर्ब्रह्मवृक्षोत्थैर्भौमाय जुहुयाद्बुधः ॥
आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः ।
पञ्चगव्यैः पञ्चरत्नैः पञ्चत्वक्पञ्चपल्लवैः ॥
जलैरौषधकल्कैश्च सहितैः कलसोदकैः ।
अभिषेकं प्रकुर्व्वीत यजमाने प्रयत्नतः ॥

---

* मन्त्रोऽयं ११ पत्रे प्रदर्शितः ।

† आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा वाजस्य सङ्गथे । (१२अ. ११२म. यजुः।)

‡ स्वर्भानोरध यदिन्द्रमाया अवोदिवो वर्त्तमाना अवाहन् ।
गूढ़हं सूर्य्यं तमसापव्रतेन तुरीयेण ब्रह्मणा विन्ददत्रिः ॥ ऋग्वेदिमन्त्रकर्मणि ।

मन्त्रैर्वारुणसम्भूतैरापोहिष्ठादिभिस्त्रिभिः* ।
इमं मे गङ्गेति† परैस्तत्त्वायामीति‡ मन्त्रकैः ॥
अभिषेके निवृत्ते तु यजमानः समाहितः ।
आचार्य्यं पूजयेत्पश्चात् सुशान्तो विजितेन्द्रियः ॥
तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयम् ।
दक्षिणाभिश्च संयुक्तं यथाशक्त्यनुसारतः ॥
ब्राह्मणान् भोजयित्वा तु प्रणिपत्य क्षमापयेत् ।
तेभ्योऽपि दक्षिणां दद्याद्यजमानः समाहितः ॥
अनेन विधिना शान्तिं कृत्वा सम्यग्विधानतः ।
अकालमृत्युं शोकञ्च व्याधिं पीड़ां न चाप्नुयात् ॥
सौख्यञ्च सौमनस्यञ्च सौभाग्यं लभते नरः ।
इत्थं ग्रहणजातानां सर्व्वारिष्टविनाशनम् ।
कथितं भार्गवेणेदं शौनकाय महात्मने ॥

इति शौनकीये ग्रहणे प्रथमरजोदर्शने जनने च शान्तिविधानम् ।

अथास्य स्पष्टप्रयोगः । • इयं शान्तिः पौर्णमास्यमावास्या-भ्यामविनाभूतत्वात्§ तदतिरिक्तदुष्टवारादौ प्रागुक्तशान्त्या समु-

---

* २० पृष्ठे प्रदर्शितैः ।

† इमं मे गङ्गे यमुने सरस्वति शतद्रु स्तोमे स च तापरुष्णा ।
असिक्न्यामरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ ऋग्वेदीयब्रह्मकर्म्मणि ।

‡ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेड़मानो वरुणे हवोध्युरु शंसमान आयुः प्रमोषीः ॥ ऋग्वेदीयब्रह्मकर्म्मणि ।

§ इयं शान्तिरुपरागस्य पौर्णमास्यमावस्याभ्यामविनाभूतत्वादिति ऋग्वेदीयब्रह्म-कर्म्मणि पाठः ।

क्षीयते निमित्तभेदाददृष्टार्थत्वाच्च। एवमन्येऽपि नानानिमित्तभेदे सति तत्तन्नैमित्तिकविधानं क्रमेण कार्य्यमित्यवगन्तव्यम्। वारादिदोषे सति तां शान्तिमनुष्ठाय दिनान्तरे इयं शान्तिरनुष्ठेया। यद्वा तन्त्रेणैवानुष्ठेया। तत्र आचार्य्य उपलिप्ते देशे अष्टदलपद्मं लिखित्वा तत्र कलशं प्रतिष्ठाप्य तदुपरि वस्त्रं संस्थाप्य सूर्य्यग्रहणे आकृष्णेनेति* मन्त्रेण सूर्य्यप्रतिमां सुवर्णनिर्म्मितां संस्थाप्य चन्द्रग्रहणे च रजतनिर्म्मितां चन्द्रप्रतिमामाप्यायस्वेति† मन्त्रेण स्थापयित्वा उभयत्र समां सीसनिर्म्मितां राहुप्रतिमां स्वर्भानोरिति‡ मन्त्रेण संस्थाप्य अथ यस्मिन्नक्षत्रे ग्रहणं जातं तन्नक्षत्रदेवतां सुवर्णनिर्म्मितां तल्लिङ्गमन्त्रेण प्रतिष्ठाप्य रक्तवस्त्रादीनि सूर्य्याय श्वेतवस्त्रादीनि चन्द्राय कृष्णवस्त्रादीनि राहवे श्वेतवस्त्रादीनि नक्षत्रदेवतायै समर्प्य उपचारैः पूजयित्वा अथ अग्निं प्रतिष्ठाप्य ग्रहपूजां कृत्वा अर्कादिसमिदाज्यचरुतिलानष्टोत्तरशतसंख्यया प्रतिदैवतं हुत्वा कलशोदकेन आचार्य्यो यजमानमापोहिष्ठे§त्यादि मन्त्रैरभिषिच्य दानादिकं कारयेत्।

इति ग्रहणे प्रथमरजोदर्शनदोषशान्तिविधानं समाप्तम्।

---

* अयं मन्त्रः ११ पृष्ठे प्रदर्शितः।

† अयं मन्त्रः ६८ पृष्ठे प्रदर्शितः।

‡ अयं मन्त्रः ६८ पृष्ठे प्रदर्शितः।

§ अयं मन्त्रः १० पृष्ठे प्रदर्शितः।

## अथ बौधायनोक्तदुष्टरजोदर्शनादिशान्तिविधानम् ।

तथाच तत्खण्डः । अथातः प्रसूतिप्रथमरजस्वलाशान्तिकल्पं व्याख्यास्यामः । पुण्याहे दम्पत्योश्चन्द्रताराबलान्विते पूर्व्वाह्णे दम्पती मङ्गलस्नानं कृत्वा ब्राह्मणानाहूय पुण्याहं वाचयित्वा* यजमानः पीठोपविष्टः प्राणानायम्य मम पत्न्या दुष्टे नक्षत्रे करणे वारे योगे तिथौ प्रसूत्यां प्रथमरजोदर्शने वा यो दोषः समजनि तद्दोषपरिहारद्वारा तन्नक्षत्रदेवताप्रीत्यर्थं शान्तिकर्म्म करिष्ये इति सङ्कल्प्य वेदवन्तं कुटुम्बिनं वित्तहीनमाचारवन्तं ब्राह्मणमाचार्य्यत्वे नियोज्य एवंलक्षणसम्पन्नं ब्रह्मत्वे नियोज्य एवंगुणविशिष्टान् सौरगाणपत्यमृत्युञ्जयजातवेदसनामत्रयाश्वत्थदक्षिणसूर्य्यनमस्कारान् भवन्तः कुर्व्वन्त्विति त्रिचतुरादीन्नियोज्य एवंविशिष्टचतुरो ब्राह्मणान् भद्रा ते अग्ने† आनो भद्राः‡ सहस्रशीर्षा§ नमस्ते रुद्रमन्यवे¶ इत्याग्नेयनैर्ऋत्यवायव्येशान-

---

* ब्राह्मणाशिषो गृह्णीयाताम् । अथ—इति ऋग्वेदिब्रह्मकर्म्मणि अधिकः पाठः ।

‖ एवं युक्तः दम्पती इत्यत्र प्रथमानुपपत्तिः ।

† भद्रा ते अग्ने स्वनीक संदृग् घोरस्य सतो विषुणस्य चारुः ।
न यत्ते शोचिस्तमसा वरन्त न ध्वस्मानस्तन्वी रेप आधुः ॥ (४ म. ६ सू. ६ ऋक् ।)

‡ आ नो भद्राः क्रतवो यन्तु विश्वतो दब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥
(१ म. ८९ सू. १ ऋक् ।)

§ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ (१० म. ९० सू. १ ऋक् ।)

¶ नमस्ते रुद्रमन्यव उतोत इषवे नमः ।
बाहुभ्यामुत ते नमः ॥ (१६ अ. १ मं. यजुः ।)

कोणेषु द्वारजये* नियोज्य एवंविशिष्टांश्चतुरः पञ्च षड़ेकादश वा रुद्राभिषेकं भवन्तः कुर्व्वन्त्विति नियोज्य आशिषो वाचयित्वा पूजास्थानं द्विहस्तमात्रं गोमयेनानुलिप्य स्वस्तिकशङ्खयमादि† रङ्गवल्लीभिः कृत्वा तत्पूर्व्वतो होमार्थं चतुरस्रं हस्तमात्रं कुण्डं समन्ततश्चतुस्त्रिद्व्यङ्गुलविस्तारोत्सेधमेखलात्रययुतं पश्चिमतो मध्ये अश्वत्थदलसङ्काशयोनिं सम्पाद्य मण्डपकल्पोक्तप्रकारेण अष्टभिः वाक्यैः स्थण्डिले नक्षत्रदेवतापूजां कुर्य्यात्। देवस्येशानदेशे शत-च्छिद्रं शुक्लवस्त्रावृतं बृहत्कलशादाग्नेयादिकोणेष्वोषधीषु चतुरः कलशांश्च प्रतिष्ठाप्य प्रतिमाशुद्ध्यर्थं पञ्चामृतैराप्यायस्व‡ दधि-क्राव्ण:§ शुक्रमसि¶ मधुवाता:|| स्वादुः पवस्वेति** मन्त्रैः क्रमेण क्षीरदध्याज्यशर्कराभिः स्नापयित्वा तेषां मध्ये मध्य आपो हि ष्ठेति वारुणस्नपनमन्त्रजपं कृत्वा आवाहनादि वस्त्रान्तं पूजयेत्।

---

* द्वारजये इत्यत्र द्वारजपे इति ख पुस्तके पाठः।

† पद्मादि इति क-पुस्तके पद्मादि इति ख-पुस्तके पाठः। लावण्यसङ्गतौ।

‡ मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः।

§ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभिर्णो मुखाकरत् प्रण आयूंषि तारिषत् स्वाहा॥ (२३ अ. ३२ म. यजुः।)

¶ शुक्रमसि ज्योतिरसि तेजोऽसि। (२२ अ. २१ म. यजुः।)

|| मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीर्मधु नक्तमुतो-षसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्य्यो माध्वीर्गावो भवन्तु नः। (१३ अ. १७ म. यजुः।)

** स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमान् अदाभ्यः। (९म.८५सू.६ऋक्।)

अथ कलशाराधनम्।

आकलशेषु* सर्व्वे समुद्राः† स्योना पृथिवि‡ क्रवति भीमः§ प्र वो यज्ञेषु¶ स हि रत्नानि|| तत्सवितुः** गन्धद्वारा††माप्याय‡‡ दधिक्राव्णः§§ शुक्रमसि¶¶ मधु वाताः|||| स्वादुः

* आकलशेषु धावति पवित्रे परिषिच्यते।
उक्थैर्यज्ञेषु वर्द्धते॥ (६ म. १७ सू. ४ ऋक्।)

† सर्व्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः॥ ऋग्वेदिब्राह्मकर्म्मणि।

‡ स्योना पृथिवि नो भवानृक्षरा निवेशनी।
यच्छानः शर्म्म सप्रथाः अप नः शोशुचदघम्॥ (३५ अ. २१ म. यजुः।)

§ क्रवति भीमो वृषभस्तविष्यया शृङ्गे शिशानो हरिणी विचक्षणः।
आ योनिं सोमः सुकृतं निषीदति गव्ययी त्वग्भवति निर्णिगव्ययी॥
(६ म. ७० सू. ७ ऋक्।)

¶ प्र वो यज्ञेषु देवयन्तो अर्चन् द्यावा नमोभिः पृथिवी इषध्यै।
येषां ब्रह्माण्यसमानि विप्रा विष्वग्वियन्ति वनिनो न शाखाः॥
(७ म. ४३ सू. १ ऋक्।)

|| स हि रत्नानि दाशुषे सुवाति सविता भगः।
तं भागं चित्रमीमहे॥ (५ म. ८२ सू. ३ ऋक्।)

** तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्॥ (३ अ. ३५ म. यजुः।)

†† मन्त्रोऽयं २७ पृष्ठे प्रदर्शितः।

‡‡ मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः।

§§ मन्त्रोऽयं ७२ पृष्ठे प्रदर्शितः।

¶¶ मन्त्रोऽयं ७२ पृष्ठे प्रदर्शितः।

|||| मन्त्रोऽयं ७२ पृष्ठे प्रदर्शितः।

पवस्व* काण्डात्काण्डात्† या ओषधी‡रोषधयः संवदन्त§ इति मन्त्रक्रमेण स्थापनजलासेक-सप्तमृत्तिका-पञ्चपल्लव-त्वग्रत्नगोमूत्र-गोमयक्षीरदध्याज्यमधुदूर्वाधान्यसर्वौषधि-फलपुष्प-गन्धाक्षतानि दत्त्वा इमं मे वरुण¶ तत्त्वायामि‖ त्वं नो अग्ने** स त्वं नो अग्ने†† इति वरुणमावाह्य अर्चयित्वा पूर्वोक्तजपान् पुरुषसूक्तं‡‡ कद्रुद्रायेति§§ च यथाक्रममनुजपांश्च कारयित्वा ततः

---

* मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः।

† ऋगियं ३२ पृष्ठे प्रदर्शिता।

‡ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा।
मनै नु बभ्रूणामहं शतं धामानि सप्त च॥ (१० म. ९७ सू. १ ऋक्।)

§ ओषधयः संवदन्ते सोमेन सह राज्ञा।
यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि॥ (१० म. ९७ सू. २२ ऋक्।)

¶ इमं मे वरुण श्रुधी हवमद्या च मृडय।
त्वामवस्युराचके॥ (२१ अ. १ म. यजुः।)

‖ मन्त्रोऽयं ६९ पृष्ठे प्रदर्शितः।

** त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्॥ (२१अ. ३म. यजुः।)

†† स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।
अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि॥ (२१अ. ४म. यजुः।)

‡‡ सहस्रशीर्षा इति सूक्तं ७१ पृष्ठे प्रदर्शितम्।
पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ (१० म. ९० सू. २ ऋक्।)

§§ ओं कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे।
वोचेम शन्तमं हृदे॥ ऋग्वेदिब्रह्मकर्मणि।

कुण्डेऽग्निं प्रतिष्ठाप्य चरुं श्रपयित्वा आज्यभागान्तेऽन्वारब्धाभ्यां समिदाज्याभ्यामष्टाभिर्वाक्यैश्चरुव्रीहिभ्यां यजमानस्य मृत्युर्नश्यतु आयुर्वर्द्धतामिति व्याहृतिभिर्हावयित्वा जपादिब्रह्मविसर्ज्जनान्ते ऋत्विग्भिः सहाचार्य्यः स्वस्वकलशमादाय शुभप्रदेशे दम्पती उपवेश्य तयोः शिरःसमीपे वृहत्कलशमवस्थाप्य सुरास्त्वामिति*

---

ओं सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्व्वे दिक्पालाः पान्तु ते सदा ॥
पुष्टिर्लक्ष्मीर्धृतिर्मेधा कीर्त्तिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्व्वयक्षराक्षसपन्नगाः ॥
ऋषयो मुनयो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्व्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च सर्व्वाणि कालस्यावयवाश्च ये ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये ॥

ऋग्वेदिब्राह्मणकर्म्मणि ।

समुद्रज्येष्ठाः* शन्नो वातः† पवमानः सुवर्ज्जनः इत्येतैरनुवाकै-रभिषिच्य दम्पती अहतवासांसि धारयित्वा आज्यावेक्षणपात्रं सम्पाद्य रूपं रूपं‡मित्याज्यं विलोक्य ब्राह्मणमभ्यर्च्य सदक्षिण-माज्यपात्रं सन्त्यज्य अयःपिण्डकार्पासकं वल्मीकमादाय बीज-गर्भमन्त्रमुच्चार्य्य मृत्युस्वरूपं ब्राह्मणमभ्यर्च्य सदक्षिणाकं दत्त्वा नीराजनमनुभूय गृहं प्रविश्य आचार्य्यब्रह्मऋत्विग्भ्यः फलं प्रति-गृह्य तेषां दक्षिणां दत्त्वा आचार्य्याय प्रतिमादानं कृत्वा दश-दानानि कृत्वा पङ्गुदीनान्धकृपणजनान् सन्तर्प्य शतं पञ्चाशत् पञ्चविंशतिं वा ब्राह्मणान् भोजयेदेवं सर्व्वारिष्टशान्तिर्भवती-त्याह भगवान् बौधायनः ।

इति बौधायनीये शान्तिकाण्डे रजोदर्शनशान्तिखण्डः ।

---

* मन्त्रोऽयं ६२ पृष्ठे प्रदर्शितः ।

† शन्नो वातः पवतां शन्नस्तपतु सूर्य्यः ।
शन्नः कनिक्रदद्देवः पर्ज्जन्यो अभिवर्षतु ॥
(३६ अ. १० म. यजुः ।)

‡ रूपं रूपं प्रतिरूपो बभूव
तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते
युक्ता ह्यस्य हरयः शतादश ॥
(६ म. ४७ सू. १८ ऋक् ।)

अथ बौधायनोक्तशान्त्युपयोगीनि तैत्तिरीयशाखोक्तानि

सर्व्वनक्षत्राणामष्टौ वाक्यान्युच्यन्ते ।

ॐ अग्निर्नः पातु कृत्तिकाः

नक्षत्रं देवमिन्द्रियम् ।

इदमासां विचक्षणं

हविरासं जुहोत नः ॥

यस्य भान्ति रश्मयो यस्य केतवः

यस्येमा विश्वा भुवनानि सर्व्वा ।

स कृत्तिकाभिरभिसंवसानः

अग्निर्नो देवः सुविते दधातु ॥

प्रजापते रोहिणी वेतु पत्नी

विश्वरूपा बृहती चित्रभानुः ॥ १ ॥

सा नो यज्ञस्य सुविते दधातु

यथा जीवेम शरदः सवीराः ।

रोहिणी देव्युदगात्पुरस्तात्

विश्वा रूपाणि प्रतिमोदमाना ॥

प्रजापतिं हविषा वर्द्धयन्ती

प्रिया देवानामुपयातु यज्ञम् ।

सोमो राजा मृगशीर्षेण आगन्

शिवं नक्षत्रं प्रियमस्य धाम ॥

आप्यायमानो बहुधा जनेषु

रेतः प्रजां यजमाने दधातु ॥ २ ॥

यत्ते नक्षत्रं मृगशीर्षमस्ति
प्रियं राजन् प्रियतमं प्रियाणाम् ।
तस्मै ते सोम हविषा विधेम
शन्न एधि द्विपदे शं चतुष्पदे ॥
आर्द्रया रुद्रः प्रथमान एति
श्रेष्ठो देवानां पतिरघ्नियाणाम् ।
नक्षत्रमस्य हविषा विधेम
मा नः प्रजां रीरिषन्मोत वीरान् ॥
हेती रुद्रस्य परिणो वृणक्तु
आर्द्रानक्षत्रं जुषताꣳ हविर्नः ॥ ३ ॥
प्रमुञ्चमानौ दुरितानि विश्वा
अपाघ्यशꣳ सन्नुदतामरातिम् ।
पुनर्नो देव्यदितिः स्पृणोतु
पुनर्व्वसू नः पुनरेतां यज्ञम् ॥
पुनर्नो देवा अभियन्तु सर्व्वे
पुनः पुनर्वो हविषा यजामः ।
एवा न देव्यदितिरनर्वा
विश्वस्य भर्त्री जगतः प्रतिष्ठा ॥
पुनर्व्वसू हविषा वर्द्धयन्ती
प्रियं देवानामप्येतु पाथः ॥ ४ ॥
बृहस्पतिः प्रथमं जायमानः
तिष्यं नक्षत्रमभिसम्बभूव ।

श्रेष्ठो देवानां पृतनासु जिष्णुः
दिशो नु सर्व्वा अभयं नो अस्तु ॥
तिष्यः पुरस्तादुत मध्यतो नः
बृहस्पतिर्नः परिपातु पश्चात् ।
बाधेतां द्वेषो अभयं कृणुताम्
सुवीर्य्यस्य पतयः स्याम ॥
इदꣳ सर्पेभ्यो हविरस्तु जुष्टम्
आश्रेषा येषामनुयन्ति चेतः ॥ ५ ॥
ये अन्तरिक्षं पृथिवीं क्षियन्ति
ते नः सर्पाः सो हवमागमिष्ठाः ।
ये रोचने सूर्य्यस्यापि सर्पाः
ये दिवं देवीमनुसञ्चरन्ति ॥
येषामाश्रेषा अनुयन्ति कामं
तेभ्यः सर्पेभ्यो मधुमज्जुहोमि ।
उपहूताः पितरो ये मघासु
मनोजवसः सुकृतः सुकृत्याः ॥
ते नो नक्षत्रे हवमागमिष्ठाः
स्वधाभिर्यज्ञं प्रयतं जुषन्ताम् ॥ ६ ॥
ये अग्निदग्धा ये नाग्निदग्धाः
येऽमुं लोकं पितरः क्षियन्ति ।
यांश्च वियामुच न प्रविद्म
मघासु यज्ञꣳ सुकृतं जुषन्ताम् ॥

गवां पतिः फल्गुनीनामसि त्वम्
तदर्य्यमन्वरुणमित्रचारु ।
तं त्वा वयं सनितारꣳ सनीनाम्
जीवा जीवन्तमुपसंविशेम ॥
येनेमा विश्वा भुवनानि सञ्जिता
यस्य देवा अनुसंयन्ति चेतः ॥ ७ ॥
अर्य्यमा राजा जरस्तु विश्वान्
फल्गुनीनामृषभो रोरवीति ।
श्रेष्ठो देवानां भगवो भगासि
तत्त्वा विदुः फल्गुनीस्तस्य वित्तात् ॥
अस्मभ्यं क्षत्रमजरꣳ सुवीर्य्यं
गोमदश्ववदुपसन्नु देह ।
भगो ह दाता भग इत्प्रदाता
भगो देवीः फल्गुनीराविवेश ॥
भगस्येत्तं प्रसवं गमेम
यत्र देवैः सधमादं मदेम ॥ ८ ॥
आयातु देवः सवितोपयातु
हिरण्ययेन सुवृता रथेन ।
वहन् हस्तꣳ सुभगं विद्म नापसं
प्रयच्छन्तं पपुरिं पुण्यमच्छ ॥
हस्तः प्रयच्छ त्वमृतं वसीयः
दक्षिणेन प्रतिगृह्णीम एनत् ।

दातारमद्य सविता विदेय
यो नो हस्ताय प्रसुवाति यज्ञम् ॥
त्वष्टा नक्षत्रमभ्येति चित्रां
शुभ्रꣳ ससं युवतिं रोचमानाम् ॥ ९ ॥
निवेशयन्नमृतान्मर्त्त्याꣳश्च
रूपाणि पिꣳशन् भुवनानि विश्वा।
तन्नस्त्वष्टा तदु चित्रा विचष्टां
तन्नक्षत्रं भूरिदा अस्तु मह्यम् ॥
तन्नः प्रजां वीरवतीꣳ सनोतु
गोभिर्नो अश्वैः समनक्तु यज्ञम्।
वायुर्नक्षत्रमभ्येति निष्ट्यां
तिग्मशृङ्गो वृषभो रोरुवाणः ॥
समीरयन् भुवना मातरिश्वा
अप द्वेषाꣳसि नुदतामरातीः ॥ १० ॥
तन्नो वायुस्तदु निष्ट्या शृणोतु*
तन्नक्षत्रं भूरिदा अस्तु मह्यम्।
तन्नो देवासो अनुजानन्तु कामं
यथा तरेम दुरितानि विश्वा ॥
दूरमस्मच्छत्रवो यन्तु भीताः
तन्नो वायुस्तरितानि विश्वा।

---

* निष्ट्या शृणोतीति ख-पुस्तके पाठः।

तदिन्द्राग्नी कृणुतां तद्विशाखे
तन्नो देवा अनुमदन्तु यज्ञम् ॥
पश्चात्पुरस्तादभयन्नो अस्तु
नक्षत्राणामधिपत्नी विशाखे
श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ ॥ ११ ॥
विषूचः शत्रूनपबाधमानौ
अपक्षुधं नुदतामरातिम् ।
पूर्णा पश्चादुत पूर्णा पुरस्तात्
उन्मध्यतः पौर्णमासी जिगाय ॥
तस्यां देवा अधिसंवसन्तः
उत्तमे नाक इह मादयन्ताम् ।
पृथ्वी सुवर्चा युवतिः सजोषाः
पौर्णमास्युदगाच्छोभमाना ॥
आप्याययन्ती दुरितानि विश्वा
उरुं दुहां यजमानाय यज्ञम् ॥ १२ ॥
चित्रभानुर्यजमाने दधातु
हविर्नः पाथश्चेतो जुषन्ताम् ।
चेतो मदेम रोचमानामराती-
र्गोपौ यज्ञम् ॥

इति प्रथमोऽनुवाकः ।

अथ द्वितीयोऽनुवाकः ।

ऋध्यास्म हव्यैर्नमसोपसद्य
मित्रं देवं मित्रधेयं नो अस्तु ।
अनुराधान् हविषा वर्धयन्तः
शतं जीवेम शरदः सवीराः ॥
चित्रं नक्षत्रमुदगात्पुरस्तात्
अनूराधास इति यद्वदन्ति ।
तन्मित्र एति पथिभिर्देवयानैः
हिरण्मयैर्विततैरन्तरिक्षे ॥
इन्द्रो ज्येष्ठामनु नक्षत्रमेति
यस्मिन् वृत्रं वृत्रतूर्ये ततार ॥ १ ॥
तस्मिन्वयममृतं दुहानाः
क्षुधन्तरेम दुरितिं दुरिष्टिम् ।
पुरन्दराय वृषभाय धृष्णवे
आषाढाय सहमानाय मीढुषे ॥
इन्द्राय ज्येष्ठा मधुमद्दुहाना
उरुं कृणोतु यजमानाय लोकम् ।
मूलं प्रजां वीरवतीं विदेय
पराच्येतु निर्ऋतिः पराचा ॥
गोभिर्नक्षत्रं पशुभिः समक्तम्
अहर्भूयाद्यजमानाय मह्यम् ॥ २ ॥

अहर्नो अद्य सुविते दधातु
मूलं नक्षत्रमिति यद्वदन्ति ।
पराचीं वाचा निर्ऋतिं नुदामि
शिवं प्रजायै शिवमस्तु मह्यम् ॥
या दिव्या आपः पयसा सम्बभूवुः
या अन्तरिक्षा उत पार्थिवीर्याः ।
यासामाषाढ़ा अनुयन्ति कामं
ता न आपः शᳪस्योना भवन्तु ॥
याश्च कूप्या याश्च नाद्याः समुद्रियाः
याश्च वैशन्तीरुत प्रासचीर्याः ॥ ३ ॥
यासामाषाढ़ा मधु भक्षयन्ति
ता न आपः शᳪस्योना भवन्तु ।
तन्नो विश्वे उपशृण्वन्तु देवाः
तदाषाढ़ा अभिसंयन्तु यज्ञम् ॥
तन्नक्षत्रं प्रथतां पशुभ्यः
कृषिर्वृष्टिर्यजमानाय कल्पताम् ।
शुभ्राः कन्या युवतयः सुपेशसः
कर्मकृतः सुकृतो वीर्य्यावतीः ॥
विश्वान्देवान् हविषा वर्धयन्तीः
आषाढ़ाः काममुपयन्तु यज्ञम् ॥ ४ ॥
यस्मिन् ब्रह्माभ्यजयत्सर्व्वमेतत्
अमुञ्च लोकमिदमू च सर्व्वम् ।

तन्नो नक्षत्रमभिजिद्विजित्य
श्रियं दधात्वहृणीयमानम् ॥
उभौ लोकौ ब्रह्मणा सञ्जितेमौ
तन्नो नक्षत्रमभिजिद्विचष्टाम् ।
तस्मिन् वयं पृतनाः सञ्जयेम
तन्नो देवासो अनुजानन्तु कामम् ॥
शृण्वन्ति श्रोणाममृतस्य गोपा
पुण्यामस्या उपशृणोमि वाचम् ॥ ५ ॥
महीं देवीं विष्णुपत्नीमजूर्य्यां
प्रतीचीमेनाꣳ हविषा यजामः ।
त्रेधा विष्णुरुरुगायो विचक्रमे
महीं दिवं पृथिवीमन्तरिक्षम् ॥
तच्छ्रोणैति श्रव इच्छमाना
पुण्यꣳ श्लोकं यजमानाय कृण्वती ।
अष्टौ देवा वसवः सोम्यासः
चतस्रो देवीरजराः श्रविष्ठाः ॥
ते यज्ञं पान्तु रजसः पुरस्तात्
संवत्सरीणममृतꣳ स्वस्ति ॥ ६ ॥
यज्ञं नः पान्तु वसवः पुरस्तात्
दक्षिणतोऽभियन्तु श्रविष्ठाः ।
पुण्यं नक्षत्रमभिसंविशाम
मानो अरातिरघशꣳसागन् ॥

क्षत्रस्य राजा वरुणोऽधिराजः
नक्षत्राणाᳪ शतभिषग्वसिष्ठः ।
तौ देवेभ्यः कृणुतो दीर्घमायुः
शतᳪ सहस्रा भेषजानि धत्तः ॥
यन्नो राजा वरुण उपयातु
तन्नो विश्वे अभिसंयन्तु देवाः ॥ ७ ॥
तन्नो नक्षत्रᳪ शतभिषग्जुषाणं
दीर्घमायुः प्रतिरद्भेषजानि ।
अज एकपादुदगात्पुरस्तात्
विश्वा भूतानि प्रतिमोदमानः ॥
तस्य देवाः प्रसवं यन्ति सर्व्वे
प्रोष्ठपदासो अमृतस्य गोपाः ।
विभ्राजमानः समिधान उग्रः
आन्तरिक्षमरुहदगन्द्याम् ॥
तᳪ सूर्य्यं देवमजमेकपादं
प्रोष्ठपदासो अनुयन्ति सर्व्वे ॥ ८ ॥
अहिर्बुध्नियः प्रथमा न एति
श्रेष्ठो देवानामुत मानुषाणाम् ।
तं ब्राह्मणाः सोमपाः सोम्यासः
प्रोष्ठपदासो अभिरक्षन्ति सर्व्वे ॥
चत्वार एकमभिकर्म्म देवाः
प्रोष्ठपदास इति यान् वदन्ति ।

तौ बुध्नियं परिषद्य स्तुवन्तः
अहिं रक्षन्ति नमसोपसद्य ॥
पूषा रेवत्यन्वेति पन्थां
पुष्टिपती पशुपावाजवस्त्यौ ॥ ९ ॥
इमानि हव्या प्रयता जुषाणा
सुगैर्नो यानैरुपयातां यज्ञम् ।
क्षुद्रान् पशून् रक्षतु रेवती नः
गावो नो अश्वामन्वेतु पूषा ॥
अन्नं रक्षन्तौ बहुधा विरूपं
वाज सनुतां यजमानाय यज्ञम् ।
तदश्विनावश्वयुजोपयाता
शुभं गमिष्ठौ सुयमेभिरश्वैः ॥
स्वं नक्षत्र हविषा यजन्तौ
मध्वा सम्पृक्तौ यजुषा समक्तौ ॥ १० ॥
यौ देवानां भिषजौ हव्यवाहौ
विश्वस्य दूतावमृतस्य गोपौ ।
तौ नक्षत्रं जुजुषाणोपयातां
नमोऽश्विभ्यां कृणमोऽश्वयुग्भ्याम् ॥
अपपाप्मानं भरणीर्भरन्तु
तद्यमो राजा भगवान्विचष्टाम् ।
लोकस्य राजा महतो महान् हि
सुगं नः पन्थामभयं कृणोतु ॥

यस्मिन्नक्षत्रे यम एति राजा
यस्मिन्नेनमभ्यषिञ्चन्त देवाः ।
तदस्य चित्रँ हविषा यजाम
अपपाप्मानं भरणीर्भरन्तु
निवेशनी यत्ते देवा अदधुः ॥ ११ ॥
ततार मह्यं प्रासचोर्य्या यान्तु
यज्ञं याचँ स्वस्ति देवा अनुयन्ति ।
सर्व्वे वाजवस्यौ समुक्ती
देवास्तौणि च ॥

इति द्वितीयोऽनुवाकः ।

अथैषां मन्त्राणां त्यागाः ।

अग्नये स्वाहा । कृत्तिकाभ्यः स्वाहा । अम्बायै स्वाहा । दुलायै स्वाहा । नितत्न्यै स्वाहा । अभ्रयन्त्यै स्वाहा । मेघयन्त्यै स्वाहा । वर्षयन्त्यै स्वाहा । चुपुणीकायै स्वाहेति ॥ १ ॥

प्रजापतये स्वाहा । रोहिण्यै स्वाहा । रोचमानायै स्वाहा । प्रजाभ्यः स्वाहेति ॥ २ ॥

सोमाय स्वाहा । मृगशीर्षाय स्वाहा । इन्वकाभ्यः स्वाहा । ओषधीभ्यः स्वाहा । राज्याय स्वाहा । अभिजित्यै स्वाहेति ॥ ३ ॥

रुद्राय स्वाहा । आर्द्रायै स्वाहा । पिन्वमानायै स्वाहा । पशुभ्यः स्वाहेति ॥ ४ ॥

अदित्यै स्वाहा । पुनर्व्वसुभ्यां स्वाहा । भूत्यै स्वाहा । प्रजात्यै स्वाहेति ॥ ५ ॥

बृहस्पतये स्वाहा। तिष्याय स्वाहा। ब्रह्मवर्चसाय स्वाहेति ॥ ६ ॥

सर्पेभ्यः स्वाहा। आश्रेषाभ्यः स्वाहा। दन्दशूकेभ्यः स्वाहेति ॥ ७ ॥

पितृभ्यः स्वाहा। मघाभ्यः स्वाहा। नघाभ्यः स्वाहा। गदाभ्यः स्वाहा। अरुन्धतीभ्यः स्वाहेति ॥ ८ ॥

अर्य्यम्णे स्वाहा। फल्गुनीभ्याᳬ स्वाहा। पशुभ्यः स्वाहेति ॥ ९ ॥

भगाय स्वाहा। फल्गुनीभ्याᳬ स्वाहा। श्रैष्ठ्याय स्वाहेति ॥ १० ॥

सवित्रे स्वाहा। हस्ताय स्वाहा। ददते स्वाहा। पृणते स्वाहा। प्रयच्छते स्वाहा। प्रतिगृभ्णते स्वाहेति ॥ ११ ॥

त्वष्ट्रे स्वाहा। चित्रायै स्वाहा। चैत्राय स्वाहा। प्रजायै स्वाहेति ॥ १२ ॥

वायवे स्वाहा। निष्ठ्यायै स्वाहा। कामचाराय स्वाहा। अभिजित्यै स्वाहेति ॥ १३ ॥

पौर्णमास्यै स्वाहा। कालाय स्वाहा। गत्यै स्वाहेति ॥ १४ ॥

मित्राय स्वाहा। अनुराधेभ्यः स्वाहा। मित्रधेयाय स्वाहा। अभिजित्यै स्वाहेति ॥ १५ ॥

इन्द्राग्निभ्याᳬ स्वाहा। विशाखाभ्याᳬ स्वाहा। श्रैष्ठ्याय स्वाहा। अभिजित्यै स्वाहेति ॥ १ ॥

इन्द्राय स्वाहा। ज्येष्ठायै स्वाहा। ज्येष्ठाय स्वाहा। अभिजित्यै स्वाहेति ॥ २ ॥

प्रजापतये स्वाहा। मूलाय स्वाहा। प्रजायै स्वाहेति ॥ ३ ॥

अद्भ्यः स्वाहा। आषाढ़ाभ्यः स्वाहा। समुद्राय स्वाहा। कामाय स्वाहा। अभिजित्यै स्वाहेति ॥ ४ ॥

विश्वेभ्यो देवेभ्यः स्वाहा। आषाढ़ाभ्यः स्वाहा। अनपजय्याय स्वाहा। अभिजित्यै स्वाहेति ॥ ५ ॥

ब्रह्मणे स्वाहा। अभिजिते स्वाहा। ब्रह्मलोकाय स्वाहा। अभिजित्यै स्वाहेति ॥ ६ ॥

विष्णवे स्वाहा। श्रोणायै स्वाहा। श्लोकाय स्वाहा। श्रुताय स्वाहेति ॥ ७ ॥

वसुभ्यः स्वाहा। श्रविष्ठाभ्यः स्वाहा। अग्राय स्वाहा। परीत्यै स्वाहेति ॥ ८ ॥

वरुणाय स्वाहा। शतभिषजे स्वाहा। भेषजेभ्यः स्वाहेति ॥९॥

अजायैकपदे स्वाहा। प्रोष्ठपदेभ्यः स्वाहा। तेजसे स्वाहा। ब्रह्मवर्चसाय स्वाहेति ॥ १० ॥

अहये स्वाहा। बुध्नियाय स्वाहा। प्रोष्ठपदेभ्यः स्वाहा। प्रतिष्ठायै स्वाहेति ॥ ११ ॥

पूष्णे स्वाहा। रेवत्यै स्वाहा। पशुभ्यः स्वाहेति ॥ १२ ॥

अश्विभ्याꣳ स्वाहा। अश्वयुग्भ्याꣳ स्वाहा। श्रोत्राय स्वाहा। श्रुत्यै स्वाहेति ॥ १३ ॥

यमाय स्वाहा । भरणीभ्यः स्वाहा । राज्याय स्वाहा । अभिजित्यै स्वाहेति ॥ १४ ॥

अमावस्यायै स्वाहा । कामाय स्वाहा । गत्यै स्वाहेति ॥ १५ ॥

इति नक्षत्रमन्त्राः ।

अत्रेदमाकूतम् । यत्र कर्म्मणि अनेके सजातीयाः प्रयोगा उपलभ्यन्ते—यथा रजोदर्शनशान्तिके कर्म्मणि विष्णुधर्म्मोत्तरोक्तः प्रयोग एकः, शौनकोक्तो द्वितीयः, बौधायनोक्तस्तृतीयः—तत्र कर्त्तुरिच्छया अन्यतरप्रयोगोऽनुष्ठातव्यः, व्रीहियवशास्त्रवत् । यद्वा शौनकोक्त ऋग्वेदिनाम् । बौधायनोक्त आपस्तम्बादि-तैत्तिरीयाणाम् । तत्तच्छाखोपरि शौनकादीनां प्रवृत्तेः । विष्णुधर्म्मोत्तराद्युक्तप्रयोगस्तु इतरेषां शाखिनाम् । पुराणस्य सर्व्वसाधारण्येन प्रवृत्तेः । अथवा यस्मिन्देशादौ यः प्रयोग आचारविषयीभूतः स एव तत्र सर्व्वैरनुष्ठेयः । सर्व्वशाखा-प्रत्ययमेकं कर्म्मेति जैमिनिसिद्धान्तात् । यत्र महाप्रतिबन्ध-निवृत्तिद्वारा महाफलहेतवोऽनेके विजातीयाः प्रयोगा उपलभ्यन्ते—यथा प्रजोत्पत्त्यर्थं रुद्रस्नानवन्ध्याभिषेकविष्णुश्राद्धादयः—तत्र प्रतिबन्धतारतम्येन प्रयोगानुष्ठानतारतम्यमवगन्तव्य-मित्यास्तां विस्तरः ।

## अथ गर्भाधानविधानम्* ।

रजोदर्शनानन्तरमाद्यदिवसचतुष्टयं पर्व्वादि च त्यक्त्वा रात्रौ स्त्रियं सङ्गच्छेत् ।

तथाच याज्ञवल्क्यः ।

षोडशर्त्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रश्च वर्ज्जयेत् ॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलञ्च वर्ज्जयेत् ।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।
स्वदारनिरतश्चैव स्त्रियो रक्ष्याः प्रयत्नतः ॥

स्कान्देऽपि ।

ऋतुकालाभिगमनं धर्म्मोऽयं गृहिणां परः ।
स्त्रीणां वरमनुस्मृत्य यथाकाम्यथवा भवेत् ॥
दिवाभिगमनं पुंसामनायुष्यं परं मतम् ।
श्राद्धाहः सर्व्वपर्व्वाणि यत्नात्त्याज्यानि धीमता ।
तत्र गच्छन् स्त्रियं मोहाद्धर्म्मात् प्रच्यवते परात् ॥
ऋतुकालाभिगामी यः स्वदारनिरतश्च यः ।

---

* अथ गर्भाधानेत्यादौ ख-चिह्नितपुस्तके अथ रुद्रस्नानमिति पाठो दृश्यते, दृश्यन्ते च तस्य मन्त्राः प्रयोगाश्च, तथापि क-ग-चिह्नितपुस्तकयोः पाठस्यैक्यात् एकापेक्षया द्वयोः प्राधान्याद्विषयाधिक्याच्च पुस्तकद्वयधृतः पाठ एवानुस्रियतेऽस्माभिः, नास्ति चानयो रुद्रस्नानन्यूनता, अनन्तरमेव तस्य वक्ष्यमाणत्वात् ।

स सदा ब्रह्मचारीह विज्ञेयः स गृहाश्रमी ॥
ऋतुः षोड़शयामिन्यश्चतस्रस्तासु गर्हिताः ।
पुत्रास्तास्वपि युग्मासु अयुग्मासु च कन्यकाः ॥

भवन्तीति शेषः ।

ज्योतिःशास्त्रे ।

सर्पाग्निमघमूलेन्द्रपौष्णे गर्भो विगर्हितः ।
श्रीकामस्तु त्यजेन्नारीं पञ्चम्यामुत्तरात्रये ॥ इति ।

अथ तन्नक्षत्राणि ।

श्रवणं रोहिणी हस्ता चानुराधोत्तरात्रयम् ।
स्वाती शतभिषक् श्रेष्ठा निषेके फलदाः स्मृताः ॥ इति ।

उत्तरात्रयस्य विहितनिषिद्धत्वाद्विकल्पः ।

तथा ।

नास्नातान्तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ।
नानिष्टां न प्रकुपितां नाप्रशस्तां न गुर्व्विणीम् ॥

गर्भिणीगमननिषेधः षण्मासादूर्द्धम् । आरभ्य सप्तमान्मासान्न गच्छेद्गर्भिणीं स्त्रियमिति वचनात् ।

बह्वीनां पत्नीनामृतुयौगपद्ये गमनक्रममाह देवलः ।

यौगपद्ये तु तीर्थानां विवाहक्रमशो व्रजेत् ।
रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा ॥

तीर्थमृतुस्तद्यौगपद्ये सति असवर्णासु वर्णक्रमेण गच्छेत् सवर्णासु तु विवाहक्रमेण । यदा तु काचिदपुत्रा अन्याः पुत्रवत्यस्तदा तामग्रतो गच्छेदिति पाराशरमाधवीये व्याख्यातम् ।

तथा ।

द्वावेतावशुची स्यातां दम्पती शयनं गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥
ऋतौ तु गर्भं शङ्कित्वा स्नानं मैथुनिनः स्मृतम् ।
ऋतुं विना यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥

इति शातातपः ।

एवमृतुकाले अगच्छतो दोषमाह स एव ।

ऋतुस्नातान्तु यो भार्य्यां स्वस्थः सन्नोपगच्छति ।
स चाप्येति न सन्देहो भ्रूणहत्यामृतावृतौ ॥ इति ।

ऋतावुपेयात् सर्व्वत्र वा प्रतिषिद्धवर्ज्जमिति गौतमस्मरणात् । अत्र कर्म्मणि इतिकर्त्तव्यताविशेषस्तु स्वस्वसूत्रादवगन्तव्यः ।*

इत्यनन्तभट्टविरचिते विधानपारिजाते गर्भाधानविधानम् ।

## अथ पुंसवनम् ।

तत्र आश्वलायनगृह्यसूत्रम् ।

तृतीये गर्भमासे तिष्येणेति ।

---

* अत्र पुष्यमैत्रश्रवणैर्हस्तैर्मूलाद्यैः सुरतं यदि ।
प्रसूते चतुरं पुत्रं विज्ञं छान्दसमेव च ॥

इत्येकः श्लोकोऽधिको ग-चिह्नितपुस्तके दृश्यते, परन्तु अस्य प्रकरणानुपयोगितामालोच्य अधोनिधानं कृतम् ।

कात्यायनसूत्रेऽपि ।

अथ पुंसवनं पुरा स्पन्दत इति मासे द्वितीये तृतीये वा

यदहः पुंसा* नक्षत्रेण चन्द्रमा युज्येतेति ।

श्रीधरीयेऽपि ।

कुर्य्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा

मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे ।

हित्वा कर्कटकं नृयुग्ममबलामन्येषु युग्मे तिथौ

शुद्धे नैधनधाम्नि शुक्रशशभृद्दिग्भस्विणां वासरे ॥

नैधनमष्टमस्थानम् । विबुधः । तृतीये मासि गर्भो यदि प्रसिद्धविषयो न स्यात् तदा चतुर्थे पुंसवनं कुर्य्यादित्यर्थः ।

तथाच जातूकर्ण्यः ।

द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।

व्यक्ते गर्भे भवेत्कार्य्यं सीमन्तेन सहाथवा ॥ इति ।

द्वितीये वा तृतीये वा इति मासस्य प्राधान्येन विहितत्वाद्गुरु-शुक्रमौढ्यादावपि तत्रैव कार्य्यम् ।

तथाच बृहस्पतिः ।

मासप्रयुक्तकार्य्येषु मूढ़त्वं गुरुशुक्रयोः ।

न दोषकृत्तदा मासलक्षणो बलवानिति ॥

मलमासेऽपि कार्य्यमित्याह यमः ।

गर्भे वार्द्धुषिके भृत्ये श्राद्धकर्म्मणि मासिके ।

सपिण्डीकरणे नित्ये नाधिमासं विवर्ज्जयेत् ॥

---

* पुंसार्मिति क-पुस्तके पाठः ।

विष्ण्वादर्शेऽपि ।

वृद्धिर्दार्य्यं पुंसवादि प्रेतकर्म्मानुमासिकम् ।

नित्यमास्यधिके तत्तु सर्व्वं दैवादि चोत्तरे ॥ इति ।

पूर्व्ववचने गर्भ इति सामान्यनिर्द्देशाद्गर्भाधानेऽपि न दोषः ।

तथैव शिष्टाचाराच्च ।

अत्रापि इतिकर्त्तव्यताविशेषः स्वस्वशाखातोऽवगन्तव्यः ।

इति पुंसवनविधानम् ।

## अथ सीमन्तोन्नयनविधानम् ।

तत्राश्वलायनसूत्रम् ।

आपूर्य्यमाणपक्षे यदा पुंसेति ।

कात्यायनसूत्रेऽपि ।

अथ सीमन्तोन्नयनं पुंसवनवत्प्रथमे गर्भे षष्ठेऽष्टमे वेति ।

आश्वलायनकारिकापि ।

चतुर्थे गर्भमासे स्यात्सीमन्तोन्नयनक्रिया ।

षष्ठेऽष्टमे वा कुर्व्वीत सूत्रान्तरविधानतः ॥

पूर्व्वपूर्व्वस्यासम्भवे षष्ठे मासे यद्वा अष्टमे भवेदिति। इदं कर्म्म न प्रतिगर्भमावर्त्तते स्त्रीसंस्कारत्वात् । सीमन्त उन्नीयते यस्मिन् कर्म्मणीत्यन्वर्थसंज्ञाकरणात् । नन्वयं गर्भसंस्कारो ज्ञायते। एवं गर्भमाधेहीत्याश्वलायनसूत्रदर्शनात् । सत्यं तथापि नावर्त्तते आधारसंस्कारस्य प्राधान्यात् । कुतः प्राधान्यमिति चेत्सीमन्तोन्नयनमिति समाख्याबलात् ।

सकृत्तु कृतसंस्काराः* सीमन्तेन द्विजस्त्रियः ।
यं यं गर्भं प्रसूयन्ते स सर्व्वः संस्कृतो भवेत् ।
नावर्त्तत इदं कर्म्म प्रतिगर्भमिति स्थितिः ॥

इति हारीतस्मरणाच्च । सीमन्तोन्नयनं प्रथमे गर्भे चतुर्थे मासीत्यापस्तम्बसूत्राच्च ।

कार्ष्णाजिनिस्तु आप्रसवात्कर्म्मकालमाह ।

गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा ।
सीमन्तोन्नयनं कुर्य्याच्छङ्खस्य वचनं यथा ॥ इति ।

मासोऽत्र सौरसावनयोरन्यतरो ग्राह्यः ।

कालविधानेऽपि ।

चतुर्थषष्ठाष्टममासभाजि.
सौरेण गर्भे प्रथमे विधेयम् ।
सीमन्तकर्म्म द्विजभामिनीनां
मासेऽष्टमे विष्णुवलिश्च कुर्य्यात् ॥ इति ।

चतुर्थे सावने मासि षष्ठे वाप्यथवाष्टमे ।

इति च वासिष्ठे ।

शौनकश्च ।

शुक्लपक्षे च पुंलिङ्गनक्षत्रस्थे दिवाकरे ।
तिष्यः पुनर्व्वसुर्हस्तोऽनुराधः श्रवणोऽश्वयुक् ॥ इति ।

अत्रापि प्रयोगविधिः स्वस्वसूत्रादवगन्तव्यः ।

---

* सकृत्संस्कृतसंस्कारा इति पारस्करसूत्रभाष्ये पाठः ।

जातूकर्ण्यः ।

सीमन्तोन्नयनं कुर्व्वन् कुर्य्यात्पुंसवनं यदि ।
पुंसवं प्राग्विनिर्वर्त्त्य ततः सीमन्तमुन्नयेत् ॥

सत्यव्रतः ।

मृतो देशान्तरगतो भर्त्ता स्त्रीसंस्कृतेषु च ।
देवरो वा गुरुर्वापि वंश्यो वापि समाचरेत् ॥
स्त्री यद्यकृतसीमन्ता प्रसूयेत कथञ्चन ।
पुत्रं गृहीत्वा विधिवत्पुनः संस्कारमर्हति ॥

पराशरः ।

ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा ।
जातश्राद्धे* नवश्राद्धे भुक्त्वा चान्द्रायणञ्चरेत् ॥ इति ।

इति सीमन्तोन्नयनविधानम् ।

अथ वन्ध्यात्वहरविधानानि ।

तत्रादौ रुद्रस्नानम् ।

हेमाद्रौ भविष्योत्तरे श्रीकृष्णं प्रति युधिष्ठिरः ।

रुद्रस्नानं विधानेन कथयस्व जनार्द्दन ।
सर्व्वदोषोपशमनं सर्व्वशान्तिकरं नृणाम् ॥

श्रीकृष्ण उवाच ।

देवसेनापतिं स्कन्दं रुद्रपुत्रं षडाननम् ।
अगस्त्यो मुनिशार्दूलः सुखासीनमुवाच ह ॥

* जातश्राद्धे इत्यत्र राजश्राद्धे इति क-पुस्तके पाठः ।

सर्व्वज्ञोऽसि कुमार त्वं प्रसादाच्छङ्करस्य वै ।
रुद्रस्नानं विधानेन ब्रूहि कस्य कथं भवेत् ॥

स्कन्द उवाच ।

मृतवत्सा तु या नारी दुर्भगा ऋतुवर्ज्जिता ।
या सूते कन्यकां बन्ध्या स्नानमासां विधीयते ॥
अष्टम्यां वा चतुर्द्दश्यामुपवासपरायणा ।
ऋतौ शुद्धे चतुर्थेऽह्नि प्राप्ते सूर्य्यदिनेऽथवा ॥
नद्योस्तु सङ्गमे कुर्य्यान्महानद्योर्विशेषतः ।
शिवालयेऽथवा गोष्ठे विविक्ते वा गृहाङ्गने ॥
आहिताग्निं द्विजं शान्तं धर्म्मज्ञं सत्यशालिनम् ।
स्नानार्थं प्रार्थयेदेनं निपुणं रौद्रकर्म्मणि ॥
ततस्तु मण्डपं कुर्य्याच्चतुरस्रमुदक्प्लवम् ।
बद्धचन्दनमाल्यञ्च गोमयेनानुलेपितम् ॥
तन्मध्ये श्वेतरजसा सम्पूर्णं पद्ममालिखेत् ।
मध्ये तस्य महादेवं स्थापयेत्कर्णिकोपरि ॥
दद्याद्दलेषु नन्द्यादींश्चतुर्षु विधिपूर्व्वकम् ।
इन्द्रादिलोकपालांश्च दलेष्वन्येषु विन्यसेत् ॥
देवीं विनायकञ्चैव स्थापयेत्तत्र पार्थिव ।
दत्त्वार्घ्यं गन्धं पुष्पञ्च धूपं दीपं गुडौदनम् ॥
भक्ष्यान्नानाविधान्दद्यात्फलानि विविधानि च ।
चतुष्कोणेषु भृङ्गारमश्वत्थदलभूषितम् ॥

भृङ्गारं कलशम् ।

एकैकं विन्यसेद्ब्रह्मन् सर्व्वौषधिसमन्वितम् ।
मण्डपस्य चतुर्दिक्षु दद्याद्भूतबलिन्ततः ॥
आग्नेय्यां दिशि कर्त्तव्यं मण्डपस्य समीपतः ।
अग्निकार्य्यं शुभे कुण्डे पद्मपुष्पैरलङ्कृते ॥
लवणं सर्पिषा युक्तं घृतेन मधुना सह ।
मा न स्तोकेन* जुहुयाद्गतहोमे नवग्रहे ॥
द्वितीयस्याग्निकार्य्यस्य कर्त्ता च ब्राह्मणो भवेत् ।
रुद्रजाप्यकृदाचार्य्यं सितचन्दनचर्च्चितम् ॥
सितवस्त्रपरीधानं सितमाल्यविभूषितम् ।
शोभयेत्कङ्कणैः कण्ठैः कर्णवेष्टाङ्गुलीयकैः ॥
मण्डपस्य समीपस्थो जपेद्रुद्रान्विमत्सरः ।
यावदेकादशगुणाः† पुनरेव जपेत्तु तान् ॥
देवमण्डलवत्कार्य्यं द्वितीयं मण्डलं शुभम् ।
तस्य मध्ये तु सा नारी श्वेतपुष्पैरलङ्कृता ॥
श्वेतवस्त्रपरीधाना श्वेतगन्धानुलेपना ।
सुखासनोपविष्टान्तामाचार्य्यो रुद्रजापकः ॥
अभिषिञ्चेत्ततस्त्वेनामर्कपत्रपुटाम्बुना ।
अच्छिद्राण्यप्यनूनानि स्नानार्थं विनियोजयेत् ॥

---

* मा न स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तस्सदसि त्वा हवामहे ॥
(१६ अ. १६ म. यजुः ।)

† गुणा इत्यत्र गता इति हेमाद्रिपाठः ।

चतुःषष्टिऋचेनैव* रुद्रेणैकादशेन तु ।
शतानि सप्त वर्णानां चतुर्भिरधिकानि तु ॥

वर्णानामृचामित्यर्थः । तासां चतुःषष्टिसंख्यानामेकादशकृत्वः पठितानामियं संख्या ।

अच्छिद्रेणेति† मन्त्रेण स्नानार्थं विनिवेशयेत् ।
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ॥
वेश्याङ्गनाद्राजसूयाद्गोष्ठादानीय वै मृदम् ।
सर्व्वौषधी रोचनाश्च नदीतीर्थोदकानि च ॥
एतत्प्रक्षिप्य कलशे शिवसंज्ञे सुपूजिते ।
आपादतलकेशान्तं कुक्षिदेशे विशेषतः ॥
सर्व्वाङ्गं लेपयेद्गत्या सुशीला काचिदङ्गना ।
रुद्राभिजप्तेन ततः स्नापयेत्कलशेन ताम् ॥
तोयपूर्णाष्टकलशैरश्वत्थदलपूरितैः ।
सर्व्वतोदिक्स्थितैः पश्चात्स्नापयेत्कलशाष्टतैः ॥

---

* नमस्ते रुद्र मन्यवे उतो त इषवे नमः ।
नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ॥
या त इषुः शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो रुद्र मृडय ॥
इत्यादिकाश्चतुःषष्टिर्ऋचो यजुर्व्वेदस्य षोडशाध्याये (रुद्राध्याये वा) मृग्याः ।

† अच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । देवीरापो अग्रेगुवो अग्रेपुवो अग्रे इममद्य यज्ञं नयताग्रे यज्ञपतिᳪ सुधातुं यज्ञपतिं देवयुवम् । (१अ. १२म. यजुः ।)

एवं स्नात्वा स्नापकाय दद्याद्गां काञ्चनन्तथा ।
होतुरेवात्र निर्द्दिष्टा दक्षिणा गौः पयस्विनी ॥
ब्राह्मणानामथान्येषां स्वशक्त्या मुनिपुङ्गव ।
गोवस्त्रकाञ्चनादीनि दत्त्वा दत्त्वा* समापयेत् ॥
कृतेनानेन विप्रेन्द्र रुद्रस्नानेन भामिनी ।
सुभगा कान्तिसंयुक्ता बहुपुत्रा च जायते ॥
सर्व्वेष्वपि हि मासेषु ब्राह्मणानुमतौ शुभम् ।
तस्मादवश्यं कर्त्तव्यं पुत्रान् स्त्री सुखमृच्छति ॥

या स्नानमाचरति रुद्रमिति प्रसिद्धं
श्रद्धान्विता द्विजवरानुमतौ नताङ्गी ।
दोषान्निहत्य सकलान् स्वशरीरभाजो
भर्त्तुः प्रिया भवति भारत जीववत्सा ॥

इति हेमाद्रौ शान्तिकाण्डे भविष्योत्तरपुराणोक्त-
रुद्रस्नानमूलवाक्यानि ।

अथास्य स्पष्टप्रयोगः । यस्यां कस्याञ्चिदष्टम्यां चतुर्द्दश्यां वा सम्भारान् सम्भृत्य चतुर्थेऽह्नि ऋतुस्नातायां सूर्य्यवारे वा नदीसङ्गमं गत्वा तदभावे शिवालयादिकमुपेत्य पुण्याहं वाचयित्वा आहिताग्न्यादिगुणविशिष्टं द्विजमाचार्य्यत्वेन हृत्वा ब्रह्माणञ्च वृणुयात्† । अथाचार्य्योऽष्टहस्तं चतुरस्रं मण्डपं कृत्वा तन्मध्ये श्वेतरजसा अष्टदलपद्ममालिख्य ब्रह्मादीन् मण्डलदेवांस्तत्रावाह्य

* दत्त्वा इत्यत्र सर्व्वानिति हेमाद्रिपाठः ।

† अत्र कर्णपदमूलम् ।

पूजयित्वा कर्णिकायां रुद्रकलशं मन्त्रवत् स्थापयित्वा दध्यक्षता-दिभिः शोभयित्वा तत्र महादेवमावाह्य पूर्व्वादिचतुर्षु दलद्वयेषु नन्दिनं भृङ्गिरिटिं कालं महाकालञ्च क्रमेणावाह्य तेष्वेव अष्ट-दलेषु इन्द्रादीनष्टदिक्पालांश्चावाह्य महादेवस्य वामभागे पार्व्वतीं दक्षिणभागे विनायकञ्चावाह्य षोड़शोपचारैः पूज-यित्वा पद्मचतुष्कोणेषु कुम्भचतुष्टयं मन्त्रवत् स्थापयित्वा उदक-मासिच्य अश्वत्थपल्लवादीनि* निक्षिप्य वरुणञ्चावाह्य कलशं सम्प्रार्थयेत् ।

तन्मन्त्रो यथा ।

देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्व्वतीर्थानि देवाः सर्व्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ।
त्वयि तिष्ठन्ति सर्व्वेऽपि यतः कामफलप्रदाः ॥
त्वत्प्रसादादिमं यज्ञं कर्त्तुमीहे जलोद्भव ।
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्व्वदा ॥ इति ।

ततो मण्डपस्य अष्टदिक्षु कुम्भाष्टकं स्थापयित्वा इन्द्रादीन् सम्पूज्य

---

*आदिपदेन उदुम्बरप्लक्षचूतन्यग्रोधपल्लवा गृह्यन्ते, "अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोध-पल्लवाः" इति वचनात् ।

इन्द्रादिभ्यो बलीन् दत्त्वा कुम्भान् संस्पृश्यैकादशावृत्त्या रुद्रान् जपेत्। तस्मिन् काले ब्रह्मा पश्चादाग्नेय्यां दिशि कुण्डे स्थण्डिले वा अग्निमुपसमाधाय दधिमधुघृतोपेतं लवणमाहुति-परिमितं मानस्तोके* इति मन्त्रेण अष्टोत्तरशतवारं नवग्रहहोम-पूर्व्वकं जुहुयात्। तत आचार्य्यो देवमण्डलवन्मण्डलान्तरं कृत्वा तत्र यजमानदम्पती श्वेतवस्त्रावृतौ उपवेश्य पूर्व्वादिकलशोदकेन रुद्राध्यायस्य एकैकमन्त्रमुक्त्वा† अर्कपत्रपुटगृहीतेनाभिषिञ्चेत् चतुःषष्टिमन्त्रविभागेन। एवमेकादशावृत्तौ चतुरधिकसप्त-शतानि भवन्ति। इयं संख्या वाजसनेयिशाखायामेव सम्भवति।

अच्छिद्रेण पवित्रेण‡ इत्यर्कपत्रग्रहणमन्त्रः।

अथ रुद्रकलशोदकेन सप्तमृत्तिकासर्व्वौषधिगोरोचनादियुतेन आपादतलकेशान्तं विशेषतः कुक्षिदेशे अभिषिञ्चेत्। ततो मण्डपस्य अष्टदिक्स्थापिताष्टकलशोदकैरभिषिञ्चेत्। एवं स्नात्वा स्नानवस्त्रं परित्यज्य वस्त्रान्तरं परिधाय आचार्य्याय सुवर्णादि दक्षिणात्वेन दत्त्वा होमकर्त्रे पयस्विनी गौर्देया अन्येषाञ्च भूयसी दक्षिणा देया। ततो यथाशक्ति ब्राह्मणान् भोजयेत्।

इति भविष्योत्तरपुराणोक्तं रुद्रस्नानविधानम्।

---

* मन्त्रोऽयं १०० पृष्ठे प्रदर्शितः।

† नमस्ते रुद्र मन्यवे इत्यादीनां १०१ पृष्ठे प्रदर्शितानामाम्नायामिकैकमित्यर्थः।

‡ मन्त्रोऽयं १०१ पृष्ठे प्रदर्शितः।

अथ बौधायनाचार्य्योक्तरुद्रस्नानविधानं प्रयोगेणोच्यते।

उदगयनादौ गुरुशुक्रास्तादिरहिते शुद्धे मासि शुक्लपक्षे ऋतुकाले विशेषतश्चतुर्थेऽह्नि अष्टम्यां चतुर्द्दश्यां वा रविवासरे वा शुभनक्षत्रे चन्द्रताराद्यानुकूल्ये कार्य्यम्। इदं चतुर्विधवन्ध्यात्वे भवति, विशेषतो मृतापत्यत्वे* श्रेयम्। इदञ्च महानद्योर्नद्योर्वा यद्गोष्ठसङ्गमे सङ्गमाभावे वा कार्य्यम्। तत्र पूर्व्वं कर्त्ता सभार्य्यो दीर्घायुः-सुपुत्राद्युत्पत्तिप्रतिबन्धकरूप-दुरित-निरासार्थं यथाशक्ति प्रायश्चित्तमनुतापयुक्तः कुर्य्यात्। तच्च फलतारतम्याव-गतदुरिततारतम्येन षडब्दत्र्यब्दसार्द्धाब्दरूपं चान्द्रायणकृच्छ्राति-कृच्छ्ररूपं वा द्रव्यहोमतीर्थब्राह्मणभोजनादिप्रत्याम्नायैर्वा कार्य्यं सभ्योपदिष्टम्। ततः श्रीरुद्रप्रीत्यर्थं कपिलां धेनुं शक्त्योप-स्करयुतां दद्यात्, तत्राशक्तौ लक्षं तदर्द्धमयुतं वा गायत्रीजपं तद्दशांशेन तिलहोमञ्च कुर्य्यात्। एवं कृतशुद्धिः सभार्य्यो यज-मानः प्रागुक्ते काले देशे च कृतनित्यक्रिय आसनोपविष्ट-आचान्तो भूतशुद्धिपूर्व्वकं प्राणानायम्य देशकालौ स्मृत्वा—मम सभार्य्यस्य दीर्घायुःसुपुत्रादिसन्ततिप्रतिबन्धकेन इह जन्मनि अन्यजन्मनि वा कृतेन अष्टकापर्व्वादिपैतृकनैमित्तिकाकरणेन वा परद्वेषेण वा गुरुद्वेषेण वा मृगशावभक्षणेन वा बालघातेन वा रत्नापहरणेन वा वत्सवियोजनेन वा पितृमातृद्वेषेण वा अन्येन

* मृतापत्यात्वे इति ग-पुस्तके पाठः।

वा दुष्टकर्म्मणा उत्पन्नचतुर्विधवन्ध्यात्वा न्यतमवन्ध्यात्वदोषनिरास-द्वारा तथा स्त्रियाः कुक्षिगतदोषज्ञाताज्ञातान्यदुष्टस्त्रीचैलाञ्चल-स्पर्शदोष-तदेकासनाशनशय्यादि-जनितदोषादि-सर्व्वसन्ततिप्रति-बन्धकनिरासद्वारा च उमासहितश्रीरुद्रप्रीत्या दीर्घायुष्मत्-सुपुत्रादिसन्तत्यवाप्त्यर्थं बौधायनोक्तविधिना रुद्रकलशस्नानाख्यं कर्म्म करिष्ये—इति सङ्कल्प्य गणेशपूजनपुण्याहवाचनमातृका-पूजननान्दीश्राद्धानि सङ्कल्पपूर्व्वकं कुर्य्यात्। एतानि कृत्वा वा प्रधानसङ्कल्पः कार्य्यः। तत आचार्य्यः ब्रह्मर्त्विग्वरणं करिष्ये इति सकलब्राह्मणान् प्रार्थयेत्।

तन्मन्त्रो यथा।

ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु सदा हिताः।
वेदानाञ्चैव दातारस्त्रातारः सर्व्वदेहिनाम्॥
जपैर्यज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः।
देवानाञ्च पितॄणाञ्च तृप्त्यर्थं याजकाः कृताः॥
येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम्।
ते मां रक्षन्तु सततं जपयज्ञैर्व्रतस्थिताः॥

ततश्च।

आहिताग्निं द्विजं शान्तं धर्म्मज्ञं सत्यशालिनम्।
स्नानार्थं प्रार्थयेदेनं निपुणं रुद्रकर्म्मणि॥

इति लक्षणयुक्तमाचार्य्यं वृणुयात्। ततो ब्रह्माणं वृत्वा एका-दश ऋत्विजो वृणुयात्। ततः सर्व्वान् मधुपर्कवस्त्रालङ्कारा-दिभिर्यथाशक्ति पूजयेत्। तत आचार्य्यादिसहितो यजमानो

मण्डपं प्रविशेत्। ततः सर्व्विगाचार्यः सङ्कल्पपूर्व्वकं सलक्षणे मण्डपे कूटे वा ऐशान्यां सर्व्वतोभद्रं लिङ्गतोभद्रमष्टदलं वा प्रत्येकं द्वादश* रचयित्वा तत्समीपे परितो मङ्गलार्थं† सप्त धान्यानि निधाय रक्षोहण‡मित्याद्यैर्वेदमन्त्रैः—

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्।
सर्वेषामविरोधेन ब्रह्मकर्म समारभे॥

इति पुराणमन्त्राभ्याञ्च मण्डपान्तः सर्वतः सर्षपान् विकीर्य्य पञ्चगव्येन शुची वो हव्येत्यृचेन§ अभ्युक्ष्य मण्डपपूजां विधाय आसने उपविश्य भूतशुद्ध्यादिकामात्मरक्षाञ्च कृत्वा श्रीरुद्रं ध्यायन्।

आराधितो मनुष्यैस्त्वं सिद्धैर्देवासुरादिभिः।
आराधयामि भक्त्या त्वां मां गृहाण महेश्वर॥

* द्वादश लिङ्गानीति क-पुस्तके पाठः।

† मङ्गलार्थमिति क-पुस्तके पाठः।

‡ रक्षोहणं वलगहनं वैष्णवीम्। इदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखान। इदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखान। इदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखान। इदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखान। उत्कृत्यां किरामि। (शु. २३म. यजुः।)

§ शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः।
ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः॥
(बौधायनः २१ पृष्ठे।)

इति सम्प्रार्थ्य इन्द्रादिदिक्पालान् प्रणवादिनमोऽन्तैस्तत्तन्नाममन्त्रैरोमिन्द्राय नम इत्यादिरूपैर्नत्वा मही द्यौ*रिति भूमिं स्पृष्ट्वा ओषधयः संवदन्त† इति यवान् क्षिप्त्वा आकलशे‡ष्विति चालितान् कलशांस्तत्र निधाय इमं मे गङ्गे§ इति तीर्थजलेनापूर्य्य तत्र गन्धद्वारा¶मिति गन्धं ओषधयः संवदन्त इति यवान् या ओषधी‖रिति सर्व्वौषधीः काण्डात्काण्डा**दिति दूर्व्वाः याः फलिनी††रिति फलं स्योना पृथिवी‡‡ति सप्तमृदः अश्वत्थेव§§ इति पञ्चपल्लवान् स हि रत्नानीति¶¶ पञ्चरत्नानि हिरण्यरूप‖‖

---

* मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।
पिपृतां नो भरीमभिः॥ (८अ. ३२म. यजुः।)

† मन्त्रोऽयं ७४ पृष्ठे प्रदर्शितः।

‡ मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः।

§ मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः।

¶ मन्त्रोऽयं २७ पृष्ठे प्रदर्शितः।

‖ मन्त्रोऽयं ७४ पृष्ठे प्रदर्शितः।

** मन्त्रोऽयं २२ पृष्ठे प्रदर्शितः।

†† याः फलिनीः या अफला अपुष्पा याश्च पुष्पिताः।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः॥ (१२अ. ८९म. यजुः।)

‡‡ ऋगियं ७३ पृष्ठे प्रदर्शिता।

§§ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता।
गोभाज इत्किलासथ यत्सनवथ पूरुषम्॥ (१०म. ९७सू. ५ऋक्।)

¶¶ ऋगियं ७२ पृष्ठे प्रदर्शिता।

‖‖ हिरण्यरूपः सहिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः।
हिरण्ययात्परियोनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै। ऋग्वेदिमन्त्रकर्मणि।

इति च हिरण्यं निधाय युवा सुवासा* इति रक्तसूत्रेणावेष्ट्य पूर्णा दर्व्वीति† धान्यपूर्णानि वंशपात्राणि कलशेषु स्थापयित्वा कलशस्य मुखे विष्णुरित्यादिना‡ कलशेषु देवतीर्थान्यावाह्य देवदानवसंवादे§ इत्यादिना पूर्व्वप्रयोगपठितेन कलशान् सम्प्रार्थ्य समुद्रादूर्म्मि¶रिति कलशजले समुद्रं भावयित्वा कलश-मुखे ब्रह्मजज्ञान‖मिति ब्रह्माणम् मध्ये इदं विष्णु**रिति विष्णुम् कण्ठे नमः शम्भवे†† चेति रुद्रम् मुखे इन्द्राग्नी

---

* युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥
(३म. ८सू. ४ऋक् ।)

† पूर्णा दर्व्वि परापत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा इषमूर्ज्जं शतक्रतो ॥ (३अ. ४९म. यजुः ।)

‡ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते स्वाहा ॥ ऋग्वेदिब्राह्मणधृतम् ।

§ मन्त्रोऽयं १०१ पृष्ठे प्रदर्शितः ।

¶ मन्त्रोऽयं ६१ पृष्ठे प्रदर्शितः ।

‖ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥
(१३अ. ३म. यजु. ।)

** इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांशुरे स्वाहा ॥ (५अ. १५म. यजुः ।)

†† नमः शम्भवे च मयोभवे च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च । नमः पशुपतये च नम उग्राय च भीमाय च नमोऽग्रे-वधाय च दूरे-वधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ।
(१६अ. ४०म, यजुः ।)

आगत*मितीन्द्राग्नी यमेन दत्त†मिति यमञ्च इषे त्वो-र्ज्जे त्वे‡ति सर्व्वान् देवान् आदित्प्रत्नस्ये§ति सूर्य्यम् विश्वत-श्चक्षुरि¶ति परमेष्ठिनञ्च पार्श्वयोर्नमोऽस्तु सर्पेभ्य इति सर्पान् पूर्व्वे अग्निमीले|| इति ऋग्वेदम् दक्षिणे इषे त्वोर्ज्जे त्वेति यजु-र्व्वेदम् पश्चिमे अग्न आयाही**ति सामवेदम् उत्तरे शन्नो देवी††रित्यथर्व्ववेदम् मध्ये च तत्सवितु‡‡रिति गायत्रीं

---

* इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता ॥
उपयाम गृहीतोऽसीन्द्राग्निभ्यां त्वा। एष ते योनिरिन्द्राग्निभ्यां त्वा ॥
(७अ. ३१म. यजुः )

† यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्।
गन्धर्व्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट ॥ (२९अ. १३म. यजुः।)

‡ इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे।
(१अ. १म. यजुः।)

§ आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम्।
परो यदिध्यते दिवा ॥ ऋग्वेदिनस्त्वकर्म्मणि।

¶ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥
(१७अ. १९म. यजुः।)

|| अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम् ॥ (१म. १सू. १ऋक्।)

** अग्न आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि बर्हिषि।
(६म. १६सू. १०ऋक्।)

†† मन्त्रोऽयं २० पृष्ठे प्रदर्शितः।

‡‡ मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः।

ध्यायेत् । ततः पूर्व्वाद्यष्टदिक्षु इन्द्रादिमन्त्रैस्तन्नामभिर्वा इन्द्रादीनष्ट देवान् त्र्यम्ब काण्डात्काण्डादिति* दूर्व्वा बह्वीः शिरसि निक्षिपेत् । ततो वंशपात्रेषु अष्टदलयुतानि वस्त्राणि संस्थाप्य तत्र निष्क-तदर्द्ध-तदर्द्धसुवर्णनिर्म्मिता अशक्तौ वक्षावरसुवर्णनिर्म्मिताः श्रीरुद्रप्रतिमा द्वादशाग्न्युत्तारणपञ्चामृताभिषेकपूर्व्वकं संस्थाप्य तासु आत्वा वहन्तु हरयः† इति श्रीरुद्रमावाहयेत् ।

अथ सद्योजातं प्रपद्यामि‡ इत्यासनम् । सद्योजाताय वै नमो नम इति पाद्यम् । भवे भवे नातिभवे§ भवस्व मामित्यर्घ्यम् । भवोद्भवाय नम इत्याचमनीयम् । वामदेवाय नम आपो हि ष्ठा-येत्यादि¶ स्नानम् । तत आचमनं दत्त्वा अष्टभिर्वक्ष्यमाणैर्मन्त्रैस्तर्पयेत् । ॐ भवं देवं तर्पयामि । ॐ शर्व्वं देवं तर्पयामि । ॐ रुद्रं देवं तर्पयामि । ॐ पशुपतिं देवं तर्पयामि । ॐ उग्रं देवं तर्पयामि । ॐ ईशानं देवं तर्पयामि । ॐ भीमं देवं तर्पयामि । ॐ महान्तं देवं तर्पयामि । ततो ज्येष्ठाय नम इति वस्त्रम् । तूष्णीमाचमनम् । श्रेष्ठाय नम इत्युपवीतम् । रुद्राय नम इत्यलङ्कारम् । कालाय नम इति गन्धम् । कलविकरणाय नम इति पुष्पम् । बलविकरणाय नम इति धूपम् ।

---

* अग्नियं ३२ पृष्ठे प्रदर्शिता ।

† आत्वा वहन्तु हरयो वृषणं सोमपीतये ।
इन्द्र त्वा सूरचक्षसः ॥ (१ म, १६सू, १ऋक् ।)

‡ प्रपद्यामीति अ-पुस्तके पाठः ।

§ भवादिभवे इति ब्रह्मानन्दनरसिंहयोः पाठः ।

¶ १० पृष्ठे प्रदर्शितेः ।

बलाय नम इति दीपम्। बलप्रमथनाय नम इति नैवेद्यम्। तूष्णीमाचमनम्। सर्वभूतदमनाय नम इति ताम्बूलम्। मनोन्मनाय नम इति दक्षिणाम्।

केचित्तु सद्योजातमिति प्रतिष्ठाप्य सद्योजातायेत्यासनम्। भवे भवे इति पाद्यम्। भवोद्भवायेति स्नानमष्टभिस्तर्पणम्। ज्येष्ठायेत्याचमनम्। श्रेष्ठायेति मधुपर्कम्। कालायेति गन्धम्। कलविकरणायेति पुष्पम्। सर्वभूतदमनायेति धूपम्। मनोन्मनायेति दीपम्। भवोद्भवायेति नैवेद्यमित्यादीन्याहुः।

अथाष्टपुष्पाञ्जलयः।

भवाय देवाय नमः। शर्वाय देवाय नमः। रुद्राय देवाय नमः। पशुपतये देवाय नमः। उग्राय देवाय नमः। ईशानाय देवाय नमः। भीमाय देवाय नमः। महते देवाय नमः। अथास्माघोरतनूरघोरेभ्योऽथ घोरेभ्य इत्युपतिष्ठेत।

ततो नमस्कारः।

विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव।<br>
शरणं भव भूतेश करुणाकर शङ्कर॥<br>
हर शम्भो महादेव विश्वेशामरवल्लभ।<br>
शिव शङ्कर सर्वात्मन्नीलकण्ठ नमोऽस्तु ते॥<br>
मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे।<br>
अमृतेशाय शर्वाय महादेवाय ते नमः॥ इति।

ततः प्रार्थना।

राजसेन स्वयं ब्रह्मा सात्त्विकेन स्वयं हरिः ।
तामसेन स्वयं रुद्रस्त्रितयं त्वयि संस्थितम् ॥
नमामि त्वां विरूपाक्ष नीलग्रीव नमोऽस्तु ते ।
त्रिनेत्राय नमस्तुभ्यमुमादेहार्द्धधारिणे ॥
त्रिशूलधारिणे तुभ्यं भूतानां पतये नमः ।
पिनाकिने नमस्तुभ्यमीढुष्टमाय ते* नमः ॥
नमामि त्वां महादेव पतये त्वां नमाम्यहम् ।
भोक्ता भोज्यं त्वमेवेह भक्तानां शर्म्मदः स्वयम् ॥
सूर्य्यरूपं समासाद्य देहिनां देहधारकः ।
मुनीनां मुक्तिदाता च भक्तानां भुक्तिदः स्वयम् ॥
यदृच्छया सर्व्वमिदं त्वामभ्येति च याति च ।
नान्यस्य विजयं दातुं शक्तिरस्ति त्वया विना ॥ इति ।

ततः ।

आराधयामि भक्त्या त्वां मां गृहाण महेश्वर ।

इत्यात्मानं निवेदयेत् । ततः कमलस्य पूर्व्वाद्यष्टदलेषु इन्द्रादी-अष्टलोकपालान् सम्पूज्य मत्स्यादिबलिमुपहृत्य प्रार्थयेत् ।

इन्द्राद्याश्च सुराः सर्व्वे लोकपालास्तथैव च ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥
ते सर्व्वे पूजिताः शान्तिं प्रयच्छन्तु सुखानि च ।
बलिदानादिना तुष्टाः प्रयच्छन्तु यथेप्सितम् ॥ इति ।

*मीढुष्टमाय इत्यत्र मीड्ढुष्टमायेति ख-पुस्तके पाठः ।

ततः सर्वे प्राणानायम्य देशकालौ स्मृत्वा यजमानस्य आयु-रारोग्यपुत्रादिसन्तत्यवाप्त्यर्थं रुद्रैकादशिन्या जपं सङ्कल्प्य साधारण-न्यासान्ते विशेषन्यासं कुर्युः। यथा—

ॐ भूर्भुवः स्वः सद्योजातं प्रपद्यामिति* पठित्वा ॐ भूर्भुवः स्वरोम् हृदयाय नमः। ॐ भूर्वामदेवायेति मन्त्रान्ते भूर्भुवः स्वरोम् शिरसे स्वाहा। ॐ भूरघोरेभ्य इति मन्त्रान्ते भूर्भुवः स्वरोम् शिखायै वषट्। ॐ भूस्तत्पुरुषायेति मन्त्रान्ते भूर्भुवः स्वरोम् कवचाय हुम्। ॐ भूरीशानायेति मन्त्रान्ते भूर्भुवः स्वरोम् नेत्रत्रयाय वौषट्।

ॐ भूस्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥

इति मन्त्रान्ते भूर्भुवः स्वरोम् करतलपृष्ठाभ्यामस्त्राय फडिति विन्यस्य एवमेव कलशेषु न्यसेत्।

ततो राजसेन स्वयं ब्रह्मा इत्यादिना शक्तिरस्ति त्वया विना इत्यन्तेन† पूर्व्वोक्तेन मन्त्रषट्केन देवं स्तुत्वा स्वस्वकलशान् स्पृष्ट्वा शुभं ध्यायन्तः प्रत्येकं रुद्रैकादशिनीं जप्त्वा राजसेन स्वयं ब्रह्मा इत्यादिना मन्त्रषट्केन पुनः स्तुत्वा च क्षमापयेयुः।

तन्मन्त्रा यथा।

हीनो विभक्तिवर्णैश्च व्यञ्जनैश्च स्वरैस्तथा।
जपो मे क्षम्यतां देव प्रसादं कुरु शङ्करे॥

---

* प्रपद्यामित्यत्र प्रपद्यामीति ख-पुस्तके पाठः।

† ११९ पृष्ठे प्रदर्शितेन।

महारुद्रजपो यो मे न्यूनो वाप्यधिकोऽपि वा ।
सर्व्वः सम्पूर्णतां यातु त्वत्प्रसादात् सदाशिव ॥
यदक्षरपदभ्रष्टं* मात्राहीनञ्च यद्भवेत् ।
तत्सर्व्वं क्षम्यतां देव प्रसीद परमेश्वर ॥ इति ।

तत आचार्य्यः कुण्डे स्थण्डिले वा स्वशाखोक्तविधिना अग्निं प्रतिष्ठाप्य तूष्णीं निर्व्वापादिना चरुं पक्का आज्यभागान्तं कृत्वा तिलचर्व्वाज्यैः प्रतिद्रव्यं जपदशांशेन होमं कुर्य्याहत्विग्भिः सह ।

अत्राचार्य्यादीनां द्वादशैकादशिनीजपे रूपाणि शतं द्वात्रिंशच्च भवन्ति । तद्दशांशे त्रयोदश रूपाणि । द्वे रूपे अवशिष्टे । तद्दशांशोऽष्टाचत्वारिंशत् । मन्त्रविभागपक्षे प्रतिरूपं नमस्ते इत्यादि पञ्च पुनर्नमस्ते इत्यादि पञ्च इत्येवं दश । सर्व्वाहुतयोऽष्टाचत्वारिंशत् पञ्चे षट्शतानि चतुर्व्विंशतिश्च । अवशिष्टरूपद्वयाहुतयो दश । चमकाहुतयश्चतुर्द्दश । एवं सर्व्वा मिलिता आहुतयो द्वयं न्यूनसार्द्धषट्शतानि भवन्ति । एतावान् प्रतिद्रव्यं होमः ।

अथाप्यशक्तौ षोडशधादिपक्षाश्रयणेन होमः शक्तौ तु प्रतिमन्त्रपक्षेण होमः कार्य्यः । प्रतिमन्त्रपक्षेऽवशिष्टरूपद्वयस्य दशांशः प्रतिरूपं सप्तदश सप्तदश इत्येवं चतुस्त्रिंशत् ।

तत एकादशशतसंख्यैरंकपक्षैर्मूलमन्त्रेण होमः कार्य्यः । मूलमन्त्रस्य परमेष्ठी ऋषी रुद्रो देवता पंक्तिश्छन्दः होमादौ विनियोगः । अथास्य न्यासः । परमेष्ठिने ऋषये नम इति शिरसि ।

पंक्त्यै छन्दसे नम इति मुखे। रुद्राय देवतायै हृदये नम इति शिखायाम्। शम्भवे नमः शिरसि चेति ललाटे। मय इति नेत्रयोः। भव इति श्रोत्रयोः। चेति नासिकायाम्। नम इति मुखे। शङ्करायेति ग्रीवायाम्। चेति हृदये। मय इति जठरे। स्करायेति* नाभौ। चेति श्रोण्योः। नम इति कट्याम्। शिवायेत्यूर्वोः। शिवतरायेति जान्वोः। चेति पादयोः। नमः शम्भवे चेति हृदये। मयो भवे चेति शिरसि। नमः शङ्करायेति शिखायाम्। मयस्करायेति कवचाय हुम्। नमः शिवायेति नेत्रत्रयाय वौषट्। नमः शिवतरायेत्यस्त्राय फट्।

इति न्यासपूर्व्वकं पूर्व्वोक्तहोमं कृत्वा स्विष्टकृदादिपूर्णाहुतिपर्य्यन्तं कृत्वा च आचार्य्यादयो गन्धाद्युपचारै रुद्रस्योत्तरपूजां कृत्वा अभिषेकार्थं रुद्रं प्रसाद्य अग्नेरुत्तरतश्चतुरस्रं स्वस्तिकोपेतं मण्डलद्वयं कृत्वा तत्र उदुम्बरकाष्ठपीठद्वये परिहिताहतश्वेतवस्त्रौ दम्पती प्राङ्मुखावुपवेश्य स्वयमुदङ्मुखास्तिष्ठन्तश्चतुरधिकसप्तशतार्कपत्रै रुद्रैकादशिन्या मूलमन्त्रेण च अभिषिञ्चेयुः। अत्र वाजसनेयिनां रुद्राध्यायस्य चतुःषष्टिकण्डिकात्मकत्वात् तस्यैव एकादशावृत्त्या चतुरधिकसप्तशतसंख्या भवन्ति। चतुःषष्टिप्रकारस्तु। नमस्ते† षोडश। नमो

* स्कराय इत्यत्र स्कन्धायेति ग-पुस्तके पाठः।

† नमस्ते हर सेशी-त्रिषं नमस्ते अस्त्वधिपे।

अन्नाद्यं पवमानपन्तु इंतयः पावको अस्मभ्यं शिवो भव। (१६अ. २०म. यजुः।)

हिरण्यबाहवे* पञ्च। नम उष्णीषिणे† पञ्च। नमस्तक्षभ्यः‡ पञ्च। नमो ज्येष्ठाय§ पञ्च। नमः स्रुत्याय¶ पञ्च। नमः पार्य्यायेति|| पञ्च पञ्च**। द्रापे अन्धसो††ऽष्टादशेति। एतस्य एकादशावृत्तौ चतुरधिकसप्तशतानि भवन्ति। तेन चैकैकेन मन्त्रेण एकैकार्कपत्रेणाभिषिच्य पत्राणि त्यजेयुः।

---

* नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनाम्पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमो नमो हरिकेशायोपवीतिने पुष्टानाम्पतये नमः। (१६अ. १७म. यजुः।)

† नम उष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः। (१६अ. २२म. यजुः।)

‡ नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो मृगयुभ्यश्च वो नमः। (१६अ. २७म. यजुः।)

§ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्व्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च। (१६अ. ३२म. यजुः।)

¶ नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च। (१६अ. ३७म. यजुः।)

|| नमः पार्य्याय चावार्य्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च। (१६अ. ४२म. यजुः।)

** अत्र पञ्च इत्येव पाठो युक्तः। पञ्चपञ्चेति पाठे चतुःपञ्चाशद्या पञ्चसंख्याधिक्यापत्तेः।

†† द्रापे अन्धसस्पते दरिद्रन्नीललोहित। आसां प्रजानामेषां पशूनां मा भेर्मा रोङ्मो च नः किञ्चनाममत्। (१६अ. ४७म. यजुः।)

अन्येषामापस्तम्बादीनां मूलमन्त्रेणैव तावदावृत्तेन अभिषेक इति बौधायनसम्प्रदायः।

ततः कलशस्थपल्लवैराशुः शिशान* इति सूक्तेन आप्यायस्वेति सोमसूक्तेन† यदद्य कच्चेत्यादिभिः‡ पावमानीभि§रापो हिष्ठेत्यादिभिः¶ समुद्रज्येष्ठा इत्यादिभिः|| सहस्राक्षमिति सूक्तेन** सुरास्त्वामित्यादि पौराणैर्मन्त्रै††राभिषिच्य शिवं शिवमिति वदेयुः। इह तु आचार्योऽन्यान्यर्कपत्राणि गृह्णीयादित्येके। ऋत्विज एव अर्कपत्रैरेकादशिन्या‡‡ अभिषिञ्चेयुः, आचार्यस्तु पल्लवैराशुः शिशान इत्यादिसूक्तैरभिषिञ्चेदित्यन्ये।

ततः सर्वौषधिभिः सप्तमृद्भिः नद्या उभयकूलमृदा च सर्वा-

---

* आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
संक्रन्दनो निमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः॥

(१७अ. ३३म. यजुः।)

† सूक्तमिदं ६८ पृष्ठे प्रदर्शितम्।

‡ यदद्य कच्च वृत्रहन् उदगा अभिसूर्य। सर्वं तदिन्द्र ते वशे।

(३३अ. ३५म. यजुः।)

§ १८ पृष्ठे प्रदर्शिताभिः।

¶ २० पृष्ठे प्रदर्शिताभिः।

|| ६२ पृष्ठे प्रदर्शिताभिः।

** २८ पृष्ठे प्रदर्शितेन।

†† ७५ पृष्ठे प्रदर्शितैः।

‡‡ एकादशिन्या रुद्रैकादशिन्या इत्यर्थः। सा च एकादशकृत्वः समस्तरुद्राध्यायस्य पाठरूपा। तस्याः पावनतमत्वं "प्रक्रियारत्नकजपो गायत्र्याश्च विशेषतः। सर्वपापहरा ह्येते रुद्रैकादशिनी तथा॥" इत्यादिवचनैः प्रतिपादितम्।

द्रव्यनुलिप्तौ दम्पती विशेषतः कुक्षिदेशे अनुलिप्तां तां स्त्रियं स्नात्वा शिष्टेनोद्वर्तन सर्व्वकलशोदकेन चालिताङ्गौ वस्त्रप्रान्ते ग्रन्थिं दत्त्वा महानद्योर्नद्योर्वा सङ्गमे स्नात्वा शुद्धे वाससी परिधाय

शरीरस्याश्च ये दोषा ये दोषा गर्भबीजयोः।

सर्व्वे ते नाशमायान्तु कर्मणानेन भो द्विजाः॥

इति मन्त्रमुच्चार्य्य अभिषेकवाससी त्यक्त्वा शुद्धे वाससी परिधाय च शुक्लचन्दनमालाद्यलङ्कृतौ भवेताम्।

ततो दम्पतिभ्यामन्वारब्ध आचार्य्यः समुद्रादूर्म्मिरित्यादिमन्त्रैः* पूर्णाहुतिं हुत्वा वसोर्धारां जुहुयात्।

तत्र।

श्रावयेत्सूक्तमाग्नेयं वैष्णवं† रौद्रं‡मैन्द्रवम्।

महावैश्वानरं साम ज्येष्ठसाम§ च पाठयेत्॥

ततो यजमानः सभार्य्यः कृतत्र्यायुष्यकरणः पूजापूर्व्वकमाचार्य्याय पयस्विनीं धेनुं सुवर्णञ्च यथाशक्ति दक्षिणात्वेन दत्त्वा ब्रह्मणे ऋषभमृत्विग्भ्यो यथाशक्ति सुवर्णञ्च दत्त्वा समाप्य रुद्राद्यावाहितदेवता विसृज्य श्रीरुद्रप्रीत्यर्थं शतं तदर्द्धं तदर्द्धं वा ब्राह्मणान् भोजयित्वा तैः सम्पूर्णतां वाचयित्वा जीवत्पति-

* ६१ पृष्ठे प्रदर्शितैः।

† विष्णोर्नुकमित्यादि विष्णुसूक्तं ५५ पृष्ठे प्रदर्शितम्।

‡ रुद्रसूक्तं ६० पृष्ठे प्रदर्शितम्।

§ आग्नेयं सूक्तम्, ऐन्द्रवं सूक्तं, महावैश्वानरं साम, ज्येष्ठसाम चेति सर्व्वं सामवेदे मग्यम्।

पुत्राभिः स्त्रीभिर्वर्द्धापनादिकृतमङ्गलो ब्राह्मणाशिषो गृह्णीयात्।
पश्चात्स्थले नारिकेलादिफलं सुवासिनी दद्यात्।

अनेन विधिना कार्य्यो रुद्रः कलशसंज्ञकः।
भुङ्क्ते स सकलान् भोगान् प्रसादाच्छङ्करस्य च॥

इत्याह भगवान् बौधायनः।

इति बौधायनोक्तं रुद्रस्नानविधानं समाप्तम्।

## अथ वन्ध्याभिषेकविधानम्।

तत्र हेमाद्रौ शान्तिकाण्डे कार्त्तिकेय उवाच।

पूर्व्वमेव त्वया ख्यातं सन्ति वन्ध्या न हि स्त्रियः।
दोषैस्तु विविधाकारैर्ग्रहधातुविकारजैः।
वन्ध्या सञ्जायते तासां स्नानमावद यत्नतः॥

ईश्वर उवाच।

ग्रहदोषान् प्रवक्ष्यामि शृणु पुत्र यथार्थतः।
द्वाविंशतिर्ग्रहाः प्रोक्ता नारीपीड़ाकरास्तु ते॥
ग्रहाः कौमारिकाद्यान्ये द्वात्रिंशत्तेऽपि कीर्त्तिताः।
चतुःषष्टिश्च संख्याता ग्रहाणां क्रूरकर्म्मणाम्॥
चतुःषष्टिसहस्राणि चैकैकस्य प्रविस्तराः।
तेषां मध्ये तु प्रोच्यन्ते चतुःषष्टिश्च नायकाः॥
दोषैर्द्वादशभिर्वत्स ग्रहा गृह्णन्ति योषितम्।
एकपात्रेण पानेन परशय्यासनेन च॥

परपुंसः प्रसङ्गेन परवस्त्रविभूषणैः।
लालोच्छिष्टकमाल्येन चैकभाजनभोजनैः॥
केशोद्गमेन संसेकादनार्य्यस्य च गूहनात्।
एतैर्दोषैश्च ते सर्व्वे ग्रहाः पीड़ाकराः स्मृताः॥
प्रथमं गृह्णते योषां गर्भञ्च तदनन्तरम्।
पश्चात्क्षीरन्ततो बालमेवमाहुर्न संशयः॥
ग्रहनामानि वक्ष्यामि शवरी रेवती शिवा।
मुखा नन्दी च लम्बा च पूतना जम्भपूतना॥
गोमुखी च विड़ाला च तथा चैवामला बला।
काकोली च हसन्ती च ग्रहङ्कारी जया तथा॥
मुक्तकेशी त्रिदण्डी च अजामुखी च रोचना।
मुकुटा पिङ्गला नाम विटनासा तथा परा॥
स्कन्दग्रहास्तथा चान्ये सर्व्वेषां नायकाः स्मृताः।
रजनी कुम्भकर्णा च तापसी राक्षसी परा॥
मोदनी रोदनी चात्र धमनी नकुला तथा।
चतुःषष्टिः समाख्याता मातरो बालमातरः॥
आर्ज्जको जम्भको वीरो भीमाख्यः स्कन्दपञ्चमः।
बालानां पीड़नाः सर्व्वे भ्रमन्ति बलिकाङ्क्षिणः॥
बलिं दद्याद्विधानेन ततो मुञ्चन्ति नान्यथा।
चतुरस्त्रकृताङ्गेषु समसूत्रं* समन्ततः॥

---

* कृते वेषे समं सूत्रमिति ख-पुस्तके पाठः।

सप्त भागान् समान् सर्व्वान् कृत्वा चैवं विचक्षणः।
अन्तरान्तरकोष्ठेषु नव पद्मानि* कारयेत् ॥
बाह्ये चाभ्यन्तरे द्वे तु चक्रमध्ये प्रयोजयेत्।
सबाह्याभ्यन्तरे वत्स चक्रमालिख्य यत्नतः ॥
अष्टपत्रयुतं शुभ्रं केसरैः सह-कर्णिकैः।
तेषु मातृगणाः सर्व्वे चतुःषष्टिर्यथाक्रमम् ॥
पूर्व्वादि पूजयेत्सर्व्वांस्तथाष्टान्तकमष्टधा।
शिवन्तु कर्णिकामध्ये पद्मेषु नवसु स्थितम् ॥
कमले मध्यमे वत्स चक्रैस्तु सहितं शिवम्।
पूजयेत्पूर्व्वविधिना कल्पयित्वा तथासनम् ॥
अस्य कर्म्माणि वक्ष्यामि येन मुच्यन्ति योषितः।
ज्ञात्वा तासां विकारांश्च सर्व्वाभरणभूषितः ॥
स्थापयेच्च विधानज्ञ उपवासपरायणः।
व्यतीपातादिनिर्मुक्ते स्नानं कुर्य्याच्छुभे दिने ॥
त्रिषूत्तरेषु रेवत्यां प्राजापत्ये पुनर्वसौ।
अश्विन्यामथ पुष्ये च रोहिण्यामथवा गुरु ॥
देवालये मातृगेहे पितृगेहे चतुष्पथे।
जीर्णे कूपे तड़ागे वा नदीनां सङ्गमेषु वा ॥
एकवृक्षे श्मशाने वा देवतानाञ्च सन्निधौ।
षष्ठ्यां राजपत्नीन्तु मध्याह्ने स्नापयेत्ततः ॥

---

* पद्मानि इत्यत्र चक्राणि इति ख पुस्तके पाठः।

पुत्रकामानुगां तीर्थे राजपत्नीन्तु ......

आचार्य्यस्तु सुसम्भूतः* शुक्लवस्त्रः शुचिः सदा ॥

अष्टहस्तप्रमाणेन चतुर्हस्तमथापि वा ।

चतुरस्रं चतुर्द्वारं तोरणं ध्वजशोभितम् ॥

चन्द्रातपकृताटोपं पुष्पमाल्योपशोभितम् ।

त्रिरजोभिः समालिख्य मण्डलं सार्व्वकामिकम् ॥

स्नानैः पानैश्च नैवेद्यैर्विविधं कारयेद्बलिम् ।

श्वेतं रक्तं तथा कृष्णं वर्णानाञ्च क्रमेण तु ॥

ईशो ब्रह्मा तथा विष्णू रजसामधिपाः स्मृताः ।

मण्डलस्योत्तरे भागे कुर्य्यात्स्नपनमण्डलम् ॥

चतुर्हस्तप्रमाणेन वर्णकैरुपशोभितम् ।

अकालान्† अष्टकलशांश्चतुरस्रप्रमाणतः ॥

चूतपल्लवसंयुक्तान् यथेष्टपरिवेष्टितान् ।

हिरण्याक्षतदूर्व्वाभिरोषधीभिश्च संयुतान् ॥

नद्याश्चोभयकूलात्तु वल्मीकाद्वृक्षमूलतः ।

गृहीत्वा मृदमेतेभ्यः स्थापयेत्प्रथमे घटे ॥

द्वितीये गोमयं स्थाप्य तृतीये गन्धवारि च ।

चतुर्थे हेमरजते पञ्चमे सर्व्वमौषधम् ॥

---

* सुसम्भूत इत्यत्र सुसम्पूर्ण इति ख-ग-पुस्तकयोः पाठः, परन्तु सङ्गतत्वात् पूर्व्व-पाठ एवात्र निवेशितः ।

† अकालानित्यत्र अनोलानिति ख-पुस्तके पाठः ।

षष्ठे तीर्थान् प्रविन्यस्य सप्तमे सप्त सागरान् ।
कलशे चाष्टमे न्यस्य शङ्करं मातृभिः सह ॥
अनेन विधिना मन्त्री त्वभिषेकं समाचरेत् ।
मृतवत्सा जीवपुत्रा वन्ध्या चापि प्रसूतिका ॥
अवीजा वीजतां याति स्त्री वाथ पुरुषोऽपि वा ।
अभिचारकृतं दोषं मन्त्रोऽयं नाशयेदिति ॥
अनेनैव विधानेन* मुख्येन सर्व्वबन्धुना ।
दुर्भगा सुभगा स्याच्च कन्या प्राप्नोति सद्वरम् ॥
देवीभिश्चोपसृष्टानां बालानां ग्रहपीड़ने ।
क्रियामेतां सदा कुर्य्यात्साधकस्तु यशस्करीम् ॥
सभार्य्ये दक्षिणा देया नगरे वाथ खेटके ।
हस्त्यश्वरथयानानि मुकुटं कुण्डलानि च ॥
धनधान्यहिरण्यानि येन वा तुष्यते गुरुः ।
तेन तुष्टेन तुष्यन्ति देवता मातरो ग्रहाः ॥
अथाभिषेकको देयो यजमाने सभार्य्यके ।
यो हि जीवति तस्यापि† मृतस्यापततिः‡ ध्रुवम् ॥
ॐ फट् स्वाहा ।

* विधानेन इत्यत्र प्रयोगेण इति ग-पुस्तके पाठः ।

† तस्यापि इत्यत्र तस्याप्येतेन इति, तस्यार्थे इति च ख-ग-पुस्तकयोः पाठौ ।

‡ मृतस्यापतति इति ख-पुस्तके पाठः ।

सर्षपैरक्षतैर्वापि तं देहे ताड़येच्छिशुम्* ।
मौनश्चेत्स्थीयते बालो रोदते जीवते ध्रुवम् ॥
इति भविष्योत्तरोक्तं वन्ध्याभिषेकविधानम् ।

अथ घटिकाभिषेकविधानम् ।

हेमाद्रौ भविष्ये ईश्वर उवाच ।
शृणु षण्मुख तत्त्वेन स्नानं घटिकया परम् ।
धारयिष्यन्ति ये वत्स घटिकां देवनिर्म्मिताम् ॥
तेषामर्थश्च कामश्च सौभाग्यं वृद्धिमेष्यति ।
पूर्व्वोक्तं मण्डलङ्कृत्वा गौरीं तत्रैव पूजयेत् ॥
स्वस्य वित्तानुसारेण वित्तशाठ्यं न कारयेत् ।
ईशान्यां दिशि संस्थाप्य घटिकां मधुपूरिताम् ॥
पुष्पमाल्यैरलङ्कृत्य रक्तसूत्रेण वेष्टयेत् ।
हिरण्यं निक्षिपेत्तत्र न शून्यां कारयेद्बुधः ॥
वस्त्रेण तु समावृत्य गन्धांस्तत्रैव निक्षिपेत् ।
कुङ्कुमागुरुकर्पूरचन्दनेन विलेपयेत् ॥
उशीरं चन्दनं मुस्ता बालकं सर्व्वमौषधम् ।
तथा चामलकं दूर्व्वाः क्षिपेद्गोरोचनां बुधः ॥
शतमष्टोत्तरं जप्त्वा गौर्य्या वै मूलविद्यया ।
ततोऽभिमन्त्र्य घटिकां गौरीमन्त्रेण तां पुनः ॥

---

* छिद्रशिमित्यत्र ककुभैरिति ग-पुस्तके पाठः ।

शताष्टाधिकजप्तेन अभिमन्त्र्योदकं गुह ।
ततोऽभिषेकं कुर्य्याद्धि योषितो वा नरस्य च ॥
घटिकोदकसिक्ता वै या नारी मण्डले गुह ।
सुभगा सा भवेन्नित्यं नरस्यैव सदा गुह ॥
अपुत्त्रा लभते पुत्त्रमजीवा जीविनी भवेत् ।
अनेनैव विधानेन गुर्व्विणी यदि कारयेत् ॥
पुत्त्रं प्रसूयते सा तु महावीर्य्यपराक्रमम् ।
राजा विजयमाप्नोति धारयित्वा सुसङ्गरे ॥
या तु रूपवती कन्या वरन्न लभते यदा ।
तदा घटाभिषेकेण सौभाग्यमतुलं लभेत् ॥
येन येन हि भावेन घटिकां कारयेद्बुधः ।
तस्य तस्य हि भावेन* तत्फलं लभते पुनः ॥
यस्तेनोक्तमथो किञ्चित्सङ्क्षेपेण षडानन ।
तत्सर्व्वं मूलमाश्रित्य अनेनैव तु कारयेत् ॥

मूलमाश्रित्येति पूर्व्वोक्तमूलमन्त्रेणेत्यर्थः ।

न घटिकायाः परं किञ्चित्सौभाग्ये कारणं मतम् ।
न घटिकायाः परं स्कन्द धर्म्मकामार्थमोक्षदम्† ॥
घटिकां धारयेद्यस्तु स कामानखिलाँल्लभेत् ।
अपुत्त्रो लभते पुत्त्रमधनो धनमाप्नुयात् ॥

इति भविष्ये घटिकाभिषेकविधानम् ।

---

* तेन तेन हि भावेन इति ग-पुस्तके पाठः ।

† अत्र प्रथमतृतीयपादयोर्न्नवाक्षरत्वाच्छन्दोदोष आर्षत्वात् सोढव्यः ।

## अथ विष्णुश्राद्धम् ।

तत्र कर्म्मक्षयाय । कर्म्मविपाकाद्धि मृतापत्यत्वमनपत्यत्वं वा जायते तदर्थमिदमनुष्ठेयम् ।

तद्यथा । कर्म्मणां विशेषेण पचनं पाकः कर्म्मविपाकः । स त्रिविधो जन्मायुर्भोगैः ।

जन्म कृम्यादि । पतितं याजयित्वा तु कृमियोनौ प्रजायते । इत्यादिस्मरणात् ।

आयुः पञ्चवर्षादिकम् । तत्र जीवति वर्षाणि दश पञ्च च वा द्विज इति स्मरणात् ।

भोगो यमयातनादिः । यमलोके तु ते घोरां लभन्ते यम-यातनामिति स्मृतेः ।

ततश्च येन कर्म्मणा अनृतभाषणादिना बालनिधनादि जायते तन्निरासाय इदं श्राद्धम् ।

ननु अल्पायुष्ट्वादि चेत्कर्म्मणः फलम् कथं तर्हि विष्णुश्राद्धा-दिना तन्निरासः प्रारब्धकर्म्मणां भोगादेव क्षयात् । सत्यम् । तथापि बलीयसा विष्णुश्राद्धादिना गयाश्राद्धेन नानायोनि-प्रविष्टप्राप्युद्धारवत् जन्माल्पायुष्ट्वयातना नश्यति ।

ननु गयाश्राद्धेनापि नानायोनिप्रविष्टानां कथमुद्धारः । तदुद्धारे वा कथं स्मृत्यविरोधः । उच्यते । तीर्थपुण्यसामर्थ्येन नानायोनिप्रविष्टा अपि स्वर्गब्रह्मलोकयोः क्षुत्पिपासादिरहिता-स्तिष्ठन्तस्तएव वंशच्छेदभयात् पुनः संसारं प्राप्य पुराणां योनिं प्रविशन्ति ।

स्मृतिरपि प्रतिबन्धकाभावे सत्येव कर्म्मणां यातनार्थतां बोधयति ।

अतएवोक्तम् ।

उद्धृता ये गयाश्राद्धे ब्रह्मलोकेषु ते शुभे ।
भुञ्जते क्षुत्पिपासा वा न तेषां जायते क्वचित् ॥
न चापि पतनन्तस्मात्स्थानाद्भवति भूमिप ।
वंशच्छेदात्पुनः सर्व्वेऽवतरन्ति महीतले ॥
आगत्यास्मात्ततो लोकान्निपत्य जगतीतले ।
पापाः पापां समायान्ति योनिं श्रेष्ठां शुभान्विताः ॥

ननु किमिदं विष्णुश्राद्धम् । विष्णुरूपिपित्रुद्देशेन क्रियमाणं श्राद्धं विष्णुश्राद्धमिति चेत् । न पितृस्वरूपी जनार्द्दनवासुदेवः प्रीयतामिति विष्णुभावनया पित्राद्युद्देश्यकत्वयाद्दश्राद्धस्यापि विष्णुश्राद्धत्वप्रसङ्गात् । कथञ्च विष्णूद्देशेन अनुष्ठीयमानकर्म्म-विशेषात् कूटवादादिरतानां कर्म्मक्षयः ।

किञ्च किमर्थमिदमनुष्ठेयम् । वीजि*दोषपरिहारार्थं वा प्राणिदोषपरिहारार्थं वा । नाद्यः कूटवादादिरतोद्धारार्थत्वात् । नान्त्यः कर्त्तर्य्येव कर्म्मभिः फलस्य जननात् । उच्यते । मृत-प्राणिदोषनिराकरणद्वारा दीर्घायुःपुत्रादिप्राप्त्यर्थं तथा विष्णु-भावनया मृतोद्देशेन क्रियमाणश्राद्धस्य विष्णुश्राद्धत्वात् पूत-त्वादिगुणविशिष्टपुंसेण पुंसत्वस्य† जातेष्वेव स्ववंशजानां

* वीजि इत्यत्र बीज इति ग-पुस्तके पाठः ।

† पुंसेण पुंसत्वस्य इत्यत्र पुंसिषा पुंसित्वस्य इति ख-पुस्तके पाठः ।

कन्यादियोनिनिराकरणेन तेषां स्वापत्यत्वे सति तैरपत्यवत्त्वस्य कर्त्तुमिष्टफलत्वात् ।

ततश्च दम्पत्योर्दोषपरिहारार्थं रुद्राभिषेकप्रायश्चित्तानुष्ठानात् प्राणिनाञ्च दोषपरिहारार्थं प्रायश्चित्तश्राद्धयोरनुष्ठानाद्बीजिप्राणिनोः कर्मक्षयात्तस्यैव प्राणिनो दीर्घायुष्ट्वादिविशिष्टस्वपुत्रत्वसिद्ध्यर्थं विष्णुश्राद्धानुष्ठानमिति सिद्धम् ।

उक्तञ्च ।

बालस्यापि च दम्पत्योरज्ञाते पापकर्म्मणि ।
ये दोषा गर्भसम्भूता ये दोषा बीजिनस्तथा ॥
सर्पदंशादिजा ये च कर्म्मभिः सञ्चिताश्च ये ।
ते सर्व्वे नाशमायान्ति विष्णुश्राद्धप्रसादतः ॥
अनादिकर्म्मसम्भूतं कर्म्म ज्ञानेन दह्यते ।
तद्वत्प्राणिकृतं पापं विष्णुश्राद्धेन दह्यते ॥ इति ।

गर्भसम्भूता गर्भेषु सम्भूतास्तत्कृता इत्यर्थः ।

तथा ।

येन कर्म्मविपाकेन म्रियन्ते बालकानि च ।
तत्कर्म्मपरिहारार्थमुच्यते वंशवृद्धये ॥
बालकस्यापि दम्पत्योरज्ञाते पापकर्म्मणि ।
कुर्य्यात्प्रतिकृतिन्तत्र कुशरूपां यथाविधि ॥
यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम् ।
ममाज्ञया कुशमयीं प्रकृतिं स विशत्विमाम् ॥

जन्मजन्मान्तरकृतानपराधान् कृतैन

पातकोपमहापापं वायुरूप क्षमस्व

नमोऽस्तु विष्णुरूपाय त्राहि मां भव

निष्कृतिं ते करिष्यामि नवाब्दाद्ध

तस्य काश्यपगोत्रस्य वायुरूपस्य देहिनः ।

प्रेतस्य चोद्धारविधिं सद्यः सम्नयाम्यथ ॥

यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम् ।

तस्य प्रेतस्य दत्तोऽयं* पिण्डोऽयमुपतिष्ठतु ॥

लभते चोत्तमगतिं पिण्डोदकविधौ कृते ।

नवानि नवमिश्राणि प्रेतश्राद्धानि यानि तु ॥

तत्सिद्धये प्रकर्त्तव्यं द्वात्रिंशद्द्विजतर्पणम् ।

यो मे प्रजां नाशयति जीवो नश्यति वा स्वयम् ॥

विष्णुरूपः स लभतां तृप्तिं ब्राह्मणतर्पणात् ।

त्रिष्णुश्राद्धं ततः कुर्य्यात्सन्तत्यै सुतसिद्धये ॥ इति ।

तस्मात्सिद्धं विष्णुश्राद्धस्य कर्त्तव्यत्वम् ।

तत्र अनपत्यत्वादौ निदानानि ।

चतुर्विधा च या वन्ध्या भवेद्वत्सवियोजनात् । इति वायुपुराणे ।

स्रवद्गर्भा भवेत्सा तु बालकं हन्ति या विषैः । इति वृद्धगौतमः ।

---

* दत्तोऽयमित्यत्र प्रीत्यर्थमिति ख-पुस्तके पाठः, स एव समीचीनतया प्रतिभाति, यतस्तत्पाठे अयमित्यस्य द्विरुक्तिदोषो न स्यात् ।

बालघाती च पुरुषो मृतवत्सः प्रजायते । इति शातातपः ।

एवं सति ।

वन्ध्या च काकवन्ध्या च स्रीप्रसूश्च मृतप्रजा ।
एवं चतुर्विधा वन्ध्या तस्याः शान्तिकमीर्य्यते ॥

इति प्रक्रम्य विष्णुश्राद्धोपदेशाच्चतुर्विधवन्ध्यात्वनिराकरणार्थत्वं विष्णुश्राद्धस्य । तत्र

सर्वासु ब्रह्महत्यायाः षडब्दं कृच्छ्रमाचरेत् ।

इत्युक्तत्वात् षडब्दं तदर्द्धं त्र्यब्दं तदर्द्धं सार्द्धाब्दं वा कृत्वा तत्राप्यशक्तौ

कुर्य्यादादौ च चान्द्रञ्च चान्द्रद्वयमथापि वा ।
प्रायश्चित्तमिदङ्कृत्वा विष्णुश्राद्धं समाचरेत् ॥

इत्युक्तेश्चान्द्रायणे चान्द्रायणं वा यथाशक्तिपर्षदुपस्थानादिप्रकारेण गृहीत्वा मृत्तिकास्नानादिपञ्चगव्यादिप्रकारेण च साङ्गं प्रायश्चित्तं विधाय पश्चाच्छ्राद्धमनुष्ठेयम् । तत्र रुद्रस्नानं वक्ष्ये इत्युपक्रम्य एतद्विधानपूर्व्वन्तु रुद्रश्राद्धं समाचरेदित्युक्तत्वादादौ रुद्रस्नानं कार्य्यम् ।

तन्मूलभूतवाक्यानि यथा ।

रुद्रस्नानविधिं वक्ष्ये दम्पत्योश्च सुतार्थिनोः ।
कृष्णाष्टम्यामुपोष्यैव नवम्यां सुसमाहितौ ॥
नानावर्णैर्धान्यपिष्टैः पद्ममष्टदलं लिखेत् ।
विन्यस्य कलशानष्टौ दिक्ष्वष्टासु च सोदकान् ॥
पुनरेकं पूर्व्वभागे कलशं विन्यसेत्ततः ।
पद्मस्योपरि संविष्टौ दम्पती प्राङ्मुखौ शुची ॥

अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।
नद्या उभयकूलात्तु मृदमाहृत्य यत्नतः ॥
अपरित्यक्तवस्त्रौ तु लिप्तगात्रौ तया मृदा ।
अच्छिद्राण्यर्कपत्राणि निधाय शतसप्तकम् ॥
रुद्रस्नानं पुरा कृत्वा रुद्रकुम्भाद्यथो जपेत् ।
दिग्भ्यष्टस्वष्टकुम्भानि नवमे मौणि वै तथा ॥
कुम्भाद्येकादशैवन्तु जप्त्वा तु विधिपूर्व्वकम्* ।
अष्टानां कलशानां तदुदकं शान्तिदं क्षिपेत् ॥
तद्धारिणार्कपत्रेण दम्पत्योश्चाभिषेचने ।
अर्कपत्रशतानाञ्च सप्तानां त्याग इष्यते ॥
प्रत्येकं रुद्रमन्त्रेण स्नायातां दम्पती ततः ।
त्यक्त्वा पूर्व्वाणि वस्त्राणि ततोऽन्यांशुकधारिणौ ॥
न ग्राह्याणि तु पूर्व्वाणि त्वाचार्य्यं पूजयेत्ततः ।
पूजितां रुद्रमूर्त्तिञ्च निष्कमानमितां शुभाम् ॥
सवाहनां सालङ्कारामाचार्य्याय निवेदयेत् ।
एतद्विधानपूर्व्वन्तु विष्णुश्राद्धं समाचरेत् ॥
तस्य पुत्त्राः प्रजायन्ते सुशीलाश्च चिरायुषः ।
सुभगा धर्म्मशास्त्रज्ञा धर्म्मिष्ठाः सत्यवादिनः ॥
नदीसङ्गम एवायं कर्त्तव्यस्तूदितो विधिः ॥

इति विष्णुश्राद्धाङ्गं रुद्रस्नानम् ।

---

* विधिपूर्व्वकमित्यत्र नवमी पुनरिति ख-पुस्तके पाठः ।

विष्णुश्चाह पुराणतः सङ्क्षेपतो वदामः । विशेषास्तु प्रयोगे दृश्यन्ते ।

विष्णुधर्म्मोत्तरे दाल्भ्य उवाच ।

केन कर्म्मविपाकेन म्रियन्ते शिशवः प्रभो ।
गर्भादि स्रवते तद्वदनपत्योऽपि जायते ॥

श्रीभगवानुवाच ।

साधु पृष्टं त्वया विप्र प्राणिनां हितकाम्यया ।
तत्सर्व्वं कथयिष्यामि विस्तरेण महामुने ॥
कूटवादरता ये च ये च ब्राह्मणनिन्दकाः ।
ब्रह्मस्वहारिणः क्रूरा वाग्दत्तस्यापहारकाः ॥
अनाचाराः कृतघ्नाश्च अशस्त्रप्राणिघातकाः ।
परदाररता ये च सर्व्वधर्म्मबहिष्कृताः ॥
मिथ्याभिशंसिनो ये च चौरकर्म्मरताश्च ये ।
ते सर्व्वे पापकर्म्माणः पतन्ति नरके ध्रुवम् ॥
पुनः पुनः समायान्ति क्षुद्रं प्रति पापिनः ।
अल्पायुषोऽपि जायन्ते ये नरा नरकागताः ॥
मृतास्ततः पतन्तीमं गर्भवासं पुनः पुनः ।
अन्धाः कुब्जाश्च विकृता विकृताङ्गा नराधमाः ।
व्याधिता व्याधिरूपेण दृश्यन्तेऽद्यापि भूतले ॥

दाल्भ्य उवाच ।

पापिनो ये त्वया प्रोक्तास्तेषां वै निष्कृतिं स्वयम् ।
कथयस्व महाभाग प्राणिनां हितकाम्यया ॥

श्रीभगवानुवाच ।

येन मुक्तिर्भवेत्तेषां पापिष्ठानाञ्च शाश्वती ।
कथयिष्याम्यहं विप्र विधानं तव सुव्रत ॥
वन्ध्या च काकवन्ध्या च स्त्रीप्रसूश्च मृतप्रजा ।
एषा चतुर्विधा वन्ध्या तस्याः शान्तिकमीर्य्यते ॥
ये दोषा गर्भसम्भूता ये दोषा वीजिनस्तथा ।
ते सर्व्वे नाशमायान्ति विष्णुश्राद्धप्रसादतः ॥
विष्णुश्राद्धन्ततः कुर्य्यादङ्गानुष्ठानपूर्व्वकम् ।
अशून्यमासे कर्त्तव्यमथ वैवाहिकेषु वा ॥
आत्मशुद्धिं ततः कुर्य्यात्सर्व्वपातकनाशनीम् ।
तेषां तत्पापशान्त्यर्थं प्रायश्चित्तमिहोच्यते ॥
कुर्य्यादादावेकचान्द्रं चान्द्रद्वयमथापि वा ।
कार्य्यं धेनुसुवर्णेन धान्यतीर्थैः* स्वशक्तितः ॥

अत्रापि वाशब्दादब्दसार्द्धाब्दत्र्यब्दादयः पक्षा यथाशक्ति योज्या व्युत्क्रमेण च योजना ।

प्रायश्चित्तमिदङ्कृत्वा विष्णुश्राद्धं समाचरेत् ।
इति बौधायनः प्राह शास्त्रोक्तं धर्म्मतत्परः ॥
अष्टमीन्तु समासाद्य रुद्रस्नानं समाचरेत् ।
एकादशीं समासाद्य कृष्णपक्षस्य वै तिथिम् ॥
उपोष्य तत्र कर्त्तव्यं विष्णुश्राद्धं विधानतः ।
आदौ मृदादिभिः स्नात्वा स्वगृह्योक्तविधानतः ॥

* धान्यतीऽर्थैरिति ख-पुस्तके पाठः ।

देहशुद्धिं ततः कृत्वा कालतिथ्यादि संस्मरेत् ।
आत्मनो बहुसहस्रदीर्घायुःपुत्रलब्धये ॥
गर्भदोषापहृतये विष्णुश्राद्धं समारभे ।
ततो नद्यादिषु स्नात्वा नित्यं कर्म्म विधाय च ॥
देवागारं समासाद्य बध्नीयात्पुष्पमण्डपम् ।
तदधस्तादुपाविश्य निशि सङ्कल्पपूर्व्वकम् ।
पश्चादाचार्य्यवरणं फलं दत्त्वेति मन्त्रतः ॥

फलमिति वस्त्रासनभोजनादे*रुपलक्षणम् । हरण्याङ्क्तिनमः सन्नित्यन्यत्रोक्तत्वात् ।

गर्भदोषैर्बालनाशैः पीड़ितोऽस्मि द्विजाधिप ।
विष्णोः सम्पूजनङ्कृत्वा पूर्णान् कुरु मनोरथान् ॥
इत्याचार्य्यं प्रणम्याथ मण्डपाधस्तु मण्डले ।
मध्ये तु तण्डुलैः पूर्णङ्कलशं स्थापयेद्धरेः ॥
वस्त्रयुग्मेन संवेष्ट्य तस्मिन् गरुड़वाहनम् ।
रुक्मनिष्केण वार्द्धेन तदर्द्धेनापि शक्तितः ॥
निर्म्मितं स्थापयेत्तत्र सव्यदक्षिणतस्ततः ।
सप्त†धान्यमितान्राशीन् प्रत्येकं द्रोणसम्मितान् ॥
कृत्वा पुरुषसूक्तेन‡ विष्णुं सम्पूजयेत्ततः ।

---

* भोजनादेरित्यत्र भाजनादेरिति ख-पुस्तके पाठः ।

† सप्त इत्यत्र सप्तेति ग-पुस्तके पाठः ।

‡ पुरुष एवेदं सर्व्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति । इत्यादिकेन ।

उपचारैः षोड़शभिरन्यैर्नामपदैः पृथक् ॥

पुरुषसूक्तेनेति पौराणमन्त्राणामुपलक्षणम्। तत्र त्रैवर्णिकानां वैदिकपौराणनाममन्त्राणां समुच्चयः। शूद्राणान्तु वैदिकव्यतिरिक्तौ।

पञ्चामृतेन संस्नाप्य पूजां कुर्य्याच्च जागरम्।
तिलमाषयवव्रीहिकङ्गुश्यामाकमुद्गकाः॥
सप्तधान्यमिति प्रोक्तं प्रत्येकं द्रोणसम्मितम्।
ततः प्रभाते नद्यादौ स्नात्वामन्त्र्य द्विजान् शुचीन्॥
विष्णुभक्तिसमायुक्तान् सप्त पञ्च त्रयोऽपि वा।
निमन्त्रयामि वो विप्रा विष्णुश्राद्धेक्षणाय भोः॥
भस्मीकुरुत तान्दोषान् बाले गर्भे च ये स्थिताः।
अनेनामन्त्र्य मन्त्रेण दण्डवत्प्रणमेच्च तान्॥
कृत्वा नित्यक्रियां तद्वद्विष्णादीनर्चयेत्ततः।
आमं शरावं देवस्य पुरतः स्थापयेत्ततः॥
नानागोत्रान् पितॄंस्तत्र मन्त्रेणावाहयेदिति।
कूटवादरता इत्यादि* चौरकर्मरताश्च ये॥
ते सर्व्वे तुष्टिमायान्तु तृप्तिं तेषां करोम्यहम्।
इत्याहूतान्† गन्धपुष्पैरक्षताभिस्ततोऽर्च्चयेत्॥
घृतप्लुतेन चान्नेन आमपात्रं प्रपूजयेत्‡।

* मन्त्रोऽयं १११ पृष्ठे प्रदर्शितः।

† आहूतानित्यत्र आहुतानिति ग-पुस्तके पाठः।

‡ प्रपूजयेदित्यत्र प्रपूरयेदिति पाठो युक्तः।

तिलदर्भयुतं तोयं गृहीत्वा पूर्व्ववत्पठेत् ।
मन्त्रानन्त्यार्द्धरहितांस्ततो मन्त्रमिमं पठेत् ॥
येऽत्र पात्रे स्थिता जीवाः पापिष्ठा दुःखभागिनः ।
अन्नं तेभ्यो मया दत्तमुपतिष्ठतु हृन्मये ॥
इति सङ्कल्प्य तत्तोयं करस्थं तत्र निक्षिपेत् ।
ततो होमं प्रकुर्व्वीत चरुंखलयसमित्तिलैः ॥
इदं विष्णु*रिमं मन्त्रमुच्चार्याष्टोत्तरं शतम् ।
प्रत्येकं होमकर्त्तृभ्यः शक्त्या देया च दक्षिणा ॥

प्रत्येकमिति चर्वादिभिः सम्बध्यते । त्रयस्त्रीनित्यर्थः द्वितीयार्थे प्रथमा ।

पूर्णाहुतिं विधायाथ श्राद्धकर्म्म समाचरेत् ।
एकोद्दिष्टविधानेन विष्णुरूपमनुस्मरन् ॥
अनेकनामगोत्राणां विष्णुश्राद्धाधिकारिणाम् ।
पितॄणां विष्णुरूपाणामेकोद्दिष्टविधानतः ॥
विष्णुश्राद्धं करिष्येऽहमिति सङ्कल्पमाचरेत् ।
उच्चार्य्य नामगोत्रादि एवं पाद्यादिषु क्रमात् ॥
तद्वद्विभक्तिसहितं सर्व्वस्मिञ्छ्राद्धकर्म्मणि ।
आसनं भाजनं छत्रं तथोपानत्कमण्डलुम् ॥
दद्याच्च श्राद्धभोक्तृभ्यो दक्षिणाच्छादनादिकम् ।
परितोषकरं दत्त्वा भोक्तृसंख्याश्च निर्वपेत् ॥
पिण्डानुद्दिश्य तान्नामशर्म्मगोत्रान् पितॄन् भुवि ।

* मन्त्रोऽयं १०८ पृष्ठे प्रदर्शितः ।

शर्कराघृत*सम्मिश्रांस्तिलपायससम्मितान् ॥
सम्पूर्णं वाचयित्वा तान् ब्राह्मणांश्च विसर्जयेत् ।
अवशेषन्तु तत्सर्वं विप्रेभ्यः प्रतिपादयेत् ॥
मार्जयेच्छ्राद्धभूमिञ्च आचार्य्यं पूजयेत्ततः ।
पाद्यार्घ्यगन्धपुष्पाद्यैरुपचारैः स्वशक्तितः ॥
वस्त्रालङ्कारसहितैस्तस्य हस्ते जलङ्क्षिपेत् ।
शिवाः सन्त्वाप इत्युक्त्वा कुर्य्याद्गोपूजनं ततः ॥
स्वर्णशृङ्गीं रौप्यखुरीं ताम्रपृष्ठीं सवत्सकाम् ।
रत्नपुच्छां कांस्यदोहां सवस्त्रां कल्पयेत्ततः ॥
अस्मा अमुकगोत्राय प्रवराय च शर्म्मणे ।
विप्राय गामिमां विष्णुदैवत्यां शक्त्युपस्कृताम् ॥
विष्णुश्राद्धाङ्गभूतां ते त्वहं त्वमुकगोत्रकः ।
तथा प्रवरशर्म्मात्मा चिरायुःपुत्रलब्धये ॥
सदक्षिणां सम्प्रददे इति मन्त्रं ततः पठेत् ।
गावो मे ह्यग्रतः सन्तु स्वामहं तत्प्रसादभाक् ॥
इति गां दक्षिणायुक्तां दत्त्वामुं देवमर्च्चितम् ।
सप्तधान्यं सकलशं गृहाण त्वं द्विजोत्तम ॥
इति देवं निवेद्यास्मै दक्षिणां परितुष्टये ।
दक्षिणान्ते सम्प्रददे न ममेति ततः पठेत् ॥
भक्तिहीनं क्रियाहीनं मन्त्रहीनं सुरेश्वर ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतो मम ॥

---

* घृतंत्वच यवैति ख-पुस्तके पाठः ।

इत्युक्त्वा दण्डवद्भूमावाचार्य्यं प्रणमेत्ततः ।
गृहीत्वामं शरावं तं* मन्त्रपूर्वं नदीं व्रजेत् ॥
जलमध्ये जपेन्मन्त्रान् कूटवादरता इति† ।
विष्णुश्राद्धप्रसादेन सर्व्वे ते तारिता मया ॥
उत्तमान् यान्तु ते लोकान् पापं न्यस्यामले जले ।
अपित्वेति शरावं तं सलिले स्थापयेत्ततः ॥
शरावनाशपर्य्यन्तं जले स्थित्वा सचेलकम् ।
स्नात्वा धौताम्बरं धृत्वा चागच्छेद्भवनं निजम् ॥
एवं यः कुरुते लोके विष्णुश्राद्धं हि मानवः ।
तस्य पुत्राः प्रजायन्ते सुशीलाश्च चिरायुषः ।
सुभगा धनसम्पन्ना धर्म्मिष्ठाः सत्यवादिनः ॥

इति विष्णुश्राद्धपूर्व्वविचारः ।

अथास्य प्रयोगः ।

एवं गालवभगवत्संवादादयोऽपि अत्रार्थे प्रमाणमस्ति विस्तरभयात्तु न लिख्यते। तत्रत्येतिकर्त्तव्यताविशेषस्तु शाखान्तराधिकरणन्यायेन प्रयोगे वक्ष्यते ।

अथ प्रायश्चित्तपञ्चकप्रकारप्रदर्शनपुरःसरं प्रयोगो लिख्यते । कस्मिंश्चिद्दिवसे दश पञ्च चतुरस्त्रीनेकं वा अध्यात्मविदमुपवेश्य सचेलं स्नात्वा मौनी अभुञ्जानः क्लिन्नवासाः पर्षदं प्रदक्षिणीकृत्य

---

* तमित्यत्र तदिति पाठश्च दृश्यते, परन्तु शरावो वर्द्धमानक इत्यमरोक्तेः शरावस्य पुंस्त्वमेव न्याय्यः, ततश्च तद्विशेषणीभूतस्य तच्छब्दस्य पुंल्लिङ्गत्वात् तमित्येव पाठः समीचीनः।

† १२२ पृष्ठे इमे मन्त्राः प्रदर्शिताः ।

गुण इत्यादि योज्यम् । निष्कञ्च लोकशास्त्रपरिभाषयोरेक-वाक्यतया माषाश्चत्वारिंशत् ४० । तदर्द्धं २० । तदर्द्धं १० । सुवर्णं मुख्यम् तदशक्तौ रजतं ग्राह्यम् । एवञ्च निवेदितं प्राय-श्चित्तं भवदनुग्रह इत्यङ्गीकृत्य सम्मानपूर्व्वकं प्रणम्य पर्षदं विस-र्ज्जयेत् ।

अस्मिन् दिने चोपवासः कार्य्यः शक्तेनेति । इतरेण तु हविष्याशनं कार्य्यम् । ततः कस्याञ्चिद्रिक्तायान्तिथौ कृतमाध्या-ह्निकः सायाह्ने गङ्गादौ एवंगुणविशेषणविशिष्टायां पुण्यतिथौ अनेकजन्मार्ज्जितानपत्यत्वादिकारणीभूतदुरितप्रशमनार्थं करिष्य-माणविष्णुश्राद्धाधिकारसिद्ध्यर्थञ्च अमुकं प्रायश्चित्तम् अमुक-प्रत्याम्नायेन यथाशक्ति करिष्ये । तत्रादौ वपनदन्तधावनभस्म-गोमयमृदादिपञ्चगव्यस्नानानि पञ्चगव्यप्राशनादीनि तदङ्गानि च करिष्ये इति सङ्कल्प्य ।

यानि कानि च पापानि ब्रह्महत्यासमानि च ।
केशानाश्रित्य तिष्ठन्ति तस्मात्केशान् वपाम्यहम् ॥

इति सङ्कल्प्य शिखाकक्षोपस्थवर्ज्जं नखरोमाणि वापयित्वा द्वादशाङ्गुलदन्तकाष्ठेन आयुर्बलमित्यादिमन्त्रं* पठित्वा दन्तान् धावयेत् । वपनानिच्छोस्तु द्विगुणं प्रायश्चित्तम् ।

ततः स्नात्वा भस्मादिस्नानं कुर्य्यात् । तत्रायं प्रकारः ।

---

* आयुर्बलं यशो वर्च्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वं नो धेहि वनस्पते ॥ (आह्निकतत्त्वं ।)

ईशानाय नम इति शिरसि। तत्पुरुषाय नम इति मुखे। अघोराय नम इति हृदये। वामदेवाय नम इति गुह्ये। सद्योजाताय नम इति पादयोः। प्रणवेन सर्व्वाङ्गे। ॐ अग्निरिति भस्म। ॐ स्थलमिति भस्म। ॐ जलमिति भस्म। ॐ वायुरिति भस्म। ॐ व्योमेति भस्म। सर्व्वं ह वा इदं भस्मेति मन्त्रैर्वा। इति भस्मस्नानम्।

अथ गोमयेन। गन्धद्वारां*मित्यादि।

अग्रमग्रं चरन्तीनामोषधीनां वने वने।
तासामृषभपत्नीनां पवित्रं कायशोधनम्।
त्वं मे रोगांश्च शोकांश्च नुद गोमय सर्व्वदा॥ इति मन्त्रेण।

अथ मृत्तिकास्नानम्। बलित्थां पर्व्वतानामिति† भूमिं प्रार्थ्य मा वो रिषत् खनिता‡ इति खनित्वा स्योना पृथिवि§ इति मृदं गृहीत्वा आयने ते परायणे¶ इति दूर्व्वां गृहीत्वा गायत्र्या अभ्युक्ष्य भूमौ निधाय आचम्य मृत्स्नानमहं करिष्ये इति सङ्कल्प्य

---

* मन्त्रोऽयं २७ पृष्ठे प्रदर्शितः।

† बळित्था पर्व्वतानां खिद्रं बिभर्षि पृथिवि।
प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि॥ (५म. ८४सू. १ऋक्।)

‡ मा वो रिषत् खनिता यस्मै चाहं खनामि वः।
द्विपाच्चतुष्पादस्माकं सर्व्वमस्त्वनातुरम्॥ (१२अ. ९५म. यजुः।)

§ ऋगियं ७२ पृष्ठे प्रदर्शिता।

¶ आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः।
ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इमे॥ (ऋग्वेदिब्रह्मकर्म्मणि।)

मृदं कुशोदकेन अभ्युक्षेत् । ततो दिक्षु मृदं क्षिपेत् । त्रातार*मिति पूर्व्वस्याम् । यमाय मधुमत्तम†मिति दक्षिणतः । तत्त्वायामीति‡ पश्चात् । वयं सोमेति§ उत्तरतः । तत्सूर्य्य¶मित्युपरिष्टात् । ततोऽङ्गेषु । अक्षीभ्यां त‖ इति मुखे । ग्रीवाभ्यस्त** इति ग्रीवायाम् । आन्त्रेभ्य†† इति हृदये । नाभा नाभिं न आदद‡‡ इति नाभौ । त्वमिन्द्र सजोष§§मिति

---

* त्रातारमिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ।
ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ (२०अ. ५०म. यजुः ।)

† यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्व्वजेभ्यः पूर्व्वेभ्यः पथिकृद्भ्यः ॥ (१०म. १४सू. १५ऋक् ।)

‡ मन्त्रोऽयं ९८ पृष्ठे प्रदर्शितः ।

§ वयꣳ सोमव्रते तव मनस्तनूषु बिभ्रतः ।
प्रजावन्तः सचेमहि ॥ (३अ. ५६म. यजुः ।)

¶ तत्सूर्य्यं रोदसी उभे दोषावस्तोरुपब्रुवे ।
भोजेष्वस्मां अभ्युच्चरा सदा ॥ (ऋग्वेदिब्रह्मकर्म्मणि ।)

‖ अक्षीभ्यान्ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मꣳ शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥ (१०म. १६३सू. १ऋक् ।)

** ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते ॥ (१०म. १६३सू. २ऋक् ।)

†† आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठो हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते ॥ (१०म. १६३सू. ३ऋक् ।)

‡‡ नाभा नाभिं न आददे चक्षुश्चित्सूर्य्ये सचा ।
कवेरपत्यमा दुहे ॥ (९म. १०सू. ८ऋक् ।)

§§ त्वमिन्द्र सजोषꣳ समर्कं बिभर्षि बाह्वोः ।
वज्रꣳ शिशान ओजसा ॥ (ऋग्वेदिब्रह्मकर्म्मणि ।)

बाह्वोः। सोमानꣳ स्वरण*मिति कक्षयोः। यः कुक्षि†रिति कुक्षौ। वह्नीनां पितेति‡ पृष्ठे। ऊरुभ्यां त§ इत्यूर्वोः। मेहनाद्वनङ्कर¶मिति जान्वोः। एतावानस्येति|| पादयोः। यस्य विश्वानीति** हस्तयोः। अङ्गादङ्गा††दित्यनेन पुरुषसूक्तेन च सर्व्वाङ्गोद्वर्त्तनं कुर्य्यात्। एतावत् शक्तावशक्तौ तु अङ्गोद्वर्त्तनमात्रम्। ततोऽश्वक्रान्ते‡‡ इत्यादिभिः सतिलां सदूर्व्वां

* सोमानꣳ स्वरणङ्कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजः॥ (३अ. २८म. यजुः।)

† यः कुक्षिः सोमपातमः समुद्र इव पिन्वते।
उर्व्वीरापो न काकुदः॥ (१म. ८सू. ७ऋक्।)

‡ वह्नीनाम्पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य।
इषुधिः सङ्काः पृतनाश्च सर्व्वाः पृष्ठे निनद्धो जयति प्रसूतः॥ (२९अ. ४२म. यजुः।)

§ ऊरुभ्यान्ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम्।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामि ते॥ (१०म. १६३सू. ४ऋक्।)

¶ मेहनाद्वनं करणाल्लोमभ्यस्ते नखेभ्यः।
यक्ष्मꣳ सर्व्वस्मादात्मनस्तमिदं विवृहामि ते॥ (१०म. १६३सू. ५ऋक्।)

|| एतावानस्य महिमातो ज्यायांश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि॥ (३१अ. ३म. यजुः।)

** यस्य विश्वानि हस्तयोः पञ्च क्षितीनां वसु।
स्पाशयस्व यो अस्मध्रुग्दिव्ये वाशनिर्जहि॥ (१म. १७६सू. ३ऋक्।)

†† अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्व्वणि पर्व्वणि।
यक्ष्मꣳ सर्व्वस्मादात्मनस्तमिदं विवृहामि ते॥ (ऋग्वेदिब्रह्मकर्म्मणि।)

‡‡ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे।
मृत्तिके हर मे पापं यन्मया दुष्कृतङ्कृतम्॥
उद्धृतासि वराहेण कृष्णेन शतबाहुना।
आरुह्य मम गात्राणि सर्व्वं पापं प्रमोचय॥ (आह्निकतत्त्वे।)

स्वदे शिरसि निधाय मृत्तिकास्नानं प्रक्षाल्य तीर्थं प्रार्थयेत् । ॐ हिरण्यशृङ्ग* । यन्मया मनसा वाचा† । इमं मे गङ्गे‡ । इदं ते न्याभिः§ । गङ्गा गङ्गेत्येवमादिभिः¶ पुराणमन्त्रैः सुमित्रिया नः‖ समुद्रज्येष्ठा इति चतसृभिः** एतो न्विन्द्र††मिति तिसृभिः तरत् समन्दी‡‡ति सूक्तेन पावमानीभिः§§ आपो हिष्ठेति¶¶ तृचेन च मार्ज्जनं कृत्वा इमं मे

---

* हिरण्यशृङ्गो यो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।
देवा इदस्य हविरद्यमायन्यो अर्वन्तम्प्रथमो अध्यतिष्ठत् ॥ (२९अ. २०म. यजुः ।)

† यन्मया मनसा वाचा कर्म्मणा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः ॥ (ऋग्वेदिब्रह्मकर्म्मणि ।)

‡ ९८ पृष्ठे प्रदर्शितेन ।

§ इदं ते न्याभिरसमानमद्रियाः काश्च सिन्धुं प्रवहन्ति नद्यः ।
सर्पो जीर्णामिव त्वचं जहाति पापं सशिरस्कोऽभ्युपेत्य ॥ (ऋग्वेदिब्रह्मकर्म्मणि ।)

¶ गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥ (ऋग्वेदिब्रह्मकर्म्मणि ।)

‖ सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः ॥ (६अ. २२म. यजुः ।)

** ९१ पृष्ठे प्रदर्शिताभिः ।

†† एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान्ममत्तु ॥ (८म, ९५सू, ७ऋक् ।)
इत्यादिकाभिः सप्ताष्टनवसंख्यकाभिः ।

‡‡ २० पृष्ठे प्रदर्शितेन ।

§§ २७ पृष्ठे प्रदर्शिताभिः ।

¶¶ २० पृष्ठे प्रदर्शितेन ।

गङ्गे इति मन्त्रेण उदकमालोड्य ऋतञ्चेति* ऋचं जपेत्। इति शुद्धोदकस्नानम्।

अथ पञ्चगव्यस्नानम्। गायत्र्या† गोमूत्रेण। गन्धद्वारां‡-मिति गोमयेन। आप्यायस्वेति§ क्षीरेण। दधिक्राव्ण¶ इति दध्ना। घृतं मिमिक्ष|| इति घृतेन। देवस्य त्वेति** कुशोदकेन स्नानं कुर्य्यात्। देवस्य त्वेति मन्त्रेण अभिषिञ्चामीति वाक्य-शेषः।

एवं दश स्नानानि विधाय धौते वाससी परिधाय द्विराचम्य त्रिभ्योऽधिकान् युग्मान् ब्राह्मणान् विष्णूद्देशेन भोजयेत्।

---

* ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः॥ १॥
समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥ २॥
सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥ ३॥ (१०म. १९०सू. १।२।३ऋक्।)

† ओं भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि।
धियो यो नः प्रचोदयात्॥ एवंरूपया। (३अ. ३५म. यजुः।)

‡ मन्त्रोऽयं २७ पृष्ठे प्रदर्शितः।

§ मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः।

¶ मन्त्रोऽयं ७२ पृष्ठे प्रदर्शितः।

|| घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्॥ (१७अ. ८८म. यजुः।)

** मन्त्रोऽयं ६१ पृष्ठे प्रदर्शितः।

स.नीयं वा दद्यात्। इदमेव प्रायश्चित्ताङ्गं विष्णुश्राद्धमभि-
ति।

ततो गवामङ्गेषु* इति मन्त्रेण आदिगोदानं प्रत्यक्षमौल्येन वा दद्यात्। तत आज्येन व्याहृतिभिरग्नौ पापघ्नविष्णूद्देशेन अष्टोत्तरशतमष्टाविंशतिं वा जुहुयात्।

ततः पञ्चगव्यं कार्य्यम्। सुवर्णादिपात्रे पद्मादिपात्रे वा ताम्रवर्णाया गोर्मूत्रं त्रिपलं गायत्र्या† प्रणवेन वा आदाय ततोऽङ्गुष्ठार्द्धपरिमितं श्वेताया गोर्गोमयं गन्धद्वारा‡मित्यादाय ततः कपिलायाः सप्तपलं दुग्धम् आप्यायस्वेति§ आदाय ततो नीलायाः सप्तपलमेव दधि दधिक्राव्ण¶ इत्यादाय ततः कृष्णायाः घृतमेकपलं घृतं मिमिक्ष‖ इत्यादाय तत एकपलं कुशोदकम् आपोहिष्ठेति आदाय प्रणवेनालोड्य प्रणवेनैव यज्ञियकाष्ठेन निर्मथ्य प्रणवेनाभिमन्त्र्य सप्तपत्रैर्हरितैः कुशैर्दशाहुतीर्जुहुयात्।

तत्र मन्त्रा यथा। इरावती धेनुमती स्वाहा। पृथिव्यै इदं नमः। इदं विष्णुः विष्णवे। मानस्तोके** रुद्राय। ब्रह्मज-

---

* गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
यस्मात्तस्माच्छिवं मे स्यादिहलोके परत्र च॥ (ऋग्वेदिब्राह्मकर्मणि।)

† १४६ पृष्ठे प्रदर्शितया।

‡ मन्त्रोऽयं २७ पृष्ठे प्रदर्शितः।

§ मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः।

¶ मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः।

‖ मन्त्रोऽयं १४६ पृष्ठे प्रदर्शितः।

** मन्त्रोऽयं १०० पृष्ठे प्रदर्शितः।

स्थानं* प्रश्नपे। अग्नये स्वाहा अग्नय इदम्। सोमाय स्वाहा सोमायेदम्। गायत्र्या सूर्य्यायेदम्। प्रणवेन प्रजापतये इदम्। ॐ भूर्भुवः स्वः स्वाहा। अग्नये स्विष्टकृते स्वाहा इत्यन्ते हुत्वा व्रतग्रहणं करिष्ये इति द्विजान् पृष्ट्वा तैः कुरुष्व इत्यनुज्ञातः प्रणवेन सर्व्वं पिबेत्। इति पञ्चगव्यविधिः।

एतच्च नद्यादितीरे ग्रामाद्बहिर्मैत्रदर्शने कार्य्यम्। गोमूत्रादिपरिमाणं यथाशक्ति स्वल्पं वा ग्राह्यम्।

एतत्कृत्वा गृहमागत्य विष्णुं स्मरन् मौनी निशामतिवाह्य प्रभाते प्रायश्चित्तं विधाय उत्तराङ्गाणि कुर्य्यात्। ततो व्याहृतिभिराज्यं पूर्व्ववत् हुत्वा पूर्व्ववत् पुनः प्रायश्चित्ताङ्गं विष्णुश्राद्धं कृत्वा अन्ते पूर्व्ववद्गोदानं चरेत्। ततो दश दानानि कुर्य्यात्।

तानि यथा।

गोभूतिलहिरण्याज्यं वासो धान्यं गुडानि च।

रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात्॥

तत्र गवामङ्गेष्विति† गोदानम्।

भूम्यान्तु।

सर्व्वभूताश्रया भूमिर्वराहेण समुद्धृता।

अनन्तशस्यफलदा अतः शान्तिं प्रयच्छ मे॥ इति।

तिलेषु।

---

* मन्त्रोऽयं १०८ पृष्ठे प्रदर्शितः।

† मन्त्रोऽयं १४० पृष्ठे प्रदर्शितः।

मधुर्वैर्गोमसम्भूताः कश्यपस्य तिलाः स्मृताः ।
तस्मादेषां प्रसादेन मम पापं व्यपोहतु ॥
हिरण्यगर्भगर्भस्थ*मिति हिरण्यस्य ।
आज्ये ।
कामधेनुषु सम्भूतं सर्व्वक्रतुषु संस्थितम् ।
देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ॥
वस्त्रे तु ।
शरणं सर्व्वलोकानां लज्जाया रक्षणं परम् ।
सुवेशधारि वस्त्र त्वमतः शान्तिं प्रयच्छ मे ॥
धान्ये ।
सर्व्वदेवमयं धान्यं सर्व्वोत्पत्तिकरं परम् ।
प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे ॥
गुड़े ।
यथा देवेषु विश्वात्मा प्रवरश्च जनार्द्दनः ।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः सर्व्वमन्त्राणां नारीणां पार्व्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसो मतः ।
मम तस्मात्परां लक्ष्मीं ददस्व गुड़ सर्व्वदा ॥  इति ।
रजते तु ।
प्रीतिर्यतः पितॄणाञ्च विष्णुशङ्करयोः सदा ।

---

*हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥  (ऋग्वेदिब्राह्मणपञ्चिः ।)

शिवनेत्रोद्भवं रूप्यमतः शान्तिं प्रयच्छ मे ॥

लवणे ।

यस्मादन्नरसाः सर्व्वे नोत्कृष्टा लवणं विना ।

शम्भोः प्रीतिकरं नित्यमतः शान्तिं प्रयच्छ मे ॥

इति दशभिर्मन्त्रैर्यथाक्रमं दश दानानि विधाय ।

वर्णमात्राच्युतं यच्च मन्त्रहीनं सुरेश्वर ।

तत्सर्व्वं पूर्णतां यातु प्रसादाद्भवतो मम ॥

इत्युक्त्वा विष्णुं स्मरेत् । एतानि दश दानानि सर्व्वेभ्य एव देयानि ।

ततो यन्मया कृतममुकप्रायश्चित्तं तदच्छिद्रमस्तु इति भवन्तो ब्रुवन्तु इति ब्राह्मणान् प्रार्थयेत् । ततो ब्राह्मणा अच्छिद्रमस्त्विति वदेयुः ।

यद्वा ।

व्रतच्छिद्रं जपच्छिद्रं यच्छिद्रं यज्ञकर्म्मणि ।

सर्व्वं भवतु तेऽच्छिद्रं यस्य चेच्छन्ति वै द्विजाः ॥ इति ब्रूयुः ।

ततः प्रणम्य करिष्यमाणे कर्म्मणि निर्विघ्नमस्तु इति प्रार्थ्य ब्राह्मणाशिषो गृह्णीयात् ।

नत्वा नारायणं शान्तं सच्चिदानन्दविग्रहम् ।

विष्णुश्राद्धे सुतफले प्रयोगं वच्मि सूक्तिभिः ॥

पूर्व्वोक्तविधिना प्रायश्चित्तं यथाशक्ति कृत्वा सञ्जातपापक्षयो मलमासशुक्रास्तादिवर्ज्जिते शुभे काले वैवाहिकमासेषु वा व्यतीपातादिदोषाभावे चन्द्रताराबलान्विते सति कस्याञ्चित्

कृष्णाष्टम्याम् उक्तविधिना रुद्रस्नानं विधाय कृष्णैकादश्यामुपवासी नद्यादौ मृद्भस्मगोमयवारिभिः स्वगृह्योक्तविधिना स्नात्वा देहशुद्धिं विधाय नित्यकर्म्म कृत्वा गृहं देवालयम् आरामं वा गत्वा तत्र पुष्पमण्डपादि कृत्वा भूमिसम्मार्ज्जनादि विधाय च निशि मण्डपाध उपविष्टः सभार्य्यः प्राङ्मुखः शुचिः शुक्लवासाः स्वासनः सपवित्रकर आचमनप्राणायामपूर्व्वकं सकुशाक्षतजलहस्तः सङ्कल्पं कुर्य्यात् ।

यथा । तिथ्यादिकं सङ्कीर्त्त्य ॐ अद्य ममानपत्यत्वमृतापत्यत्वनिदानदुरितक्षयद्वारा अस्याश्च भार्य्यायाश्चतुर्विधवन्ध्यात्वान्यतमनिदानदुरितक्षयद्वारा तथा पूर्व्वजानां महापातकोपपातककूटवादरतिप्राणिहिंसापारदार्य्यमिथ्याभिशापचौर्य्यकृतघ्नतानृतानाचारानग्निसंस्कारादिनानापापैः पुनःपुनर्गर्भवासगर्भपाताल्पायुष्ट्वादिनिदानदुरितक्षयद्वारा आकल्पाविच्छेदिदीर्घायुर्बहुपुत्रादिसन्तत्यत्यर्थं यथाशक्ति यथाज्ञानम् अनया भार्य्यया सह विष्णुश्राद्धमहं करिष्ये इति सङ्कल्प्य श्लोकमिमं पठेत् ।

आत्मनो बहुसहस्रदीर्घायुःपुत्रलब्धये ।
गर्भदोषापहृतये विष्णुश्राद्धं समारभे ॥ इति ।

ततो निर्विघ्नतासिद्धये गणपतिपूजनं गौर्य्यादिमातृकापूजनं पुण्याहवाचनं वृद्धिश्राद्धञ्च कार्य्यम् । कर्म्मविपाकोक्तदानादेरिव कर्म्मविपाकस्य निवृत्त्यर्थत्वादिति केचित् । अन्ये तु श्राद्धरूपत्वाद्गणपतिपूजनादिवृद्धिश्राद्धान्तं नेच्छन्ति । आद्यः पक्ष एव बहूनां सम्मतः आचारानुगतश्च ।

तत ओमद्य विष्णुश्राद्धे आचार्य्यवरणं करिष्ये इति सङ्कल्प्य सपत्नीकं सगुणं वैदिकं शास्त्रज्ञं धार्म्मिकं कुटुम्बिनं दरिद्रं कुष्मूतिग्रहनिवृत्तं सदाचारं प्रकृतकर्म्मवेदिनं ब्राह्मणं विष्णुश्राद्धे आचार्य्यकर्म्म कर्त्तुं त्वामहं प्रार्थये इति सविनयं प्रार्थयेत्। ततस्तेन अङ्गीकृते अमुकगोत्रः अमुकशर्म्मा अहम् अमुकगोत्रममुकशर्म्माणं भवन्तं विष्णुश्राद्धे आचार्य्यकर्म्म कर्त्तुम् एतेन फलताम्बूलादिना वृणे इत्याचार्य्यं फलादिना वृणुयात्।

तत आचार्य्यस्त्वं यथा स्वर्गे इति मन्त्रमुक्त्वा।

गर्भदोषैर्बालनाशैः पीड़ितोऽस्मि द्विजाधिप।

विष्णोः सम्पूजनं कृत्वा पूर्णान् कुरु मनोरथान्॥

इति तं प्राञ्जलिः प्रार्थयेत्। ततो यथाशक्ति पाद्यगन्धवस्त्रादिभिस्तं पूजयेत्।

आचार्य्यस्तु मण्डपादधस्तात्पञ्चवर्णै रजोभिः षोड़शारचक्रं सर्व्वतोभद्रमण्डलम् अष्टदलपद्मं स्वस्तिकं वा यथाशक्ति निर्म्माय सर्व्वतोभद्रे ब्रह्मादिमण्डलदेवताः* पूजयित्वा तन्मध्ये यथाशक्ति धान्यराशौ स्वर्णरूप्यताम्रमृन्मयान्यतमकलशमाकलशेषु* इति स्थापयित्वा तं तण्डुलैः पूरयित्वा चन्दनपुष्पमालादिभिरलङ्कृत्य च वस्त्रयुग्मेन वेष्टयेत्। तदुपरि धातुनिर्म्मितं वंशनिर्म्मितं वा पात्रं तदुपरि वस्त्रञ्च निदध्यात्।

तत्र चन्दनकुङ्कुमादिलिखिते अष्टदले निष्केण तदर्द्धेन तद-

* ऋगियं ७१ पृष्ठे प्रदर्शिता।

र्णेन वा शक्त्या वा* सुवर्णेन निर्म्मितं गरुड़ासनं विष्णुं स-लक्ष्मीकमभ्युत्तारणपूर्व्वकं स्थापयेत्। तस्य सव्यदक्षिणयोः पूर्व्ववद्धान्यराशिद्वये कलशद्वयं स्थापयित्वा पूर्व्ववत्तदुपरि दक्षिणे प्राग्वत् सुवर्णनिर्म्मितं रुद्रं वामतश्च तादृशमेव† ब्रह्माणं स्थापयेत्। तेषां पुरतस्तिलमाषयवव्रीहिकङ्गुश्यामाकमुद्गरूपाणि सप्त धान्यानि प्रत्येकं द्रोणमितानि निदध्यात् यथाशक्ति वा राशीन् कुर्य्यात्। देवत्रयस्य‡ समन्तादीशानादितः शुद्धभूमौ प्रतिमासु तण्डुलपुञ्जेषु वा क्रमेणैता देवताः संस्थाप्य पञ्चोपचारैः पूजयेत्।

यथा—पृथुः। ध्रुवः। भानुः। चन्द्रभानुः। प्रियव्रतः। नाभिः। स्कन्दः। बलिः। व्यासः। स्वयम्भुः। शौशनसः। क्रतुः। दक्षप्रजापतिः। भीष्मः। कपिलः। शबलः। अर्ज्जुनः। पुलस्त्यः। पुलहः। अगस्त्यः। वशिष्ठः। आथर्वणः। रुक्माङ्गदः। भरतः। धौम्यः। सुनन्दः। नन्दवर्द्धनः। प्रह्लादः। नारदः। वैण्यः। नन्दनः§। वायुनन्दनः। विष्वक्सेनः। जयः। भद्रः। सुग्रीवः। विभीषणः। ३७।

पूर्व्वादिषु इन्द्रादीन् लोकपालान् उत्तरतो दुर्गां क्षेत्रपालाधिपं गणपतिञ्चेति यथाक्रमं संस्थाप्य विष्णोः पुरतो गरुड़ं स्थाप-

---

* शक्त्या वा इत्यत्र शक्तिश्चेदिति ख-पुस्तके पाठः।

† तादृशं सुवर्णनिर्म्मितमित्यर्थः।

‡ देवत्रयस्य विष्णुरुद्रब्रह्मणामित्यर्थः।

§ वैण्यनन्दन इति ग-पुस्तके पाठः।

येत्। एवं स्थापितानां विष्णुादीनां स्वस्वाख्योक्तमन्त्रेण प्रतिष्ठां कुर्य्यात्।

अथ ध्यानम्।

नमस्कृत्य महाविष्णुं संस्मरेत्क्षीरसागरम्।
क्षीरसागरमध्यस्थं श्वेतद्वीपं विचिन्तयेत्॥
कोटियोजनविस्तीर्णं भानुकोटिसमप्रभम्।
तन्मध्ये तु महादिव्यं प्रासादं रत्ननिर्म्मितम्॥
प्रासादमध्ये चन्द्राभं सिंहासनमनुत्तमम्।
तस्योपरि महानागं शेषाख्यं मणिमण्डितम्॥
तदासने महाविष्णुं तत्फणव्यस्त*मस्तकम्।
वेदसूक्तैः स्तूयमानं नानारत्नविभूषितम्॥
घननीलतनुं देवमप्सरोगणसेवितम्।
तृणादिब्रह्मपर्य्यन्तविश्वगं विश्वसाक्षिणम्॥
चराचरगुरुं देवं घनश्यामं चतुर्भुजम्।
ब्रह्माद्यैरर्च्चितं विश्वं† सर्व्वाभरणभूषितम्॥
एवं ध्यायेन्महाविष्णुं गदाधारि-सशङ्खकम्।
वामभागे स्थितां देवीं नीलकुञ्चितमूर्द्धजाम्॥
हेमारविन्दप्रतिमां मौक्तिकाभरणोज्ज्वलाम्।
दाडिमं सव्यहस्तेन दधानाश्लिष्य सत्पतिम्।
श्रीविष्णुभिमुखां ध्यायेल्लक्ष्मीभीष्टफलप्रदाम्॥

---

* अथ स्तवन व्यापेति क-पुस्तके पाठः।

† विश्वं तदात्मकमित्यर्थः।

इदं ध्यानकृतं येन यथा भीष्मोऽभवन्नरः ।
यथा पृथात्मजो जिष्णुस्तथा पुत्रो भवेदिति ॥

अथ षोड़शोपचारपूजा ।

षोड़शर्च्चस्य पुरुषसूक्तस्य नारायण ऋषिः पुरुषो देवता अनुष्टुप् त्रिष्टुप् च छन्दसी षोड़शोपचारायां पूजायां विनियोगः ।

अथ न्यासः । सहस्रशीर्षेति* वामकरे न्यसेत् । पुरुष एवेदमिति† दक्षिणकरे । एतावानस्येति‡ वामपादे । त्रिपादूर्द्ध§ इति दक्षिणपादे । तस्माद्विराड़िति¶ वामजानौ । यत्पुरुषेणेति|| दक्षिणजानौ । तं यज्ञमिति** वामकट्याम् । तस्माद्यज्ञात् सर्व्वहुत†† इति दक्षिणकट्याम् । तस्माद्-

---

* मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः ।

† मन्त्रोऽयं ११५ पृष्ठे प्रदर्शितः ।

‡ मन्त्रोऽयं १४४ पृष्ठे प्रदर्शितः ।

§ त्रिपादूर्द्ध उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वं व्यक्रामत् साशनानशने अभि ॥ (३१अ. ४म. यजुः ।)

¶ तस्माद्विराड़जायत विराजो अधिपूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ (३१अ. ५म. यजुः )

|| यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ (३१अ. १४म. यजुः ।)

** तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ (३१अ. ९म. यजुः ।)

†† तस्माद्यज्ञात्सर्व्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ (३१अ. ७म. यजुः ।)

यज्ञात्सर्व्वहुत* इति नाभौ। तस्मादश्वा† इति हृदये। यत् पुरुषमिति‡ कण्ठे। ब्राह्मणोऽस्येति§ वामबाहौ। चन्द्रमा¶ इति दक्षिणबाहौ। नाभ्या‖ इत्यास्ये। सप्तास्येति** नेत्रयोः। यज्ञेनेति†† मूर्द्ध्नि।

अथ पञ्चाङ्गन्यासः। ब्राह्मणोऽस्येति हृदयाय नमः। चन्द्रमा मनस इति शिरसे स्वाहा। नाभ्या इति शिखायै वषट्। सप्तास्येति कवचाय हुम्। सहस्रशीर्षा इति नेत्रद्वयाय वौषट्। यज्ञेनेति अस्त्राय फट्।

---

* तस्माद्यज्ञात्सर्व्वहुतः सम्भृतं पृषदाज्यम्।
पशून् तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये॥ (३१अ. ६म. यजुः।)

† तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥ (३१अ. ८म. यजुः।)

‡ यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्य कौ बाहू का ऊरूपादा उच्येते॥ (३१अ. १०म. यजुः।)

§ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳪ शूद्रो अजायत॥ (३१अ. ११म. यजुः।)

¶ चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत।
मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥ (३१अ. १२म. यजुः।)

‖ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन्॥ (३१अ. १३म. यजुः।)

** सप्तास्यासन् परिधयस्त्रिःसप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्॥ (३१अ. १५म. यजुः।)

†† यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः॥ (३१अ.१६म. यजुः।)

आगच्छ भगवन् विष्णो स्थाने चात्र सुरैः सह ।
यावत्कर्म्म समाप्येत तावत्त्वं सन्निधौ भव* ॥

आवाहनं पुरुष एव ।

शेषमश्वं महादिव्यं फणामणिसहस्रकम् ।
कोटिसूर्य्यप्रतीकाशं गृहाणासनमीश्वर ॥

इत्यासनम् ।

एतावानस्य† ।

नमस्तेऽस्तु प्रजाराध्य नमस्ते विश्ववन्दित ।
पाद्यं गृहाण देवेश घननीलप्रभाकर ॥

इति पाद्यम् ।

त्रिपादूर्द्ध्वः‡ ।

रामकृष्णाय देवाय क्षीराब्धिशयनाय च ।
इदमर्घ्यं मया दत्तं ब्रह्माद्यैः सहिताय ते ॥

इति अर्घ्यम् ।

तस्माद्विराट्‡ ।

सुवर्णकलशेनैवाचमनं कुरु केशव ।
पद्महस्तधरो देव कृपालो जगदीश्वर ॥

इत्याचमनम् ।

अथ पञ्चामृतस्नानम् । आप्यायस्व गौतमः पयोगायत्री

---

* तावत्त्वत्सन्निहितो भव इति ग-पुस्तके पाठः ।

† मन्त्रोऽयं १४४ पृष्ठे प्रदर्शितः ।

‡ मन्त्रद्वयं १५५ पृष्ठे प्रदर्शितम् ।

क्षीरस्नाने विनियोगः। ॐ आप्यायस्वेति* चन्दनादिपञ्चोपचारैः सम्पूज्य ॐ भूर्भुवः स्वरिति† पूजामपसार्य्य दधिक्राव्णो वामदेवो दध्यनुष्टुप् दधिस्नाने विनियोगः। ॐ दधिक्राव्णः‡। इति पञ्चोपचारादि। घृतं मिमिक्षे गृत्समदो घृतं त्रिष्टुप् घृतस्नाने विनियोगः। ॐ घृतं मिमिक्षे§। एवं पञ्चोपचारादि। मधुवाता गौतमो मधुगायत्री मधुस्नाने विनियोगः। एवं पञ्चोपचाराः। स्वादुः पवस्व वेनः शर्कराजगती शर्करास्नाने विनियोगः। ॐ स्वादुः पवस्व¶। एवं पञ्चोपचाराः।

यत्पुरुषेणेति‖।

गङ्गा च यमुना चैव कृष्णा भीमरथी तथा।
एतासां पुण्यतोयेन स्नानं कुरु कृपार्णव॥

इति मन्त्रेण पुरुषसूक्तादिना च शुद्धोदकस्नानम्।

अथ आचमनं दत्त्वा।

तं यज्ञम्‖।

यज्ञोपवीतं परमं पवित्रं कर्म्म साधनम्।
गृहाण पुण्डरीकाक्ष भक्त्या तुभ्यं समर्पितम्॥

---

* मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः।
† मन्त्रोऽयं १४६ पृष्ठे प्रदर्शितः।
‡ मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः।
§ मन्त्रोऽयं १४६ पृष्ठे प्रदर्शितः।
¶ मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः।
‖ मन्त्रद्वयं १५५ पृष्ठे प्रदर्शितम्।

यज्ञोपवीतं परम*मिति यज्ञोपवीतम् ।

तस्माद्यज्ञात्† ।

पीतवासो जगन्नाथ पीताम्बरधराव्यय ।
गृहाण देवदेवेश रमया सहितोऽनघ ॥

इति वस्त्रम् ।

तस्माद्यज्ञात्‡ ।

मुद्रिकासमलङ्कारैरङ्गदैर्बाहुभूषणैः ।
सहितं चन्दनं कृष्ण स्मरतात गृहाण मे ॥

इति गन्धम् ।

... अलङ्काराश्चाक्षताश्च अर्पणीयाः शुभास्तव ।

तस्मादश्वाः‡ ।

चम्पकैर्वकुलैर्नागैः पुन्नागैः कनकैर्दलैः ।
शतपत्रैर्मल्लिकाभिः पूजयेज्जगदीश्वरम् ॥

इति माल्यम् ।

यत्पुरुषम्‡ ।

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः ।
आघ्रेयः सर्व्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

ब्राह्मणोऽस्य‡ ।

---

* यज्ञोपवीतं परमं पवित्रं बृहस्पतेर्यत् सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ (संस्कारतत्त्वे ।)

† मन्त्रोऽयं १५५ पृष्ठे प्रदर्शितः ।

‡ एते मन्त्राः १५६ पृष्ठे प्रदर्शिताः ।

कोटिभानुप्रतीकाशो विधुज्योतिः प्रकाशकः ।

अनेकरत्नसङ्काशो दीपोऽयं प्रतिगृह्यताम् ॥

इति दीपम् ।

चन्द्रमा मनसः* ।

शर्कराखण्डपक्वान्नं दधिक्षीरघृतानि च ।

षड्रसं भक्तिसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥

इति नैवेद्यम् ।

पुनराचमनं दत्त्वा नाभ्या आसीत्* ।

नारिकेलं सखर्जूरं द्राक्षाचूतफलादिकम् ।

कदल्यादिफलं तुभ्यं दत्तं श्रीपुरुषोत्तम ॥

इति फलानि ।

सप्तास्यासन्* ।

पूगीफलं महादिव्यं नागवल्लीदलैर्युतम् ।

कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

इति ताम्बूलम् । यज्ञेनेति* हिरण्यगर्भ† इति च दक्षिणाञ्च दत्त्वा श्रिये जातः‡ इति नीराजनङ्कृत्वा ।

कृष्णाय रामभद्राय जगन्नाथाय धन्विने ।

प्रणतक्लेशनाशाय गोविन्दाय नमो नमः ॥

---

* एते मन्त्राः १५६ पृष्ठे प्रदर्शिताः ।

† मन्त्रोऽयं १४८ पृष्ठे प्रदर्शितः ।

‡ श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो दधाति ।
श्रियं वसाना अमृतत्वमायन् भवन्ति सत्याः समिथा मितद्रौ ॥ (९म, ९४सू, ४ऋक् ।)

इति वेदमन्त्रेण पुष्पाञ्जलिं दत्त्वा ।

नारायणं सहस्राक्षं नरकार्णवतारणम् ।
वन्दे तं जगदात्मानं वासुदेवं सनातनम् ॥

इति साष्टाङ्गं कृतनमस्कारः ।

कृष्ण कृष्णेति कृष्णेति कृष्ण राम हरेऽच्युत ।
प्रदक्षिणकृतात् पुण्यात्तुष्टस्त्वं कृपया भव ॥

इति प्रदक्षिणं कृत्वा ।

गोप्रियव्यजनेनाथ चामरेणातपत्रतः ।
गान्धर्वगीतवाद्येन प्रीतो भव रमाप्रिय ॥

इति व्यजनादि कृत्वा च ।

कृष्णाय गोकुलेशाय वंशवृद्धिकराय च ।
यशोदानन्दभद्राय नमोऽस्तु गुणसिद्धये ॥
सुतान् देहि सुतान् देहि त्वं पूजाकृतपुण्यतः ।
वासुदेव जगन्नाथ कृपालो भक्तवत्सल ॥

इति प्रार्थनां कुर्य्यात् ।

ततो दक्षिणकलशोपरि रुद्रं त्र्यम्बकमन्त्रेण* पूजयेत् । सव्यकलशोपरि ब्रह्माणं ब्रह्मजज्ञानमिति† षोडशोपचारैः पूजयेत् । तत आमं मृण्मयं शरावं देवसन्निधौ कुशोपरि निदध्यात् ।

---

* ६२ पृष्ठे प्रदर्शितेन ।

† मन्त्रोऽयं १०८ पृष्ठे प्रदर्शितः ।

एवं देवं सपरिवारं सम्पूज्य ब्रह्मविष्णुरुद्रसूक्त*जपेन वामन-सूक्तोपनिषज्जपेन पुराणेतिहासश्रवणेन नृत्यगीतादिना च मुदितो देवस्य पुरतो रात्रिं जागरणेनातिवाहयेत् ।

तथा ।

पौरुषं† पावमानञ्च‡ न तमंह§ इतीति च¶ ।
सकृज्जप्त्वा सबाधो यं‖ मुच्यते ब्रह्महत्यया ॥

इतीति इति वा इति मे मन इत्यादि । शेषं पुरुषसूक्तादि ऋग्वेदप्रसिद्धम् ।

एवम्प्रजागर्य्य प्रातर्नद्यादौ यथाविधि स्नात्वा सप्त पञ्च त्रीन् वा शक्त्या विष्णुभक्तान् शुचीन् सपुत्रान् आत्मीयलक्षणसम्पन्नान

---

* विष्णुसूक्तं ५८ पृष्ठे प्रदर्शितम् ।

रुद्रसूक्तं यथा—इमा रुद्राय तवसे कपर्दिने क्षयद्वी(द्वी)राय प्रभरामहे मतीः ।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥

इत्यादिकं रुद्राध्याये द्रष्टव्यम् ।

† पौरुषं पुरुषसूक्तं पुरुष एवेदम् इत्यादिकं षोड़शर्चात्मकम् ।

‡ २७ पृष्ठे प्रदर्शितम् ।

यथा—पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् । (?) 

सूरो न विश्वदर्शतः ॥ इत्यादि पञ्चर्चात्मकम् । (९म. ६६सू. २१ऋक् ।)

§ न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः ॥ (१०म. १२६सू. १ऋक् ।)

¶ इति वा इति मे मनो गामश्वं सनुयामिति ।
कुवित् सोमस्यापामिति ॥ (१०म. ११९सू. १ऋक् ।)

‖ सबाधो यं जना इमेऽग्निं हव्येभिरीळते ।
जुह्वानासो यतस्रुचः ॥ (८म. ७४सू. ६ऋक् ।)

ब्राह्मणान् श्राद्धविधिना निमन्त्रयेत् । तद्यथा । कृतापसव्यो दक्षिणाभ्यो दक्षिणं जानु अर्चयित्वा* अमुकगोत्रं अमुकशर्म्माणं विष्णुश्राद्धे त्वामहं निमन्त्रये इति । एवं सर्व्वेषु ब्राह्मणेषु ।

ततश्च ।

निमन्त्रयामि भो विप्रा विष्णुश्राद्धक्षणाय वः ।
भस्मीकुरुत तान् दोषान् बाले गर्भे च ये स्थिताः ॥

इति पठित्वा साष्टाङ्गं प्रणमेत् ।

ततः कृतनित्यक्रियस्ताद्दशैर्द्विजैः सह पूर्व्वस्थापितान् विष्णुादीन् सविस्तरं पूजयेत् ।

ततस्तच्छरावं विष्णुग्रे कुशोपरि स्थापयित्वा तत्र सतिलदर्भैर्नानागोत्रान् पितॄन् आवाहयेदेतैर्मन्त्रैः ।

मन्त्रा यथा ।

कूटवादरता ये च ये च ब्राह्मणनिन्दकाः ।
ब्रह्मस्वहारिणः क्रूरा वाग्दत्तस्यापहारकाः ॥
परदाररता ये च सर्व्वधर्म्मबहिष्कृताः ।
मिथ्याभिशंसिनो ये च चौरकर्म्मणि ये रताः ॥
पुनः पुनर्मृतिं प्राप्य ये गर्भे सञ्चरन्ति हि ।
ते ... तुष्टिमायान्तु तृप्तिं तेषां करोम्यहम् ॥

...थ तान् गन्धपुष्पाक्षतधूपदीपादिभिरर्चयित्वा घृतप्लुतेनान्नेन ... च तदामशरावं प्रपूर्य्य तिलदर्भयुतं तोयं गृहीत्वा ...टवादरता ये च इत्यादीन् ये गर्भे सञ्चरन्ति हि ।

---

* अर्चयित्वा इत्यत्र चार्चयेति ग-पुस्तके पाठः ।

ते सर्व्वे तुष्टिमायान्तु तृप्तिं तेषां करोम्यहम्

इत्यन्तान् पूर्व्वोक्तान् मन्त्रान् पठित्वा पुनरिमं मन्त्रं पठेत् ।

येऽत्र पाशे स्थिता जीवाः पापिष्ठा दुःखभागिनः ।

अन्नं तेभ्यो मया दत्तमुपतिष्ठतु तृप्तये ॥

इत्युच्चार्य्य करस्थं तोयं पाशस्थान्नोपरि क्षिपेत् ।

ततो देवस्थापनदेशात् पश्चिमत आचार्य्यः स्वगृह्योक्तविधिना अग्निं प्रतिष्ठाप्य अन्वाधाय च प्रणीताप्रणयनान्तं कृत्वा तूष्णीं निरूप्य प्रोक्ष्य च चरुं श्रपयित्वा आज्यसंस्कारादि कृत्वा यजमानेन होमार्थं द्रव्यस्य स्वत्वत्यागे कृते इध्माधानाद्याज्यभागान्तं कुर्य्यात् ।

ततश्चरुणाश्वत्थसमिद्भिस्तिलाज्येन च प्रतिद्रव्यमिदं विष्णुरिति मन्त्रेण* अष्टोत्तरसहस्रम् अष्टोत्तरशतं वा विष्णवे जुहुयात् ।

ततो रुद्राय त्र्यम्बकमन्त्रेण† ब्रह्मणे ब्रह्मजज्ञानमिति मन्त्रेण‡ विष्णुतो न्यूनाभिरष्टोत्तरशतसंख्याभिरष्टाविंशतिसंख्याभिर्वा चर्व्वाद्याहुतीर्जुहुयात् । यमसक्तोक्तेभ्य आदित्यादिद्वात्रिंशद्देवेभ्यो विष्णुहोमात् पूर्व्वं यथाशक्ति केचिदत्र होममिच्छन्ति ।

तत इध्मसन्नहनहोमादि कृत्वा पूर्णाहुतिञ्च हुत्वा प्रणीतामोचणादि शेषं कर्म्म समापयेत् । आचार्य्यस्य एतावद्धोमकरणा-

* १०८ पृष्ठे प्रदर्शितेन ।

† ६२ पृष्ठे प्रदर्शितेन ।

‡ १०८ पृष्ठे प्रदर्शितेन ।

तो तत्राहाय्यार्थं* मन्येऽपि नियोक्तव्याः । ततो होमकर्त्तृभ्य आचार्य्यादिभ्यः श्रद्धया दक्षिणां दद्यात् ।

अथ शुचिराचान्तो यजमानः कुतपपूर्व्वाह्णकाले प्राणानायम्य ॐ अद्येत्यादि मम मृतापत्यत्वादिनिदानभूतदुरितक्षयद्वारा दीर्घायुःसगुणपुत्रादिसन्तत्यवाप्तये नानागोत्राणां नानाशर्म्मणां विष्णुश्राद्धाधिकारिणां विष्णुरूपाणां पितॄणामेकोद्दिष्टविधानेन विष्णुश्राद्धमहं करिष्ये इति सङ्कल्प्य सप्तभिः पञ्चभिस्त्रिभिर्वा ब्राह्मणैः श्रद्धया स्वगृह्योक्तविधानेन श्राद्धमाचरेद्यजमानः । एकोद्दिष्टविधानादेव अत्र स्थापनावाहनाग्नौकरणानि न सन्ति । तिलैरेव अपसव्येनैव कार्य्यम् । उदङ्मुखा एव विप्रा एकपवित्रका विप्रसंख्यया अर्घ्याः । पाद्यादौ नानागोत्रा- नानाशर्म्माणो विष्णुश्राद्धाधिकारिणो विष्णुरूपाः पितर इत्येवं सर्व्वत्र तत्तद्विभक्तिनिर्द्देशः कार्य्यः । आसनगन्धपुष्पधूपदीपा- च्छादनयुग्मभोजनभाजन-जलभाजनच्छत्रोपानद्युगव्यजनादीनि च श्रद्धया देयानि । अन्यदपि परितोषकरं हस्तमात्रादि सोत्- साहं देयम् ।

ततो घृतशर्करापायसतिलसंयुक्तेनान्नेन नानागोत्रान् पितॄ- नुद्दिश्य भोक्तृब्राह्मणसमसंख्यकान् पिण्डान् स्वगृह्योक्तविधिना भूमौ बर्हिषि विष्णुं स्मरन् दद्यात् ।

ततः पौराणमन्त्रैः पिण्डदानम् ।

---

* साहाय्यार्थमित्यत्र सहायार्थमिति क-ख-पुस्तकयोः पाठः ।

विद्युद्भिर्दंष्ट्रिभिश्चैव विषवारिदवाग्निभिः ।
शस्त्रास्त्रदण्डपाषाणैर्नखिभिः शृङ्गिभिर्ग्रहैः ॥
कुष्ठापस्मारभूतादि*जलोदरभगन्दरैः ।
गण्डमालापाण्डुरोगैः क्षयार्शोभिर्मृताश्च ये ॥
बन्दीग्रहे† मृता ये च चौरव्याघ्रादिभिर्हताः ।
चण्डालैर्निहता मार्गे अशौचाः शयने मृताः ॥
ब्रह्मस्वहारिणो ये च सुरापाः स्वर्णहारिणः ।
गुरुदाररता मूढाः परदाररताश्च ये ॥
भ्रूणब्रह्मवधोपेता ये के चात्महनो जनाः ।
तिर्य्यग्योनिषु ये जातास्तिर्य्यग्जास्त्वन्यजन्मनि ॥
तेषां पिण्डो मया दत्तः अक्षय्यमुपतिष्ठतु ॥ १ ॥
पितृवंशे मृता ये च मातृवंशे च ये मृताः ।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्ज्जिताः ।
क्रियालोपं गताश्चैव जात्यन्धाः पङ्गवस्तथा ॥
विरूपा आमगर्भाश्च ज्ञाताऽज्ञाताः कुले मम ।
मया दत्तेन पिण्डेन तृप्ता यान्तु च ते गतिम् ॥ २ ॥

आब्रह्मणो ये मम वंशजाता-
मातुस्तथा वंशभवा मदीयाः ।

---

* भूतादि इत्यत्र लूतादि इति क-पुस्तके पाठः ।

† ग्रहे इत्यत्र गृहे इति ख-पुस्तके पाठ. ।

वंशद्वये ये मम दासभूता-
भृत्यास्तथैवाश्रितसेवकाश्च ॥
मित्राणि सख्यः पशवश्च वृक्षाः
स्पृष्टाश्च दृष्टाश्च कृतोपकाराः।
जन्मान्तरं ये मम सङ्गताश्च
तेभ्यः स्वधापिण्डमहं ददामि ॥ ३ ॥
अजातदन्ता ये केचिद्ये च गर्भे प्रपीड़िताः।
तेषामुद्धरणार्थाय इदं पिण्डं ददाम्यहम् ॥ ४ ॥
बन्धुवर्गाश्च ये केचिन्नामगोत्रविवर्जिताः।
स्वगोत्रे परगोत्रे वा तेभ्यः पिण्डं ददाम्यहम् ॥ ५ ॥
उद्बन्धनमृता ये च विषशस्त्रहताश्च ये।
शृङ्गिभिर्दंष्ट्रिभिर्वापि तेभ्यः पिण्डं ददाम्यहम् ॥ ६ ॥
अग्निदाहे मृता ये च सिंहव्याघ्रहताश्च ये।
आत्मनो घातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ७ ॥
अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथापरे।
विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ८ ॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः।
तेषामुद्धरणार्थाय इदं पिण्डं ददाम्यहम् ॥ ९ ॥
असिपत्रवने घोरे कुम्भीपाके च ये गताः।
तेषामुद्धरणार्थाय इदं पिण्डं ददाम्यहम् ॥ १० ॥
अनेकयातनासंस्था मृताः प्रेतेषु ये गताः।
तेषामुद्धरणार्थाय इदं पिण्डं ददाम्यहम् ॥ ११ ॥

असंख्ययातनासंस्था ये नीता यमकिङ्करैः।
तेषामुद्धरणार्थाय इदं पिण्डं ददाम्यहम्॥ १२॥
पशुत्वाद्विर्गता ये च पक्षिकीटसरीसृपाः।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम्॥ १३॥
अन्यैर्दुर्मरणैर्ये च क्षुधया तृषया मृताः।
भूतप्रेतपिशाचाश्च तेभ्यः पिण्डं ददाम्यहम्॥ १४॥
दिव्यन्तरिक्षभूमिष्ठाः पितरो बान्धवादयः।
ते सर्व्वे तृप्तिमायान्तु पिण्डेनानेन सर्व्वदा॥ १५॥
जात्यन्तरसहस्राणि भ्रमन्ते* स्वेन कर्म्मणा।
मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम्॥ १६॥
ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम।
ते सर्व्वे तृप्तिमायान्तु पिण्डेनानेन सर्व्वदा॥ १७॥

केचित् आद्यानेव त्रीन् श्लोकानाहुः। एवं पिण्डान् दत्त्वा श्राद्धशेषं समापयेत् यथाशास्त्रम्। श्राद्धदक्षिणा च विशिष्टा देया। अन्नशेषं आत्मीयब्राह्मणेभ्यस्तदनुज्ञया अन्येभ्योऽपि वा प्रतिपादयेत्।

ततो यत्कृतं न्यूनातिरिक्तं विष्णुश्राद्धं तत्सम्पूर्णमस्तु इति ब्राह्मणानुक्त्वा अस्तु सम्पूर्णमिति तैरुक्ते श्राद्धसम्पूर्णतां वाचयित्वा क्लेशिता भवन्त इत्यादि वाक्यैः सानुनयं तान् विसर्जयेत्।

ततः श्राद्धभूमौ सम्मार्जनलेपने कृत्वा। ॐ अद्येत्यादि विष्णुश्राद्धाङ्गतया आचार्य्यपूजनमहं करिष्ये इति सङ्कल्प्य

* भ्रमन्ते इत्यत्र भ्रमन्ति इति क-पुस्तके पाठः।

उदङ्मुखः प्राङ्मुखमाचार्य्यं पाद्यार्घ्यगन्धपुष्पधूपदीपवस्त्रालङ्कारैः पूजयित्वा शिवा आपः सन्तु इत्यादिना तद्धस्ते जलादि दत्त्वा स्वर्णशृङ्गीं रौप्यखुरीं ताम्रपृष्ठीं रत्नपुच्छां कांस्यदोहां सवत्सां बहुदुग्धवतीं गन्धपुष्पादिना अर्च्चयित्वा देशकालौ स्मृत्वा अमुकगोत्राय अमुकवेदाध्यायिने अमुकशर्म्मणे आचार्य्याय विष्णुदैवत्यां यथाशक्त्युपस्कारसहितां सदक्षिणां विष्ण्वाज्ञाकृतया अमुकगोत्रोऽमुकशर्म्माहं सम्प्रददे न ममेति सजलकुशं दद्यात् पुच्छं ग्राहयेत्तेन ।

तत ॐ गावो मे अग्रत इत्यादिमन्त्रं* पठेत् । ॐ स्वस्तीत्युक्त्वा कामस्तुतिं† पठेदाचार्य्यः ।

ततो यजमानो गन्धाद्युपचारैर्विष्ण्वादीनां पूजां कृत्वा पुष्पाञ्जलिं दत्त्वा आयुरारोग्यशीलपुत्रादिसन्ततिर्ममास्तु इति प्रार्थ्य ॐ

---

* गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः । (ऋग्वेदिब्राह्मणकर्म्मणि ।)
गावो मे पार्श्वतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ (गरुडपुराणे ।)

† ओँ पुष्पधन्वन् नमस्तेऽस्तु नमस्ते मीनकेतन ।
मुनीनां धीरपात्राणां धैर्य्यच्युतिकृते नमः ॥
माधवात्मज कन्दर्प शम्बरारे रतिप्रिय ।
नमस्तुभ्यं जितात्रिभुवनाय मनोभुवे ॥
आधयो मम नश्यन्तु व्याधयश्च शरीरजाः ।
सम्पद्यतामभीष्टं मे सम्पदः सन्तु मे स्थिराः ॥
नमो माराय कामाय देवदेवस्य मूर्त्तये ।
ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय च ॥ इत्यादिरूपाम् । (कृत्यतत्त्वे ।)

यथेत्यादिदेशकालौ सङ्कीर्त्य सप्तधान्यकलशाद्युपस्कारसहिता विष्णुब्रह्मशिवप्रतिमा आचार्य्याय अहं प्रतिपादये इति प्रतिपाद्य कर्म्मसाङ्गतासिद्धये यथाशक्ति सुवर्णं सङ्कल्पपूर्व्वकं दक्षिणां दत्त्वा न ममेति वदेत्। विप्रोऽपि स्वस्तीत्यादि वदेत्।

ततः।

मन्त्रहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तम।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतो मम॥

इत्युक्त्वा भूमौ दण्डवदाचार्य्यं प्रणम्य तदीयाः सुपुत्राशिषो गृहीत्वा तं सविनयं विसर्जयेत्।

ततः पूर्व्वस्थापितं मन्त्रपूत*मामशरावं गृहीत्वा नद्यादितीर्थजलाशयं गत्वा नाभिमात्रे जले सभार्य्यः शरावहस्तः सन् मन्त्रानिमान् पठेत्।

ते च मन्त्रा यथा।

कूटवादरता ये च ये च ब्राह्मणनिन्दकाः।
ब्रह्मस्वहारिणः क्रूरा वाग्दत्तस्यापहारकाः॥
परदाररता ये च सर्व्वधर्म्मबहिष्कृताः।
मिथ्याभिशंसिनो ये च चौर्य्यकर्म्मणि ये रताः॥
पुनःपुनर्मृतिं प्राप्य ये गर्भे सञ्चरन्ति हि।
विष्णुश्राद्धप्रसादेन ते सर्व्वे तारिता मया॥
उत्तमान् यान्तु ते लोकान् पापं न्यस्यामहे जले।

इति पठित्वा नाभिमात्रजले तच्छरावं स्थापयित्वा शरावनाश-

---

* पूतमित्यत्र पूर्णमिति ख-ग-पुस्तकयोः पाठः।

पर्य्यन्तं जले स्थित्वा सचेलं स्नात्वा सपत्नीको धौताम्बरधर-स्तिलकादि धृत्वा स्वभवनमागच्छेत्।

ततो ब्राह्मणेभ्यो दीनेभ्योऽनाथेभ्यश्च यथोत्साहं भूरिदक्षिणा-दिकं दत्त्वा अन्नदानादिकं विधाय ब्राह्मणाशिषो गृहीत्वा च सुहृन्मित्रादिसहितः सपत्नीको भूत्वा तस्मिन् दिने ब्रह्मचर्य्यादि-युतो भवेत्। इति॥

एवमनुष्ठानस्य फलमाह।

एवं यः कुरुते लोके विष्णुश्राद्धं हि मानवः।
तस्य पुत्राः प्रजायन्ते सुशीलाश्च चिरायुषः॥
सुभगा धनसम्पन्ना धर्म्मिष्ठाः सत्यवादिनः। इति।

इति श्रीरामेश्वरभट्टसुतनारायणभट्टविरचिते विधान-पारिजाते विष्णुश्राद्धपद्धतिः समाप्ता।

जीवत्पितृकस्य विष्णुश्राद्धे अधिकारो नास्ति अष्टौ जीवतः पितुरित्यादिस्मरणात्। तस्मान्मृतपितृकस्यैव अत्र अधिकार-इति सिद्धम्।

### अथ अश्वत्थवृक्षपूजनम्।

तस्य प्रयोगो यथा विधानमालायाम्।

यस्य स्त्री स्त्रीप्रसूर्नित्यं मृतापत्याथवा भवेत्।
तेनाश्व पिप्पलः पूज्यो यथाविधि फलेप्सुना॥
भृगुवारे प्रदोषे च सायंविधिमुपास्य च।

सभार्य्यः पिप्पलं गत्वा प्रार्थयेत समाहितः ॥

तन्मन्त्रो यथा ।

बोधिद्रुम* महावृक्ष महापापनिषूदन† ।
नारायणस्वरूपस्त्वं क्षमां कुरु जगत्पते ॥
इति सम्प्रार्थ्य तं वृक्षं कृत्वा चैकं प्रदक्षिणम् ।
आलवाले जलं क्षिप्त्वा ततः स्वगृहमाव्रजेत् ॥
ब्रह्मचारी स्वपेद्रात्रौ सुप्त्वा भुवि हरिं स्मरेत् ।
निधाय तुलसीदाम कण्ठे मुद्रितलोचनः ॥
ततः प्रातः समुत्थाय स्नात्वा गङ्गाजले तिलैः ।
गच्छेतां दम्पती ब्रह्मन् पिप्पलान्तिकमादरात् ॥
विष्णोर्नामसहस्रञ्च‡ जपेत्तत्र समाहितः ।
कुर्य्यात्सम्मार्जनं तत्र ह्यासमन्तात्तरोरधः ॥
विकीर्य्य तत्र पुष्पाणि चन्दनञ्च विशेषतः ।
कुङ्कुमं केशरञ्चैव पिप्पलाङ्गे विलेपयेत् ।
आलवाले क्षिपेद्वारि क्षीरं दधि घृतं मधु ॥

अत्रावसरे आचार्य्यादीनां वरणं कार्य्यम् ।

---

* बोधिद्रुम इत्यत्र पौष्ट द्रुम इति क-ख-पुस्तकयोः पाठः, स चासङ्गतत्वादुपेक्षितः, बोधिद्रुमचलदल इत्यश्वत्थपर्य्याये अमरोक्तेः ।

† निषूदन इत्यत्र निवारकेति ख-पुस्तके पाठः ।

‡ विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥

इत्यादिकमग्रवेदिप्रकरणेऽपि १९५ पृष्ठे द्रष्टव्यम् ।

ततस्तु स्थण्डिलं कृत्वा भावकाशं शुचिव्रतः ।
आरभेद्धवनं सम्यक् स्वस्तिवाचनपूर्व्वकम् ।
तद्विष्णोरिति मन्त्रेण* पायसं जुहुयात् सुधीः ॥
अयुतं वा सहस्रं वा यथाविभवसारतः ।
मातुलुङ्गैः† ततः कुर्य्याद्धवनं शतसंख्यया ॥
उद्देशो विष्णुदैवत्यो द्रव्याणां हवने स्मृतः ।
धात्रीफलैस्तथा द्राक्षाफलैः खर्ज्जूरकैस्तथा ॥
इक्षुदण्डैश्च कदलैः शतसंख्यैः पृथक् पृथक् ।
जाते तु हवने तस्मिन् सूत्रैरावेष्टयेत्तरुम् ॥
गन्धपुष्पाक्षतैः सम्यग्दत्त्वाङ्गं तत्समर्च्चयेत् ।
दशाङ्गैर्धूपयेद्धूपैर्दीपैर्नीराजयेत् सुधीः ॥
नैवेद्यैर्विविधैर्भक्ष्या ताम्बूलेन च तोषयेत् ।
ततो नीराजनं कृत्वा प्रार्थयेतां समाहितौ ॥
बोधिद्रुम महाहव महापापनिषूदन ।
पुत्रान् देहि जगन्नाथ कुरु मां जीवसन्ततिम् ॥
इति प्रार्थ्य च नत्वा च आचार्य्यं पूजयेत्ततः ।
वस्त्रयुग्मञ्च धेनुञ्च दद्यादाचार्य्यतुष्टये ॥

अथ आचार्य्यप्रार्थनामन्त्रः ।

---

* तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ (६अ. ५म. यजुः ।)

† मातुलुङ्गो बीजपूर इत्यमरभरतौ ।

आचार्य्यस्त्वं महाविष्णुराचार्य्याणीयमम्बिका।
दत्तं मे सन्ततिं श्रेष्ठां प्रसन्नेनैव चेतसा॥

ततो युवं वस्त्राणि इति वस्त्रम्। गवामङ्गेषु* इति गाम्।
हिरण्यरूपः स† इति हिरण्यमपि देयम्‡।

पर्य्यङ्कादि ततो धान्यं दत्त्वा भूरि च दक्षिणाम्।
ततः स्वगृहमागत्य ब्राह्मणान् भोजयेत् सुधीः॥
चतुर्व्विंशतिसंख्याका विष्णुमूर्त्तीरनुस्मरन्।
प्रथमं केशवं विद्याद्द्वितीयं मधुसूदनम्॥
सङ्कर्षणं तृतीयञ्च दामोदरमतः परम्।
वामनं पञ्चमं विद्यात् षष्ठं प्रद्युम्नसंज्ञकम्॥
सप्तमं विष्णुनामानं माधवञ्चाष्टमं तथा§।
नवमञ्चानिरुद्धाख्यं दशमं पुरुषोत्तमम्॥
एकादशमधोक्षजं द्वादशञ्च जनार्द्दनम्।
त्रयोदशञ्च गोविन्दं त्रिविक्रममतः परम्॥
श्रीधरं पञ्चदशमं हृषीकेशञ्च षोडशम्।
सप्तदशं नृसिंहञ्च वासुदेवमतः परम्॥

---

* गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्द्दश।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च॥ (ऋग्वेदिब्रह्मकर्म्मणि।)

† मन्त्रोऽयं १०८ पृष्ठे प्रदर्शितः।

‡ देयमित्यत्र दापयेदिति ग-पुस्तके पाठः। स एव युक्तः, अन्यथा गामित्यत्र द्वितीयानुपपत्तिः।

§ तथा इत्यत्र विदुरिति ख-ग-पुस्तकयोः पाठः।

अतः परं पद्मनाभं विष्णुं विंशतिमं तथा ।
एकविंशतिमं विद्यादुपेन्द्रं जगतः प्रभुम् ॥
हरिं द्वाविंशतिमितं द्वौ तथा*च्युतकृष्णकौ ।
भुक्तवन्तस्ततस्ते तु सन्तुष्टा दद्युराशिषः ॥
एवं कृते विधानेऽस्मिन् श्रेष्ठे पिप्पलपूजने ।
जायते पुत्रसन्तानमक्षयं गुणवत्तमम् ॥

इति विधानमालायां स्कान्दपुराणोक्तमश्वत्थपूजनं समाप्तम् ।

पुत्रकामानामावश्यकोऽयं विधिः ।

विध्यन्तरञ्च हेमाद्रौ शान्तिकाण्डे ।

नारद उवाच ।

अथवान्यत्प्रवक्ष्यामि गर्भोत्पत्तौ च कारणम् ।
सिद्धिक्षेत्रे महाद्रौ वा नदीनां सङ्गमेषु वा ॥
ब्राह्मणान् भोजयेच्छिष्टान् सपत्नीकान् बहूनपि ।
अयने विषुवे चैव चन्द्रसूर्य्यग्रहेऽथवा ॥
पूर्व्वेद्युरुपवासः स्याद्भोजयित्वा तथा द्विजान् ।
प्रभाते स्नापयेत्पत्नीं विधिनानेन साधकः ॥
आलिख्य मण्डलं तत्र गणाध्यक्षं समर्च्चयेत् ।
गं गणपतये नमः ।
वटुश्च वामनश्चैव महाकायो महोदरः ।
भद्रो मणिरवो नाम इत्येते तत्र धारकाः† ॥

---

* तथा च्युतो विंशचतुर्व्विंशाविति भावः ।

† इत्यन्ते भवधारका इति ग-पुस्तके पाठः ।

तिरन्ती व्याहृति:* कामा वाञ्छा विघ्ना वरप्रदा।
रत्नाभा कीर्त्तिरित्यष्टौ गणनाथस्य शक्तय: ॥
शृङ्गञ्च पञ्चकञ्चैव परशुं लड्डुकन्तथा।
दधतं पूजयेद्भक्त्या तुष्टिवक्त्रं† विनायकम् ॥
गायत्रीमस्य वक्ष्यामि यया पूज्यो विनायक:।
विनायकाय विद्महे वक्रतुण्डाय धीमहि।
तन्नो दन्ती प्रचोदयात् ॥
मण्डलं सर्व्वतोभद्रं वाहनञ्चाखुरुच्यते।
कलसानष्ट संस्थाप्य मध्येकुम्भं तत: शुभम् ॥
सूत्रेणावेष्टयेत्सर्व्वान् यवान्तरतिलान्तरम्।
गणेशेशानदिग्भागे कलशस्थापनं भवेत् ॥
मध्यकुम्भे न्यसेत्तावन्नववस्त्रान्नवौषधी:।
पूरयेत्तीर्थतोयेन:‡ विघ्नबीजेन दैशिक: ॥
गं गणपतये नम इति विघ्नेशबीजम्।
तस्मिन् कुम्भे न्यसेत्सप्त मृत्तिका यमभागत:§।
अथ अष्टकलशेषु देयाणि द्रव्याण्याह।
आग्नेये गन्धपुष्पाणि याम्ये कृष्णतिला: स्मृता:।
नैर्ऋत्ये छागदुग्धञ्च वारुणे पञ्चगव्यकम् ॥

---

* तिरन्त्यव्याहृती इति क-पुस्तके पाठ:।

† तुष्टिवक्रमिति क-पुस्तके पाठ:।

‡ तीर्थतोयस्तु इति क-पुस्तके पाठ:।

§ समभागत इति ख-पुस्तके पाठ:।

पञ्चामृतन्तु वायव्ये सौम्ये चैवाचर्यं मधु ।
ऐशान्ये यावकं शक्तुमेवमेतैस्तु पूरयेत्* ॥
ब्रह्माण्याद्यष्टकुम्भेषु वीरभद्रान्तमेव हि ।
स्वमन्त्रैरेव विन्यस्य पूजयेन्मातृचक्रकम् ॥
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।
वाराहीन्द्री च चामुण्डा वीरभद्रस्तथाष्टमः ॥
मध्ये गणेशमभ्यर्च्य सर्व्वानुपचरेत्तथा ।
यद्देवभेदिता या यास्तत्तद्वर्णायुधाश्रिताः ॥

अथ तन्मन्त्रोद्धारः ।

ॐ हूं ब्रह्माणि ब्रह्मदेवते हूं फट् स्वाहा । ॐ माहेश्वरि महेश्वरदेवते सर्व्वभूतवशङ्करि ह्रां ह्रीं ह्रूं स्वाहा । ॐ कौमारि कुमारदेवते सर्व्वशत्रुविनाशनि ॐ क्रां क्रीं क्रूं स्वाहा । ॐ वैष्णवि नारायणदेवते महामायानिषूदनि ॐ ह्रां ह्रीं ह्रूं स्वाहा । ॐ रुद्राणि रुद्रदेवते ॐ द्रां द्रीं द्रूं स्वाहा । ॐ वाराहि वराहदेवते ॐ भ्रां भ्रीं भ्रूं स्वाहा । ॐ इन्द्राणि इन्द्रदेवते दैत्यविनाशनि ॐ ह्रां ह्रीं ह्रूं स्वाहा । ॐ वीरभद्र महावीर मातृकागणप्रिय चां चीं चूं स्वाहा । इति मन्त्रोद्धारः ।

पालाशानि तु पत्राणि निश्छिद्राणि समानि वै ।
अष्टोत्तरसहस्राणि समादायाधिवासयेत् ॥
चतुर्भिर्ब्राह्मणैः शान्तैर्ऋग्यजुःसामाथर्व्वभिः ।
प्रतिप्रणवसंयुक्तगायत्र्या जपयेच्छुभैः ॥

* पूरयेदिति क-पुस्तके पाठः ।

नालमादाय सम्प्रोक्ष्य पश्चात्पद्मं परित्यजेत् ।
पूर्णेषु सर्व्वपर्वेषु ब्राह्मणेभ्यश्च दक्षिणाः ॥
ऋत्विजां प्रीतिसिद्ध्यर्थं दद्याच्छक्त्या स धामवान् ।
सपत्नीं स्नपयेदित्थमन्तर्वत्नीन्तु केवलाम् ॥
अथ तीर्थात्समुत्तीर्य्य परिधायान्यवाससी ।
सपत्नीकः स्नापयेत्तु मातृचक्रस्थितैः क्रमात् ॥
ब्राह्मण्याद्यैर्वरस्त्रीभिर्मध्यकुम्भे तु दैशिकः ।
स्तुतिमङ्गलनिर्घोषैर्वीणावेणुरवाहतम् ॥
स्नापयेन्मूलमन्त्रेण गणेशस्य प्रसन्नवान्* ।
विनायकं पुनः पूज्य मण्डलस्थं विसर्ज्जयेत् ॥
ततःप्रभृति देवेन्द्रं गणनाथं प्रपूजयेत् ।
आचार्य्यं पूजयेत्पश्चाद्वस्त्रैरन्यैश्च वाञ्छितैः ॥
एवं यो विधिना यागं कारयेत्प्रयतोऽशठः ।
पुत्रान् वित्तं तथारोग्यमायुः पूर्णमथाप्नुयात् ।
दौर्भाग्यं व्याधिमाधिञ्च गर्भनाशं न पश्यति ॥

इति तत्त्वसागरसंहितोक्तं गणाध्यक्षस्नपनम् ।

अथ काम्यानि नानाविधानि स्नानानि ।

यथा विष्णुधर्म्मोत्तरे पुष्कर आह ।

स्नानान्यन्यानि ते वच्मि निबोध गदतो मम ।
रक्षोघ्नानि यशस्यानि मङ्गल्यानि विशेषतः ॥

---

* प्रसन्नवानित्यत्र प्रसादवानिति पाठो युक्तः ।

स्नानं घृतेन कथितमायुषो वर्द्धनं परम्।
स्नानं गोशकृता स्नानं परं लक्ष्मीविवर्द्धनम्॥
गोमूत्रेण तथा स्नानं सर्व्वाघविनिषूदनम्।
स्नानं क्षीरेण कथितं बलबुद्धिविवर्द्धनम्॥
स्नानञ्च कथितं दध्ना महालक्ष्मीविवर्द्धनम्।
तथा दर्भोदकस्नानं सर्व्वपापनिवर्हणम्॥
पञ्चगव्यजलस्नानं सर्व्वकामार्थसाधनम्।
गवां शृङ्गोदकस्नानं सर्व्वाघविनिवर्त्तनम्॥
पलाशबिल्वकमलकुशस्नानं पुरो स्थितम्।
वचा हरिद्रा मञ्जिष्ठा जरारः[*]चारके[†] तथा॥
स्नानमेतद्विनिर्द्दिष्टं रक्षोघ्नं पापनाशनम्।
वचा हरिद्रे द्वे युक्ते स्नानं रक्षोहणं परम्॥
आयुष्यञ्च यशस्यञ्च धन्यं मेधाविवर्द्धनम्।
स्नानं पवित्रं मङ्गल्यं तथा काञ्चनवारिणा॥
क्रमादूनतरं किञ्चिद्रौप्यताम्रोदकैस्ततः।
तथा रत्नोदकस्नानं सङ्ग्रामे विजयावहम्॥
त्रिकुण्ठं मध्यतः कृत्वा प्रवालैः परिपूरयेत्।
तेन पात्रेण यत्स्नानं सर्व्वकामप्रदं हि तत्॥

---

* जरारादयः शब्दाः कोषेषु बहुरुतया दुर्बोधार्थाः। तरारचारके तथा इति ख-पुस्तके पाठः।

† चारकं नीलोत्पलमूलमिति भरतः।

तथा पुष्पोदकस्नानं भवेदारोग्यदायकम् ।
तथैवामलकस्नानमलक्ष्मीनाशनं परम् ॥
तिलसिद्धार्थकैः स्नानममङ्गलप्रणाशनम् ।
केवलैर्वा तिलैः स्नानमथवा गौरसर्षपैः ॥
स्नानं प्रियङ्गुणा प्रोक्तं तथा सौभाग्यवर्द्धनम् ।
बन्ध्याककर्कोटकीमूल-कुमारीपत्रवारिणा ।
स्नानं रोगविनाशाय स्मृतं प्रत्येकशो द्विज ॥
मांसीसुरारोचननागपुष्पैः
सनागदानैररिनाशकारि ।
तद्धप्क*कक्कोलकजातिपूगैः
फलैः समस्तैश्च सुतप्रदं स्यात् ॥
इति नानास्नानानि ।

अद्भुतसागरेऽपि स्कान्दे पिप्पलादिरुवाच ।
भगवन् सर्व्वधर्मज्ञ सर्व्वशास्त्रविशारद ।
स्त्रीणां पुत्रविहीनानां नारीणां विहिता यदि ॥
केनोपायेन मे ब्रूहि पुत्रसिद्धिः कथं भवेत् ।
कृपया परया देव तद्व्रतं ब्रूहि नः प्रभो ॥
अथर्व्वा उवाच ।
पुरा ब्रह्मादयो देवाः सर्व्वे विष्णुं समाश्रिताः ।
प्रपप्रच्छुर्देवदेवेशं राक्षसैः पीडिता वयम् ।
कथं दुःखोपशमनमस्माकं ब्रूहि तत्प्रभो ॥

---

* तद्धर्णकत्र तुरुष्केति एकादशीतत्त्वे पाठः ।

श्रीविष्णुरुवाच ।

अहमश्वत्थरूपेण सम्भवामि च भूतले ।
तस्मात्सर्व्वप्रयत्नेन कुरुध्वं तत्सेवनम् ॥
तेन सर्व्वाणि भद्राणि भविष्यन्ति न संशयः ।
विष्णुर्यदुक्तवांस्तेभ्यस्तद्वृत्तं* ते वदाम्यहम् ॥
न दानैर्न तपोभिश्च नाध्वरैर्भूरिदक्षिणैः ।
अश्वत्थसेवनादन्यत्कलौ नास्ति प्रतिक्रिया ॥
तद्विधानं निमित्तानि संख्याद्यमिह पूजनम् ।
हवनं तर्पणं विप्रभोजनं नियमं तथा ॥
व्रताधिकारिणस्तस्य नतिं दानं विशेषतः ।
एतत्सर्व्वं पिप्पलादेस्तव वक्ष्यामि सुव्रत ॥
दारुणैर्विविधोत्पातैर्दिव्यभौमान्तरिक्षजैः ।
परचक्रभये देशे विप्लवे शत्रुविग्रहे ॥
दुःस्वप्ने दुर्न्निमित्ते च सङ्ग्रामेऽद्भुतदर्शने ।
मारीभये राजभये तथा चौराग्निजे भये ॥
क्षयापस्मारकुष्ठादिप्रमेहे विविधज्वरे ।
उदरे मूत्रकृच्छ्रे च यक्ष्मणि तथैव च ॥
अन्येष्वनुक्तरोगेषु व्रणरोगे तथैव च ।
एतेषां रोगनाशाय† कुर्य्यादश्वत्थसेवनम् ॥

---

* तद्वृत्तमित्यत्र तदुक्तमिति ग-पुस्तके पाठः ।

† उक्तरोगविनाशाय इति ख-पुस्तके पाठः ।

प्रातरुत्थाय नद्यादौ स्नात्वाचम्य कृतक्रियः ।
अश्वत्थदेशमाश्रित्य गोमयेनोपलेपयेत् ॥
तमश्वत्थमलङ्कृत्य सुधायां गैरिकेण च ।
पूजाद्रव्याणि सम्पाद्य पुण्याहं वाचयेत्ततः ॥
ऋत्विजां वरणं कृत्वा ततः पूजां समाचरेत् ।
आराधयेद्यथा विष्णुं ध्यानावाहनपूर्व्वकम् ॥
तथैव पिप्पलतरुं नारायणमयं द्विजः ।
श्वेतगन्धाक्षतैः पुष्पैर्धूपदीपनिवेदनैः ॥
अर्च्चेत्पुरुषसूक्तेन* तथैव ध्यानपूर्व्वकम् ।
तेनैवावाहनं कुर्य्यात्तर्पणञ्च नमस्क्रियाम् ॥
श्वेतवर्णं सलक्ष्मीकं चिन्तयेत्पुरुषोत्तमम् ।
इति ध्यात्वावाहनादि उपचारैश्च षोड़शैः ॥

पूजयेदिति शेषः ।

ततः प्रदक्षिणं कुर्य्यादश्वत्थस्य शनैः शनैः ।
यदि शीघ्रेण कुर्य्यात्तु तत्सर्व्वं निष्फलं भवेत् ॥
लक्षमेकं द्विलक्षं वा त्रिचतुःपञ्चलक्षकम् ।
कार्य्यस्य गौरवं ज्ञात्वा† द्वादशान्तं समाचरेत् ॥
ब्रह्मचारी हविष्याशी त्वधःशायी जितेन्द्रियः ।
मौनी ध्यानपरो भूत्वा पिप्पलस्य स्तुतिं पठेत् ॥

---

* १७४ पृष्ठे प्रदर्शितेन पुरुष एवेदमित्यादिना ।

† ज्ञात्वेत्यत्र ज्ञेयमिति ख-पुस्तके पाठः ।

विष्णोर्नामसहस्रञ्च* पौरुषं† वैष्णव‡स्तथा ।
वेदत्रयस्य पुण्यानि सूक्तानि च पठेत्पुनः ॥
तस्य लक्षदशांशेन सघृतं पायसं चरुम् ।
जुहुयात्पञ्च वह्नौ च स्वगृह्योक्तविधानतः ॥
तत्संख्यया तर्पणञ्च कुर्य्याच्छुद्धेन वारिणा ।
उक्तषोडशभिर्ऋग्भिः कुर्य्यात्प्रतिदिनं नतिम् ॥
हवनस्य दशांशेन मिष्टान्नं भोजयेद्द्विजान् ।
ब्राह्मणानां स्वयं कुर्य्याद्यथोक्तनियमं तथा ॥
असमर्थश्च तत्कर्म्म सर्व्वमन्येन कारयेत् ।
क्षत्त्रियादित्रिवर्णानां ततो न्यूनं न कारयेत् ॥
उक्तप्रमाणादधिकं फलं दशगुणं भवेत् ।
ततश्चतुर्गुणं पीठं राजतं चतुरस्रकम् ॥
द्रोणमर्द्धं तदर्द्धं वा तिलानुपरि निक्षिपेत् ।
श्वेतवस्त्रेण सञ्छाद्य पूर्व्ववत्पूजयेत्तकम् ॥
दरिद्राय सुशीलाय श्रोत्रियाय कुटुम्बिने ।
उदङ्मुखाय विप्राय स्वयं पूर्व्वमुखः स्थितः ॥
सुवर्णवृक्षराजञ्च यत्नेन प्रतिपादयेत् ।
इह जन्मनि चान्यस्मिन् बाल्यकौमारवार्द्धके ॥
मनोवाक्कायजं दोषं त्वं प्रणाशय पिप्पल ।

---

* १७२ पृष्ठे किञ्चित्प्रदर्शितम् ।

† पौरुषं पुरुषसूक्तं, तच्च १७४ पृष्ठे प्रदर्शितम् ।

‡ वैष्णवं विष्णुसूक्तं, ५५ पृष्ठे प्रदर्शितम् ।

पिप्पली वृत्तराजेन्द्रो ह्यग्निगर्भस्त्वमेव हि ॥

*प्रभुर्वनस्पतीनाञ्च पूर्व्वंजन्मनि यत्कृतम् ।*

*अघौघं नाशय क्षिप्रं तव रूपप्रदानतः ॥*

अथ दानमन्त्रः ।

अमुं तरुं गृहाण त्वं विष्णुरूप द्विजोत्तम ।

स्त्रीकृत्य दुष्कृतं घोरं क्षिप्रं नाशय मे प्रभो ॥

ब्रह्मादीतरवर्णानामयमेव विधिः स्मृतः ।

शूद्रायां नाधिकारोऽस्ति स्त्रीणां विप्रेण कारयेत् ॥

एवङ्कृत्वा व्रतं सम्यग्व्रतस्य परिपूर्त्तये ।

हैमाश्वत्थतरुं दद्याच्छुक्लाञ्चाश्च पयस्विनीम्

स्वर्णशृङ्गीं रौप्यखुरां वस्त्रादिभिरलङ्कृताम् ।

पलमेकं तदर्द्धं वा तदर्द्धार्द्धेन वा पुनः ॥

हैमाश्वत्थतरुं कुर्य्यात् स्कन्धशाखासमन्वितम् ।

उत्तमः प्रथमः कल्पो द्वितीयो मध्यमस्तथा ॥

तृतीयस्त्वधमः प्रोक्तो दरिद्राणां न चान्यथा ।

एवं व्रतं यः कुरुते तस्य पुण्यफलं शृणु ॥

पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।

कन्यार्थी लभते कन्यां बद्धो मुच्येत बन्धनात् ॥

क्षयापस्मारकुष्ठादि-सर्व्वरोगैः प्रमुच्यते ।

डाकिनीशाकिनीभूतप्रेतराक्षसपीड़िताः ॥

इमं विधिमनुष्ठाय भवन्ति सुखिनो नराः ।

न तेषां शत्रुपीड़ा च न च राजभयन्तथा ॥

इह जन्मनि चान्यस्मिन् कृतैः पापैः प्रमुच्यते।
यं यं कामयते कामं तन्तमाप्नोत्यसंशयम्॥
इहैव भोगान् भुक्त्वान्ते विष्णोः सायुज्यमाप्नुयात्।

इति मन्त्रमहार्णवे शान्तिप्रकरणे अथर्वोक्ताश्वत्थसेवाप्रकारः।

अथ अश्वत्थस्य ध्यानस्तोत्रादिकम्।

अथ ध्यानं प्रवक्ष्यामि सर्व्वाभीष्टफलप्रदम्।
पुत्रकामस्य देवस्य अश्वत्थस्य सुशोभनम्॥
समुद्रपीतगगनं वरदाभयपाणिकम्*।
ध्यायेत्सौम्याननं विष्णुं सर्व्वकामार्थसिद्धये॥
अष्टबाहुसमायुक्तं सलक्ष्मीकञ्च सुव्रतम्।
योगीश्वराय योगाय तस्मै श्रीविष्णवे नमः॥
अकारमूलरूपाय उकारस्कन्धशालिने।
मकारफलपुष्पाय वृक्षराजाय ते नमः॥

ॐ अस्य श्रीअश्वत्थस्तोत्रमहामन्त्रस्य परब्रह्म ऋषिरनुष्टुप् छन्दः अश्वत्थनारायणो देवता ह्रां बीजं ह्रीं शक्तिः हूं कीलकं अश्वत्थनारायणप्रसादसिद्ध्यर्थे जपे विनियोगः।

ब्रह्मोवाच।

आग्नेयाभिमुखं देवं सुव्रतः कामरूपिणम्।
दृष्ट्वाभ्यार्थसिद्ध्यर्थं पुत्रपौत्रविवर्द्धनम्॥
श्वेतवर्णं सलक्ष्मीकं भुजाष्टकविभूषितम्।
शङ्खचक्रधरं देवं पीतवाससमच्युतम्॥

---

* पाणिनम्रितमिति क-पुस्तके पाठः।

अभयं वरदं शान्तं खड्गखेटकधारिणम् ।
धनुर्बाणसमायुक्तं चिन्तयेत्पुरुषोत्तमम् ॥
एवं ध्यात्वा हरिं नित्यं परब्रह्मस्वरूपिणम् ।
सर्व्वकामप्रदाश्वत्थं ततः कृत्वा प्रदक्षिणम् ॥
देवाचार्य्य नमस्तेऽस्तु नमस्ते शान्तिद प्रभो ।
क्रूरग्रहैः पीड़ितानामश्वत्थाय नमोऽस्तु नः ॥
नीलाञ्जनगिरिं प्रार्थ्य रविपुत्रो महाबलः ।
कृते पुरुषरूपोऽसि वृक्षराजाय ते नमः ॥

श्रीनारद उवाच ।

अनायासेन ये सर्व्वान् कामानवाप्नुयात् ।
सर्व्वदेवात्मकत्वञ्च तन्मे ब्रूहि पितामह ॥

श्रीब्रह्मोवाच ।

शृणु नारद सर्व्वज्ञ गुह्यं सर्व्वात्मकं तरुम् ।
प्रदक्षिणेन पूतं तं नराणां सर्व्वकामदम् ॥
अश्वत्थदक्षिणे रुद्रः पश्चिमे विष्णुराश्रितः ।
ब्रह्मा चोत्तरतस्तस्य पूर्व्वे चेन्द्रादिदेवताः ॥
स्कन्धोऽस्य स्तम्भे पर्णेषु विप्रा गावस्तथर्षयः ।
मूलाङ्कुरफलेष्वस्य वेदा यज्ञाः समाश्रिताः ॥
नदीनदाः सागराद्याः पूर्व्वादिक्रमसंस्थिताः ।
लोकधर्म्मं समाश्रित्य अश्वत्थं सेवयेद्बुधः ॥
पुराणस्मृतितन्त्रेभ्यः सारमुद्धृत्य संस्थितम् ।
प्रतिष्ठितमप्रतिष्ठञ्चाश्वत्थं सेवयेद्बुधः ॥

त्वं क्षीरे फलितश्चैव शीतलश्च वनस्पते।
त्वामाराध्य नरो विन्द्यादैहिकामुष्मिकं फलम्॥
चलद्दलाय वृक्षाय सर्व्वदाश्रितविष्णवे।
बोधिरूपाय देवाय अश्वत्थाय नमो नमः॥

अश्वत्थ यस्मात्त्वयि वृक्षराजो
नारायणस्तिष्ठति सर्व्वकालम्।
अतः शुचिस्त्वं सततं तरूणां
धन्योऽसि दुःस्वप्नविनाशकोऽसि॥

क्षीरोदस्याश्च येनायं येन श्रीस्त्वां निषेवते।
सत्येन तेन वृक्षेन्द्र मामपि श्रीर्निषेवताम्॥
एकादशोऽसि रुद्राणां वसूनामष्टमस्तथा।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल॥
अग्निगर्भ शमीगर्भ वेदगर्भ प्रजापते।
हिरण्यगर्भ श्रीगर्भ वेदगर्भ नमोऽस्तु ते॥
आयुर्बलं यशो वर्च्चः प्रजाःपशुवसूनि च।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वं नो देहि* वनस्पते॥
आरात्तेऽस्त्वग्निर्नियत-मस्त्वारात्परशुश्च ते।
निवाते त्वाभिवर्षन्तु स्वस्ति तेऽस्तु वनस्पते॥
अक्षिस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तनम्।
शत्रूणाञ्च समुत्थानमश्वत्थ शमयस्व मे॥

---

* देहीत्यत्र धेहीति चाद्रिकातत्त्वे पाठः।

अश्वत्थाय वरेण्याय सर्व्वैश्वर्य्यप्रदायिने ।
नमो दुःस्वप्ननाशाय सुस्वप्नफलदायिने ॥
मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतः शिवरूपाय वृक्षराजाय ते नमः ॥
यं दृष्ट्वा मुच्यते रोगात् स्पृष्ट्वा पापैः प्रमुच्यते ।
यमाश्रित्य च दीर्घायुस्तमश्वत्थं नमाम्यहम् ॥
अश्वत्थ त्वं महाभागः सुभगः सुप्रदर्शनः ।
मिष्टान्नं भोजनं देहि शत्रूणाञ्च पराजयम् ॥
आयुः प्रजा धनं धान्यं सौभाग्यं सर्व्वदा शुभम् ।
देहि देव महावृक्ष त्वामहन्त्वाभिवादये ॥
ऋचन्त्वं यजुषो मन्त्रं साम गायसि गानवत् ।
अश्वत्थ वेदमूलस्त्वमृषिभिः प्रोच्यसे सदा ॥
ब्रह्महा गुरुहा चैव दरिद्रो व्याधिपीड़ितः ।
आवृत्य द्वादशं लक्षं मुक्तः पापातिगो भवेत् ॥
ब्रह्मचारी हविष्याशी अधःशायी जितेन्द्रियः ।
पापोपहतमर्त्त्यस्तु व्रतमेतत्समाचरेत् ॥
एकहस्तं द्विहस्तं वा कुर्य्याद्गोमयलेपनम् ।
श्वेतगन्धाक्षतैः पुष्पैर्धूपदीपनिवेदनैः ॥
पदात्पदान्तरं गत्वा कुर्य्याच्चलनवर्ज्जितः ।
वाचा स्तोत्रं हृदा ध्यानं* चतुरङ्गं प्रदक्षिणम् ॥

---

* हृदा ध्यानमित्यत्र मनोध्यानमिति ख-पुस्तके पाठः ।

आसवप्रसक्ता नारी नीरपूर्णं घटं यथा।
उद्वहन्ती शनैर्याति तथा कुर्य्यात् प्रदक्षिणम्॥
ततः प्रदक्षिणं कुर्य्यादश्वत्थस्य शनैः शनैः।
यदि शीघ्रेण तत्कुर्य्यात्तत्सर्व्वं निष्फलं भवेत्॥
अश्वत्थः स्थापितो येन कुलं स्थानं तथैव च।
धनायुःसन्ततिर्वृद्धिर्नरकात्तारयेत्पितॄन्॥
अश्वत्थमूलमाश्रित्य शाकेनान्नेन चोदकैः।
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता॥
अश्वत्थमूलमाश्रित्य जपहोमसुरार्च्चनात्।
अक्षयं फलमाप्नोति ब्रह्मणो वचनं यथा॥
एवमाश्वासितोऽश्वत्थः सदाश्वासयते च माम्।
यज्ञार्थं छेदितेऽश्वत्थे ह्यक्षयं स्वर्गमाप्नुयात्॥
अश्वत्थः पूजितो येन पूजिताः सर्व्वदेवताः।
अश्वत्थश्छेदितो येन छेदिताः पितृदेवताः॥
अमायास्तु गुरोर्व्वारे ह्यश्वत्थस्थापितोदकम्।
तत्र स्नात्वा जपन्नित्यं ब्रह्महत्यां व्यपोहति॥
अश्वत्थस्य जले यत्रच्छाया भवति कुत्रचित्।
तत्प्रयागसमं तीर्थं तत्र सन्निहितो हरिः॥
पापोपहतमर्त्त्यानां व्रतान्येतानि कारयेत्।
सकामो लभते कामं निष्कामो मोक्षमाप्नुयात्॥
यः पठेच्छृणुयाद्वापि ह्यश्वत्थस्य समीपतः*।

---

समीपत इत्यत्र सर्वं शुभमिति ग-पुस्तके पाठः।

पदे पदेऽश्वमेधानां फलमाप्नोति मानवः ॥
कुर्व्वाणो भक्तिभावेन ह्यश्वत्थस्य प्रदक्षिणम् ।
सर्व्वान् कामानवाप्नोति विष्णुसायुज्यमाप्नुयात् ॥
भानुभौमभृगुक्रान्तिरिक्तापातेषु पर्व्वसु ।
दुर्द्दिने वैधृतौ रात्रावपराह्णे च सन्ध्ययोः ॥
नन्दा दिनत्रये चैव कुर्य्यान्नाश्वत्थसेवनम् ।
अश्वत्थं मन्दवारेण स्पृष्ट्वा त्र्यम्बकं* जपेत् ॥
कालमृत्युर्न यात्येव किमुतान्यपमृत्यवः† ।
ऋणकायापहारे च रोगदारिद्र्यनाशनम् ॥
अश्वत्थं सिन्धुराजञ्च नित्यं सेवेत न स्पृशेत् ।
मन्दवारे स्पृशेत्पूर्व्वं सिन्धुराजञ्च पर्व्वणि ॥
कोणस्थः पिङ्गलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः ।
सौरः शनैश्चरो मन्दः पिप्पलादिषु संस्थितः ॥
एतानि शनिनामानि जपेदश्वत्थसन्निधौ ।
शनैश्चरकृता पीडा न कदाचिद्भविष्यति ॥
अश्वत्थरूपिणं विष्णुं सर्व्वकामफलप्रदम् ।
शाखारूपधरं देवं तमश्वत्थं नमाम्यहम् ॥
कालनीलाञ्जनप्रख्यं नीलजीमूतसन्निभम् ।
छायामार्त्तण्डसूनुञ्च प्रणवेन विशेषतः ॥

---

* त्र्यम्बकं यजामहे इत्यादिकं मन्त्रं १८१ पृष्ठे मूल एव वक्ष्यमाणम् ।

† किमुतान्यपमृत्यव इति ग-पुस्तके पाठः ।

दृष्टा तु हरते पापं स्पृष्टा लक्ष्मीश्च वर्द्धते ।
एकं गणाधिपे दद्याद्द्वे सूर्य्ये त्रीणि शङ्करे ॥
चत्वारि केशवे दद्यात्सप्ताश्वत्थप्रदक्षिणम् ।

नमोऽर्कपुत्राय शनैश्चराय
नीलाभ्रवर्णाजिनमेखलाय ।
स्पृष्टो हराघं प्रणतोऽस्मि नित्यं
फलप्रदो मे भव सूर्य्यपुत्र ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत् सनवथ पूरुषम् ॥
यदहं योजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यन्ति पुरा जीव गृभो यथा ॥*
यदोषधः समग्मत राजानः समिता इव ।
विप्रः स उच्यते भिषग्रक्षोऽम्नी वचातनः ॥*

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्नन्यो अभिचाकशीति ॥

शमग्निरग्निभिः करच्छं नस्तपतु सूर्य्यः ।
शं वातो वात्वरपा अपस्त्रिधः ॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

---

* तारांकिते मन्त्रौ वेदेषु अदृष्टतया यथादृष्टं सन्निवेशितौ ।

वनस्पते शतवल्शो विरोह
सहस्रवल्शा विवयं रुहेम ।
यन्त्वामयं स्वधितिस्तेजमानः
प्रणिनाय महते सौभगाय ॥
अश्वत्थसेवा तिलपात्रदानं
गोस्पर्शनं ब्राह्मणभोजनञ्च ।
एतानि सद्यः प्रहरन्ति पापं
गङ्गानदीभारतकीर्त्तनञ्च ॥
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ॥
इति च वृहत्पराशरे ।

## अथ पुरुषसूक्तविधानम् ।

अथान्यत्सम्प्रवक्ष्यामि विधिं पावनमुत्तमम् ।
अस्मत्तातप्रणीतोऽयं रघुपुत्राय पृच्छते ॥
अनपत्यस्य पुत्रार्थं कुर्य्याद्वैभाण्डिकीं क्रियाम् ।
वैभाण्डिकीं क्रियां चरुक्रियामित्यर्थः ।
सहस्रशीर्षापुरुष*विधानं चरुणा कृतम् ।
येर्यैः कृतं नृपैः पूर्व्वमन्यैरपि द्विजोत्तमैः ॥

---

* पुरुष इत्यत्र सूक्तस्येति क-पुस्तके पाठः ।

सिध्यन्ति सर्व्वमन्त्राणि विधिवद्धि द्विजोत्तमैः ।
उपासितानि सद्भक्त्या श्रोत्रियैः श्रुतिपारगैः ॥
श्रा[illegible] र्निराहारैर्व्रतिभिर्मन्त्रवित्तमैः ।
[illegible]णाः क्रियाः सर्व्वाः सिध्यन्ति व्रतचारिभिः ॥
पक्षे शुभे वारे शुभनक्षत्रगोचरे ।
द्वादश्यां पुत्रकामाय चरुं कुर्व्वीत वैष्णवम् ॥
दम्पत्योरुपवासश्च त्वेकादश्यां सुरालये ।
ऋग्भिः षोड़शभिः सम्यगर्च्चयित्वा जनार्द्दनम् ॥
चरुं पुरुषसूक्तेन* श्रपयेत् पुत्रकाम्यया ॥

अर्च्चनादिप्रकारस्तु ऋग्विधाने ।

वक्ष्ये पुरुषसूक्तस्य विधानं ह्यर्च्चनं प्रति ।
अग्निकार्य्यं जपविधिं स्तोत्रञ्चैव तदात्मकम् ॥
कुर्य्यादृग्यथोक्तविधिना प्राङ्मुखः शुद्धमानसः ॥
प्रथमां† विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे तथा ॥
पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे तथा ।
सप्तमीं वामकट्यान्तु अष्टमीं दक्षिणे तथा ॥
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ।
एकादशीं स्कन्धदेशे द्वादशीं वामबाहुके ॥

---

* १८४।१८५ पृष्ठयोः प्रदर्शयिष्यमाणेन ।

† प्रथमां पुरुषसूक्तात्मिकामाद्यामृचमित्यर्थः । उत्तरत्राप्येवम् ।

त्रयोदशीं दक्षिणे च ग्रास्यदेशे चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीञ्चैव षोडशीं मूर्ध्नि विन्यसेत् ।
एवं न्यासविधिं कृत्वा पश्चाद्धोमं समाचरेत् ॥

ततः पञ्चाङ्गानि ।

ब्राह्मणोऽस्येति* हृदयं चन्द्रमेति* शिरस्तथा ।
नाभ्या आसीदिति* शिखां सप्तेति* कवचं न्यसेत् ।
यज्ञेने*त्यस्त्रमुद्दिष्टमेवं पञ्चाङ्गलक्षणम् ॥

सङ्कल्पस्त्वस्य यथा ।

अमुककामनया पुरुषसूक्तस्य जपं होमं विष्णोराराधनं वा करिष्ये ।

इति सङ्कल्प्य यथोक्तं न्यासद्वयं विधाय ऋषिदेवतादि पठित्वा च पूजामारभेत ।

आद्यया† वाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययासनं‡ दद्यात्पाद्यञ्चैव तृतीयया§ ॥

---

* एते मन्त्राः १५६ पृष्ठे प्रदर्शिताः ।

† सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्व्वतः स्पृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ (३१अ. १म. यजुः ।)
एवंरूपया । उत्तरत्राप्येवम् ।

‡ पुरुष एवेदं सर्व्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ (३१अ. २म. यजुः ।)

§ एतावानस्य महिमातो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ (३१अ. ३म. यजुः ।)

चतुर्थ्यार्घ्यं* प्रदातव्यं पञ्चम्याचमनं† ततः ।
षष्ठ्यां‡ स्नानं प्रकुर्वीत सप्तम्यां§ वस्त्रमेव च ॥
यज्ञोपवीतमष्टम्यां¶ नवम्यां‖ भरणं तथा ।
दशम्यां** गन्धदानं स्यादेकादश्यां†† च माल्यकम् ॥
द्वादश्यां‡‡ धूपदानं स्यात्त्रयोदश्यां§§ च दीपकम् ।

---

त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ४ ॥ (३१अ. ४म. यजुः ।)
ततो विराडजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ (३१अ. ५म. यजुः ।)

‡ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम् ।
पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥ (३१अ. ६म. यजुः ।)

§ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥ (३१अ. ७म. यजुः ।)

¶ तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥ (३१अ. ८म. यजुः ।)

‖ तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥ (३१अ. ९म. यजुः ।)

* यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू किमूरू पादा उच्येते ॥ १० ॥ (३१अ. १०म. यजुः ।)

† ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ ११ ॥ (३१अ. ११म. यजुः ।)

‡ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥ (३१अ. १२म. यजुः ।)

§ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १३ ॥ (३१अ. १३म. यजुः ।)

चतुर्द्दश्या* निवेद्यन्तु पञ्चदश्या† नमस्क्रिया ॥
उद्वासनन्तु षोड़श्या‡ उपचारास्तु षोड़श ।
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनीयकम् ॥
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्च्चितं तेन वै सर्व्वं त्रैलोक्यं सचराचरम् ॥
दक्षिणान्तु यथा शक्त्या षोड़शेन प्रदापयेत् ।
ततः प्रदक्षिणं कृत्वा जपं कुर्य्यात्समाहितः ॥
यथाशक्ति जपित्वा च सूक्तञ्चास्मै निवेदयेत् ।
देवस्य दक्षिणे पार्श्वे कुण्डं स्थण्डिलमेव वा ॥
कारयेत्प्रथमर्चा तु प्रोक्षणञ्च द्वितीयया ।
तृतीययाग्निमादध्याच्चतुर्थ्या तु समिन्धनम् ॥
पञ्चम्या चाज्यसंस्कारं चरोश्च श्रपणन्तथा ।
षष्ठ्या चानलमध्ये तु कल्पयेत्पद्ममासनम् ॥
चिन्तयेत्तत्र देवेशं कालानलसमप्रभम् ।
विवृतास्यं बाहुशीर्षं रक्तास्यं रक्तलोचनम् ॥

---

* यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥ (३१अ. १४मं. यजुः ।)

† सप्तास्यासन् परिधयस्त्रिःसप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥ (३१अ. १५मं. यजुः ।)

‡ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ॥१६॥ (३१अ.१६मं.यजुः ।)

इमे मन्त्रा यद्यपि प्रायशो व्युत्क्रमेण पूर्व्वं प्रदर्शितास्तथापि अत्र क्रमेण परिदर्शनं न्याय्यं सुगमञ्चेति पुनः पर्य्यायेण प्रदर्शिताः ।

बाह्यो ह्ययः तत्सद्दशमूर्त्तिमित्यर्थः । एवं देवं ध्यात्वा समम्यादि-
पञ्चभिर्मन्त्रैभिः पञ्चोपचारपूजां कुर्य्यादित्याह ।

ततो गन्धञ्च पुष्पञ्च धूपं दीपं निवेदनम्* ।
अनुज्ञाय† ततः कुर्य्यात्समम्यादि यथाक्रमम् ॥
समिधः प्रत्यृचं पूर्व्वं जुहुयादभिघारिताः ।
ततो घृतेन जुहुयाच्चरुणा च ततः पुनः ॥
एवं हुत्वा ततस्तस्य समीपे स्तोत्रमुच्चरेत् ।

अथ स्तुतिर्यथा ।

जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्व्वज ।
नमो हिरण्यगर्भाय प्रधानाव्यक्तरूपिणे ॥

ॐ नमः ।

भगवते वासुदेवाय शुद्धज्ञानस्वरूपिणे ।
देवानां दानवानाञ्च सामान्यमधिदैवतम् ॥
सर्व्वदा चरणद्वन्द्वं व्रजामि शरणं तव ।
एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ॥
अध्यक्षश्चानुमन्ता च गुणमायासमावृतः ।
संसारसागरं घोरमनन्तक्लेशसाधनम् ॥
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ।
न ते रूपं न चाकारो नायुधानि न चास्पदम् ॥

---

* निवेदनमित्यत्र निवेदयेदिति ख-पुस्तके पाठः ।

† अनुज्ञाय इत्यत्र अनुज्ञया इति ख-पुस्तके पाठः ।

तथापि पुरुषाकारो भक्तानां त्वं प्रकाशके ।
नैव किञ्चित्परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ॥
कार्य्याणां कारणं पूर्व्वं वचसां वाच्यमुत्तमम् ।
योगानां परमां सिद्धिं वदन्ति परमं विदुः ॥
अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ।
पाहि मां पुण्डरीकाक्ष न जाने शरणं परम् ॥
कालेष्वपि च सर्व्वेषु दिक्षु सर्व्वासु चाच्युत ।
शयनेऽपि* गतौ चापि वर्द्धते मे महद्भयम् ॥
त्वत्पादकमलादन्यन्ममं† जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्ति येन गच्छामि सद्गतिम् ॥
विज्ञानं यदिदं प्राप्तुर्यदिदं ज्ञानवर्ज्जितम् ।
जन्मान्तरेऽपि मे देव मा भूदस्य परिक्षयः ॥
दुर्गतावपि जातायां त्वं गतिस्त्वं मतिर्मम ।
यदि नाथस्त्व विन्देयं तावतास्मि कृती सदा ॥
अकार्य्यकलुषं चित्तं मम ते पादयोः स्थितम् ।
कामये वैष्णवत्वन्तु सप्तजन्मसु केवलम् ॥
इत्येवमनया स्तुत्वा देवदेवं दिने दिने ।
किङ्करोऽस्मीति चात्मानं देवायैव निवेदयेत् ॥
इति स्तोत्रं सम्पूर्णम् ।
द्वादशद्वादशीष्वेवं पयसा निर्वपेच्चरुम् ।

---

* शयनेऽपीत्यत्र शरीरेऽपीति ख-पुस्तके पाठः ।

† मम इत्यत्र न मे इति पाठो युक्तः ।

एवमेकादश्युपवासादिकं कृत्वेत्यर्थः ।

हुत्वाज्यं विधिवत्पूर्व्वमृग्भिः षोडशभिस्तथा ।
समिधोऽश्वत्थवृक्षस्य होतव्याः पूर्व्वमेव तु ।
उपस्थानं हुताशस्य ध्यात्वा च मधुसूदनम् ॥

उपस्थानञ्च पुरुषसूक्तेनैवेति ज्ञेयम् ।

हविर्होमं ततः कुर्य्यात्प्रत्यृचं वाग्यतः शुचिः ।
हविःशेषे मनः कृत्वा नारी नारायणं प्रति ।
हविःशेषं भक्षयित्वा लघ्वाशी* संविशेत्क्षणम् ॥

लघ्वाशीति ग्रहणम् आहारान्तरनिवृत्त्यर्थम् । संविशेत् वामभागशायिनी स्यादित्यर्थः ।

ततः कृत्वा त्विदं कर्म्म कर्त्तव्यं द्विजतर्पणम् ।
अन्यस्त्रीषु निवर्त्तेत यावद्गर्भं न विन्दति ॥

यया सह एतत् कर्म्म कृतं तां भुक्त्वा बहुभार्य्योऽन्यां न तावत् गच्छेत् यावदेषा कर्म्मसहाधिकारिणी गर्भं न प्राप्नोति मन्त्रवतः शुक्रस्य अन्यत्र गर्भाधानाक्षमत्वात्, तस्य अन्यत्र निषेके कर्म्मसहाधिकारिण्यां गर्भानुदयप्रसङ्गाच्च । अनेकाभिः सह एतत्कर्म्मकरणे तु न दोषः ।

प्राप्नुयाद्वैष्णवं पुत्त्रं चिरायुःसन्ततिक्षमम् ।
अपुत्त्रा मृतपुत्त्रा वा या च कन्यां प्रसूयते ॥
क्षिप्रं सा जनयेत्पुत्त्रं पाराशरवचो यथा ।

---

* लघ्वाशीति अयुक्तं, विवक्षिते लघ्वाशिनी इत्येवं रूपं भवेत् ।

होमान्ते दक्षिणां दद्याद्धेनुं वासस्तिलांस्तथा ।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा ॥

य: सिद्धमन्त्र: सततं द्विजेन्द्र:
सम्पूज्य विष्णुं विधिवत् सुतार्थे ।
इदं विधानं विदधाति सम्यक्
स पुत्रमाप्नोति हरे: प्रसादात् ॥

इति वृहत्पराशरस्मृतौ पुत्रकामस्य पुरुषसूक्तविधानम् ।

अथास्य सङ्क्षेपेण प्रयोग: यथा ।

पुत्रकाम: सभार्य्य: शुभनक्षत्रचन्द्रताराबलयुक्तायां शुक्लैका-दश्यां कृतनित्यक्रिय: प्राणानायम्य देशकालादि सङ्कीर्त्त्य श्री-विष्णुप्रीतिद्वारा आयुष्मत्सुपुत्रावाप्त्यर्थं वृहत्पराशरोक्तवैष्णवचरु-विधानमहं करिष्ये इति सङ्कल्प्य पुण्याहवाचनादि कृत्वा श्रोत्रियं ब्राह्मणमाचार्य्यत्वेन वृत्वा पुष्पमण्डपे श्रीविष्णुं विधानोक्त-न्यासादिपूर्व्वकं स्तोत्रान्तञ्च यथाविधि पूजयित्वा विशेषपूजा-पूर्व्वकं तां रात्रिं जागरित्वा प्रभाते स्नानपूर्व्वकं देवस्य दक्षिणे भागे कुण्डादौ "कारयेत् प्रथमर्च्चा तु प्रोक्षणन्तु द्वितीयया" इत्याद्युक्तप्रकारेण अग्निं प्रतिष्ठाप्य पायसं चरुं श्रपयित्वा आज्य-भागान्तं कृत्वा "चिन्तयेत्तत्र देवेश"मित्यादिना मन्त्रेण* अग्नौ विष्णुं ध्यात्वा सप्तम्यादिकृग्भि: पञ्चोपचारान् कृत्वा घृताक्ता-श्वत्थसमिधोऽष्टोत्तरसहस्रमष्टोत्तरशतं वा हुत्वा पुनस्तथैव आज्य-होमं कृत्वा पुरुषसूक्तेन परमात्मानमुपस्थाय च तथैव पायसचरुं

---

* १८८ पृष्ठे प्रदर्शितेन ।

[ज]ुहुयात्। होममन्त्रास्तु षोड़श ऋचः पूर्व्वोक्ताः। ततः स्विष्ट-
[कृ]दादिहोमशेषं समाप्य नारी होमशेषे नारायणं पतिं ध्यात्वा
[ह]ोमशेषं भक्षयित्वा वामभागशायिनी भूयात्। पतिरपि
[श]यीयादिति केचित्। तत आचार्य्याय धेन्वादिदक्षिणां दत्वा
[ब्र]ाह्मणान् भोजयित्वा च तदाशिषो गृह्णीयात्। ऋतौ
भार्य्यामुपगच्छेत्। एवमग्निमशुक्लद्वादशद्वादशीषु कुर्य्यात्। एवं
कृत्वा सन्ततिक्षमं वैष्णवपुत्रमाप्नोति इत्याह पराशरः।

इति पुत्रकामस्य वैष्णवचरुविधानं समाप्तम्।

## अथ हरिवंशश्रवणविधानम्।

मदनमहार्णवे शातातपोक्तिः।

बालघाती च पुरुषो मृतवत्सः प्रजायते।
ब्राह्मणोद्वाहनञ्चैव कर्त्तव्यं तेन शुध्यति॥
श्रवणं हरिवंशस्य कर्त्तव्यञ्च यथाविधि।
जुहुयाच्च दशांशेन दूर्व्वामाज्यपरिप्लुताम्॥
एकादशस्वर्णनिष्का प्रदातव्या च दक्षिणा।
एकादश पशूंश्चैव दद्याद्वित्तानुसारतः॥
अन्येभ्योऽपि यथाशक्ति* द्विजेभ्यो दक्षिणां दिशेत्।
स्नापयेद्दम्पती पश्चान्मन्त्रैर्वरुणदैवतैः†।
आचार्य्याय प्रदेयानि वस्त्रालङ्करणानि च॥

---

* यथाशक्ति इत्यत्र यथा शक्त्या इति ग-पुस्तके पाठः।

† २०५ पृष्ठे प्रदर्शयिष्यमाणैः।

ब्राह्मणीहाडनस्चैव इत्यादिना ब्राह्मणीहाडनस्य पापविमुक्ति-
रित्यभिधानादेतत्स्नातव्यतया निष्कृतिः। तेन शुध्यतीत्येतत्
काकाक्षिगोलकवदुभयत्र सम्बध्यते। अतः श्रवणं हरिवंशस्य
इत्युत्तरवाक्यस्यापि तेन शुध्यतीत्ययं विशेषः। तथाच हरिवंश-
श्रवणं द्वितीया निष्कृतिः।

अथ श्रवणविधिः।

स्नात्वा गङ्गादिसरिति ज्ञाताह्निकविधिर्नरः।
शुचिः शीलोचिताचारः शुक्लवासा जितेन्द्रियः॥
रूपवान् सुभगो दान्तः कार्य्यो भारतवाचकः।
अविलम्बमनायस्तमद्रुतं धीरमूर्जितम्॥
असंसक्ताक्षरपदं स्वरभावसमन्वितम्।
त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमन्वितम्॥
वाचयेद्वाचकः स्वस्थः स्वासीनः सुसमाहितः।
ईदृशाद्वाचकाद्राजन् श्रुत्वा फलमवाप्यते॥
सम्यक् भारतं श्रुत्वा अग्निष्टोमफलं लभेत्*।
स्वस्ति वाच्या द्विजास्त्वादौ ततः कार्य्यं प्रवर्त्तते॥
वाचकं पूजयित्वाथ वस्त्रालङ्कारभूषणैः।
शृणुयाद्भारतं रम्यमादिपर्व्वपुरःसरम्॥

इत्यादि सामान्यम्। विशेषस्तु।

हरिवंशे तथा पूर्वे पायसं तत्र भोजयेत्।
अपवच्छ्रवणं प्रोक्तं हरिवंशस्य सूरिभिः॥ इति।

---

* लभेदित्यत्र भवेदिति ग-पुस्तके पाठः।

थास्य स्पष्टप्रयोग: यथा।

दम्पत्योरनुकूले शुभदिने स्नानादि नित्यकर्म्म निवर्त्त्य स्वस्तिवाचनादिकं कृत्वा स्वशक्त्यनुसारेण विनायकशान्तिं तत्पूजां वा कृत्वा पुत्रकामनया हरिवंशश्रवणमहं करिष्ये इति सङ्कल्पयेत्। अथवा देशादि सङ्कीर्त्य पूर्व्वजन्मोपार्ज्जितपापजन्यानपत्यत्वदोषपरिहारपूर्व्वकं शुभलग्ने नीरोगदीर्घायु:सगुणसन्तानप्राप्तिकामौ आवां दम्पती यथोक्तनियमपूर्व्वकं हरिवंशश्रवणं करिष्यावहे, सन्तानप्राप्तिकाम: सस्त्रीकोऽहं करिष्ये इति वा सङ्कल्पं कुर्य्यात्।

नियमास्तु।

> एककालाशनश्चैव अध:शायी भवेन्नर:।
> स्नातव्यं ब्रह्मचर्य्येण यावद्ग्रन्थ: समाप्यते॥ इति।

अथ वाचकवरणम् यथा।

पूर्व्वोक्तरीत्या सङ्कल्पवाक्यमुक्त्वा तदर्थं ब्राह्मणवरणं करिष्यावहे इति चरणक्षालन-वस्त्रालङ्कार-चन्दनाक्षत-पुष्पमाल्यादिभिस्तमभ्यर्च्च्य हिरण्यताम्बूलपूगीफलै: सहितकरो यजमान: अमुकगोत्रममुकदेवशर्म्माणं ब्राह्मणं त्वामसुकवाचकत्वेन दम्पती आवां वृणीवहे इत्युक्त्वा हिरण्यादि दद्यात्।

ततो वृतोऽस्मीति तेनोक्ते व्रतेन दीक्षा*मित्यादि मन्त्रेण तद्दक्षिणकरे रक्षाबन्धनं कुर्य्यात्। ब्राह्मणेन च यजमानयो: स्वयं रक्षाबन्धनं कार्य्यम्। अनन्तरञ्च दम्पती तं प्रार्थयेताम्।

---

*व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ (१९अ. १०म. यजु:।)

तत्मन्त्रस्तु यथा ।

नमस्ते भगवन् व्यास सर्व्वशास्त्रार्थकोविद ।
ब्रह्मविष्णुमहेशानां मूर्त्ते सत्यवतीसुत ॥

इत्युक्त्वा शुभे देशे कुशासने उपविश्य श्रीकृष्णं परमात्मानं ध्यायन्तौ शृणुयाताम् ।

श्रवणदेशास्तु ।

शिवालये गृहे गोष्ठे देवतायतने तथा ।
वृन्दावने नदीतीरे तथैव च गुरोर्गृहे ॥
पुराणं शृणुयाद्भक्त्या यथोक्तविधिना गृही ।
विधानसहितं सम्यक् पुराणं फलदं भवेत् ।
तस्माद्विधानसंयुक्तं पुराणं शृणुयान्नरः ॥ इति ।

ततश्च प्रतिदिनं पूर्व्वाह्णे स्नातावलङ्कृतौ दम्पती तदेकचित्तौ* शृणुयाताम् । प्रतिदिनमाचार्य्यं पुस्तकञ्च पूजयेत्† । अन्ते च स्वलङ्कृतां गां पयस्विनीं सवत्सां स्वर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठां कांस्यदोहां सदक्षिणां दद्यात् ।

सुवर्णशृङ्गादिपरिमाणन्तु हेमाद्रौ मात्स्ये ।

दशसौवर्णिके शृङ्गे खुराः पञ्चपलान्विताः ।
पञ्चाशत्पलकं कांस्यं ताम्रस्यापि तथैव च ॥
श्वेता गौर्वर्णयेदंशं रक्ता सौभाग्यदायिनी ।

---

* तदेकचित्ततया इति म-पुस्तके पाठः ।

† यजमान इति शेषः । दम्पत्योः कर्तृत्वे पूजयेतामित्येव स्यात् ।

गवामङ्गेषु तिष्ठन्तीति* गोदानमन्त्रः ।

ततश्च ब्राह्मणविवाह एकं प्रायश्चित्तं, द्वितीयं हरिवंशश्रवणं, तृतीयं महारुद्रजप इति। एतानि त्रीण्यपि शक्त्याद्यपेक्षया समस्तानि व्यस्तानि वा योज्यानि। महारुद्रलक्षणं दशांश-होमप्रकारोऽपि अग्रे वक्ष्यते। एकादश पशूंश्चेति पशवोऽत्र गावो ग्राह्याः रुद्राय गामिति श्रुतेः। वरुणदेवतामन्त्राः कस्य नूनं कतमस्यामृतानां†मित्येवमादयः स्वस्वशाखोक्ता-वारुणमन्त्रा ज्ञेयाः ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते हरिवंश-श्रवणविधानं समाप्तम् ।

## अथ पार्थिवलिङ्गपूजाविधानम् ।

लिङ्गवाशिष्ठे ।

सरस्वत्यास्तटे रम्ये शौनकाद्यास्तपोधनाः ।
सूतं परमया भक्त्या पप्रच्छुः परमादरात् ॥

ऋषय ऊचुः ।

---

* गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ ऋग्वेदिमन्त्रकल्पेऽपि ।

† कस्य नूनं कतमस्यामृतानां मनामहे चारुदेवस्य नाम ।
को नो मह्या अदितये पुनर्दात्पितरञ्च दृशेयं मातरञ्च ॥ (१म. २४सू. १ऋक्।

सूत शङ्करधर्म्मज्ञ श्रूयतां कीदृशं शिवम् ।
लिङ्गं पूज्यं महाभक्त्या विधानन्तच कीदृशम् ॥
किं फलं चास्य तत्सर्व्वं कथयाशु प्रसन्नधीः ।
यतो भक्ताभिपुष्टाङ्गा नित्यं रुद्राक्षधारिणः* ॥
सूत उवाच ।
शृणुध्वमृषयः सर्व्वे लिङ्गव्रतमनुत्तमम् ।
नारदाय पुरा सम्यक् कथितं सनकादिभिः† ॥
तेभ्यः सत्यवतीसूनुः सर्व्वज्ञः करुणानिधिः ।
कथयामास मह्यञ्च व्रतं करुणया गुरुः ॥
कदाचिन्नारदश्चारुकन्दरं मन्दरं ययौ ।
तत्रासीनं महादेवं पार्व्वतीपतिमीश्वरम्‡ ॥
प्रदक्षिणक्रियां कृत्वा नमस्कृत्य पुनः पुनः ।
पप्रच्छ परया भक्त्या नारदो देवदर्शनः ॥
केन देव विधानेन भक्तिर्मुक्तिश्च वै नृणाम् ।
तत्सर्व्वं कथयाशु त्वमनुग्राह्योऽस्म्यहं यदि ॥
सर्व्वपापक्षयकरं सर्व्वारिष्टविनाशनम् ।
सर्व्वसम्पत्प्रदञ्चैव कलौ सर्व्वत्र सिद्धिदम् ॥
ईश्वर उवाच ।

---

* रुद्राक्षधारणमिति ख-पुस्तके पाठः ।

† सनकादिकैरिति ख-पुस्तके पाठः ।

‡ पार्व्वतीप्राणवल्लभमिति ख-पुस्तके पाठः ।

शृणु नारद वक्ष्यामि लिङ्गपूजाविधानकम् ।
यस्य श्रवणमात्रेण कृतकृत्यो भवेन्नरः ॥
मृदश्चतुर्विधा विद्धि सिताः कृष्णाश्च लोहिताः ।
पीतास्तथा द्विजाद्यैस्ता ग्राह्या भक्त्या यथाक्रमम् ॥
गत्वा स्थलं नमस्कुर्य्यात् मन्त्रमेतं समुच्चरेत् ।
सर्व्वाधार धराकृप त्वद्रूपां मृत्तिकामिमाम् ॥
ग्रहीष्यामि प्रसन्नोऽहं लिङ्गार्थे त्वदनुज्ञया ।
यावत्स्यादात्मनः शक्तिर्मृदं तावत्समुत्क्षिपेत् ॥
नो चेत्तदर्द्धं तस्यार्द्धमेवं पलद्वयान्वितम् ।
तस्मान्न्यूनं न कर्त्तव्यमधिकं वा कदाचन ॥
बहुमानं* मृदं यावदुत्तमं मध्यमन्तथा ।
अल्पमल्पतरं तच्च कनिष्ठं स्यात्ततः परम् ॥
अस्मादल्पपरीमाणं न लिङ्गं कुत्रचिद्भवेत् ।
पानीयारण्यमध्याच्च नदीतीरे सरस्यपि ॥
जलाशये वा चान्यस्मिन्नन्तिके स्थापयेन्मृदम् ।

मृत्परिमाणञ्च षड़शीतिरक्तिकाः । इदञ्च परिमाणं प्रधान-लिङ्गस्य न वेदिकाया इति ज्ञेयम् ।

शुद्धेन वारिणा युक्तामापो देवेति† मन्त्रतः ।

---

* बहुमानमित्यत्र बहुमान इति ख-पुस्तके पाठः ।

† मापो देवेति ग-पुस्तके पाठः । अत्र आपो देवेति पाठो युक्तः । तथा पाठे च मन्त्रो दृश्यते यथा—आपो देवास ईमहे वामन्नयद्यध्वरे ।

आपो देवास आशिषो यज्ञियासो हवामहे ॥ (ऋग्. यजु: ।)

नाममन्त्रेण शैवेन प्रणवेन युतेन च ॥
तृणकण्टककायादिकर्करोपलसैकतम् ।
करकादिविलम्बेन विरुद्धफलदायकम् ॥
त्यजेद्दयत्नेन महता नोच्छिन्द्यि कदाचन ।
स्नातस्त्रिपुण्ड्रवलिभिर्दीप्तभालः शिवं स्मरेत् ॥
रुद्राक्षमालासहितो भक्त्या परमया युतः ।
शुद्धभावसमायुक्तः कृतसङ्कल्पनिश्चयः ॥
रुद्रसूक्तं* जपन् कुर्य्याद्रुद्रायेति नमो नमः ।
पीठसङ्घटनं कुर्व्वन् पीठं कुर्य्याद्यथाविधि ॥
शलाकं वर्त्तुलं तस्य मानमीदृशमीरितम् ।
तत्सूत्रमानं पीठं स्यात्परिणाहसविस्तरम् ॥
पीठार्द्धविस्ततो विस्तमपरं दीर्घसूत्रकम् ।
समानविस्त्वं तत्सूत्रं मस्तं तत्सूत्रमानकम् ॥
तदर्द्धं हि प्रणालं स्यादेवं सूत्रविनिर्म्मितम् ।
लिङ्गमेवंविधं कृत्वा सुन्दरं परमं शुभम् ॥
सर्व्वलक्षणसंयुक्तमभीष्टफलदायकम् ।
पञ्चवक्त्रं त्रिनयनं चतुर्बाहुं महेश्वरम् ॥
नागयज्ञोपवीतञ्च व्याघ्रचर्म्मोत्तरीयकम् ।
हिमखण्डनिभं दीप्तं नीलकण्ठं शिवान्वितम् ॥
नमो महेश्वरागच्छ देवदेव जगत्पते ।
प्रसादं कुरु मे देव सर्व्वपापप्रणाशन ॥

---

* रुद्रसूक्तं ६० पृष्ठे किञ्चिन्प्रदर्शितम् ।

आवाहयेन्महादेवमायो देवेति* मन्त्रतः ।
पञ्चाक्षरेण† वा धीमानापो हि ष्ठेति पौरुषैः‡ ॥
मन्त्रैः स्थाप्य महादेवमासनस्थं हि मन्त्रतः ।
अर्च्चयेत्करवीराद्यैर्गन्धाद्यैरुपचारकैः ॥
धूपदीपादिनैवेद्यैस्ताम्बूलफलसंयुतैः ।
पञ्चाक्षरेण मन्त्रेण तथा मृत्युञ्जयेन च ॥
नाममन्त्रेण वा देवं पूजयेत्परमेश्वरम् ।
हरो महेश्वरः शम्भुः शूलपाणिः पिनाकभृत् ॥
रुद्रः पशुपतिश्चैव महादेवविसर्ज्जनम्§ ।
नमःपूर्व्वैश्चतुर्थ्यन्तैर्मन्त्रैश्चैतैर्द्विजन्मनाम् ॥
अन्येषामेकजन्मूनां नमोऽन्ताश्च प्रकीर्त्तिताः ।
स्त्रीणां सङ्करजातीनां व्रतमेतदनुत्तमम् ॥
पार्थिवं पूजयेल्लिङ्गं सर्व्वकामप्रदं मुने ।
पाषाणे दारुजे देशे दर्भान्तरितसंस्थले¶ ॥
पुष्पप्रकरसंयुक्ते‖ पाणौ वा वेदिकाभुवि ।

---

* २०७ पृष्ठे प्रदर्शितेन ।

† ओँ नमः शिवाय एवंरूपेण ।

‡ ५८ पृष्ठे प्रदर्शितैः ।

§ महादेवेति विसर्ज्जनमिति ग-पुस्तके पाठः ।

¶ संस्थले इत्यत्र संस्तरे इति ग-पुस्तके पाठः ।

‖ प्रकरेत्यत्र प्रकाशेति ख-पुस्तके पाठः ।

पूजयेत्पार्थिवं लिङ्गं तथा:प्रत्युपकारकम्* ॥

ॐ आयाहि भगवञ्छम्भो सर्व्वेश गिरिजापते ।

प्रसन्नो भव देवेश नमस्तुभ्यञ्च शङ्कर ॥

इति आवाहनम् ।

विश्वेश्वर महाराज राजराजप्रियेश्वर ।

आसनं दिव्यमीशान दास्येऽहं परमेश्वर ॥

इति आसनम् ।

महादेव महेशान महानन्दपरायण ।

पाद्यं गृहाण देवेश पार्व्वत्या सहितेश्वर ॥

इति पाद्यम् ।

त्र्यम्बक त्वं महादेव वियदादिविधायक ।

अर्घ्यं गृहाण देवेश साम्ब सर्व्वार्थसाधक ॥

इति अर्घ्यम् ।

त्रिपुरान्तक दीनार्त्तिनाश श्रीकण्ठमूर्त्तिधृक् ।

गृहाणाचमनं चारु पवित्रोदककल्पितम् ॥

इति आचमनम् ।

त्रिकाग्निकालकालादिसंहारकरणोद्यत ।

स्नानं तीर्थाहृतैस्तोयैर्गृहाण परमेश्वर ॥

इति स्नानीयम् ।

कालाग्निरुद्र सर्व्वेश वरदाभयदायक ।

---

* प्रत्ययकारकमिति ख-पुस्तके, प्रत्यपकारकमिति च ग-पुस्तके पाठः ।

वस्त्रं गृहाण देवेश दिव्यगन्धोपशोभितम् ॥

इति वस्त्रम् ।

पुनराचमनं दत्त्वा दद्याद्यज्ञोपवीतकम् ।

नीलकण्ठोपवीतञ्च मया दत्तं गृहाण भोः ॥

इति यज्ञोपवीतम् ।

सर्व्वेश्वर जगद्वन्द्य दिव्यासनसमास्थित ।

गन्धं गृहाण देवेश दिव्यगन्धसमर्च्चितम् ॥

इति गन्धम् ।

सदाशिव शिवानन्द कारणेश गणेश्वर ।

पुष्पाणि बिल्वपत्राणि विचित्राणि गृहाण भोः ॥

इति पुष्पम् ।

महादेव मृडानीश जगदीश निरञ्जन ।

धूपं गृहाण देवेश सर्व्वं गुग्गुलधूपितम् ॥

इति धूपम् ।

हिरण्यबाहो सेनानामीशानाशापते शिव ।

दीपं गृहाण देवेश कपिलाज्यविवर्त्तिकाम्* ॥

इति दीपम् ।

भक्तानामपि सर्व्वेषाम्पते दीनार्त्तिनाशन ।

षड्रसैश्च समायुक्तं गृहाणान्नं निवेदितम् ॥

इति नैवेद्यम् ।

---

* त्रिवर्त्तिकामित्यत्र त्रिवर्त्तकमिति क-पुस्तके पाठः ।

राजाधिराज सर्व्वेश निराकार निरास्पद ।
फलं गृहाण सद्दिव्यं नारिकेलादिकं परम् ॥

इति फलानि ।

शाश्वत प्रमथाधीश मदनान्तक धूर्ज्जटे ।
गृहाण पूगताम्बूलदलचूर्णं सुखादिरम् ॥

इति ताम्बूलम् ।

हिरण्यगर्भ लोकेश हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

इति दक्षिणाम् ।

हर विश्वाखिलाधार निराधार निराश्रय ।
पुष्पाञ्जलिमिमं शम्भो गृहाण वरदो भव ॥

इति पुष्पाञ्जलिम् ।

यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
गृहाणेश मया दत्ता नाशयन्तु प्रदक्षिणाः ॥

इति प्रदक्षिणम् ।

मृडानीनाथ मे सर्व्वानपराधाननेकशः ।
क्षमस्वेति प्रणामं ते गृहाणाष्टाङ्गसंयुतम् ॥

इति नमस्कारम् ।

ईशान सर्व्वविद्यानामोङ्कार भुवनेश्वर ।
मन्दिरं गच्छ देवेश पुनरायाहि शङ्कर ॥

इति विसर्ज्जनम् ।-

तडागादाहृतं लिङ्गं जले सम्यङ्निवेशयेत् ।

अदृष्टविषये वापि स्थापयेद्भक्तिमान् सुधीः ॥
श्रौतस्मार्त्तसदाचारैर्ब्राह्मणैर्वेदमन्त्रतः ।
पञ्चाक्षरेण सम्पूजा कर्त्तव्या नियतात्मभिः ॥
मृदानयनसालोककरणं लिङ्गयोजनम् ।
प्रतिष्ठाह्वानस्नपनं पूजनञ्च विसर्ज्जनम् ॥
भवः सर्व्वो महारुद्रस्तथा पशुपतिश्च यः ।
उग्रस्त्र्यक्षो महाभीमस्तथेशानोऽष्टभिः क्रमात् ॥
हरो महेश्वरः शम्भुः शूलपाणिः पिनाकधृक् ।
शिवः पशुपतिश्चैव महादेवविसर्ज्जनम् ॥

इति शिवपूजा ।

ऋषे सर्व्वप्रयत्नेन पार्थिवं लिङ्गमुत्तमम् ।
कर्त्तव्यं हि नृभिर्नित्यं काममुद्दिश्य यत्नतः ॥
तल्लिङ्गं पार्थिवं स्वर्च्यं भुक्तिमुक्तिप्रदायकम् ।
न करोति यदि ज्ञात्वा न कार्य्यं तस्य सिध्यति ॥
देशिकात्सकलं ज्ञात्वा कुर्य्याल्लिङ्गं फलप्रदम् ।
विद्यार्थी लिङ्गसाहस्रं धनार्थी च तदर्द्धकम् ॥
पुत्त्रार्थी सार्द्धसाहस्रं कन्यार्थी तु शतत्रयम्* ।
वन्ध्या लिङ्गायुतं कुर्य्यात्त्वरया गर्भिणी भवेत् ॥
राज्यार्थी शतसाहस्रं कान्तार्थी शतपञ्चकम् ।
मोक्षार्थी कोटिगुणितं भूकामश्च सहस्रकम् ॥
रूपार्थी तु त्रिसाहस्रं तीर्थार्थी द्विसहस्रकम् ।

---

* पुत्त्रार्थी कोटिगुणितं भूकामश्च सहस्रकमिति क-पुस्तके पाठः ।

मुक्तिकामैः सहस्रं* स्यादायुष्कार्थी शतमष्टकम् ॥
मारणार्थी सप्तशतं मोहनार्थी शताष्टकम् ।
उच्चाटनपरश्चैव सहस्रन्तु यथोक्ततः ॥
स्तम्भने तु सहस्रञ्च जारणे तु तदर्द्धकम् ।
निगडान्मुक्तिकामस्तु सहस्रं सार्द्धमीरितम् ॥
महाराजभये पञ्चशतं चौरादिसङ्कटे ।
शतद्वयञ्च डाकिन्या भये पञ्चशतं परम् ॥
दरिद्रः पञ्चसाहस्रमयुतं सर्व्वकामदम् ।
एकं पापहरं प्रोक्तं द्विलिङ्गस्यार्थसिद्धिदम् ॥
त्रिलिङ्गं सर्व्वकामानां कारणं परमाद्भुतम् ।
उत्तरोत्तरमेवं स्यात्पूर्व्वोक्तगणनाविधिः ॥
कृत्वा यथोक्तविधिना पापं नश्यति तत्क्षणात् ।
लिङ्गानामयुतं कृत्वा महाराजभयं हरेत् ॥
सहस्रमेकं लिङ्गानां चौरादीनां भयं हरेत् ।
सहस्राणि तथा पञ्च पुत्रकामेन कारयेत् ॥
कृत्वा नित्यं विधानेन सगुणं पुत्रमाप्नुयात् ।
लक्षमेकन्तु लिङ्गानां यः करोति नरो भुवि ॥
शिव एव भवेन्नित्यं नात्र कार्य्या विचारणा ।
लिङ्गानामयुतञ्चैव कन्यकासन्ततिं मुने ॥
एकलिङ्गार्चनान्नित्यमतुलां श्रियमाप्नुयात् ।
पञ्चोत्पार्थिवलिङ्गानां कोटियज्ञफलं लभेत् ॥

---

* मुक्तिकामी सहस्रन्तु इति पाठो युक्तः ।

वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्व्वकामदम् ।
नर्म्मदागिरिजं श्रेष्ठमथान्यदपि लिङ्गवत् ॥

लिङ्गवल्लिङ्गाकारम् ।

मृद्भस्मगोशकृत्पिष्टताम्रकांस्यमयं तथा ।
कृत्वा लिङ्गं सकृत्पूज्य वसेत्कल्पायुतं दिवि ॥
ब्रह्मा सकाममुद्दिश्य विधानं तच्चकार वै ।
रुद्रं* पुत्रं समासाद्य निर्म्ममे सचराचरम् ॥
पुत्रकामो वशिष्ठोऽपि ह्यकरोल्लिङ्गपूजनम् ।
शक्तिं पुत्रं समासाद्य निर्व्यथो ज्ञानवानभूत् ॥
तथा पराशरो योगी लिङ्गव्रतमनुत्तमम् ।
चकार ज्ञानलाभार्थं सर्व्वज्ञः शिववल्लभः ॥
व्यासोऽपि परया भक्त्या लिङ्गव्रतमिदं परम् ।
चकार सकलं शास्त्रं व्रतस्यास्य प्रभावतः ॥
शतपर्व्वनादयः सर्व्वे बालाद्याः सकला मघाः ।
गोविन्दप्रमुखा देवाः श्रीश शच्यादयः पराः ॥
अरुन्धत्यादयश्चैव गौतमाद्यास्तपोधनाः ।
दधीचिप्रमुखाः सर्व्वे चक्रुः प्राप्तमनोरथाः ॥
तस्मान्नारद यत्नेन कथयाशु ऋषीन् प्रति ।

नारद उवाच ।

कथमुद्यापनञ्चास्य कुर्य्यात्पुण्यं महाफलम् ।
कथयस्व महादेव लोकानामुपकारक ॥

---

* रुद्रमित्यत्र शक्तिमिति क-पुस्तके पाठः ।

ईश्वर उवाच।

देशिकन्तु समासाद्य पूज्यं प्राप्तमनोरथः।
तत्प्रमाणन्तु सौवर्णं यथा शक्त्याथवा पुमान्॥
रौप्यं ताम्रं तथापि स्यादष्टम्याञ्च यथोक्ततः।
चतुर्दश्यां तथार्द्रायां सोमे वाथ प्रपूजयेत्॥
उपोष्य प्रथमे चाह्नि सम्पूज्य परमेश्वरम्।
चतुर्दश्या ह्यमा युक्ता अष्टम्या नवमी तथा॥
पारणं तत्र कुर्व्वीत रौद्रयुक्तः पुनर्वसुः।
पञ्चैकादश च द्वाभ्यामधिका विंशतिः परा॥
चत्वारिंशच्चतुर्भिश्च* ब्राह्मणान् वरयेद्व्रती।
गीतवादित्रनिर्घोषैर्जागरैर्विविधैरपि॥
स्तोत्रैश्च वैदिकैः सूक्तैः संस्तूयात्परमेश्वरम्।
आचार्य्यं प्रथमं पूज्य ब्राह्मणांश्च ततः परम्॥
गणेशमृत्विजादींश्च पूजयेच्च विधानतः।
वस्त्रैश्च दक्षिणाभिश्च पूजयेच्छिवतत्परान्॥
मृत्युञ्जयेन मन्त्रेण अग्निं हुत्वा स्वशक्तितः।
लिङ्गं तत्पूजया युक्तं गीतवाद्यसमन्वितम्॥
महाह्रदे प्रनिक्षिप्य नमस्कुर्य्यात् पुनः पुनः।
सोद्यापनं व्रतं कृत्वा प्राप्नुयात् परमं फलम्॥
ततः शैवपदं प्राप्य तत्रैव रमते ध्रुवम्।

इति श्रीब्रह्मलिङ्गवाशिष्ठे अगस्तिधर्म्मे त्रिसप्ततितमोऽध्यायः।

---

* चतुर्भिश्च इत्यत्र चतुर्व्विंशदिति ग-पुस्तके पाठः।

अथ प्रकारान्तरेणापि अस्य प्रयोगो यथा तत्रैव ।

मार्गशीर्षे कार्त्तिके च माघे वैशाखसंज्ञके ।
श्रावणे बहुले पक्षे गृह्णीयाद्व्रतमुत्तमम् ॥
नारी वा पुरुषो वापि कृत्वा व्रतमिदं शुभम् ।
ईप्सितांल्लभते कामाञ्छिवस्य वचनं यथा ॥
रागादिरहितः शान्तो हविष्याशस्य सेवकः ।
मघ्वादिशुभे काले व्रतमेतत्समाचरेत् ॥

इति यथोक्तकाले आरम्भं कृत्वा कामानुसारेण सङ्कल्प्य हराय नम इति तोलकमितां तोलकद्वयमितां वा मृत्तिकामाहृत्य महेश्वराय नम इति लिङ्गं सङ्कल्प्य च महादेवं ध्यायेत् ।

तन्मन्त्रो यथा ।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्वबीजं* निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

अनेन मन्त्रेण आत्मनि लिङ्गे च ध्यानं कार्य्यम् ।

शूलपाणये नमः ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं शूलपाणेः प्राणा इह प्राणाः । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं शूलपाणेः सर्व्वेन्द्रियाणि इह सर्व्वेन्द्रियाणि । ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं शूलपाणेर्वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहेति मन्त्रेण प्रतिष्ठाप्य पिनाकपाणे

* विश्वबीजमित्यत्र विश्वरूपमिति क-पुस्तके पाठः ।

अत्रागच्छ यावत् पूजां करोमि तावदत्र अधिष्ठानं कुरु इति स्थापयेत् ।

ततो मृत्युञ्जयेन पशुपतये नम इति नाममन्त्रेण च आवाहनादि-स्नान-वस्त्रालङ्काराचमन-चन्दनाक्षत-पुष्पबिल्वपत्रधूपदीप-नैवेद्याचमन-करोद्वर्त्तन-फल-ताम्बूल-दक्षिणा-नीराजनानि कृत्वा पुष्पाञ्जलिं दत्त्वा ईशान्यादिक्रमेण अष्टमूर्त्तीः पूजयेत् ।

तत्र मन्त्रा यथा । ॐ शर्व्वाय पृथिवीमूर्त्तये* नम इति ईशान्याम् । भवाय सलिलमूर्त्तये† नम इति प्राच्याम् । रुद्राय तेजोमूर्त्तये नम इत्याग्नेय्याम् । उग्राय वायुमूर्त्तये नम इति दक्षिणस्याम् । भीमाय आकाशमूर्त्तये नम इति नैर्ऋत्याम् । पशुपतये यजमानमूर्त्तये नम इति वारुण्याम् । महादेवाय सोममूर्त्तये नम इति वायव्याम् । ईशानाय सूर्य्यमूर्त्तये नम इत्युत्तरस्याम् । ॐ नमः शिवायेति च लिङ्गोपरि पुष्पाणि दद्यात् । वस्त्वभावेऽपि भावना कार्य्या ।

ततो वामे गौर्य्यै नमः दक्षिणे विष्णवे नमः सपरिवारेभ्यो देवेभ्यो नम इत्युक्त्वा—

विश्वेश्वर विरूपाक्ष विश्वेशामरवल्लभ ।
शरणं भव भूतेश करुणां कुरु शङ्कर ॥

इत्यादिभिः पूर्व्वोक्तैः‡मन्त्रैर्नमस्कृत्य स्तुवीत ।

---

* क्षितिमूर्त्तये इति ग-पुस्तके पाठः ।

† जलमूर्त्तये इति ग-पुस्तके पाठः । एतावेव बहुदेशेषु प्रचलितौ ।

‡ २११ पृष्ठे उक्तैः ।

तन्मन्त्रा यथा।

ॐ नम ओङ्काररूपाय नमोऽव्ययवपुर्धृते।
नमो नादात्मने तुभ्यं नमो बिन्दुकलात्मने॥
अलिङ्गलिङ्गरूपाय रूपातीताय ते नमः।
त्वं माता सर्व्वलोकानां त्वमेव जगतः पिता॥
त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियः प्रियरूपधृक्।
त्वं गुरुस्त्वं गतिः साक्षी त्वं पिता त्वं पितामहः॥
नमस्ते भगवन् रुद्र भास्करामिततेजसे।
नमो भवाय देवाय उमया सहिताय च॥
शर्व्वाय क्षितिरूपाय सदा सुरभिणे नमः।
ईशान वायवे तुभ्यं संस्पर्शाय च ते नमः॥
पशूनां पतये चैव पावकामिततेजसे।
भीमाय व्योमरूपाय शब्दमात्राय ते नमः॥
महादेवाय सोमाय अमृताय नमोऽस्तु ते।
उग्राय यजमानाय नमस्ते कर्म्मयोगिने॥
पार्थिवस्य च लिङ्गस्य यन्मया पूजनं कृतम्।
तेन श्रीभगवान् रुद्रो वाञ्छितार्थं प्रयच्छतु॥
इति स्तुत्वा तु तल्लिङ्गं प्रणिपत्य विसर्ज्जयेत्।
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक्॥
शिवः पशुपतिश्चैव चमस्वेति विसर्ज्जनम्।

सहस्राणीति पठेत्। अशक्तौ तु पूजामात्रम्।

इति पार्थिवलिङ्गपूजाप्रयोगः।

## अथ सर्पसंस्कारविधानम् ।

यथा शौनकीये ।

अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमम् ।
सिनीवाल्यां पौर्णमास्यां पञ्चम्यां कारयेत्ततः ॥
अश्लेषाऋक्षयुक्तायामन्यस्यां वापि कारयेत् ।
कृतसर्पवधो विप्रः पूर्व्वजन्मनि वेह वा ॥
अनेकदुःखजालानि प्राप्नोति सततं नरः ।
सन्ततिप्रतिबन्धश्च जाता सा च विनश्यति ॥
तस्य शान्तिं प्रवक्ष्यामि येन सम्पद्यते सुखम् ।
स्नात्वागत्य ततो ब्रह्मन् दण्डं दद्याद्द्विजातये ॥
वधं प्रख्यापयेत्पापी चरेत्कृच्छ्रांश्चतुर्दश ।
वधेऽन्यजन्मनि कृते लोहदण्डं द्विजातये ॥
दद्यात्पापविशुद्ध्यर्थं श्रोत्रियाय कुटुम्बिने ।

वधेऽन्यजन्मनि कृते इत्यन्य इह जन्मनि वधः कृतो येन इति विग्रहः आहिताग्न्यादित्वात् परनिपातः अलुक् च । यद्वा इहशब्दस्य इकारलोपश्छान्दस इति द्रष्टव्यम् ।

विप्राय दण्डमूल्यं वा ह्यभावे सति दापयेत् ।
साक्षाद्वधे कर्मकर्त्तुरेतदेव प्रदापयेत् ॥
निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसम् ।
अनुमत्यादिकर्त्तॄणां निष्कमर्द्धं तदर्द्धकम् ॥
वित्तशाठ्यं न कुर्व्वीत दद्याद्वित्तानुसारतः ।

अनुज्ञाञ्च गुरोर्लब्ध्वा संस्कुर्य्यात्तदनन्तरम् ॥
प्रियङ्गुव्रीहिगोधूमतिलपिष्टेन वा यवैः।
कृत्वा सर्पाकृतिं तेन नवशूर्पे निधाय ताम्* ॥
अनेन वक्ष्यमाणेन मन्त्रेण प्रार्थयेदहिम्।
*एहि पूर्व्वमृतः सर्प अस्मिन् पिष्टे समाविश ॥*
*संस्कारार्थमहं भक्त्या प्रार्थयामि समाहितः।*
वस्त्रोपवीतगन्धाद्यैरक्षतैः कुसुमादिकैः ॥
कर्त्ता पुष्पाञ्जलिं दत्त्वा प्रणिपत्य व्रजेद्बहिः।
प्रक्षालिताङ्घ्रिपाणिस्तु आचम्योपविशेद्भुवि ॥
कुर्य्यात्संस्कारसङ्कल्पं प्राणायामपुरःसरम्।
यज्ञोपवीतिना भाव्यं† सर्पसंस्कारकर्म्मसु ॥
लौकिकाग्निं प्रतिष्ठाप्य समिदाधानमाचरेत्।
अग्नेराग्नेयदिग्भागे भूमिं सम्प्रोक्ष्य वारिभिः ॥
चितिं कृत्वाथ संस्तीर्य्य कुशैराग्नेयकाग्रकैः।
पर्य्युक्ष्याग्निम्परिस्तीर्य्य परिषिच्य समर्च्चयेत् ॥
कृत्वेध्माधानपर्य्यन्तं षट्पात्रासादनादिकम्।
आघारचक्षुषी हुत्वा सर्पिषा च यथाविधि ॥
सर्पं गृहीत्वा यत्नेन चितिमारोपयेत् सुधीः।
अपः स्पृष्ट्वा स्नुवेक्षोत्रं गत्वा चाग्निं समीपतः ॥
स्रुवेण जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः।

---

* निधाय तामित्यत्र निधापयेदिति ख-पुस्तके पाठः।

† भाव्यमित्यत्र कार्य्यमिति ग-पुस्तके पाठः।

त्रिभिरित्यार्षं तिसृभिरित्येव युक्तं व्याहृतिविशेषणत्वात् ।

सर्पास्ये जुहुयादाज्यं व्याहृत्या च समस्तया* ।
आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत् ॥
स्रुवं तत्र निधायाथ यज्ञपात्राणि वह्निवम् ।
त्रिभिः प्रदक्षिणकृत्वा प्रणिपत्य समापयेत् ॥
चमसस्थैर्जलैः सर्पं व्याहृत्याभ्युक्ष्य पाणिना ।
अग्ने रक्षाण इत्यृचा† सर्पायाग्निम्प्रदापयेत् ॥
उपतिष्ठेद्दह्यमानं नमोऽस्तु सर्प इत्यतः ।

ते च मन्त्रा वाजसनेयके अग्निचयनकाण्डे अभिहिताः ।
तत्पाठस्तु ।

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥
या इषवो यातुधानानां ये वा वनस्पतीरनु ।
ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥
ये वामी रोचने दिवो ये वा सूर्य्यस्य रश्मिषु ।
येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ॥

एतान् मन्त्राननुचार्य्य वक्ष्यमाणान् पठेत् ।

ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया ।

---

* भूर्भुवः स्वः एवंरूपया ।

† अग्ने रक्षाणो अंहसः प्रतिष्म देव रीषतः ।
तपिष्ठैरजरो दह ॥ (७म. १५सू. १३ऋक् ।)

पूर्व्वजन्मनि वा* सर्प तत्सर्व्वं क्षमयस्व मे ॥
प्रजां देहि पशून्देहि चारोग्यं सर्व्वदास्तु मे ।
जन्मजन्मनि नैवेयं बुद्धिरस्तु सदा मम ॥
इति सम्प्रार्थ्य नागेन्द्रं स्नात्वागत्य ततः पुनः ।
चीराज्येन ततश्चाग्निमभ्योक्ष्य व्याहृतिभिस्त्रिभिः ॥

ॐ भूः प्रोक्षामि ॐ भुवः प्रोक्षामि ॐ स्वः प्रोक्षामि इति च प्रयोगः ।

हुते सर्पे जलेनाग्निमभिषिच्य ततः परम् ।
नास्थिसञ्चयनं कुर्य्यात् स्नात्वाचम्य गृहं व्रजेत् ॥

नास्थिसञ्चयनं कुर्य्यादिति अस्थिचयनमात्रनिषेधादन्यप्रेतक्रियापि अत्र भवतीति केचित्। यावद्वचनं वाचनिकमिति न्यायान्न भवतीति सम्प्रदायविदः ।

ब्रह्मचर्य्यादिकं कार्य्यं त्रिरात्राच्छुद्धिरिष्यते ।
चतुर्थेऽहनि सम्प्राप्ते सचेलं स्नानमाचरेत् ॥
घृतपायसभक्ष्यैश्च विप्रानष्टौ तु भोजयेत् ।
कर्त्ता नामपदैर्विप्रानर्च्चयेद्वक्ष्यमाणकैः ॥
सर्पोऽनन्तस्तथा शेषः कपिलो नाग एव च ।
कालीयः शङ्खपालश्च भूधरश्च प्रकीर्त्तितः ॥
पादप्रक्षालनं कुर्य्यादेभिर्नामपदैः पृथक् ।
गन्धपुष्पाक्षतैर्धूपदीपाद्यैरर्च्चयेद्द्विजान् ॥
एवङ्कृते विधानेऽस्मिन् सर्पसंस्कारकर्म्मणि ।

---

* पूर्व्वजन्मनि वाऽस्मिन् वा इति ख-पुस्तके पाठः ।

सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशयः ॥
कुष्ठादिव्याधियुक्तानां सर्व्वथा भेषजन्त्विदम् ।
आयुरारोग्यमैश्वर्य्यं प्राप्य कामानवाप्नुयात् ॥
अपुत्त्रो लभते पुत्त्रानधनो धनमाप्नुयात्* ।
रोग्यारोग्यमवाप्नोति शौनकस्य वचो यथा ॥
इति शौनकीये सर्पसंस्कारमूलवाक्यानि ।

अथास्य प्रयोगः प्रस्तूयते ।

अथातोऽनन्तादिनागने सर्पसंस्कारविधिं व्याख्यास्यामः । दक्षिणोत्तरायणयोरमावस्यायां पौर्णमास्यां वा पञ्चम्यां वा अश्लेषानक्षत्रान्वितायामन्यस्यां वा तिथौ सर्पसंस्कारः कार्य्यः । इत्यादिबौधायनसूत्रोक्तविशेषधर्म्मविशिष्टः स कथ्यते साकाङ्क्षाणामन्यतः पूरणं कर्त्तव्यमिति वचनात् । स यथा इह जन्मनि जन्मान्तरे वा कृतसर्पवधो विप्रः पौर्णमास्याममावास्यायां वा पञ्चम्यां वा अश्लेषानक्षत्रे वा दक्षिणायने उत्तरायणे वा सर्पवधसंस्कारं कुर्य्यात् । जन्मान्तरे सर्पवधज्ञानन्तु कुष्ठरोगापुत्त्रत्वाधनत्वादिना लिङ्गेन भवति ।

तत्र प्रायश्चित्तं यथा चतुर्द्दशकृच्छ्रात्मकद्रव्यक्रियार्थादिप्रत्याम्नायेन ।

"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः ।
यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ॥"

---

* धनवान् भवेदिति ख-पुस्तके पाठः ।

इति याज्ञवल्क्योक्तमुख्यपक्षेण वा पूर्व्वोत्तराङ्गसहितं प्रायश्चित्तं कार्य्यं मुहूर्त्तदिनात्प्राक्।

तत्रायं विशेषः। तत्पूर्व्वेद्युः कृतसर्पवधो यजमानः परिषदमुपवेश्य तीर्थे नद्यादौ वा सचेलं स्नात्वा वहिरागत्य समस्तसम्पदित्यादिश्लोकान् पठन् परिषदं* प्रदक्षिणीकृत्य तत्पुरतो ब्रह्मदण्डं निधाय किं ते कार्य्यमिति परिषदा† पृष्टो मया इह जन्मनि जन्मान्तरे वा सर्पवधः कृतस्तस्य मे प्रायश्चित्तं भवन्त उपदिशन्त्विति तान्‡ प्रति ब्रूयात्।

अथ परिषदा परस्परानुमत्या तस्य शक्तिं विमृश्य मुख्यपक्षेण प्रत्याम्नायेन वा चतुर्द्दशकृच्छ्राचरणपूर्व्वकं सर्पसंस्कारे कृते कृतार्थो भविष्यसीति वक्तव्यम्।

अथ एवमाज्ञप्तो ब्राह्मणान् सम्पूज्य विसृज्य वपनङ्कृत्वा दश स्नानानि विधाय प्रायश्चित्तपूर्व्वाङ्गानि कृत्वा मुख्यपक्षेण वा आदिप्रत्याम्नायेन वा चतुर्द्दश कृच्छ्रांश्चरित्वा श्रोत्रियाय कुटुम्बिने महान्तं लौहदण्डं दद्यात्। लौहदण्डाभावे तन्मूल्यं देयम्। लौहदण्डदानन्तु साक्षाद्वधकर्त्तुरेव। जन्मान्तरे वधकर्त्तुर्न भवति साक्षात्त्वाभावात्। अन्यानुमत्या वधकर्त्तॄणान्तु त्रिनिष्कद्विनिष्कैकनिष्कार्द्धनिष्काणां दानं विभवानुसारेण कर्त्तव्यम्। सति वित्ते शाठ्यं न कुर्य्यात्, कृते च तस्मिन् कर्म्मासमृद्धिः स्यात्।

---

* परिषदमित्यत्र ब्राह्मणान् इति ख-पुस्तके पाठः।

† परिषदा इत्यत्र तैरिति ख-पुस्तके पाठः।

‡ तानित्यत्र तामिति ख-पुस्तके पाठः।

एवं पूर्व्वमङ्गं विधाय तद्दिने कृतनित्यक्रियः सम्भृतसम्भारो-यजमान आचार्य्यं वृणुयात्। तत्प्रकारो यथा। अस्मिन् सर्पवधसंस्कारकर्म्मणि आचार्य्यत्वेन भवन्तमहं वृणे इति प्रयोगेण तस्य हस्ते पूगीफलं दत्त्वा वस्त्रादिकं दद्यात्। ततोऽस्मिन् सर्पसंस्कारे मम आज्ञां दत्तेति ब्रूयात्।

तत ओमनुतिष्ठेति आचार्य्येण अनुज्ञातः शुचौ देशे गोमयेनोपलिप्य आपो हि ष्ठा इत्यादिभिर्मन्त्रैः* वारिणा सम्प्रोक्ष्य पञ्चगव्यमन्त्रैः† पञ्चगव्येन च सम्प्रोक्ष्य इयं वेदिः परो अन्त‡ इति वेदिं स्पृष्ट्वा—

"यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्व्वदा।
स्थानं त्यक्त्वा तु तत्सर्व्वं यत्रस्थं तत्र गच्छतु॥
अपक्रामन्तु भूतानि पिशाचाः सर्व्वतो दिशम्।
सर्व्वेषामविरोधेन सर्पसंस्कारमारभे॥
अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः§।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया॥"

इति मन्त्रैर्गौरसर्षपान् सर्व्वतो विकिरेत्।

---

* ५८ पृष्ठे प्रदर्शितैः।

† पञ्चगव्यमन्त्रा यथा—गायत्र्या गोमूत्रेण, गन्धद्वारामिति गोमयेन, आप्यायस्वेति क्षीरेण, दधिक्राव्ण इति दध्ना, घृतं मिमिक्षे इति घृतेन। एते मन्त्राः १४६ पृष्ठे प्रदर्शिताः।

‡ इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।
अयꣳ सोमो वृष्णो अश्वस्य रेतः ब्रह्मायं वाचः परमं व्योम॥ (२३अ. ६२म. यजुः।)

§ भूमिसंस्थिता इत्यत्र भूमिपालका इति आह्निकतत्त्वे पाठः।

ततो देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्व इति वेदिं संशोध्य प्रस्थद्वयपरिमितेन प्रियङ्गुव्रीहिगोधूम-तिलयवानामन्यतमेन पिष्टेन मिश्रितेन वा सर्पाकृतिं कृत्वा मध्ये कुशानास्तीर्य्य नवशूर्पे स्थापयेत्। ससर्पं शूर्पं सूत्रैर्वेष्टयेदिति केचित्।

ततोऽनन्ताय काश्यपगोत्राय प्राणप्रतिष्ठां करिष्ये इति सङ्कल्प्य—

ॐ तत्ते पदं न विचिकेतं विद्याद् य उत।
पुनरप्येति जीवान्॥
त्रिवृद् यद् भूतं नश्च से व्यरम्*।
जीवो गर्भो मृतः स जीवः॥

इति उच्चैरुक्त्वा पुनर्मनः पुनरायुर्म आगात्। पुनर्नः पितरः।

एहि पूर्व्वं मृतः सर्प अस्मिन् पिष्टे समाविश।
संस्कारार्थमहं भक्त्या प्रार्थयामि समाहितः॥

वैदिकपौराणमन्त्रैः प्राणप्रतिष्ठां कृत्वा ॐ भुजगेशाय विद्महे सर्पराजाय धीमहि। तन्नो नागः प्रचोदयात् इति सर्प-गायत्र्या अभिमन्त्र्य असुनीते† इति सूक्तद्वयेन व्याहृत्या चाभि-

---

* ऋगियं वेदेष्वदृष्टतया आदर्शेषु यथादृष्टं निवेशिता।

† असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः।
रारन्धि नः सूर्य्यस्य संदृशि घृतेन त्वं तन्वं वर्द्धयस्व॥ (१०म. ५९सू. ५ऋक्।)
असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्।
ज्योक् पश्येम सूर्य्यमुच्चरन्तमनुमते मृळया नः स्वस्ति॥ (१०म. ५९सू. ६ऋक्।)

मन्त्रा श्रीमदनन्तप्रीत्यर्थं सर्पपूजां करिष्ये इति सङ्कल्प्य कलसोदकेन सर्पगायत्र्या अनन्ताय नमः आवाहनं समर्पयामि इत्यावाह्य आसनं पाद्यम् अर्घ्यम् आचमनीयं मधुपर्कञ्च प्रयोगेण दत्त्वा पञ्चामृतेन स्नापयित्वा आपो हि ष्ठेति तिसृभिः पुरुषसूक्तेन च कलसोदकेन स्नापयित्वा आचमनं दत्त्वा वस्त्रद्वयेनावेष्ट्य यज्ञोपवीतं दत्त्वा गन्धपुष्पधूपदीपपायसशर्कराज्यनैवेद्यं समर्प्य आचमनं दत्त्वा सुगन्धिद्रव्येण करोद्वर्त्तनं दत्त्वा ताम्बूलदक्षिणादाननीराजनानि समर्प्य—

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥

इति पूर्व्वोक्तमन्त्रत्रयेण* सर्पगायत्र्या च कर्त्ता पुष्पाञ्जलिं दद्यात् ।

ततः—

पापोऽहं पापकर्म्माहं पापात्मा पापसम्भवः ।
त्राहि मां कृपया देव शरणागतवत्सल ॥

इति पूर्व्वोक्तैर्मन्त्रैः प्रणिपत्य—

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्व्वाणि मे देव क्षमस्व परमेश्वर ॥

इति क्षमापयेत् ।

अथ सधूपं नागं नद्यादितीरं प्रत्यानीय प्रक्षालितपाणिपादः कुशासने उपविश्य आचम्य प्राणानायम्य देशकालादिकं स्मृत्वा

* १२१ पृष्ठे मूले उक्तेन ।

मम इह जन्मनि जन्मान्तरे वा ज्ञानतोऽज्ञानतो वा मनोवाक्काय-कर्म्मादिभिर्नागहननिमित्तदोषनिर्हरणद्वारा शरीरस्थपीड़ा-दारिद्र्यानपत्यत्वादिनिवृत्तिपूर्व्वकम् आयुरारोग्यानेकपुत्रपौत्र-धनाद्यभिवृद्ध्यर्थं शौनककल्पोक्तप्रकारेण सर्पस्योत्तमलोकप्राप्त्य-र्थञ्च सर्पसंस्कारकर्म्माहं करिष्ये इति सङ्कल्प्य यज्ञोपवीत्येव भूसंस्कारपूर्व्वकं लौकिकाग्निं प्रतिष्ठाप्य चाधानं कुर्य्यात् ।

तद्यथा अन्वाधानदाग्नेयदेशे भूमिं प्रोक्ष्य चितिं कृत्वा आग्नेयाग्रैः कुशैः परिस्तीर्य्य अप उपस्पृशेत् ।

ततः अस्मिन्नन्वाहिते अग्नौ इत्यादि चक्षुषी आज्येनेत्यन्त-मुक्त्वा अग्निं वायुं सूर्य्यञ्च अग्नौ जुहुयात् ।

ततः समस्तया व्याहृत्या स्रुवपूर्णमाज्यं सर्पदेहे निधाय चितौ नागशरीरं स्थापयेत् ।

ततो हविःशेषेण अग्निं स्विष्टकृतमित्यादिना सद्योऽहं यक्ष्ये इत्यन्तेन च मन्त्रेण भूर्भुवः स्वः स्वाहा प्रजापतये इदं न ममेति ऋचा च आधानं कुर्य्यात् ।*

ततः अन्वाहितस्याग्नेः पर्य्युक्षणाद्याज्यभागान्तं कुर्य्यात् ।

ततश्चितिं गायत्र्या प्रोक्ष्य सर्पं चितिमारोप्य अप उपस्पृश्य चिणश्रोत्रं स्पृष्ट्वा स्रुवेण आज्यमादाय व्यस्ताभिर्व्याहृतिभि-स्तस्र आज्याहुतीर्हुत्वा एकामाज्याहुतिं समस्ताभिर्व्याहृतिभिः सर्पास्ये हुत्वा शेषमाज्यं स्रुवेणैव सर्पदेहे निषेचयेत् ।

---

* आधानस्य प्रकारभेदोऽपि ग-पुस्तके दृश्यते ।

ततः प्रणीताजलैः पाणिना व्याहृतिभिः सर्पमभ्युक्ष्य अग्ने- रक्षाण इत्यृचा* सर्पस्य देहे अग्निं दद्यात्।

मन्त्रपाठक्रमस्तु। अग्नेरक्षाण इत्यस्य वशिष्ठ ऋषिरग्नि- र्देवता गायत्री च्छन्दः सर्पाय अग्निदाने विनियोगः।

ततो दह्यमानं सर्पं नमोऽस्तु सर्पेभ्य इत्यादिभिः पूर्व्वोक्तै†- स्त्रिभिर्मन्त्रैरुपतिष्ठेत। ततः—

ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया।
पूर्व्वजन्मनि वा सर्प मम दोषं प्रणाशय‡॥

इति सम्प्रार्थ्य सचेलं स्नात्वा क्षीराज्येन व्याहृतिभिश्चितिं प्रोक्ष्य हुतजलेन भस्म सम्प्रोक्ष्य उदके क्षिप्त्वा चितिमभिषिच्य स्नात्वा चाचम्य प्राचीनावीती मृदा वेदिकां निर्म्माय तत्र तिस्रः शलाका- निक्षिप्य अञ्जनाभ्यञ्जनस्नानवस्त्रयज्ञोपवीतगन्धाक्षतादिभि- स्तासामेकामभ्यर्च्य तदुपरि दक्षिणाग्रान् दर्भानास्तीर्य्य अनन्ताय काश्यपगोत्राय एतत्तिलोदकमुपतिष्ठतामिति उदकानामञ्जलि- त्रयं दद्यादित्येके। एकमेव पिण्डं दद्यादित्यपरे।

ततः कर्म्मसाद्गुण्यार्थं गवादिदक्षिणां दद्यात्। अथ शुद्ध- स्नानं कृत्वा वस्त्रं परिधाय आचम्य गृहं व्रजेत्।

---

* २१२ पृष्ठे प्रदर्शितया।

† इति मन्त्रैर्दह्यमानं नागमुपस्थाप्य सुतरां दाहयित्वा तत्रागत्य क्षीराज्येन चितारिं प्रोक्षेत्। ओं भूः प्रोक्षामि ओं भुवः प्रोक्षामि ओं स्वः प्रोक्षामि इति। ततस्तद्भस्म प्लावयित्वा आचामेत्। नात्र अस्थिसञ्चयनं दाहप्रसङ्गादस्थिसञ्चयस्य प्राप्तिरतस्तन्निषेधः। एतावत्कर्म्म उपवीतिनैव कार्य्यम्। इति ग-पुस्तके अधिकः पाठः।

‡ मम दोषः प्रणश्यतु इति ख-पुस्तके पाठः।

केचित्तु पूर्व्वरीत्या सर्पद्वयं कृत्वा सम्पूज्य तयोरेकं विधिवद्विधाय परं सर्व्वलक्षीके प्रवेशयेदित्याहुः ।

ततोऽधःशयनब्रह्मचर्य्यहविष्याशनानि कुर्व्वंस्त्रिरात्रमशुचिः स्यात् । ततश्चतुर्थेऽह्नि सचेलं स्नात्वा पुण्याहं वाचयित्वा अष्टौ शीलगुणसम्पन्नान् ब्राह्मणान्—

"सर्पोऽनन्तस्तथा शेषः कपिलो नाग एव च ।
कालियः शङ्खपालश्च भूधरश्च प्रकीर्त्तितः* ॥"

इत्यष्टसर्पनामभिरामन्त्र्य पादप्रक्षालनगन्धाक्षतधूपदीपाच्छादनाद्यैः सम्यगभ्यर्च्य घृतपायसादिभिर्मधुरद्रव्यैस्तान् भोजयेत् ।

ततो यथाशक्ति दक्षिणां दत्त्वा क्षमापयित्वा च तान् सर्व्वान् विसर्ज्जयेत् । ततः सुहृन्मित्रादिभिः सहितो भुञ्जीत ।

इति शौनकोक्तसर्पसंस्कारविधानम् ।

अथ बौधायनोक्तसर्पसंस्कारविधानम् ।

अथातोऽनन्तादिनागने सर्पसंस्कारविधिं व्याख्यास्यामः । स च दक्षिणोत्तरयोः† रमावस्यायां पौर्णमास्यां वा पञ्चम्यां वा अश्लेषानक्षत्रे वा प्रक्रियते । तत्र कृतसर्पवधो विप्रः पूर्व्वेद्युः सचेलं स्नात्वा उपोष्य परेद्युर्वपनादिकं कृत्वा शुचौ देशे गोमयेनोपलिप्य प्रस्थद्वयपरिमितेन प्रियङ्गुव्रीहिगोधूमतिलयवानामन्यतमपिष्टेन सपाकृतिं कृत्वा नवशूर्पे निधाय अनन्ताय काश्यपगोत्राय प्राणप्रतिष्ठां करिष्ये इति सङ्कल्प्य ॐ तत्ते पदमिति

* प्रकीर्त्तित इत्यत्र तथाष्टम इति क पुस्तके पाठः ।

† दक्षिणोत्तरायणयोरित्यर्थः ।

पूर्व्वोक्तया ऋचा* उच्चैः प्राणप्रतिष्ठां कृत्वा भुजगेशाय विद्महे सर्पराजाय धीमहि। तन्नो नागः प्रचोदयात् इति अभिमन्त्र्य असुनीत इति सूक्तद्वयेन† व्याहृत्या च पञ्चगव्येन स्नापयित्वा आपो हि ष्ठेति नवर्च्चेन‡ प्रोक्ष्य नमोऽस्तु सर्पेभ्य इति तिसृभि-र्ऋग्भि§र्नागं संस्पृशन् जपित्वा गायत्र्याभिषिच्य गन्धाक्षता-दिभिरभ्यर्च्च्य नवसूत्रेण परिवेष्ट्य तत्रैक्यात्मपं भावयेत्।

अथ वेदविदो ब्राह्मणानाहूय तत्पुरतो ब्रह्मदण्डं धृत्वा सङ्कल्पमुखार्थं मम पूर्व्वजन्मनि इह जन्मनि वा ज्ञानेन वा अज्ञानेन वा मनोवाक्कायकर्म्मभिर्नागहननजनितदोषनिवर्हण-द्वारा शरीर¶पीड़ादारिद्र्यानपत्यत्वादिदोषनिवृत्तिपूर्व्वकम् आयुष्मत्सुगुणानेकपुत्रपौत्राद्यभिवृद्ध्यर्थं बौधायनकल्पोक्तप्रकारेण सर्पसंस्कारकर्म्माहं करिष्ये इति सङ्कल्प्य अत्र मे प्रायश्चित्तमुप-दिशन्तु भवन्त इति ब्रूयात्।

तत्रैष श्लोको भवति।

वधं प्रख्यापयेत्पापी चरेत्कृच्छ्रांश्चतुर्द्दश।
दद्यात्पापविशुद्ध्यर्थं लौहदण्डं द्विजातये॥ इति।

साक्षाद्वधकर्त्तुरेतत्।

---

* २२७ पृष्ठे मूले उक्तया।

† २२७ पृष्ठे प्रदर्शितेन।

‡ ५८ पृष्ठे प्रदर्शितेन।

§ २२२ पृष्ठे प्रदर्शिताभिः।

¶ शरीरेत्यत्र प्रारभ्य।त क-पुस्तके पाठः।

निष्कत्रयं द्विनिष्कं वा निष्कमेकं कनीयसम् ।
अनुमत्यादिकर्त्तृणां निष्कमर्द्धं तदर्द्धकम् ।
वित्तशाठ्यं न कुर्व्वीत दद्याद्वित्तानुसारतः ॥

इति वचनाद्ब्राह्मणेभ्यो वित्तानुसारतो दक्षिणां दत्त्वा कृतप्रायश्चित्तोऽसीति भवन्तो ब्रुवन्तु इति निर्वाचयित्वा लौकिकाग्निमुपसमाधाय चाधानं कुर्य्यात् ।

अस्मिन्नन्वाहिते अग्नौ इत्यादि चक्षुषि आज्येन इत्यन्तमुक्त्वा चितौ अग्निं वायुं सूर्य्यं नागमुखे समस्तया व्याहृत्या चतुर्गृहीतेन* आज्येन चितौ नागशरीरे हविःशेषेण स्विष्टकृतमित्यादिना सर्व्वो यक्ष्ये भूर्भुवः स्वः स्वाहा प्रजापतये इदं न ममेत्यन्तेन जुहुयात् ।

ततोऽग्नेराग्नेयदिग्भागे भूशुद्धिं कृत्वा सम्प्रोक्ष्य चितिं कृत्वा कुशैराग्नेयवायव्याग्रैश्चितिं परिस्तीर्य्य स्थापयेत् ।

ततोऽग्नेः परिसमूहनादि चक्षुरन्तं हुत्वा अष्टोत्तरशतमष्टाविंशतिं वा व्याहृतिभिराज्यं हुत्वा नमोऽस्तु सर्पेभ्य इति पूर्व्वोक्ताभिः† स्त्रिसृभिश्च हुत्वा—

सर्पोऽनन्तस्तथा शेषः कालियो नाग एव च ।
कपिलः शङ्खपालश्च भूधरश्च तथाष्टमः ॥

इति चतुर्थ्यन्तैरष्टभिर्नाममन्त्रैश्च हुत्वा होमशेषं समाप्य, आयं

---

* चतुर्गृहीतेन इत्यत्र चतुर्गर्भाहितेनेति क-पुस्तके पाठः ।

† २२२ पृष्ठे प्रदर्शिताभिः ।

गौ-*रिति चितिं प्रोक्ष्य क्रव्यादमग्निमिति† सर्पगायत्र्या च (वा) अनन्ताय काश्यपसगोत्राय अयं तेऽग्निरुपतिष्ठतामिति. सर्पशरीरे अग्निं दत्त्वा स्रुवेण स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा समस्ताभिर्व्याहृतिभिः सर्पास्ये हुत्वा आज्यशेषं स्रुवेण सर्पदेहे निषिच्य दन्दशूकेभ्यः स्वाहा इति त्यागं कृत्वा उदकुम्भजलैस्त्रिः परिभ्रमन् प्रदक्षिणं कृत्वा चितिसमीपे कुम्भं स्फोटयित्वा अपः स्पृष्ट्वा च प्रार्थयेत्। नमोस्तु सर्पेभ्य इति पूर्व्वोक्ताभिस्तिसृभिः सर्पगायत्र्या च ।‡

ततः ।

ज्ञानतोऽज्ञानतो वापि कृतः सर्पवधो मया ।
संस्कारं कुर्व्वतो भक्त्या मम दोषः प्रशाम्यतु ॥

इत्युक्त्वा ततो नागशरीरं सुतरां दाहयित्वा तद्भस्म व्याहृतिभिः सम्प्रोक्ष्य उदके प्लावयित्वा आचामेत् ।

---

* आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरञ्च प्रयन्त्स्वः ॥ (३अ. ६म. यजुः ।)

† क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ (३५अ. १९म. यजुः ।)

ब्रह्मलोके च ये सर्पाः शेषनागपुरोगमाः ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु ते सदा ॥
विष्णुलोके च ये सर्पा वासुकिप्रमुखाश्च ये ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु मे सदा ॥
रुद्रलोके च ये सर्पास्तक्षकप्रमुखास्तथा ।
नमोऽस्तु तेभ्यः सुप्रीताः प्रसन्नाः सन्तु ते मम ॥

इत्यादिकाः प्रार्थनामन्त्राश्च धर्म्मसिन्धौ नागबलिप्रकरणे ज्ञेयाः ।

एतावदुपवीतिना कार्य्यम् । अथ प्राचीनावीती वेदिं निर्म्माय तत्र तिस्रः शलाका निक्षिप्य अञ्जनाभ्यञ्जनस्नानवस्त्र-यज्ञोपवीतगन्धाक्षतैस्ताः शलाका अभ्यर्च्य दक्षिणाग्रान् दर्भा-नास्तीर्य्य अनन्ताय काश्यपसगोत्राय एतत्तिलोदकमुपतिष्ठता-मिति त्रीनुदकाञ्जलीन् दत्त्वा प्रियङ्गुयवादिपिष्टनिर्म्मितांस्त्रीन् पिण्डान् दत्त्वा पिण्डोपरि तिलोदकं दद्यादित्येके ।

ततो यथाशक्ति चतुर्व्विधप्रायश्चित्तं कुर्य्यात् । ततः शुद्ध-स्नानं कृत्वा वस्त्रं परिधाय गृहमागत्य अधःशयनब्रह्मचर्य्य-हविष्याशनादीनि कुर्व्वंस्त्रिरात्रमशुचिः स्यात् ।

ततश्चतुर्थेऽहनि सचेलं स्नात्वा पुण्याहं वाचयित्वा अष्टौ ब्राह्मणान् अष्टभिः पूर्व्वोक्तसर्पनामभिरामन्त्र्य गन्धपुष्पधूप-दीपाच्छादनैरभ्यर्च्य परमान्नैर्नानाविधैर्भक्ष्यैश्च भोजयेत् । ततो यथाशक्ति दक्षिणां दद्यात् ।

एवं कृते विधानेन सर्पसंस्कारकर्म्मणि ।
सर्पहिंसाकृता पीड़ा नश्यते नात्र संशयः ॥
कुष्ठव्याधिविनिर्मुक्तः पुत्रपौत्रादिमान् भवेत् ।
आयुरारोग्यमैश्वर्य्यं प्राप्नुयान्नात्र संशयः ॥ इति ।

अथ नागः प्रीयतामित्याशिषो वाचयित्वा बन्धुभिः सह भुञ्जीत । एवं कृते नागपीड़ापरिहारो भविष्यति इत्याह भगवान् बौधायनः ।

इति बौधायनोक्तसर्पसंस्कारविधानम् ।*

इति विधानपारिजाते अनपत्यत्वहराणि
विधानानि समाप्तानि ।

अथ गर्भस्रावहरविधानम् ।

मदनमहार्णवे वृद्धगौतमीये ।

स्रवद्गर्भा भवेद्या तु बालकं हन्ति या विषैः ।
यज्ञोपवीतं कुर्व्वीत काञ्चनञ्च स्वशक्तितः ॥
अत्यन्तवर्णयुक्तेन राजतञ्चोत्तरीयकम् ।

अत्यन्तवर्णयुक्तेन काञ्चनेनेति पूर्व्वेणान्वयः । तथैव समीचीनं राजतमुत्तरीयञ्च कुर्य्यात् ।

उभयोरपि प्रमाणमाह ।

पलार्द्धेन तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ।
ग्रन्थिप्रदेशे देयन्तु मौक्तिकं वज्रमेव च ॥

पलादिलक्षणञ्च परिभाषायामुक्तम्* । यज्ञोपवीतस्य ग्रन्थिप्रदेशे मौक्तिकं देयमुत्तरीयस्य तु वज्रमिति विवेकः ।

प्रक्षाल्य पञ्चगव्येन गायत्र्या ताम्रभाजने ।
द्रोणप्रमाणं तस्मिंस्तु निक्षिपेद्दधि मध्यतः ॥

---

ख-पुस्तके पूर्व्वमेव विधानं प्रदर्शितम्, क-ग-पुस्तकयोस्तु द्वयोरेव पृथक्त्वादुभे एव विधाने अत्र सन्निवेशिते ; सन्ति च केषुचिदन्योन्यं भेदा अनर्थारिति ।

* ७ पृष्ठे प्रदर्शितम् ।

आज्यस्योपरि संस्थाप्यमुपवीतं सुपूजितम्।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैरपि भक्तितः॥

पञ्चगव्यस्नाने गायत्र्या मन्त्रत्वेनोपादानादवशिष्टपूजायामपि सैव मन्त्रः।

एवं प्रक्षालितमुपवीतमुत्तरीयञ्च ताम्रभाजने निक्षिपेत्। कथमित्यत आह द्रोणप्रमाणमित्यादि। अयमर्थः। द्रोणप्रमाणं दधि तस्मिंस्ताम्रभाजने मध्ये निक्षिप्य दध्न उपरि तत्परिमाणं यथालाभोपपन्नप्रमाणं वा आज्यं स्थापयेत्। तत्राज्ये उपवीतमुत्तरीयञ्च स्थापयेत्। तदुपवीतं गन्धपुष्पादिभिः सुपूजितं कुर्य्यात्। साहचर्य्यादुत्तरीयमपि तथैव पूजनीयमित्यायातम्।

पूजनानन्तरं कृत्यमाह।

ततो ब्राह्मणमाहूय होमन्तत्रैव कारयेत्।
तिलैराज्येन मधुना मिश्रैरष्टोत्तरं शतम्॥
होममन्त्रा व्याहृतयो गायत्री वा भवेदिह।
तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु॥
मन्त्रेणानेन विधिवत्प्राङ्मुखायोपवीतकम्।

मन्त्रो यथा।

उपवीतं परमिदं ब्रह्मणा विधृतं पुरा।
भवनौकास्य दानेन गर्भं सन्तारयाम्यहम्॥ इति।

भवनौकेति। भवे संसारे द्विजकर्म्मनिष्पादकत्वेन यतस्तारकमुपवीतमतो नौका। यद्वा भव उत्पत्तिस्तस्यामनपत्याना-

मपत्योत्पत्तिदायकत्वेन नरकार्णवोत्तारकत्वान्नौरिव नौरित्यर्थः।
शेषं स्पष्टम्।

धनान्यपि ब्राह्मणेभ्यस्तस्मिन् काले प्रदापयेत्।
अनुव्रज्य तथाचार्य्यं प्रणिपत्य क्षमापयेत्॥
गर्भस्रावकराद्दोषादेवं कृत्वा विमुच्यते।

आचार्य्योऽत्र दानपात्रम्। अस्मिन् कर्म्मणि स्त्रिया एव अधिकारः।

इति गर्भस्रावहरविधानम्।

अथ प्रस्रवद्योनिशोणितहरविधानम्।

तत्रैव महार्णवे।

मासोपवासिनी नारी रेतः प्रस्रावयेद्यदि।
पतिसम्पर्कदोषेण जायते सान्यजन्मनि॥
स्रवद्रक्ता सदा योनौ तन्निष्कृतिरिहोच्यते।
मासोपवासं कुर्व्वीत तथा मासं पयोव्रतम्॥

मासोपवासविधानं हेमाद्रौ मदनमहार्णवे च कृच्छ्रप्रकरणे* द्रष्टव्यम्। पयोव्रतमेवात्र लिख्यते। यथा।

कृच्छ्रातिकृच्छ्रपयसा दिवसानेकविंशतिम्।

इति याज्ञवल्क्योक्तप्रकारेण माससमात्रमेकग्रासमात्रपरिमित-†

* कृच्छ्रप्रकरणे इत्यत्र व्रतकाण्डे इति ख-पुस्तके पाठः।

† परिमितेत्यत्र परिपूर्णेति ख-पुस्तके पाठः।

पयसा वर्त्तनं पयोव्रतमिति कथ्यते। यस्मिन् व्रते येन वर्त्तनं क्रियते तद्व्रतं तेन नाम्ना व्यपदिश्यते। अतएव मार्कण्डेयः।

पत्रैर्मतः पत्रकृच्छ्रः पुष्पैस्तत्कृच्छ्र उच्यते।
मूलकृच्छ्रस्ततो मूलैस्तोयकृच्छ्रो जलेन तु॥ इति।

*इति प्रस्रवद्योनिशोणितहरविधानम्।*

वन्दे गोविन्दमानन्दज्ञानदेहं पतिं श्रियः।
ब्रह्मादिस्तम्बपर्य्यन्तजगत्कर्त्तारमीश्वरम्॥

## अथ गर्भधारण-तद्रक्षणविधानानि।

तत्र गर्भधारणविधानं प्रयोगपारिजाते शौनकः।

षोड़शस्वृतुसंज्ञेषु दिनेष्वाद्यं चतुर्द्दिनम्।
आर्त्तवाशौचसंयुक्तं वर्ज्जयित्वा परेषु तु॥
दिनेषु द्वादशस्वेतदन्यस्मिन् पतिभार्य्ययोः।
उभयोरपि जन्मर्क्षानुगुणं तारके ध्रुवम्॥
स्नापयित्वाथ गन्धाद्यैर्भूषयित्वा च शोभने।
मुहूर्त्ते लब्धगन्धाया मूलं सम्मोद्य तत्पुनः॥
कृत्वा नवाम्बरगतं परिगृह्याग्रपाणिना।
उदीर्ष्वातः पतिवतीत्याद्या*मृचमुदीर्य्य तु॥

---

*उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीडे।
अन्यामिच्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि (१०म. ८५सू. २१ऋक्।)

जायाया दक्षिणे नासारन्ध्रे सिञ्चेत्तु तद्रसम् ।
उदरस्थे रसे तस्मिन्नाचान्तसलिलां सतीम् ॥
उपगच्छेद्धवमेवं विधिनोपगमे कृते ।
गर्भः स्थिरः स्यादित्येवं गर्भलम्भनमूचिरे ॥ इति ।

ऋग्विधाने तु ।

विष्णुर्योनिं* जपेत्सूक्तं योनिं स्पृष्ट्वा त्रिभिर्व्रती ।
गर्भाधानन्ततः कुर्यात्सुपुत्रो वै प्रजायते ॥

त्रिभिरङ्गुलैरित्यर्थः । एतदकरणे प्रायश्चित्तमुक्तम् ।

गर्भाधानस्याकरणात्तस्यां जातस्तु दुष्यति ।
अकृत्वा गां द्विजे दत्त्वा कुर्यात्पुंसवनं ततः ॥

इति गर्भधारणविधानम् ।

## अथ गर्भिणीधर्माः ।

यथाह पाद्मे कश्यपः ।

नावस्करेषूपविशेन्मुषलोलूखलादिषु ।
जलञ्च नावगाहेत शून्यागारञ्च वर्जयेत् ॥
वल्मीकं नाधितिष्ठेत न चोद्विग्नमना भवेत् ।
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ॥

---

* विष्णुर्योनिमित्यादि १०८ पृष्ठे प्रदर्शितम् ।

† नेजमेष इत्यादि ६५ पृष्ठे प्रदर्शितम् ।

न शयीतोत्तरशिरा न चैवाधःशिराः क्वचित् ।
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥
वर्ज्जयेत्कलहं लोकैर्गात्रभङ्गस्तथैव च ।
न मुक्तकेशी तिष्ठेत नाशुचिः स्यात्कदाचन ॥
नामङ्गलं वदेद्वाक्यं न च हास्याधिका भवेत् ।
न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती ॥
कुर्य्याच्छ्वशुरयोर्नित्यं पूजां मङ्गलतत्परा ।
तिष्ठेत्प्रसन्नवदना भर्त्तुः प्रियहिते रता ॥
सन्ध्यायां नैव भोक्तव्यं गर्भिण्या हि प्रयत्नतः ।
न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्व्वदा ॥
सर्व्वौषधिभिः कोष्णेन वारिणा स्नानमाचरेत् ।
कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ॥
दानशीला तृतीयायां पार्व्वत्यां भक्तिमाचरेत् ।
गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् ॥
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ।
शोकञ्च रक्तमोक्षञ्च साध्वसं कुक्कुटासनम् ॥
खट्वाच्छायां दिवास्वापं रात्रौ जागरणं त्यजेत् ।
पतिव्रता भवेन्नारी विशेषेण तु गर्भिणी ॥
अतिक्षारन्तु नाश्नीयादत्यम्लमतिभोजनम् ।
लघ्वाहारश्चातितरां गुर्व्वाहारं परित्यजेत् ॥
गर्भरक्षा सदा कार्य्या नित्यं शौचनिषेवणात् ।
प्रशस्तमन्त्रलिखनाच्छस्तमाल्यानुलेपनात् ॥

विशुद्धगीर्ह्यवसनाहानैरक्षादिपूजनैः ।
हरिद्रा कुङ्कुमञ्चैव सिन्दूरं कज्जलन्तथा ॥
केशसंस्कार*ताम्बूलं माङ्गल्याभरणं शुभम् ।
भर्त्तुरायुष्यमिच्छन्ती वर्ज्जयेद्गर्भिणी न हि ॥

अन्यत्रापि ।

अङ्गारभस्मास्थिकपालचुल्ली-
शूर्पादिकेषूपविशेन्न नारी ।
नो मार्ज्जनीगोमयपिण्डकादौ
कुर्य्यान्न वारिण्यवगाहनं सा ॥
अङ्गारभूत्वा न नखैर्लिखेत् क्ष्मां
कलिं वपुर्भङ्गमथो न कुर्य्यात् ।
नो मुक्तकेशी विवशाथवा स्यात्
भुङ्क्ते न सन्ध्यावसरे न शेते ॥
यस्तु तस्या भवेत्पुत्रः स्थिरायुर्ह्यसम्मतः ।
अन्यथा गर्भपतनं सा चाप्नोति न संशयः ॥ इति ।

गर्भिण्या यात्राप्राप्तौ विशेषमाह बृहस्पतिः ।

चतुर्थे मासि षष्ठे वाप्यष्टमे गर्भिणी यदा ।
यात्रा नित्यं विवर्ज्या स्यादाषाढ़े तु विशेषतः ॥ इति ।

---

* केशसंस्कारेत्यत्र कूर्पासकञ्च इति निर्णयसिन्धौ पाठः ।

अथ गर्भिणीपतिधर्म्माः ।

यथाह याज्ञवल्क्यः ।

दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं निधनं वापि तस्मात्कार्य्यं स्त्रियाः प्रियम् ॥
गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोचितम् ।
सूते चिरायुषं पुत्रमन्यथा दोषमर्हति ॥

तथा ।

वपनं मैथुनं तीर्थं वर्ज्जयेद्गर्भिणीपतिः ।
श्राद्धञ्च सप्तमान्मासात्पूर्व्वञ्चैवाप्यवेदवित् ॥

श्राद्धं श्राद्धभोजनमित्यर्थः ।

सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् ।
विदेशगमनञ्चैव न कुर्य्याद्गर्भिणीपतिः ॥

मुहूर्त्तदीपिकायाम् ।

क्षौरं शवानुगमनं नखकृन्तनञ्च
युद्धञ्च वास्तुकरणन्त्वतिदूरयानम् ।
उद्वाहमम्बुधिजलस्य तथोपयोग-
मायुःक्षयो भवति गर्भिणिकापतीनाम्* ॥

अन्यत्रापि ।

---

* उद्वाहमौपनयनं जलधेश्च गाहमायुःक्षयार्थमिति निर्णयसिन्धौ पाठः ।

प्रव्यक्तगर्भापतिरस्त्रियानं
मृतस्य वाहं क्षुरकर्म सङ्गम् ।
तस्या नु यत्नेन गयादितीर्थं
यागादिकं वास्तुविधिं न कुर्य्यात् ॥
प्रव्यक्तगर्भा वनिता भवेन्मासत्रयात्परम् ।
इति गर्भिणीपतिधर्म्माः ।

## अथ सूतिकागृहनिर्म्माणविधानम् ।

तत्रैव स्मृतिभास्करे गर्गः ।
वारेऽनुकूले राशौ तु दिने दोषादिवर्ज्जिते ।
स्वानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः ॥
रत्नकोषेऽपि ।
आसन्नप्रसवे मासि कुर्य्याच्चैव विशेषतः ।
तद्दत्प्रसवकाले स्यादिति शास्त्रेषु निश्चयः ॥
तत्स्थानमाह ज्योतिर्वशिष्ठः ।
ऐन्द्रे तु विक्रमस्थानमाग्नेय्यां पचनालयः ।
वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् ॥
याम्यायां शयनस्थानं वायव्यां पशुमन्दिरम् ।
कौवेर्य्यान्तु धनस्थानमैशान्यां देवतालयः ॥ इति ।
तद्गृहप्रवेशमपि स एवाह ।
अथातः सम्प्रवक्ष्यामि सूतिकागारवेशनम् ।

मासे तु नवमे प्राप्ते पूर्व्वपक्षे शुभे दिने ।
प्रसूतिसम्भवे काले सद्य एव प्रवेशयेत् ॥

तत्र नक्षत्रादीन्याह गर्गः ।

रोहिण्यैन्दवपौष्णेषु स्वातीवरुणयोरपि ।
पुनर्व्वसुपुष्यहस्तधनिष्ठास्वुत्तरासु च ॥
मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम् ।
मृत्यर्थनाशौ मृत्युश्च वृद्धिपुष्ट्यायुरीप्सितम् ॥
मृत्युश्च मरणं पित्रोर्मरणञ्च ततस्त्रिषु ।
मेषादिक्रमशो विद्यात्सूतिकागारवेशनम् ॥
चन्द्रेऽनुकूले राशौ तु रिक्ताषष्ठाष्टवर्ज्जिते ।
सर्व्वे चाद्य शुभाः केन्द्रे पापाश्च त्रिषड़ायगाः ।
शुभांशे शुभदृष्टौ तु सूतिकावेशनं शुभम् ॥ इति ।

उत्तरासु उत्तरफल्गुन्युत्तराषाढ़ोत्तरभाद्रपदेषु ।

तत्प्रवेशप्रकारमाह पद्मपुराणे विष्णुधर्म्मोत्तरखण्डे परशुरामं प्रति पुष्करः ।

प्रविशेत्सूतिकागारं* कृतरक्षं समन्ततः ।
सुभूमौ निर्म्मितं दिव्यं वास्तुविद्याविशारदैः ॥
प्राग्द्वारमुत्तरद्वारमथवा सुदृढ़ं शुभम् ।
देवानां ब्राह्मणानाञ्च गवां कृत्वा च पूजनम् ॥
विप्रपुण्याहशब्देन शङ्खवाद्यरवेण च ।
प्रसूता बहवस्तत्र तथा क्लेशक्षमाश्च याः ॥

---

* सूतिकागारमित्यत्र सूतिकासंज्ञमिति ख-ग-पुस्तकयोः पाठः ।

हृद्या विश्वसनीयाश्च प्रविशेयुः स्त्रियश्च तत् ।
ताश्चानुलेपनैर्हृद्यैस्तत्रैवमुपचारयेत् ॥
आहारैश्च विहारैश्च प्रसवाय सुखं द्विज ।
एरण्डमूलचूर्णेन सघृतेन तथैव ताम् ।
सुखप्रसवनार्थाय पश्चात्काये तु निक्षिपेत् ॥
इति प्रयोगपारिजाते सूतिकागृहनिर्माणप्रवेशनविधानम् ॥

अथ सूतकिधर्म्माः ।

सूतके मृतके चैव सन्ध्याकर्म्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायामादृते द्विज ॥
इति चन्द्रिकायाम् । अस्यार्थः । प्राणायाममन्त्रव्यतिरिक्त-मन्त्रान् मनसा उच्चारयेत् प्राणायाममन्त्रान् मनस्यपि नोच्चा-रयेत् ।

सन्ध्यां स्नाने त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।
तस्मात्स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेत् ॥
शिवविष्ण्वर्चनं श्रौतकर्म्माणि कुर्व्वीत "स्नातः शुद्धिमवाप्नुयात्" इति । तत्र अर्घ्यान्ते च सन्ध्या कार्य्या, सूतके सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणीकृत्य नमस्कुर्य्यादिति च पैठीनसिस्मृतेः ।
तथाच भरद्वाजः ।
सूतके मृतके कुर्य्यात्प्राणायाममन्त्रकम् ।
तथा मार्ज्जनमन्त्रांस्तु मनसोच्चार्य्य मार्ज्जयेत् ॥

गायत्रीं सम्यगुच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत् ।
मार्ज्जनन्तु न वा कार्य्यमुपस्थानं न चैव हि ॥ इति ।

पुलस्त्यश्च ।

सन्ध्यामिष्टं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजन् गच्छेदधो द्विजः ॥

इति सूतकिधर्म्माः ।

## अथ प्रकारान्तरेण गर्भधारणविधानम् ।

प्रयोगपारिजात एव ।

यस्या गर्भः प्रमीयेत तत्राग्नौ जुहुयाद्धविः ।
ब्रह्मणाग्निः संविदान* इत्याद्येन यथाविधि ॥

---

*ब्रह्मणाग्निः संविदानो रक्षोहा बाधतामितः ।
अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥ १ ॥
यस्ते गर्भममीवा दुर्णामा योनिमाशये ।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ २ ॥
यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम् ।
जातं यस्ते जिघांसति तमितो नाशयामसि ॥ ३ ॥
यस्त ऊरू विहरत्यन्तरा दम्पती शये ।
योनिं यो अन्तरारेळ्हि तमितो नाशयामसि ॥ ४ ॥
यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ५ ॥
यस्त्वा स्वप्नेन तमसा मोहयित्वा निपद्यते ।
प्रजां यस्ते जिघांसति तमितो नाशयामसि ॥ ६ ॥ (१०म. १६२सू. १-६ ऋचः ।)

इदन्तु सूक्तं षडृचम् ।

तथाचानुक्रमणिका ।

ब्रह्मणाऽग्निःषड्यस्ते रक्षोहा गर्भस्रावे प्रायश्चित्तमानुष्टुभमिति ।

आज्यशेषेण जुहुयाद्गर्भिणीप्रसवेति च ।

पिबेत चाज्यशेषेण जीवस्तस्याः प्रजायते ॥ इति ।

अन्यत्र ।

उरोष्ट इति सूक्तेन* उपतिष्ठेच्छतक्रतुम् ।

प्रजाकामो यजेन्नित्यं चरुणा दैवतं नरः ॥

उपहृत्योपहारश्च शिष्टं भुञ्जीत वाग्यतः ।

उच्छिष्टश्च प्रदातव्यं भार्य्यायै पुत्रमिच्छता ॥

धेन्वाः सरूपवत्सायाः पयसा साधयेच्चरुम् ।

अनुरूपां प्रजामाशु लभते नात्र संशयः ॥

जपरूपाण्यपि कर्म्माण्याह स एव ।

यज्ञो देवानां सूक्तं वै अयुतं विष्णुमन्दिरे ।

मृतपुत्त्रोऽनपत्यो वा सुपुत्रः सर्व्वथा भवेत् ॥

इदं सूक्तं त्र्यृचं कुत्स ऋषिरिन्द्रस्त्रिष्टुप् ।

आमनोषा जपेद्दर्गं वृहत्कन्यां लभेद्यदि ।

सुपुत्त्रं लभते पश्चात्त्वयुतं विष्णुमन्दिरे ॥

---

* उरोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
अधा नो विश्वचर्षणे द्युम्ना सुक्षत्र मंहय ॥ (५.म. ३८सू. १ऋक्।)

स यो वृषा* जपेत्सूक्तं वन्ध्या लक्षं शिवालये ।
आयुष्मन्तं सुपुत्रञ्च भाग्यवन्तं प्रसूयते ॥

सूक्तमिदमेकोनविंशत्यृचमिति द्रष्टव्यम् ।

व्यासोऽपि ।

सुदर्शनं महामन्त्रं शुचिर्भूत्वा समाहितः ।
नित्यमष्टोत्तरशतं जपन् पुत्रं लभेत्सुखम् ॥ इति ।

अथौषधान्यपि उच्यन्ते ।

तथाच श्रीधरीये व्यासः ।

अङ्कोलमूलं कल्कञ्च चूर्णीकृत्य गुड़ेन युक् ।
काकाण्डमितमश्नीयात्पुत्रिणी सा भविष्यति ॥

वशिष्ठश्च ।

उत्तमं कर्णिकामूलं पेषयित्वा ततः पिबेत् ।
पायसान्नं समश्नीयात्पुत्रिणी सहसा भवेत् ॥

गौतमोऽपि ।

क्षीरद्राक्षाङ्कुरं गृह्य पेषयित्वा पयः पिबेत् ।
दैवोदरकृतो दोषो विनश्यति सुखं भवेत् ॥

दैवमदृष्टम् उदरं गर्भः । तत्कृतस्तज्जन्यो दोषो नश्यतीत्यर्थः ।

मुद्गलोऽपि ।

वटाग्रं निम्बवीजेन गव्येन पयसा पिबेत् ।
पुत्रं प्रसूयते नारी दैवदोषो विमुच्यते ॥

---

* स यो वृषा नरां न रोदस्योः श्रवोभिरस्ति जीवपीतसर्गः ।
प्र यः सस्राणः शिश्रीत योनौ ॥ (१म. १४९सू. २ऋक् ।)

अथ तीर्थरूपाणि । तत्र पराशरः ।

महातीर्थे महायोगे महानद्योस्तु सङ्गमे ।

पलाशस्य दलात्स्नानं कुर्य्यात्पुत्रसुखार्थिनी ॥

देवराजश्च ।

पलाशदलसाहस्रात्साविनेण दलं प्रति ।

स्नपयेत्सपवित्रेण एकादश्यां प्रजार्थिनीम् ॥ इति ।

एवं पुत्रोत्पत्त्यर्थमनेके उपायाः कर्त्तव्याः "नापुत्रस्य लोकोऽस्ती-" त्यादिश्रुतेः । "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते" इत्यादिस्मृतेश्च ।

अथ प्रकारान्तरेणापि गर्भधारणोपायः कथ्यते ।

तथाच ऋग्विधाने ।

पुष्पं दृष्ट्वा तु या गर्भं न गृह्णीयाद्दयोऽन्विता ।

विष्णुर्योनिं* नेजमेष† योनिं स्पृष्ट्वा ततो जपेत् ।

ततोऽभिगमनं कुर्य्याद्गर्भं धत्ते न संशयः ॥ इति ।

अन्यत्रापि गर्भधारणविधानं पारस्करसूत्रे ।

सा यदि गर्भं न दधीत तदा सिंह्याः‡ श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थ्यां§ स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चति—

---

* विष्णुर्योनिमिति सूक्तं १०८ पृष्ठे प्रदर्शितम् ।

† नेजमेष इति सूक्तं ६५ पृष्ठे प्रदर्शितम् ।

‡ कण्टकारिकाया इति जयरामहरिहरौ ।

§ चतुर्थेऽहनीति पारस्करसूत्रे पाठः ।

इयमोषधी त्रायमाणा सहमाना सरस्वती ।
अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभम् ॥
इति मन्त्रेण ।

अथ गर्भरक्षाविधानम् ।

विधानमालायां शिशुरक्षारत्ने ।

प्रजापतिं समुद्दिश्य मास्याद्ये बलिमाचरेत् ।
श्वेतवस्त्रं पायसञ्च गव्यं क्षीरं तथा घृतम् ॥
श्वेतपुष्पं चन्दनञ्च सरलञ्चाङ्गुलीयकम् ।
कुम्भे निधाय देयो वै बलिर्धूपैस्तु धूपितः ॥
दीपैर्नीराजितश्चापि ताम्बूलेन समन्वितः ।
हिरण्यसहितं भक्त्या गवां दोहे निधापयेत् ॥

गवां दोहे प्रदोषकाले गोष्ठे देशे वा ।

एह्येहि भगवन् ब्रह्मन् प्रजाकर्त्तः प्रजापते ।
बलिं परिगृहाणेमं सापत्यां रक्ष गर्भिणीम् ॥

इति मन्त्रेण बलिं दद्यात् ।

इति बलिविधानम् ।

अथ औषधानि ।

तत्र आद्ये मासि गर्भवेदनाहरमौषधम् ।
नारायणीयटीकायामपेक्षितार्थद्योतिन्याम् ॥
प्रथमे मासि यदि गर्भिण्या गर्भवेदना स्यात्तदा दर्भमूल-

सुशीरं तगरञ्च समभागमुदकेन पिष्ट्वा चीरेण सह पाय-
येत् ।

तथाच क्रियाकालोत्तरे ।

यदि स्यात्प्रथमे मासि गर्भिण्या गर्भवेदना ।
नीलोत्पलं सनालञ्च शृङ्गाटककशेरुकम् ॥
शीततोयेन पिष्ट्वा तु चीरेणालोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

इति प्रथमे मासि गर्भपीड़ाशमनविधानम् ।

अथ द्वितीये मासि बलिः ।

समुद्दिश्याश्विनौ देवौ देयो मन्त्रेण मन्त्रितः ।
दध्यन्नं पायसं लाजाः पिण्याकं कुसुमानि च ॥
गन्धश्च धूपो दीपश्च वस्त्रेण वेष्टितो घटः ।
हेम्ना युतोऽश्वशालायाः समीपे निक्षिपेद्बलिम् ॥

क्रियाकालोत्तरे तु ।

सुगन्धवस्त्रपुष्पाणि कृष्णा च गिरिकर्णिका ।
नीलोत्पलानि चाभावे क्षुत्पलानां* समाहरेत् ।
गोदोहस्थानमालक्ष्य निक्षिपेद्बलिमुत्तमम् ॥

तन्मन्त्रस्तु ।

भगवन्तौ प्रभावन्तौ प्रगृह्णीतां बलिं त्विमम् ।
सरूपौ देवभिषजौ रक्षतां गर्भिणीमिमाम् ॥

अथ औषधम् । शोतिन्यामेव ।

---

* क्षुत्पलानामित्यत्र क्षुत्पलानीति पाठो युक्तः ।

शालूकमुत्पलं नीलं कशेरुं शृङ्गवेलकम् ।
समांशमुदके पिष्ट्वा क्षीरेणालोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

अथ तृतीये बलिः ।

गर्भिणीगर्भरक्षार्थं बलिर्मासे तृतीयके ।
रुद्रानेकादशोद्दिश्य देयो मन्त्रेण मन्त्रितः ॥
घृतमन्नञ्च लाजाश्च ध्वजश्च श्वेतचन्दनम् ।
श्वेतवस्त्राणि पुष्पाणि श्वेतधूपप्रदीपकम् ॥
श्वेतानि चम्पकान्याशु विप्र शान्तिकराणि तु ।
एतत्सर्व्वं समाहृत्य कलशे सन्निधापयेत् ॥
ऐशान्यां दिशि रात्रौ च निक्षिपेत्प्रयतः शुचिः ।
नदीतीरे गवां गोष्ठे राजद्वारे चतुष्पथे ॥

तन्मन्त्रो यथा ।

महादेवः शिवो रुद्रः शङ्करो नीललोहितः ।
ईशानो विजयो भीमो देवदेवो भवोद्भवः ॥
कपाली शम्भुरीशानो रुद्रैकादशमूर्त्तयः ।
रुद्रा एकादश प्रोक्ताः प्रगृह्णन्तु* बलिं त्विमम् ।
युष्माकं तेजसा दृष्टा नित्यं रक्षन्तु† गर्भिणीम् ॥

अथ तृतीये मासि औषधम् ।

पद्मञ्च चन्दनं तोये तगरं समभागिनम् ।

---

* प्रगृह्णन्तु इत्यत्र प्रगृह्णीत इति क-पुस्तके पाठः ।

† रक्षन्तु इत्यत्र रक्षत इति क-पुस्तके पाठः ।

पूर्व्ववद्दारिणा पिष्टं क्षीरेणालोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥ इति ।

अथ चतुर्थे बलिः ।

बलिर्मासे तृतीयो यः स च प्रोक्त*श्चतुर्थके ।
देयः प्रयत्नतो विद्वन्नात्र कार्य्या विचारणा ॥

अथ औषधम् ।

क्षीरञ्च कदलीमूलमुत्पलं वाकलं तथा ।
आलोड्य समभागेन पिबेद्रोगोपशान्तये ॥

कालोत्तरे तु ।

चतुर्थे मासि गर्भिण्या भाले जायेत वेदना ।
उशीरं कदलीमूलं पद्मनालं सशर्करम् ॥
शीततोयेन पिष्ट्वा च पिबेत्क्षीरेण संयुतम् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

अथ पञ्चमे बलिः ।

कर्म्मविपाकसमुच्चये ।

गर्भिणीगर्भरक्षार्थं पञ्चमे मासि वै बलिः ।
विनायकं समुद्दिश्य देयः संयतचेतसा ॥
विनायकं गोमयेन कुर्य्यात्पिष्टेन वा पुनः ।
चतुरस्रे स्थण्डिले च स्थापयेत्तं गणाधिपम् ॥
अभ्यर्च्य गन्धपुष्पैश्च बलिं तत्पुरतः क्षिपेत् ।
सरितः पुलिने वाथ पर्व्वताग्रेऽथवा तले ॥

---

* स एव स्यादिति ग पुस्तके पाठः ।

छायामाश्रित्य वृक्षस्य कस्यचिच्छैलकं विना ।
तत्र तं सुप्रतिष्ठाप्य गणराजं कृताकृतिम् ॥
अन्नं पक्वं तथाऽपक्वं मांसं पक्वमपक्वकम् ।
पायसञ्च मधु द्राक्षा गुड़क्षीरफलानि च ॥
कदलीफलपिण्डालमधूकानि च मूलकम् ।
लड्डुका नारिकेलञ्च कन्दमूलानि सर्पिषा ॥
सर्व्वधान्यानि लाजाश्च वराकं तिलपिष्टकम् ।
इक्षुश्च तद्रसश्चैव माध्वी पैष्टी तथा सुरा ॥
गौड़ी चैव विशेषेण धूपदीपैस्तथाविधैः ।
मद्याभ्यक्तैः समस्तैश्च पूजयेत्तं गणाधिपम् ॥

क्रियाकालोत्तरे तु ।

पक्वापक्वे तु मांसे च मत्स्या अपि विशेषतः ।
पाटलीसहकाराणां मूलं मधुसमुद्भवम् ॥
अन्येषां पादपानाञ्च विल्वादीनाञ्च मूलकम् ।

अत्र आदिशब्देन दशमूलानि ग्राह्याणि ।

एतत्सर्व्वं समाहृत्य वंशपात्रे मनोरमे ॥

मनोरमे अभ्रकादिरचनामण्डिते । स्थापयेदिति शेषः ।

तन्मन्त्रो यथा ।

एकदन्ताम्बिकापुत्र त्रिनेत्र गणनायक ।
रक्ताम्बरधर श्रीमन् रक्तमाल्यानुलेपन ॥
स्कन्दप्रिय महाबाहो पाशहस्त नमोऽस्तु ते ।
प्रगृह्णीष्व बलिञ्चेमं सापत्यां रक्ष गर्भिणीम् ॥

श्रियप्रदायकं मर्त्यमायुषाभिविवर्द्धय ।
चलत्रीनामकं पापं मम सद्यो विनाशय ॥
एवं मन्त्रं समुच्चार्य्य प्रदद्याद्गर्भिणो बलिम् ।
नमस्कुर्य्यात्प्रयत्नेन सम्प्रार्थ्य च पृथक् पृथक्* ॥
नमस्कारमन्त्रस्तु ।
वक्रतुण्ड महावीर्य्य महाभाग महाबल ।
शिरसा त्वामहं वन्दे सापत्यां रक्ष मां सदा† ॥
इत्यनेन बलिं दत्त्वा पठेद्वक्ष्यमनुं पुनः ।
अयं बलिर्मया देव त्वदर्थं प्रतिपादितः ।
रक्षेमं शिशुमानन्दरूपं शैलसुतासुत ॥
इति बलिः ।
अथ औषधम् ।
पञ्चमे मासि गर्भिण्या गर्भे चेद्वेदना भवेत् ।
तन्निवारकमेवाशु भेषजं कथ्यते मया ॥
नीलोत्पलं मृणालञ्च कोलीचोरं तथैव च ।
केसरं पद्मकञ्चैव तोयेनालोड्य तत्पिबेत् ॥
एवं न पतते गर्भः स च शूलः प्रशाम्यति ।
येषां कोलीचोरं न सेव्यं तेषामजाचोरं ग्राह्यम् ।
इत्यौषधं पञ्चमे ।

---

* बलिं दत्त्वा पठेन्मनुमिति ख-पुस्तके पाठः ।

† सापत्यां रक्ष गर्भिणीमिति ग-पुस्तके पाठः ।

अथ षष्ठे मासि बलिः ।

वसूनष्टौ समुद्दिश्य बलिर्देयोऽभिमन्त्रितः ।
घृतान्नञ्च हरिद्रान्नं खण्डं लाजाश्च पायसम् ॥
पीतवर्णानि पुष्पाणि तथा नीलोत्पलानि च ।
सकाञ्चनः पूर्णकुम्भः सर्व्वं नद्यास्तटे क्षिपेत् ॥

पूर्णो जलेनेति शेषः ।

तत्र मन्त्रो यथा ।

प्रभासः पावकः सोमः प्रत्यूषो मारुतोऽनलः ।
धरोऽधर इति ह्येते वसवोऽष्टौ प्रकीर्त्तिताः ।
प्रगृह्णन्तु बलिं चेमं सर्व्वं रक्षन्तु गर्भिणीम् ॥

अथौषधम् ।

षष्ठे मृद्वीकोत्पलकेसरं पिबेत् । अन्यच्च—

अथास्या मासि षष्ठे तु गर्भे भवति वेदना ।
पिप्पलीवीजमूले च सोत्पले च सकेसरे ॥
शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति* ॥

इति षष्ठे औषधम् ।

अथ सप्तमे मासि बलिः ।

पूर्व्ववद्बलिरुद्दिष्टो देवताश्च षण्मुखः ।

मन्त्रस्तु ।

---

* वेदना सा च शाम्यति इति ग-पुस्तके पाठः ।

स्कन्द षण्मुख देवेश शिवप्रीतिविवर्द्धन ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥

बलिक्षेपणस्थानं नदीतटमेव ।

अथ औषधम् ।

कपित्थमूलं* शालूकं शर्करायुक्तमर्द्धमा ।

अर्द्धमेति शर्करासमभागमित्यर्थः ।

शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

इत्यौषधं सप्तमे ।

अथ अष्टमे मासि बलिः ।

दुर्गामुद्दिश्य दातव्यो बलिरेवं न सीदति ।
पायसञ्चैव लाजाश्च हयधान्यं तथा घृतम् ॥
अपूपाः कृशराश्चैव माक्षिकं दधि मूलकम् ।
माषाणि यावका मुद्गाः श्यामाकाः कुसुमानि च ।
नीलोत्पलानि च तथा पूर्णकुम्भः सकाञ्चनः ॥
एतत्क्षिपेन्नदीतीरे मन्त्रेणानेन संयुतम् ॥
गिरौ वा सरितस्तीरे देवखाते तडागके ।
राजमार्गे द्रुमाधस्ताद्बलिमेनं विनिक्षिपेत् ॥

तन्मन्त्रस्तु ।

कात्यायनि महादेवि पूज्येऽनिन्द्ये निशाप्रिये ।
दुर्गे देवि महाकालि सिंहशार्दूलवाहिनि ॥

---

* कपित्थमूलमित्यत्र कपित्थत्वक् च इति ख-पुस्तके पाठ. ।

धनुःखड्गधरे देवि दुष्टदैत्यविनाशनि ।
नदीशैलप्रिये देवि कुमारि सुभगे* शुभे ॥
अष्टहस्ते चतुर्वक्त्रे पिङ्गले शुकनासिके ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥
इत्यष्टमे बलिः ।

अथ औषधम् ।

अष्टमे मासि विज्ञेयं धान्यकं केशरन्तथा ।
शालूकमुत्पलञ्चैव तथाच गजपिप्पली ।
निष्क्वाथ्य सितया सर्व्वं देयं रोगोपशान्तये ॥

कालोत्तरे तु ।

यथास्यास्त्वष्टमे मासि गर्भे भवति वेदना ।
पद्मकं गजकृष्णा च धान्यमुत्पलकन्तथा ॥
शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥
इत्यौषधम् ।

अथ नवमे मासि बलिः ।

गर्भिण्या गर्भरक्षार्थं मासेऽथ नवमे बलिः ।
देयः स्यान्मातृकोद्देशे ततः स्याद्रोगमोक्षणम् ॥
दध्योदनञ्च लाजाश्च मुद्गाश्च पुनर्दधि ।
कृशरञ्च तथा श्वेतपङ्कजानि च चन्दनम् ॥

---

* सुभगे इत्यत्र सुभद्रे इति ख-पुस्तके पाठः ।

शतपत्राणि पुष्पाणि तथान्यानि शुभानि च ।
धूपो वस्त्रं हिरण्यञ्च पूर्णकुम्भस्तथैव च ॥

तन्मन्त्रो यथा ।

प्रगृह्णीत बलिञ्चेमं मया दत्तञ्च मातरः ।
यूयं रक्षत सन्तुष्टाः सापत्यां गर्भिणीमिमाम् ॥

इति नवमे मासि बलिः ।

अथ औषधम् ।

नवमे मासि कङ्केलिं पलाशस्य तु बीजकम् ।
एरण्डमूलसंयुक्तं पिष्ट्वा तोयेन संयुतम् ॥
कृत्वा तु मोदकं धात्रीफलमानं विशेषतः ।
जीर्णान्ने भक्षितञ्चैव हरेद्गर्भव्यथां ध्रुवम् ॥

कालोत्तरे तु ।

अथास्या नवमे मासि गर्भे भवति वेदना ।
पालाशबीजकङ्केलिमूलं स्यात्पौष्करं तथा ॥
सोशीरं मोदकं कृत्वा जीर्णान्ने सघृतं पिबेत्* ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

बलिर्देयश्च चतुष्पथे कर्त्तव्यः ।

इत्यौषधं नवमे ।

अथ दशमे मासि बलिः ।

गर्भिणीगर्भरक्षार्थं मासे च दशमे बलिः ।
उद्दिश्य नैर्ऋतं देवं बलिर्देयस्तु मन्त्रितः ॥

* सघृतं पिबेदित्यत्र भोजयेद्घृतमिति क-पुस्तके पाठः ।

पक्वान्नं कृशरं लाजाः पक्वापक्वफलं तथा ।
कृष्णगन्धं कृष्णवस्त्रं कृष्णानि कुसुमानि च ॥
इक्षूणां निक्षिपेत्तत्र रसं राक्षसमन्त्रतः ।
धूपो दीपश्च नैवेद्यं बलये सम्प्रदीयते ॥
नीलोत्पलानि कुम्भान्तः* सजलानि विनिक्षिपेत् ।
दक्षिणाशाम्प्रति तथा नीला तत्र विनिक्षिपेत् ॥

मन्त्रस्तु कुक्कुटाचार्य्यमते ।

ॐ हूं ह्रां क्रीं स्वाहा ।
बलिं गृहाण रक्षस्त्व मया दत्तं समाहृतम् ।
बलिं त्वमवलोकस्व सापत्यां रक्ष गर्भिणीम् ॥
निर्व्विघ्नं कुरु नैर्ऋत्य गर्भिणीगर्भपीड़नात् ।
प्रेतासन महाबाहो कुमुदेश वरप्रिय ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥

अत्र कलौ ब्राह्मणैर्मद्यं न निक्षेपणीयं किन्तु इक्षुरसो देयः ।

अथ औषधम् ।

दशमे काश्मीरोत्पन्नं मधूकं तत्सम्मिततण्डुलेन पिष्ट्वा क्षीरेणालोड्य तत्पिबेत् ।

कालोत्तरे तु ।

अथास्या दशमे मासि गर्भे भवति वेदना ।
शर्करोत्पलकञ्चैव मधूकं मुद्गमेव च ॥

---

* कुम्भान्तरित्यत्र कुम्भान्ते इति ग-पुस्तके पाठः ।

शतपत्राणि पुष्पाणि तथान्यानि शुभानि च ।
धूपो वस्त्रं हिरण्यञ्च पूर्णकुम्भस्तथैव च ॥

तन्मन्त्रो यथा ।

प्रगृह्णीत बलिञ्चेमं मया दत्तञ्च मातरः ।
यूयं रक्षत सन्तुष्टाः सापत्यां गर्भिणीमिमाम् ॥

इति नवमे मासि बलिः ।

अथ औषधम् ।

नवमे मासि कङ्केलिं पलाशस्य तु वीजकम् ।
एरण्डमूलसंयुक्तं पिष्ट्वा तोयेन संयुतम् ॥
कृत्वा तु मोदकं धात्रीफलमानं विशेषतः ।
जीर्णान्ते भक्षितश्चैव हरेद्गर्भव्यथां ध्रुवम् ॥

कालोत्तरे तु ।

अथास्या नवमे मासि गर्भे भवति वेदना ।
पालाशवीजकङ्केलिमूलं स्यात्पौष्करं तथा ॥
सोशीरं मोदकङ्कृत्वा जीर्णान्ते सघृतं पिबेत्* ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥

बलिक्षेपश्च चतुष्पथे कर्त्तव्यः ।

इत्यौषधं नवमे ।

अथ दशमे मासि बलिः ।

गर्भिणीगर्भरक्षार्थं मासे च दशमे बलिः ।
उद्दिश्य नैर्ऋतं देवं बलिर्देयस्तु मन्त्रितः ॥

---

* सघृतं पिबेदित्यत्र भोजयेद्घृतमिति क-पुस्तके पाठः ।

पक्वान्नं कृशरं लाजाः पक्वापक्वफलं तथा ।
कृष्णगन्धं कृष्णवस्त्रं कृष्णानि कुसुमानि च ॥
इक्षूणां निक्षिपेत्तत्र रसं राक्षसमन्त्रतः ।
धूपो दीपश्च नैवेद्यं बलये सम्प्रदीयते ॥
नीलोत्पलानि कुम्भान्तः* सजलानि विनिक्षिपेत् ।
दक्षिणाशाम्प्रति तथा नीत्वा तत्र विनिक्षिपेत् ॥

मन्त्रस्तु कुक्कुटाचार्य्यमते ।

ॐ हूं ह्रां क्रीं स्वाहा ।
बलिं गृहाण रक्षस्व मया दत्तं समाहृतम् ।
बलिं त्वमवलोकस्व सापत्यां रक्ष गर्भिणीम् ॥
निर्व्विघ्नं कुरु नैऋत्य गर्भिणीगर्भपीड़नात् ।
प्रेतासन महाबाहो कुमुदेश वरप्रिय ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥

अत्र कलौ ब्राह्मणैर्मद्यं न निक्षेपणीयं किन्तु इक्षुरसो देयः ।

अथ औषधम् ।

दशमे काश्मीरोत्पलं मधूकं तत्सम्मिततण्डुलेन पिष्ट्वा क्षीरेणालोड्य तत्पिबेत् ।

कालोत्तरे तु ।

अथास्या दशमे मासि गर्भे भवति वेदना ।
शर्करोत्पलकञ्चैव मधूकं मुद्गमेव च ॥

---

* कुम्भान्तरित्यत्र कुम्भान्ते इति ग-पुस्तके पाठः ।

शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य तत्पिबेत् ।
एवं न पतते गर्भः स च शूलः प्रशाम्यति ॥
इति दशमे मासि औषधम् ।

अथ एकादशे बलिः ।

यद्यपि दशमे मासि जायत इति श्रुतिवचनाद्दशमे मासि प्रसवेन एकादशद्वादशमासयोर्गर्भरक्षणानुपपत्तिस्तथापि दैवाद्वातुषाद्वा प्रतिबन्धाद्दशमे मासि अप्रसवस्तदा एकादशे द्वादशे वा प्रसवस्तयोः परमावधित्वात् । तदभिप्रायेणेदम् ।

गर्भिणीगर्भरक्षार्थं मासि चैकादशे बलिः ।
वासुदेवं समुद्दिश्य देयो नात्र विचारणा ।
पायसापूपपिष्टञ्च गुडलाजाश्च सक्तवः ॥

पिष्टं पिष्टान्नम् ।

श्यामो ध्वजस्तथा धूपः श्यामं वै पुष्पचन्दनम् ।
कुम्भे निधाय श्यामे तु बोधिवृक्षतले* शुभे ॥
वृन्दावने नदीतीरे निक्षिपेद्बलिमुत्तमम् ।

तन्मन्त्रस्तु ।

पाञ्चजन्यप्रभायुक्त कौस्तुभोद्योतिताङ्गक ।
प्रगृह्णीष्व बलिञ्चेमं सापत्यां रक्ष गर्भिणीम् ॥
इत्येकादशे बलिः ।

औषधन्तु दशमे मासि उक्तमेव ।

क्रियाकालोत्तरे तु ।

* अश्वत्थतरुतले, बोधिद्रुमश्चलदल इत्यमरोक्तेः ।

पद्मोत्पलं मधूकञ्च तालकेनापि संयुतम् ।
शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य तत्पिबेत् ॥
एवं न पतति गर्भः स च रोगः प्रशाम्यति ।

इत्यौषधमेकादशे ।

अथ द्वादशे मासि बलिः ।

अथास्मा द्वादशे मासि पूर्ववद्वलिमाचरेत् ।

औषधन्तु ।

पद्मं शृङ्गाटकञ्चैव उत्पलञ्च सनालकम् ।
शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य तत्पिबेत् ॥
एवं न पतति गर्भो वेदना सा च शाम्यति ।

इति शिशुरक्षारत्नोक्तं द्वादशसु मासेषु गर्भरक्षणविधानम् ।

## अथ सुखप्रसवोपायाः ।

विधानमालायाम् ।

उपोदक्याम्लु* मूलानि तैलयुक्तानि कारयेत् ।
योनेः प्रलेपो दातव्यः सुखप्रसवहेतवे ॥ इति ।

अन्यत्रापि ।

पत्राणि निम्बस्य च सम्प्रपिष्य
त्वक्संयुतां वा तुलसीं रसाक्ताम् ।
मूलाप्रधानञ्च कपित्थपत्रं
करञ्जवीजञ्च समस्तमेतत् ॥

---

* उपोदकी पूतिका। इति शब्दकल्पद्रुमः ।

अजापय:संयुतमेव पथ्यं
घृतञ्च तैलेन युतं समस्तम् ।
योनेः प्रलेपं विदधीत तेन
तथापि तस्याः खलु सौख्यसिद्धैर ॥
गर्भान्तरादर्भक एति सम्यग्-
द्वारन्तु योनेर्न करोति दुःखम् ।
एवं विधानं न करोति जानन्
स भ्रूणहा नात्र विचार्य्यमस्ति ॥

तत्र योनिलेपनमन्त्रः ।

हिमवत्युत्तरे पार्श्वे शङ्खिनी* नाम पक्षिणी ।
तस्या नूपुरशब्देन विशल्या भव गर्भिणी स्वाहा ॥

अथ जलाभिमन्त्रणम् ।

ॐ ऐं क्लीं भगवति भगमालिनि चलय चालय भ्रमय भ्रामय पुष्पं विकाशय विकाशय स्वाहा। ॐ नमो भगवते मकरकेतवे पुष्पधन्वने चूत†चालितसकलसुरासुरचेतनाय युवतिभगवासिनि रते ॐ क्लीं गर्भं चालय चालय स्वाहा। ॐ नमो भगवति पद्मासनस्थे सितहंसमारूढ़े षष्ठीरूपिणि अभयवरपुस्तककमलधारिणि ॐ क्लीं नमः ।

---

* शङ्खिनीत्यत्र शेखरीति क-पुस्तके पाठः ।

† चूतेत्यत्र दूतेति इतेति च ख-ग-पुस्तकयोः पाठौ ।

एभिर्मन्त्रैः सप्तवारमभिमन्त्रितं पात्रस्थमुदकं पाययीत* । एवं कृते सुखेन प्रसवो भवति ।

यद्वा । प्रमन्दिने इति मन्त्रस्य आङ्गिरसः कुत्सऋषिः गर्भस्रावो देवता जगती छन्दः सुखप्रसवार्थे जपे विनियोगः ।

ॐ प्रमन्दिनेऽपि तु मदर्चतावचो
य: कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं
मरुत्वन्तं सख्याय हवामहे ॥ (१म, १०१सू, १ऋक् ।)

अनेन मन्त्रेण सप्तकृत्वोऽभिमन्त्रितं पानीयं गर्भिणीं पाययेत् । एवञ्च सुखप्रसवो भवति ।

इदमुक्तमृग्विधाने ।

प्रमन्दिन इत्यसूयन्त्यां जपेद्गर्भप्रमोचनीम् ।
इन्द्रञ्च मनसा ध्यायेन्नारी गर्भं विमुञ्चति ॥ इति ।

अन्यच्च ।

विजिहीष्व वनस्पते तदिदं च्यावनं स्मृतम् ।
प्रच्यावयितुकामः स्याच्च्यावयेत्तदिदं जपन् ॥
द्विषन्तं वा पदाक्रम्य भूमौ जन्तुं समीक्षतम् ।
निष्पिषन्निव संग्रामाच्च्यावयेन्नात्र संशयः ॥

इत्युक्ताभिहितम् ।

स्त्रियं गर्भप्रमूढां वा पाययेदनुमन्त्रितम् ।
उदकं च्यावनेनैव गर्भोऽधश्च्यवते सुखम् ॥ इति ।

---

* पाययीत इत्यत्र पाययेदिति पाठो युक्तः ।

पाठस्तु। विजिहीष्वेति पञ्चर्चस्य सूक्तशेषस्य आत्रेयः सप्तवध्रिर्ऋषिः गर्भस्रावो देवता अनुष्टुप् छन्दः सुखप्रसवसिद्ध्यर्थं जलाभिमन्त्रणे विनियोगः।

विजिहीष्व वनस्पते योनिः सूष्यन्त्या इव।
श्रुतं मे अश्विनाहवं सप्तवध्रिञ्च मुञ्चतम्॥

(५म, ७८सू, ५ऋक्।)

भीताय नाधमानाय ऋषये सप्तवध्रये।
मायाभिरश्विना युवं वृक्षं सञ्च विचाचथः॥

(५म, ७८सू, ६ऋक्।)

यथा वातः पुष्करिणीं समिङ्गयति सर्व्वतः।
एवा ते गर्भ एजतु निरैतु दशमास्यः॥

(५म, ७८सू, ७ऋक्।)

यथा वातो यथा वनं यथा समुद्र एजति।
एवा त्वं दशमास्य सहापेहि* जरायुणा॥

(५म, ७८सू, ८ऋक्।)

दशमासाञ्छशयानो कुमारो अधि मातरि।
निरैतु जीवो अक्षतो जीवो जीवन्त्या अधि॥

(५म, ७८सू, ९ऋक्।)

इति पञ्चर्चेन जलमभिमन्त्र्य वा पाययेत्। एवं कृते च सुखप्रसवो भवति।

---

* सहापेहि इत्यत्र सहावेहीति ऋग्वेदे पाठः।

दशमासानुषित्वासौ जननीजठरे सुखम्।
निर्गच्छतु सुखं जीवो जननी चापि जीवतु ॥

इति पौराणमन्त्रेणापि जलाभिमन्त्रणं कार्य्यमिति कश्चित्।

पुरुषं हवा अयमादितो इत्याद्यारण्यकं वृहदारण्यकञ्च जपेत् ॥

इति सुखप्रसवविधानम्।

अथ जातकर्म्म।

प्रयोगपारिजाते वशिष्ठः।

श्रुत्वा जातं पिता पुत्त्रं सचेलं स्नानमाचरेत्।

मनुः।

प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म्म विधीयते ॥

वर्द्धनं छेदनम्।

हेमाद्रौ वैजवापः।

जन्मनोऽनन्तरं कार्य्यं जातकर्म्म यथाविधि।
दैवादतीतः कालश्चेदतीते सूतके भवेत् ॥

कार्ष्णाजिनिः।

प्रादुर्भावे पुत्त्रपुत्त्र्योर्ग्रहणे चन्द्रसूर्य्ययोः।
स्नात्वानन्तरमात्मीयान् पितॄन् श्राद्धेन तर्पयेत् ॥

पुत्त्रास्त्वमन्त्रकं कार्य्यम्।

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रक इत्युक्तेः।

इदं रात्रावपि कार्य्यम्।

पुत्रजन्मनि यात्रायां शर्व्वर्य्यामपि कारयेत्*

इति व्यासोक्तेः।

इदञ्च जननानन्तरमेव कार्य्यम्। न जातेष्टिवदशौचापगमे।

जातमात्रकुमारस्य जातकर्म्म विधीयते।

स्तनप्राशनतः पूर्व्वं नाभिकर्त्तनतोऽपि वा॥

इति वैजवापोक्तेः।

एतेन नैमित्तिकमपि इदं जातेष्टिवदशौचान्ते न कार्य्यमिति गम्यते। जाते कुमारे पितॄणामामोदात् पुण्यं तदहरिति हारीतोक्तेश्च।

अत्र श्राद्धमामेन हेम्ना वा कार्य्यम्।

आमश्राद्धेन हेम्ना वा पितॄणां श्राद्धमाचरेत्।

जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि॥

इत्यादित्यपुराणोक्तेः।

पुत्रजन्मनि कुर्व्वीत श्राद्धं हेम्नैव बुद्धिमान्।

यद्वामान्नेन कुर्व्वीत पक्वान्नेन कदाच न॥

इति स्मृतेश्च।

इदं जातकर्म्म जननाशौचे मरणाशौचे च कार्य्यमित्युक्तं मिताक्षरायाम्।

तथाच प्रजापतिः।

---

* अपि कारयेदित्यत्र दत्तमक्षयमिति क-पुस्तके पाठः।

अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचेन शुध्यति॥

केचित्तु।

मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत्।
अशौचापगमे कार्य्यं जातकर्म्म यथाविधि॥

इति स्मृतिसङ्ग्रहोक्तेर्मृताशौचमध्ये चेत् पुत्रजन्म तदा तदशौचापगमे जातकर्म्म कार्य्यमित्याहुः।

स्मृत्यर्थसारे चैवमेवोक्तम्*।

यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम्।
छिन्ने नाले ततः पश्चात्सूतकन्तु विधीयते।
दुष्टकालेऽपि कुर्व्वीत जातकर्म्म यथाविधि॥

दुष्टकालेऽपि विधानाच्चात्र अशौचादिदोषः। अत्र सर्व्वत्र जातकर्म्मनामकरणादौ कालातिक्रमेण कालान्तरे क्रियमाणे नक्षत्राद्यादरः कार्य्यः।

देशकालोपघाताद्यैः कालातिक्रमणं यदि।
अनस्तगेज्येन्दुसिते तत्कार्य्यं ह्युत्तरायणे॥

इति नारदोक्तेः।

मुख्यालाभे विधिश्चेन विधिसिन्धः प्रमादजः।
नक्षत्रतिथिलग्नानां विचार्य्यैवं पुनः पुनः॥

इति वृहस्पत्युक्तेश्च।

---

* स्मृत्यर्थसारे तु विकल्प उक्त इति ग-पुस्तके पाठः।

यच्चाव्याह श्रीधरः ।

मृदुध्रुवचरक्षिप्रभैश्चैषामुदयेऽपि च ।

गुरौ शुक्रे वाथ केन्द्रे जातकर्म्म च नाम च ॥

कार्य्यमिति शेषः ।

मृद्वादिलक्षणमपि तेनैवोक्तम् ।

रोहिण्युत्तरभं स्थिरं गिरिशमूलेन्द्रोरगादारुणं

क्षिप्रं चाश्विदिनेशपुष्यमनलेन्द्राग्नी तु साधारणम् ।

उग्रं पूर्व्वमघान्तकं मृदुगति त्वाष्ट्रान्त्यमैत्रं चरं

विष्णुस्वातिशतोडुवस्वदितयः कुर्य्युः स्वसंज्ञाफलम् ॥

शतोडुः शततारका ।

इति जातकर्म्मविधानम् ।

अथ प्रकारान्तरेण सूतकिधर्म्मविशेषकथनम्* ।

सूतके मृतके चापि सन्ध्याकर्म्म न सन्त्यजेत् ।

मनसोच्चारयेन्मन्त्रान् प्राणायामविवर्ज्जितान् ॥

प्राणायामान्मनसापि नोच्चारयेदित्यर्थः ।

सन्ध्यां स्नानं त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।

तस्मात्स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेत् ॥

---

* यद्यपि सूतकिधर्म्मा वा २४६ पृष्ठे प्रदर्शनं कृतं, तथापि ते तत्राप्रदर्शितैर्विशेषैः सह पुनरत्र प्रदर्शिताः, इष्यते च संग्रहीतुरीदृशो निसर्गः ।

शिवविष्णुर्च्चनं दीक्षां जपञ्चाग्निपरिग्रहम्।
श्रौतकर्म्माणि कुर्व्वीत स्नातः शुद्धिमवाप्नुयात्॥

सन्ध्यादौ पुलस्त्यः।

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्।
न त्यजेत्सूतके चापि त्यजन् गच्छेदधो द्विजः॥

होमोऽत्र श्रौतः।

होमं श्रौते तु कर्त्तव्यं शुष्कान्नेन फलेन वा।
अकृतं हावयेत्स्मार्त्ते तदभावे कृताकृतम्॥

इति कात्यायनवचनात्। अकृतं व्रीह्यादि, कृताकृतं तण्डुलादि, हावयेदन्येनेत्यर्थः।

सूतके समनुप्राप्ते स्मार्त्तं कर्म्म कथं भवेत्।
पितृयज्ञं चरुं होममसगोत्रेण कारयेत॥

इति जातूकर्ण्योक्तेः चरुः स्थालीपाकः श्रवणाकर्म्मादिश्चेति विज्ञानेश्वर आह।

वैश्वदेवस्तु अन्येनापि न कार्य्यः,
"विप्रः स्यात्सूतके नित्यं वैश्वदेवविवर्ज्जित" इति सम्वर्त्तोक्तेः।

अत्र अध्यातैव सन्ध्या कार्य्या।

अध्याता मानसी सन्ध्या कुशवारिविवर्ज्जिता।

इति वचनात्।

पैठीनसिस्तु अत्र मन्त्रोच्चारणमप्याह।

सूतके सावित्र्या जलाञ्जलिं प्रक्षिप्य प्रदक्षिणीकृत्य सूर्य्यं ध्यायन् दिग्भ्यो नमस्कुर्य्यादिति।

सूतके मृतके कुर्य्यात्प्राणायाममन्त्रकम् ।
तथा मार्ज्जनमन्त्रांस्तु मनसोच्चार्य्य मार्ज्जयेत् ॥
गायत्रीं सम्यगुच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत् ।
मार्ज्जनन्तु न वा कार्य्यमुपस्थानं न चैव हि ॥

इति च भारद्वाजः ।

जाबालम् ।

सन्ध्यां पञ्च महायज्ञान्नैत्यिकं स्मृतिकर्म्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥

तन्मध्ये अशौचमध्ये, हापयेत् त्यजेत् । स्मृतिकर्म्म वैधस्नानादि । अत्र च मुहूर्त्तमप्यप्रयतो न स्यादिति वचनादस्पृश्यस्पर्शनादौ शौचस्य स्वकृतिसाध्यत्वात्तदर्थं स्नानादिकं कर्त्तव्यं, मूत्रोत्सर्गादि-निमित्ताशौचे हस्तप्रक्षालनादिवत् । एवं भोजनाश्रितत्वात् प्राणाहुत्यादि* च कर्त्तव्यम् । एवञ्च कर्म्माभ्यन्तरे चाप्रायत्ये शौचसम्पादकतया स्नानादिकं नैमित्तिकाङ्गत्वान्न व्यवधायकम्, अतएव पूर्व्वकृतानां न पुनः करणम् ।

तथाच जाबालः ।

कर्म्ममध्ये तु यः कश्चिद्यदि स्यादशुचिर्नरः ।
स्नात्वा कर्म्म पुनः कुर्य्यादन्यथा विफलं भवेत् ॥

यज्ञपार्श्वेऽपि ।

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च ।
प्रेतपिण्डक्रियावर्ज्जं सूतके विनिवर्त्तते ॥

---

* प्राणाय स्वाहा अपानाय स्वाहा इत्यादिरूपम् ।

अशुचिर्देवपितृषिनामानि च न कीर्त्तयेत् ।

इति वचनन्तु विष्णुनामातिरिक्तपरम् ।

न देशनियमस्तत्र न कालनियमस्तथा ।

नोच्छिष्टादौ निषेधोऽस्ति विष्णोर्नामनि लुब्धके ॥

इति वचनात् ।

अभिवादयेदित्यनुवृत्तौ शङ्खः ।

नाशुचिर्न जपन्न दैवपितृकार्य्यं कुर्व्वन्निति ।

नारदोऽपि ।

अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम् ।

स्नात्वा नित्यञ्च निर्व्वर्त्त्यमानस्याक्रियया तु वै ॥

वाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् ।

यदा कामी न चेत्कामी नित्यं पूर्व्ववदाचरेत् ॥

नित्यञ्चाशुचिकर्त्तव्यं प्रेततर्पणादि, कामी कृततादृशसङ्कल्पः ।

अन्यत्रापि ।

जपो देवार्च्चनविधिः कार्य्यो दीक्षान्वितैर्नरैः ।

नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ॥

अतएव मन्त्रग्रहणादिने तथाविधा प्रतिज्ञा राघवभट्टेन लिखिता ।

यथा ।

वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम् ।

न त्वनभ्यर्च्च्य भुञ्जीत भगवन्तं त्रिलोचनम् ॥ इति ।

अपूजिते शिवे भुक्त्वा प्रासादाष्टशतं जपेत् ।

त्रिलोचनमित्यत्र अधोक्षजमिति केचित् पठन्ति ।

यत्तु ।

यदि स्यादशुचिस्तत्र स्मरेन्मन्त्रं न तूच्चरेत् ।

मनो हि सर्व्वजन्तूनां सर्व्वदैव शुचि स्मृतम् ॥

इति वचनं तन्मूत्रोच्चाराद्यशौचपरं मन्त्रभेदपरं वा ।

अन्यत्रापि ।

अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि ।

मन्त्रैकशरणो विद्वान्मनसैव सदाभ्यसेत् ॥

मरीचिश्च ।

लवणे मधुमांसे च पुष्पमूलफलेषु च ।

शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च ॥

तैलौषध्यजिने चैव पक्कापक्के स्वयङ्गृहे ।

पण्येषु चैव सर्व्वेषु नाशौचं मृतसूतके ॥

पक्कं शुष्कान्नं शक्तुलाजादि, अपक्कं तण्डुलादि । पण्येषु चेति पृथगभिधानात्तेषु अशौचिना दत्तेष्वपि न दोषः ।

मानसमप्यशुचौति मानसोऽपि जननमरणयोरनध्याय इति च बौधायनः ।

इति सूतकिधर्म्मविशेषविधानम् ।

## अथ रात्रिसूक्तजपविधानम् ।

तत्र सदाचारात्प्राप्तं तदपि शान्तिसूक्तजपपूर्व्वकं जप्तव्यम् । शान्तिसूक्तानि यथा ऋग्विधाने ।

आनोभद्रीय*मायुष्यं वैश्वदेवं† जपेन्मुनिः।
मुमूर्षुरपि जप्त्वैतद्दीर्घमायुरवाप्नुयात्॥

तथा।

स्वस्त्यात्रेयं‡ जपेन्नित्यं प्रति प्रातः शुचिर्द्विजः।
एतत्स्वस्त्ययनं पुण्यं सर्व्वकल्मषनाशनम्॥
सुहृदं ज्ञातिनश्चैव गच्छन्तमनुमन्त्रयेत्।
स्वस्ति पन्थामिति§ प्रोच्य स्वस्तिमान् व्रजतेऽध्वनि।
शश्वतीः¶ शम इन्द्राग्नी|| इत्येतान्सततं जपेत्॥

एतत्सूक्तजपफलञ्च तत्रैवोक्तम्।

न रक्षोभ्यो न भूतेभ्यो व्याधिभ्यो न भयं भवेत्। इति।

तथा।

---

* आनोभद्रीयं ७१ पृष्ठे प्रदर्शितम्।

† देवीः षडुर्व्वीरुरुनः कृणोत विश्वेदेवास इह वीरयध्वम्।
मा हास्महि प्रजया मा तनूभिर्मारधाम द्विषते सोम राजन्॥
इत्यादिकम् ऋग्वेदीयब्रह्मकर्म्मणि मृग्यम्।

‡ अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम्।
प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नो अस्तु॥ ऋग्वेदिब्रह्मकर्म्मणि।

§ स्वस्ति पन्थामनुचरेम सूर्य्याचन्द्रमसाविव।
पुनर्ददताघ्नता जानता सङ्गमेमहि॥ ऋग्वेदिब्रह्मकर्म्मणि।

¶ शश्वतीः पारयन्त्येते तं पृच्छन्ति वधो युजा।
अप्यारं तं यमाकेतु य एवेदमिति ब्रवत्॥ ऋग्वेदपरिशिष्टे।

|| शम इन्द्राग्निसूक्तं ९० पृष्ठे प्रदर्शितम्।

जपेदप्रतिरथं सूक्तं सर्व्वविघ्ननिवारणम् ।
अनूद्येति स्वस्त्ययनं जपेत नियतव्रतः ॥
इति आग्निसूक्तानि ।

अथ रात्रिसूक्तं यथा ऋग्विधाने ।

रात्रिं प्रपद्येत सदा शुचिर्व्वीर्णव्रतो निशि ।
यं कामयेत* न पुनर्जायेयमिति योनिषु ।
सहस्रकृत्वो मनसा जपेद्रात्रीति मानवः ॥

रात्रीत्याद्युक्ता फलमभिहितम् ।

रात्रिसूक्तं जपन्नेव तं कालं प्रतिपद्यते ।
न योनिं पुनरायाति सर्व्वपापैः प्रमुच्यते ॥ इति ।

अथ रात्रिसूक्तानि । तानि च अल्पत्वाल्लिख्यन्ते ।

रात्रीत्यष्टर्चस्य रात्रिसूक्तस्य(१०म,१२७सू,) सौभरः कुशिक-ऋषी रात्री देवता गायत्री च्छन्दः रात्रिसूक्तजपे विनियोगः ।

रात्रीव्यख्य दायती पुरुत्रा देव्यक्षभिः ।
विश्वा अधि श्रियोऽधित ॥ १ ॥
ओर्वप्रा अमर्त्या निवतो देव्युद्वतः ।
ज्योतिषा बाधते तमः ॥ २ ॥
निरुस्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ॥ ३ ॥
सानो अद्य यस्या वयं निते यामन्न विक्ष्महि ।
वृक्षे न वसतिं वयः ॥ ४ ॥

---

* यं कालं प्रतिपद्येत इति ग-पुस्तके पाठः, स च छन्दोभङ्गादयुक्तः ।

निशामासो अविक्षत् निपद्वन्तो निपक्षिणः ।
निश्येनासश्चिदर्थिनः ॥ ५ ॥
यावया वृक्यं वृकं यवय स्तेन मूर्म्ये ।
अथानः सुतरा भव ॥ ६ ॥
उपमा पेपिशत्तमः कृष्णं व्यक्तमस्थित ।
उष ऋणेव यातय ॥ ७ ॥
उप ते गा इवाकरं वृणीष्व दुहितर्दिवः ।
रात्रिस्तोमं न जिग्युषे ॥ ८ ॥

आरात्रिपार्थिवमित्यादिकं परिशिष्टमपि पठनीयम् ।
तद्य यथा ।

आरात्रिपार्थिवं रजः पितुरप्रायि धामभिः ।
दिवः सदांसि वृहतीवितिष्ठस आत्वेषं वर्त्तते तमः ॥
ये ते रात्रि नृचक्षसो युक्तासो नवतिर्नव ।
अशीतिः संत्वष्टा उतो ते सप्तसप्ततिः ॥
रात्रिं प्रपद्ये जननीं सर्व्वभूतनिवेशनीम् ।
भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ॥
संवेशनीं संयमनीं ग्रहनक्षत्रमालिनीम् ।
प्रपन्नोऽहं शिवां रात्रिं भद्रे पारमशीमहि ॥
भद्रे पारमशीमहि ॐ नमः । (ऋग्वेदपरिशिष्टे ।)

वेदान्तराध्यायिभिस्तु स्वस्ववेदे प्रसिद्धानि शान्तिसूक्तरात्रिसूक्तानि पठनीयानि न्यायसाम्यात् ।

इति विधानपारिजाते रात्रिसूक्तजपविधानम् ।

अथ बालसम्बन्धीनि विधानानि।

स्कान्दे स्कन्दसूर्य्यसंवादे।

श्रीसूर्य्य उवाच।

केन कर्म्मविपाकेन बालानां जायते गदः*।
जातमात्राण्यपत्यानि न पापं परिकुर्व्वते॥
आहारश्चैव निद्रा च रुदितं हास्यमेव च।
स्वाभाविकमिदं देव कर्म्म चैषां षडानन॥
कर्म्मणस्त्वस्य करणात्कथं पापं प्रजायते।
पापं विना कथं व्याधिः पीड़यत्यखिलाञ्छिशून्॥
तेषां कर्म्मफलं किंवा मातापित्रोस्तु कर्म्मजम्।

स्कन्द उवाच।

येन कर्म्मविपाकेन शिशूनां जायते गदः।
तत्सर्व्वं कथयिष्यामि पृच्छतस्ते दिवाकर॥
लङ्कायां रावणो नाम पौलस्त्यो राक्षसेश्वरः।
स्वसारस्तस्य वीरस्य द्वादशासन्महाभयाः॥
ताभिः कृतं तपो घोरं सर्व्वलोकभयप्रदम्।
पीड़ितं ताभिरखिलं जगत्तीव्रतपोबलात्॥
रुद्रस्त्वाराधितस्ताभिस्तपसा तीव्रतेजसा।
प्रसन्नो भूतवान्देवस्ताभ्य एवं वरं ददौ॥

---

* गद इत्यत्र व्यथेति ग-पुस्तके पाठः।

श्रीरुद्र उवाच।

वरदोऽहं वरार्होभ्यो युष्मभ्यं रजनीचराः।
युष्माकं भविता भक्ष्यं प्राणिनां देहसम्भवम्* ॥
वसासृङ्मांसमेदोऽस्थिमज्जाशुक्रात्मकं सदा।
एवमुक्ते महादेवे पुनस्ता असुराङ्गना ॥
देहि देवेश भक्ष्यं नो जीवतामेव शङ्कर।
तच्छ्रुत्वा वचनं तासां चुकोप परमेश्वरः ॥

श्रीरुद्र उवाच।

ब्रह्मवंशसमुद्भूतास्तपोवृद्धिपरायणाः।
तत्कथं ब्रह्मघाताय चेतो वः परिवर्त्तते ॥

राक्षस्य ऊचुः।

यदि प्रसन्नो भगवान्ददात्वस्मत्प्रियं शिवः।
सर्व्वेषामपि बालानां मेदसा तृप्तिरेव नः ॥

श्रीरुद्र उवाच।

या स्त्री निशामुखेऽश्नाति बालं स्पृशति भुञ्जती।
प्रसूतिसमयेऽभ्यङ्गं न करोति प्रमादतः ॥
नग्ना निद्राति रात्रौ या निष्पन्नसुरता सती।
तस्या बालं दिने मासे वर्षे वापि विशेषतः ॥
आद्ये तु दिवसे मासे वर्षे वाथ विमोचनौ।
गृह्णातु मत्प्रसादेन ज्वराद्यैर्वेदनोच्चयैः ॥

---

* मतप्राप्यङ्गसम्भवमिति ख-पुस्तके पाठः।

द्वितीये मोहिनी नाम सुनन्दा तु* तृतीयके ।
चतुर्थे पूतना नाम पञ्चमे ह्यासुरी तथा ॥
षष्ठे तु रेवती नाम बालं गृह्णातु सत्वरम् ।
सप्तमे शकुनी नाम अष्टमे च पिशाचिका ॥
देवता पाशिनी नाम गृह्णातु नवमे शिशुम् ।
महामारी तु दशमे कालिकैकादशे तथा ॥
द्वादशे भामिनी देवी पीड़ाकरणतत्परा ।
पूर्व्वमेवं कुरुध्वं भोः पीड़ां बालकविग्रहे ॥
आत्मनो दिवसे मासे वर्षे वापि पृथक् पृथक् ।
निमित्ते सति गृह्णीध्वं शुचौ तु न कदाचन ॥
युष्मभ्यं बलिदानं ये विधास्यन्ति यथाविधि† ।
तेषान्तु बालकान् यूयं सन्तुष्टाः परिमुञ्चत ।
एवं लब्धवराः सर्व्वाः पीड़यन्ति शिशून् हि ताः ॥

## अथ दिनमासाब्ददेवतापीड़ाशमनविधानम् ।

प्रथमे दिवसे मासे वर्षे देवी विमोचनी ।
रुद्रप्रसादादासाद्य रन्ध्रं गृह्णाति बालकान् ॥
तस्यास्तु जायते पीड़ा शिशूनां तीव्रवेदना ।
ज्वरस्तु प्रथमं तावन्नेत्ररोगस्ततः परम् ॥

---

* सुनन्दा तु इत्यत्र चनन्दा तु इति ग-पुस्तके पाठः ।

† यथाविधि इत्यत्र ऋखिलं परमिति क-पुस्तके पाठः ।

न गृह्णाति स्तनं शिशो वान्तिरात्यन्तिकी भवेत् ।
मुष्टिं बध्नाति वेगेन दन्तान्दन्तैर्दशत्यलम् ॥
इत्थं प्रजायते पीड़ा विमोचन्या दिवाकर ।
तस्याः पूजां प्रवक्ष्यामि बालानां शान्तिकारिणीम् ॥
करवी* रक्तपुष्पाणि चन्दनं रक्तमुत्तमम् ।
धूपस्तु शिवनिर्म्माल्यं सविल्वदलमुत्तमम् ॥
दीपास्तु पञ्च विज्ञेयास्तथा पञ्चैव पोलिकाः ।
मुष्टिकाः पञ्च विज्ञेया ध्वजाः पञ्च सुपीतकाः ॥
ताम्बूलवीटिकाः पञ्च पूगीफलसमन्विताः ।
रक्ततण्डुलभक्तस्तु प्रोक्तः साज्यगुड़स्तथा ॥
शरावे नूतने प्राज्ञ निधेयं सर्व्वमेव तत् ।
ततस्तु पुत्तलीं कृत्वा नद्या उभयतो मृदा ॥
निदध्यात्तत्र तां धीमान् पीतवस्त्रपरीहृताम्† ।
पीतसूत्रोपवीताञ्च पूजयेद्भक्तिमान्नरः ॥
पूर्व्वोक्तैरेव सम्भारैर्गन्धधूपादिभिर्बुधः ।
वक्ष्यमाणेन मन्त्रेण प्रार्थयेत्तां समाहितः ॥

मन्त्रस्तु यथा ।

ॐ नमो (भर्ग) भक्तवत्सले विमोचनि स्वाहा ।

अमुं मन्त्रं समुच्चार्य्य सर्व्वां पूजां प्रकल्पयेत् ।

केषाञ्चिन्मते अन्यस्मिञ्छरावे पुत्तली निधेया । अन्यस्मिन्

* करवी इत्यत्र करवीरमिति ग-पुस्तके पाठः ।

† परीहृतामित्यत्र आर्षत्वाद्दीर्घभावः ।

गन्धादिसम्भार इति। केषाञ्चिन्मते एकस्मिन्नेवेति। एक एव नेता भवति।

पूजाक्रमस्तु।

पुत्तलिकामादौ शरावे निधाय तत्पुरतः सर्व्वं गन्धादि-सम्भारं निक्षिप्य तत्रैवोपचारान्विधाय पञ्च पल्लवानेकीकृत्य बालकाङ्गापामार्ज्जनेन मातरं निःसार्य्य नीराजनं विधाय तत्सर्व्वं सकम्बलः सशस्त्रो नेता नयेन्मन्त्रमुच्चारयन्निति।

तथाच।

जम्ब्वाम्रोडुम्बराश्वत्थवटानां पल्लवैस्तथा।
सर्व्वाङ्गेभ्यः समुत्सार्य्य पीड़ां बालस्य स व्रजेत्॥
इत्थं रात्रित्रयं कुर्य्याद्विधानन्तु समाहितः।
ग्रामादुत्तरतो नित्यं पूर्व्वरात्रे विचक्षणः॥
तस्मिन् स्थाने जपेन्मन्त्रं बालानां शान्तिहेतवे।
एवम्प्रशान्तिमायाति शिशुपीड़ा न संशयः॥

इति मार्कण्डेयपुराणोक्तं प्रथमदिनमासाब्ददेवताविमोचनी-
पीड़ाशमनविधानम्।

अथ द्वितीये विधानम्।

द्वितीये दिवसे मासे वर्षे चैव प्रभाकर।
मोहिनी नाम देव्यत्र कुरुते पीड़नं शिशोः॥
ज्वरं नेत्ररुजं कासं श्वासञ्चैव विशेषतः।
छर्द्दनं गृह्णिणीदोषं जनयत्यनिशं शिशोः॥
तत्र शान्तिविधानञ्च प्रवक्ष्यामि समासतः।

मालतीकुसुमैः पूजा चन्दनं मलयोद्भवम् ॥
कुङ्कुमं केशरं दिव्यं सकर्पूरं विलेपनम् ।
दिव्यभक्तसमाहारो दशाङ्गं धूपनं तथा ॥
नैवेद्यं पूर्व्ववद्देयं तथैव पल्लवक्रिया ।
पूर्व्ववत्पुत्तलीङ्कृत्वा शरावे सन्निवेशयेत् ।
वक्ष्यमाणेन मन्त्रेण कुर्य्यात्सर्व्वमतन्द्रितः ॥

सर्व्वेश्वरी सर्व्वजनप्रियङ्करी त्राहि जगत्सर्व्वं ॐ नमो भगवति विमोहिनि स्वाहा ।

एवञ्चानेन मन्त्रेण सर्व्वङ्कृत्वा विधानकम् ।
रात्रित्रये निधातव्यं पश्चिमे ग्रामतो वहिः ।
प्रथमे यामिनीयामे कृतं भवति सौख्यदम् ॥

इति द्वितीये विधानम् ।

अथ तृतीयदिनमासाब्दविधानम् ।

स्कन्द उवाच ।

तृतीये दिवसे मासे वर्षे शृणु विधिं रवे ।
सुनन्दा नाम देव्यत्र वालानां भयदा भवेत् ॥
अवस्थां कुरुते घोरां सुनन्दा नाम भामिनी ।
हृद्रोगश्छर्द्दनं श्वासो ज्वरेण सह जायते ॥
आकुञ्चयति गात्राणि शिशू रोदित्यहर्निशम् ।
इत्थं सञ्जायते पीड़ा सुनन्दाकोपसम्भवा ॥
तस्याः शान्तिविधानन्तु प्रवक्ष्यामि समासतः ।
शतपत्राणि पुष्पाणि चन्दनस्यानुलेपनम् ॥

हरिद्रा कुङ्कुमं नागकेशरं वालकान्वितम् ।
गन्धार्थं धूपनं दद्याद्गुग्गुलञ्चातिशोभनम् ॥
घृताक्तं खदिराङ्गारैः सन्ताप्य विरोचन ।
पूर्व्ववत्पुत्तलीं कृत्वा शरावे सन्निवेशयेत् ॥
प्रसृतित्रयशालीनामोदनं सर्पिषाचितम् ।
दीपाश्च पोलिकाः पञ्च तावन्तो* मुष्टिकाः स्मृताः ॥
ध्वजास्तु पञ्च विज्ञेयाः सहिताः पञ्चपल्लवैः ।
वक्ष्यमाणेन मन्त्रेण बलिं सर्व्वं समाहरेत् ॥
ॐ नमो भगवति सुनन्दे हुं फट् स्वाहा ।
एवञ्चानेन मन्त्रेण ग्रामात्पूर्व्वे विनिक्षिपेत्† ।
त्रिरात्रं रजनीपूर्व्वयामे बालोपशान्तये ॥
एवं कृते विधाने तु व्याधिमात्रं विनश्यति ।
वर्द्धते दीपवद्बालः शुक्लपक्षेन्दुवच्च सः ॥

इति तृतीये विधानम् ।

अथ चतुर्थदिनमासाब्दविधानम् ।

स्कन्द उवाच ।

चतुर्थे दिवसे मासे वर्षे चैव विभाकर ।
पूतना नाम देव्यत्र पीडां प्रकुरुते शिशोः ॥
सन्तापो जायते पूर्व्वमतिसारस्ततः परम् ।
मुष्टिबन्धस्तथा कम्पो वारं वारं प्रजायते ॥

---

* तावन्त इत्यत्र तावत्य इत्येव पाठो युक्तः, मुष्टिकाशब्दस्य स्त्रीत्वात् ।

† विनिक्षिपेदित्यत्र बलिं क्षिपेदिति ग-पुस्तके पाठः ।

तस्याः शान्तिं प्रवक्ष्यामि सविधानां दिवाकर ।
पूर्व्ववत्पुत्तलीं कृत्वा शरावे सन्निवेशयेत् ॥
वेष्टयेद्रक्तसूत्रेण कुङ्कुमेनानुलेपयेत् ।
धुस्तूरैः पूजयेत् पुष्पैर्ब्बर्व्वरी*पत्रसंयुतैः ॥
मत्स्यमांसस्य धूपोऽत्र गव्येनाज्येन संयुतः ।
त्रयो दीपास्त्रिकोणास्तु साज्यवर्त्तिसमन्विताः ॥
तिस्रस्तु पोलिका ज्ञेयास्तावत्यो मुष्टयस्तथा† ।
ध्वजास्तिस्रः‡ समाख्याता नात्र कार्य्या विचारणा ॥
प्रसृतित्रयमुद्दिष्टं तण्डुलानां प्रभाकर ।
तद्भक्तं सर्पिषा युक्तं शरावे सन्निवेशयेत् ॥
रक्तवस्त्रेण संवेष्ट्य नमस्कृत्वा§ तु पुत्तलीम् ।
दध्यक्षतसमारोपं विदध्यात्तु समाहितः ॥
पल्लवैः पञ्चभिर्बालं सर्व्वाङ्गेषु प्रमार्ज्जयेत् ।

मन्त्रस्तु ।

ॐ नमः पूतने मातर्बलिं पश्य सुशोभने ।
बालकं मुञ्च योगेन बलिदानेन हर्षिता ॥
इमं मन्त्रं समुच्चार्य्य सर्व्वं बलिमुपाहरेत् ।
प्रदोषे क्षणनिर्वृत्ते सप्तसप्ते विधिं शृणु ॥

---

* बर्व्वरी क्षुद्रवृक्षभेदः, बाबुइ इति यस्य प्रसिद्धिः ।

† मुष्टयस्तिस्र एव च, मुष्टीनां त्रितयं तथा इति ख-ग-पुस्तकयोः पाठौ ।

‡ तिस्र इत्यत्र त्रय इत्येव पाठो युक्तः, विशेष्यस्य पुंस्त्वनैयत्यात् ।

§ नमस्कृत्वेत्यत्र नमस्कृत्येति युक्तः पाठः ।

दक्षिणां दिशमाश्रित्य निक्षिपेद्ग्रामतो बहिः ।
बलिमेवं कृते सम्यग्बालकः सुखमाप्नुयात् ॥

इति चतुर्थं विधानम् ।

अथ पञ्चमदिनमासाब्दविधानम् ।

अथातः पञ्चमे वाह्नि मासे वर्षे दिवाकर ।
आसुरी नाम देव्यत्र बालकं बाधते भृशम् ॥
तत्र चिह्नं प्रवक्ष्यामि बालानां यत्प्रजायते ।
ज्वरस्तु प्रथमं पश्चाद्हृद्रोगो ग्रहणीगदः ॥
मुष्टिबन्धः प्रलापः स्यादुद्वेगोऽनशनन्तथा ।
शिरोरुग्जायतेऽत्यन्तमेतद्वै लक्षणं रवे ॥
तस्याः शान्तिं प्रवक्ष्यामि पृच्छतस्ते दिवाकर ।
पूर्व्ववत्पुत्तलीं कृत्वा पीतसूत्रेण वेष्टयेत् ॥
पीतवासो वसानां तां शरावे सन्निवेशयेत् ।
घृताभ्यङ्गो विधेयोऽत्र हरिद्रालेपनन्तथा ॥
ततः पूजां प्रकुर्व्वीत कुसुमैः करवीरजैः ।
जवापुष्पैर्बन्धुजीवैर्बालकस्य तु चानघ ॥
चन्दनेनानुलिप्तां तां दिव्यगन्धोपशोभिताम् ।
राजिकासर्षपैर्धूपो घृताक्तोऽत्र प्रशस्यते ॥
दीपकाः सप्त विज्ञेया ध्वजास्तावन्त एव च ।
मुष्टिकाः पोलिकाः सप्त सप्त सौबालिकास्तथा ॥
नैवेद्यार्थं समुद्दिष्टमोदनं सघृतं हविः ।
पल्लवैस्तु यथापूर्व्वं कारयेन्मार्ज्जनं शिशोः ।

मन्त्रमेनं समुच्चार्य्य त्रिवारं प्रतिपूजनम् ॥

मन्त्रस्तु।

ॐ सुकले सुभगे देवि सर्व्वशत्रुनिवारिणि।

कुरु शान्तिं शिशोश्चात्र बलिदानेन राक्षसि ॥

इत्युच्चार्य्य क्षिपेत्पूर्व्वं मध्यरात्रे त्रिवासरम्।

पश्चिमां दिशमाश्रित्य ग्रामादुत्तरतो रवे ॥

इति पञ्चमे विधानम्।

अथ षष्ठदिनमासाब्दविधानम्।

अथ षष्ठे च दिवसे मासे वर्षे दिवाकर।

रेवती नाम देव्यत्र शिशुं गृह्णात्यसंशयम् ॥

आदौ तु जायते पीड़ा प्रबला शिशुमूर्द्धनि।

ज्वरस्तु मुखशोषोऽपि तृषा समभिजायते ॥

प्रकम्पन्ति च गात्राणि रुदितञ्च पुनः पुनः।

तत्र शान्तिं प्रवक्ष्यामि शृणु सूर्य्य समाहितः ॥

पूर्व्ववत्पुत्तलीं कृत्वा शरावे सन्निवेशयेत्।

गङ्गातोयेन संस्नाप्य शुक्लवस्त्रेण वेष्टिताम् ॥

शुक्लसूत्रेण संवीतां शुक्लमाल्यानुलेपनाम्।

शुक्लधूपोऽत्र निर्द्दिष्टो विल्वपत्रैः सहानघ ॥

आज्येनाक्तास्तु विंशात्मन्दीपाः पञ्च प्रकीर्त्तिताः।

तावत्यो मुष्टिका ज्ञेयाः पोलिकाभिः समन्विताः ॥

प्रसृतित्रयमात्राणां व्रीहीणामोदनं स्मृतम्।

दध्ना सह गुड़ेनाक्तं ताम्बूलञ्च विशेषतः।

वक्ष्यमाणेन मन्त्रेण प्रक्षिपेच्च समाहितः ॥

मन्त्रस्तु ।

राक्षसि त्वं महाभागे बालं मुञ्च शुभानने ।
क्षेमं कुरु जगत्यस्मिञ्छोभना भव रेवति ॥
इति मन्त्रेण सम्मन्त्र्य प्रदोषे* बलिमाहरेत् ।
सम्मार्ज्य बालकं तच्च सर्व्वाङ्गे पञ्चपल्लवैः ॥
ग्रामादुत्तरतो देशे रेवत्यै बलिमाहरेत् ।
एवम्प्रशान्तिमायाति बालपीड़ा प्रभाकर ॥

इति षष्ठदिनमासाब्दविधानम् ।

अथ सप्तमदिनमासाब्दविधानम् ।

सप्तमे च दिने चैव मासे वर्षे दिवाकर ।
शकुनी नाम देव्यत्र बालं गृह्णाति दारुणा ॥
ज्वरस्तु प्रथमं तावच्छिरोरोगस्ततः परम् ।
प्रलापश्चातिसारः स्याद्दाह्निरात्यन्तिकी भवेत् ॥
अक्ष्णोर्निमीलनञ्चापि गात्रकम्पोऽपि जायते ।
तत्र शान्तिं प्रवक्ष्यामि शकुनीप्रीतिवर्द्धनाम् ॥
रक्तचन्दनलिप्ताङ्गीं पूर्व्ववत्पुत्तलीकृताम् ।
यथाकालोद्भवैः पुष्पैः पूजयेद्यत्नतः शुचिः ॥
धूपस्तु गुग्गुलः श्रेयान् दीपाः पञ्च प्रकीर्त्तिताः ।
पोलिका मुष्टिकाः पञ्च कर्त्तव्यास्तु सुशोभनाः ॥

---

* प्रदोषे इत्यत्र प्रदीपे इति ग-पुस्तके पाठः ।

नैवेद्यमोदनं सर्पिः प्रसृतित्रयसम्मितम्* ।
तण्डुलानां सुरश्रेष्ठ मन्त्रपूतं प्रकल्पयेत् ॥
ॐ नमः पद्मपत्राक्षि विशालवदने शिवे ।
संगृह्य बलिमिमं त्वं बालं मुञ्च सुशोभने ॥
इत्युच्चार्य्य ततो धीमान् बलिं निशि समाहरेत् ।
दक्षिणां दिशमाश्रित्य विधाय पल्लवक्रियाम् ॥
एवङ्कृते विधाने तु त्रिरात्रं सुरसत्तम ।
व्याधिमुक्तो भवेद्बालो नात्र कार्य्या विचारणा ॥

इति सप्तमदिनमासाब्दविधानम् ।

अथ अष्टमदिनमासाब्दविधानम् ।

अथाष्टमे दिने मासे वर्षे देवी पिशाचिका ।
पीड़यत्येव बालन्तु ज्वरच्छर्द्दिललाटजैः ॥
नेत्रपीड़ाङ्गसङ्कोचो हृद्रोगश्चाभिजायते ।
शृणु तत्र प्रतीकारं येन तुष्यत्यिशाचिका ॥
प्रकुर्य्याच्च त्रिरात्रन्तु शान्तिं बालार्त्तिहारिणीम् ।
पूर्व्ववत्पुत्तलीङ्कृत्वा शरावे सन्निवेशयेत् ॥
पञ्चामृतैस्तु संस्नाप्य देवीं तां शिशुना सह ।
चन्दनेनानुलिप्ताङ्गीं श्वेतपुष्पैः प्रपूजयेत् ॥
ध्वजाः सप्त समाख्यातास्तावत्यः पौलिकाः स्मृताः ।
मुष्टिकाश्चापि विज्ञेया हरिद्राक्ताः शुभाः स्मृताः ॥

---

* सम्मितं प्रसृतं मतमिति ग-पुस्तके पाठः ।

पीतवर्णेन वस्त्रेण सूत्रेणापि सुसंस्कृत: ।
विजयाचूर्णधूपोऽत्र घृताक्त: सम्प्रकीर्त्तित: ॥
दीपाश्चात्र घृतेनैव पूरयित्वा नियोजयेत् ।
प्रकृतित्रयभक्तस्य घृताक्तस्य विशेषत: ॥
नैवेद्यं कल्पयेद्धीमान् देव्यै तस्यै न संशय: ।
ताम्बूलञ्च सकर्पूरं पिशाच्यै तु प्रदापयेत् ॥
शक्त्या च दक्षिणा तत्र देया तत्प्रीतये रवे ।
वक्ष्यमाणेन मन्त्रेण सर्व्वमेव विधीयते ॥

मन्त्रस्तु ।

ॐ नम: सर्व्वभूतेभ्यि शोभने त्वं पिशाचिके ।
बलिस्त्वेनमुरीकृत्य त्वरितं मुञ्च बालकम् ॥
यथा पूर्व्वं तथा कार्य्या पञ्चपल्लवसत्क्रिया ।
त्रिरात्रं रजनीहस्तौ* पूर्व्वं ग्रामाद्बहि: क्षिपेत् ।
एवङ्कृते विधानेऽस्मिन्नोगशान्ति: प्रजायते ॥

इति अष्टमदिनमासाब्दविधानम् ।

अथ नवमदिनमासाब्दविधानम् ।

नवमे दिवसे मासे वर्षे चैव प्रभाकर ।
देवता पाशिनी नाम बालार्त्तिं कुरुते भृशम् ॥
तत्र चिह्नं प्रवक्ष्यामि समासेन दिवाकर ।
ज्वरश्छर्दिर्बले पीडा सङ्कोचो नेत्रयोस्तथा ॥

---

* हस्तौ रक्षत प्रामे इति क-पुस्तके पाठ: ।

तर्ज्जनीमध्यमायोगमथाभ्यां कुरुते भ्रमम् ।
धनत्यागेऽपि सन्तोषो मुखगन्धोऽभिजायते ॥
तत्र शान्तिं प्रवक्ष्यामि पद्मिनीप्रीतये रवे ।
पूर्व्ववत्पुत्तलीकृत्वा शरावे सन्निवेशयेत् ॥
शुक्लवस्त्रेण संवीतां शुक्लसूत्रेण वेष्टिताम् ।
पूजयेच्छुक्लपुष्पैश्च मन्दाराद्यैः सुगन्धिभिः ।
गन्धार्थं घनसारेण युक्तं चन्दनमर्पयेत् ॥

घनसारः कर्पूरः ।

दशाङ्गधूपो धूपोऽत्र ततो दीपान् प्रकल्पयेत् ।
नव वा सप्त वा पूपाः पोलिका वा नवैव च ॥
तावत्यो मुष्टिकाश्चैव ध्वजाश्चैव विशेषतः ।
नवप्रसृतिमानेन तण्डुलौदनमुत्तमम् ॥
दध्ना क्षीरेण वाभ्यक्तं नैवेद्यं परिकल्पयेत् ।
ग्रामाद्बहिर्मध्यरात्रे पश्चिमे प्रक्षिपेद्बलिम् ॥
एतावता विधानेन रोगमुक्तो भवेच्छिशुः ।
पञ्चानां पल्लवानाञ्च विदध्यात्पूर्व्ववत्क्रियाम् ॥

इति नवमदिनमासाब्दविधानम् ।

अथ दशमदिनमासाब्दविधानम् ।

दशमे दिवसे मासे वर्षे चापि दिवाकर ।
शक्तिरत्र महामारी राक्षसी घोररूपिणी ॥
मृत्युकल्पं ज्वरं शूलं विदधाति दिवानिशम् ।
विष्टम्भं कुरुतेऽत्यन्तं हिक्काकासमतिक्षयम् ॥

तस्याः शान्तिं प्रवक्ष्यामि बालानां हितकाम्यया ।
पूर्ववत्पुत्तलीं कृत्वा शरावे सन्निवेशयेत् ॥
स्नापयेत्सरितो वारा चन्दनेनानुलेपयेत् ।
पीतवस्त्रेण संवेष्ट्य पुष्पमाल्योपशोभिताम् ॥
दशाङ्गं धूपनं धूपं महामार्य्यै प्रकल्पयेत् ।
दीपास्तु पञ्च विज्ञेयास्तावत्यः चौरषाष्टिकाः ॥
मुष्टिकाः पञ्च वै शस्ता ध्वजाः पञ्च सुशोभनाः ।
संस्कृतं सर्पिषा भक्तं तण्डुलानाञ्च पौष्कलम् ॥
नैवेद्यार्थं न्यसेत्तत्र शरावे सुमनोहरम् ।
ताम्बूलसहितं भानो दक्षिणासहितन्तथा ॥
दक्षिणार्थं नवं वस्त्रं रजतं वाथ शक्तितः* ।
पल्लवैः पञ्चभिर्युक्तं बलिं सर्व्वं समर्पयेत् ॥
मध्यरात्रादवर्वाचीणं बलिं कुर्य्याद्दिनत्रयम् ।
दक्षिणां दिशमाश्रित्य प्रक्षिपेन्नगराद्बहिः ।
स्तोत्रेणानेन मार्त्तण्ड वक्ष्यमाणेन ते मया ॥

स्तोत्रन्तु ।

ॐ नमो रक्तवर्णाक्षि रक्तपद्मनिभानने ।
रक्तोष्ठदशने रक्तमहामारी† महाभये ॥
महाबले महाकाये महाभयनिवारिके ।
अनेन बलिदानेन तुष्टा भव शुभानने ॥

* वाथ शक्तितः इत्यत्र वाप्यशक्तितः इति क-पुस्तके पाठः ।

† महामारी इत्यत्र सम्बोधनान्तमेव युक्तमुत्पश्यामः ।

व्याधिना पीड़ितं बालं रक्ष मे परमेश्वरि ।
इति मन्त्रं समुच्चार्य्य सर्व्वं बलिमुपाहरेत् ।
क्षेमाय बालकानां हि नात्र कार्य्या विचारणा ॥

इति दशमदिनमासाब्दविधानम् ।

एकादशदिनमासाब्दविधानम् ।

एकादशे दिने मासे वर्षे चापि दिवाकर ।
कालिका नाम देव्यत्र तत्पीड़ा जायते शिशोः ॥
ज्वरस्तु प्रथमं तावद्धृद्रोगस्तदनन्तरम् ।
मुखशोषो महाग्लानिस्ततः स्याच्चित्तविभ्रमः ॥
रोदनं सर्व्वगात्राणि कम्पन्ते च पुनः पुनः ।
तत्र शान्तिं प्रवक्ष्यामि बालानां हितकाम्यया ॥
पूर्व्ववत्पुत्तलीङ्कृत्वा शरावे सन्निवेशयेत् ।
गङ्गातोयेन संस्नाप्य चन्दनेनानुलेपयेत् ॥
करवीरस्य पुष्पैस्तु पूजयेद्बदरीदलैः ।
धूपयेत्पुत्रकेशैश्च सर्पनिर्म्मोकसर्षपैः ॥
वचालशुनकैश्चैव* घृतयुक्तैः ससर्ज्जकैः ।
दीपैस्तु पञ्चभिः सूर्य्य तैस्तु नीराजयेत्तु ताम् ॥
नैवेद्यं पायसं क्षीरं षष्टिकास्तिलमोदकाः ।
अपूपा मुष्टिकाः पोलीः पञ्च पञ्च प्रकल्पयेत् ॥
ध्वजाश्च पञ्च विज्ञेयाः शरावे सर्व्वमेव तत् ।

---

* लशुनकैरित्यत्र लशुनफलैरिति क ख-पुस्तकयोः पाठः ।

निवेश्य सकलं देव्यै कालिकायै निवेदयेत् ।
मन्त्रेणानेन सप्ताख्व वक्ष्यमाणेन ते मया ॥

मन्त्रो यथा ।

ॐ नमो घोररूपायै विकटे घोरदर्शने ।
त्राहि सर्व्वजगद्धात्रि बालं मुञ्च बलिप्रिये ॥
एवंविधं विधिं कुर्य्यात्पूर्व्ववत्पञ्चवक्रियाम् ।
बलिः प्रदोषसमये ग्रामाद्दक्षिणतो बहिः ।
निधेयो मन्त्रमुच्चार्य्य नरेण च सङ्केतिना ॥

सङ्केतिना सखङ्गेनेत्यर्थः ।

इति एकादशदिनमासाब्दविधानम् ।

अथ द्वादशदिनमासाब्दविधानम् ।

द्वादशे दिवसे मासे वर्षे चैव दिवाकर ।
भामिनी नाम देव्यत्र पीड़यत्यनिशं शिशुम् ॥
आदौ ज्वरं प्रकुर्य्याच्च हृद्रोगन्तदनन्तरम् ।
कासं श्वासमतीसारं प्रलापं जृम्भणन्तथा ॥
कम्पन्ते सर्व्वगात्राणि तथा जाड्यञ्च नेत्रयोः ।
इत्थं नानाप्रकारश्च शिशूनां जायते गदः ॥
तत्र शान्तिं प्रवक्ष्यामि बालानां हितकारिणीम् ।
पूर्व्ववत्पुत्तलीङ्कृत्वा शरावे सन्निवेशयेत् ॥
गन्धपुष्पाक्षता धूपा दीपाश्च विविधाः स्मृताः ।
नैवेद्यं विविधञ्चात्र भामिन्यै परिकल्पयेत् ॥
वस्त्रं शस्त्रं ध्वजाः सूत्रमोदनं पयसाचितम् ।

अपूपैः पायसं क्षीरं षष्टिकाभिश्च संयुतम् ॥
नैवेद्यं कल्पयेद्वत्स्वा सन्ध्याकाले निशामुखे ।
ग्रामादुत्तरतो देशे वहिरेव बलिं क्षिपेत् ॥
इत्थं पञ्चदिनेष्वेव कर्त्तव्यं रोगमुक्तये ।
मन्त्रेणानेन सप्ताख्य मन्त्रयेत्सर्व्वतो बलिम् ॥

मन्त्रो यथा ।

ॐ बलिं गृहाण बालस्य व्याधीन् संहर संहर ।
पञ्चवक्त्रप्रसादेन प्रसन्ना भव भामिनि ॥
एवङ्कृते विधानेऽस्मिन् बालकः क्षेममाप्नुयात् ।
इत्थं ते कथितं सूर्य्य शान्तिकृत्सुव्यजातकम् ।
अनुष्ठितेन येन स्याद्बालानां दुःखमोचनम् ॥

इति श्रीस्कन्दपुराणे स्कन्दसूर्य्यसंवादे ब्रह्मयामलसंवादितं प्रथमदिनमासाब्दादिद्वादशदिनमासाब्दपर्य्यन्तं बालपीड़ाशमनविधानं समाप्तम् ।

अथ प्रकारान्तरेण रावणोक्तं बालपीड़ाशमनविधानम् ।

दशाननमतं वक्ष्ये बालानां सुखकारकम्* ।

अथ प्रथमे ।

अथास्य प्रथमे दिने मासे वर्षे वा बालं गृह्णाति माता नन्दा नाम ।

* सुखकारकमित्यत्र उपकारकमिति ग-पुस्तके पाठः ।

तया गृहीतमात्रस्य शिशोर्वक्ष्यामि लक्षणम् ।
ज्वर आलस्यं रुदितं दुर्बलत्वं छर्दिरतिसारो गात्रसङ्कोचोऽरुचि स्तनपाने एते भवन्ति ।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम् ।
नद्या उभयतीरतो मृदमानीय पूर्व्ववत्पुत्तलीं कृत्वा पीतवस्त्र सूत्राभ्यां वेष्टयित्वा गन्धपुष्पादिभिरभ्यर्च्य प्रस्थतण्डुलस्यौदन दधिगुड़मिश्रितम् पञ्च पोलिकाः दीपद्वयं ध्वजत्रयं शरावे दत्त्वा बालं सम्प्रोक्ष्य विजयाधूपेन धूपयित्वा पञ्चपल्लवैः संस्नाप्य वक्ष्य माणेन मन्त्रेण बलिं दद्यात् ।

ॐ नमो रावणाय मातर्नन्दे बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण बलिमभिमन्त्र्य अपराह्णे प्रदोषसमये वा दिन त्रयमेव ग्रामाद्बहिः पूर्व्वस्यां दिशि पूर्व्वोक्तं मन्त्रमुच्चारयन् बलि हरेत् ।

एवं कृते सुखी बालः सम्पद्येत न चान्यथा ।

इति प्रथमे बलिः ।

अथ द्वितीये ।

अथास्य द्वितीये दिने मासे वर्षे वा बालं गृह्णाति सुनन्दा नाम माता ।

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः ।
अरुचिर्म्मूर्च्छा हस्तपादादिसङ्कोचो रोदनमतिसारो दुर्बलत्वम् ।
सुनन्दागृहीतमात्रेण* ह्येतद्भवति लक्षणम् ।

---

* मात्रेण इत्यत्र मात्रस्येति पाठो युक्तः, अन्यत्रापि तथा दर्शनात् ।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम्॥

पुत्तलीं कृत्वा पीतवस्त्रादिना संवेष्ट्य स्वस्तिकादश्वकं ाविलिख्य तत्र तां निधाय सुगन्धपुष्पादिभिरभ्यर्च्य पूर्णप्रस्थ- ौदनं दधिगुडसम्मिश्रं पञ्च पोलिका दीपद्वयं ध्वजत्रयञ्च

निधाय पञ्चपल्लवैर्बालं प्रोक्ष्य सुगन्धधूपेन धूपयित्वा—ॐ रावणाय सुनन्दे मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च ाहा इति मन्त्रेण अपराह्णे प्रदोषसमये वा उत्तरतो बलिं रेत्।

एवङ्कृते सुखी बालः सम्पद्येत न चान्यथा।

इति द्वितीये।

अथ तृतीये।

अथ तृतीये दिने मासे वर्षे वा पूतना नाम माता गृह्णाति ालम्।

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः।

ात्रसङ्कोचः कण्ठशोषः प्रलापोऽतिसारो रोदनञ्च।

तया गृहीतमात्रस्य एतद्भवति लक्षणम्।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम्॥

र्ववत् पुत्तलीं कृत्वा पीतवस्त्रेणावेष्ट्य गन्धपुष्पादिभिरभ्यर्च्य स्थसम्मिततण्डुलौदनं दधिगुडसम्मिश्रं पोलिकापञ्चकं मुष्टिका- ञ्चकं दीपत्रयं ध्वजचतुष्टयं तिलचूर्णञ्च शरावे निधाय पञ्च- ल्लवैर्बालाङ्गानि सम्मृज्य सम्प्रोक्ष्य सर्ज्जरसधूपेन* धूपयित्वा च—

* सर्ज्जरसधूपेन इत्यत्र दशाङ्गधूपेनेति ग-पुस्तके पाठः।

ॐ नमो रावणाय पूतने मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण पश्चिमायां दिशि पूर्व्वोक्ते काले त्रिरात्रं बलिं हरेत्।

इति तृतीये।

अथ चतुर्थे।

अथास्य चतुर्थे दिवसे मासे वर्षे वा मुखमण्डिका नाम माता बालकं गृह्णाति।

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः।

गात्रसङ्कोचो मुष्टिबन्धः श्वासः कासश्छर्द्दिरतिसारो दुर्बलत्वञ्चेति लक्षणानि भवन्ति।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम्।

पूर्व्ववत् पुत्तलीं कृत्वा पीतवस्त्रेणावेष्ट्य गन्धपुष्पादिभिरभ्यर्च्य प्रक्षततण्डुलौदनं दधिगुड़युतं पोलिकाः पञ्च मुष्टिकाः पञ्च दीप-द्वयं ध्वजचतुष्टयञ्च शरावे निधाय बालं प्रोक्ष्य दशाङ्गेन धूपेन धूपयित्वा—ॐ नमो रावणाय मुखमण्डिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण दक्षिणस्यां दिशि पूर्व्वोक्तकाले बलिं हरेत्।

इति चतुर्थे।

अथ पञ्चमे।

अथास्य पञ्चमे दिवसे मासे वर्षे वा बालं गृह्णाति बिड़ाली नाम माता। तल्लक्षणम्—ज्वरश्चूरोगो गात्रसङ्कोच आहारा-ग्रहणमतिसारश्छर्द्दी रोदनञ्चेति।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम्।

पूर्व्ववत् पुत्तलीं कृत्वा पीतवस्त्रेणावेष्ट्य गन्धादिभिरभ्यर्च्य बालं गोक्ष पल्लवैः सम्मृज्य विजयाधूपेन धूपयित्वा—ॐ नमो रावणाय विड़ालि मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण प्रस्थौदनं दधिगुड़युतं दश पोलिका ध्वजचतुष्टयञ्च शरावे निधाय पश्चिमस्यां* पञ्चरात्रं बलिं हरेत्।

इति पञ्चमे।

अथ षष्ठे।

अथास्य षष्ठे दिवसे मासे वर्षे वा बालं गृह्णाति शकुनी नाम माता। तद्गृहीतचिह्नानि यथा—ज्वरादिर्हस्तपदसङ्कोचोऽतिसारः कासो मुखशोषश्च।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम्।

पूर्व्ववत् पुत्तलीं कृत्वा वस्त्रेणावेष्ट्य गन्धादिभिरभ्यर्च्य प्रस्थतण्डुलौदनं पोलिकाष्टकं तिलचूर्णं दीपद्वयं ध्वजत्रयञ्च शरावे निधाय बालं पल्लवैर्मार्ज्जयित्वा सुगन्धेन धूपयित्वा—ॐ नमो रावणाय शकुनि मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण पश्चिमदिशि त्रिरात्रं बलिं हरेत्।

इति षष्ठे।

अथ सप्तमे।

अथास्य सप्तमे दिवसे मासे वर्षे वा बालं गृह्णाति सुखना

---

* पश्चिमायामित्येव भवितुं युक्तं, पश्चिमशब्दस्य अव्ययत्वाभावात्।

नाम माता। तद्गृहीतचिह्नं यथा—ज्वरादि पूर्व्ववत्पीतवर्णता च।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम्।

पूर्व्ववत् पुत्तलीं कृत्वा गन्धादिना सम्पूज्य गुड़मिश्रौदनम्

जालिका वारिकाश्चैव पोलिकाः पूरिकास्तथा।

साष्कुिका घृतपक्काश्च शरावे सन्निवेशयेत्॥

ध्वजत्रयं दीपपञ्चकञ्च। ततो बालं पञ्चवैर्मार्ज्जयित्वा विजयेन धूपेन धूपयित्वा—ॐ नमो रावणाय सुखनाममातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण पश्चिमदिशि बलिं त्रिरात्रं हरेत्।

इति सप्तमे।

अथ अष्टमे।

अथास्याष्टमे दिने मासे वर्षे वा बालं गृह्णाति कुलिका नाम माता। तद्गृहीतचिह्नं पूर्व्ववत्।

बलिस्तस्या यथा।

पूर्व्ववत् पुत्तलीं कृत्वा वस्त्रादिना संवेष्ट्य पूजयित्वा ओदनं दधिमिश्रं पञ्च पोलिकास्तिलचूर्णम्

घोरिकाः पूरिकाश्चैव दीपकद्वयमेव च।

चतस्रो मुष्टिका एरण्डिका उरिकौदनं* गुड़मिश्रितं ध्वजत्रयञ्च शरावे निधाय बालं प्रोक्ष्य पञ्चवैर्मार्ज्जयित्वा दशाङ्गधूपेन धूप-

---

* उरिका नीवारः, उड़ीति यस्य प्रसिद्धिः।

यित्वा च—ॐ नमो रावणाय कुलिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण दक्षिणदिशि पञ्चरात्रं बलिं हरेत् ।

इत्यष्टमे ।

अथ नवमे ।

अथास्य नवमे दिवसे मासे वर्षे वा बालं गृह्णाति आर्ज्जिका नाम माता । तद्गृहीतचिह्नं ज्वरादि पूर्व्ववत् पीतवर्णता च । तस्या बलिर्यथा ।

पूर्व्ववत् पुत्तलीं कृत्वा वस्त्रादिना संवेष्ट्य गन्धादिभिरभ्यर्च्य ओदनं दधिमिश्रं पञ्च पोलिकास्तिलचूर्णं शष्कुलिकाः पर्पटिका-दीपद्वयं ध्वजचतुष्टयञ्च शरावे निधाय बालं सम्मार्ज्य धूपयित्वा च —ॐ नमो रावणाय आर्ज्जिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण उत्तरदिशि त्रिरात्रं बलिं हरेत् ।

इति नवमे ।

अथ दशमे ।

अथास्य दशमे दिवसे मासे वर्षे वा बालं गृह्णाति रेवती नाम माता । तद्गृहीतलक्षणं ज्वरादि पूर्व्ववत् अतिसारः श्लेष्मा कण्ठशोषो रोदनञ्चेति ।

बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम् ।

पूर्व्ववत् पुत्तलीं कृत्वा वस्त्रेणावेष्ट्य गन्धपुष्पादिभिरभ्यर्च्य पूर्ण-प्रस्थतण्डुलौदनं दधिगुड़मिश्रितं तिलचूर्णं पञ्च पोलिका दश शर्करा दीपद्वयं ध्वजत्रयञ्च शरावे निधाय पञ्चपल्लवैर्बालं सम्प्रोक्ष्य विजयेन धूपेन धूपयित्वा—ॐ नमो रावणाय रेवति मातर्बलिं

गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण पश्चिमदिशि अपराह्णे सन्ध्यायां वा बलिं हरेत्त्रिरात्रम् ।

इति दशमी ।

अथ एकादशी ।

अथास्य एकादशे दिवसे मासे वर्षे वा बालं गृह्णाति पिच्छलिका नाम माता ।

तया गृहीतमात्रस्य ज्वरः शोषश्च जायते ।
रक्तञ्च स्रवति विष्ठा मूत्रं शूलञ्च* जायते ॥
सीदन्ति सर्व्वगात्राणि आहारश्च न रोचते ।
ऊर्द्ध्वदृष्टिः प्रलापश्च रोदनञ्च पुनः पुनः ॥
पिच्छलिकागृहीतस्य ह्येतद्भवति लक्षणम् ।
बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम् ॥

पूर्व्ववत् पुत्तलीं कृत्वा पीतवस्त्रेण संवेष्ट्य गन्धादिना सम्पूज्य पूर्णप्रस्थमितौदनं दधिगुड़सम्मिश्रं पोलिकाः पूरिका वाटिका-वटकाः पञ्च पञ्च तिलचूर्णं दीपद्वयं ध्वजत्रयञ्च शरावे निधाय पञ्चपल्लवैर्बालं सम्मार्ज्य विजयधूपेन धूपयित्वा—ॐ नमो रावणाय पिच्छलिके मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण दक्षिणां दिशमाश्रित्य अपराह्णे प्रदोषे वा एकां रात्रिं बलिं हरेत् ।

इति एकादशी ।

---

*. कुक्षिशूलमिति क-ग-पुस्तकयोः पाठः, ख-च छन्दोभङ्गादुपेक्षितः ।

अथ द्वादशे।

अथास्य द्वादशे दिवसे मासे वर्षे वा बालं गृह्णाति पिप्पली नाम माता।

तया गृहीतमात्रस्य प्रथमं जायते ज्वरः।
शोषश्च जायते तस्मात्कम्पो वैवर्ण्यमेव च॥
कुक्षिशूलं प्रजायेत रोदनञ्च पुनः पुनः*।
ऊर्द्धदृष्टिः प्रलापश्च श्वासश्चैव निरन्तरम्॥
पिप्पल्याक्रान्तमात्रस्य एतद्भवति लक्षणम्।
बलिं तस्याः प्रवक्ष्यामि येन सम्पद्यते सुखम्॥

नद्या उभयकूलतो मृत्तिकामानीय तया पुत्तलिकां कृत्वा पीतवस्त्रेण संवेष्ट्य गन्धपुष्पादिभिरभ्यर्च्य पूर्णप्रस्थौदनं दधिगुड़सम्मिश्रं पोलिकाः पञ्च तिलचूर्णं घारिकाद्वयं शर्करा विटपपत्रं सुगन्धधूपं ध्वजत्रयं दीपपञ्चकञ्च शरावे निधाय बालं सम्प्रोक्ष्य पञ्च पल्लवैर्मार्ज्जयित्वा विजयधूपेन धूपयित्वा च—ॐ नमो रावणाय पिप्पलि मातर्बलिं गृह्ण गृह्ण बालं मुञ्च मुञ्च स्वाहेति मन्त्रेण पूर्व्वस्यां दिशि पूर्व्वोक्ते काले चिराचं बलिं हरेत्।

एवङ्कृते विधानेऽस्मिन् बालरोगः प्रशाम्यति।
अवश्यं नात्र सन्देहो रावणस्य वचो यथा॥

इति विधानमालोक्तं बालस्य प्रथमदिनाद्यवधि द्वादशदिनमासाब्दपर्य्यन्तं शान्तिविधानं समाप्तम्।

* पुनः पुनरित्यत्र निरन्तरमिति ख-पुस्तके पाठः।

## अथ षष्ठीपूजनविधानम्।

यथा बालतन्त्रे।

उत्पन्नस्य तु बालस्य षष्ठे वा पञ्चमे दिने।
विघ्नेशो जन्मदा षष्ठी देवी जीवन्तिका तथा॥
प्रदोषे पूजनीयास्ता गन्धपुष्पादिदानतः*।
अपूजिताश्च ता देव्यः कुमारं पीडयन्त्यलम्॥
कुङ्कुमेनाथ गन्धेन कुम्भसंस्थाः† प्रकल्पयेत्।
पीठे वाक्षतपुञ्जादौ पुरुषाः शस्त्रहस्तकाः॥
स्त्रियश्च पानं कुर्व्वन्तो जागृयुस्तां निशां पराम्।
गृहं धूपाग्निदीपैश्च संयुतं कारयेत्ततः॥
सर्षपान् सर्व्वतो दद्याद्बलिर्देयश्च पुष्कलः।
विप्रेभ्यश्चैव ताम्बूलं दक्षिणादिकमर्पयेत्॥

तत्रादौ सविनायकगौर्य्यादिमातृकापूजां विधाय

आवाह्य पूजयेद्देवीं गणेशं मातरं गिरिम्।

देवीं षष्ठीं गिरिं मन्थानमन्दरं मन्थानमन्दरोऽसीति मन्त्रलिङ्गात्।

---

* अत्र अशौचमध्ये दोषाभावः।

अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्।
कर्त्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचाद्विशुध्यति॥

इति वचनात्। अत्र पुत्रजन्मेति श्रवणात् पितुरेवाशौचाभावः। इति कृत्यतत्त्वम्।

† कुम्भसंस्था इत्यत्र कुड्यसंस्था इति ग-पुस्तके पाठः।

मातरो यथा ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।

देवसेना स्वधा स्वाहा मातरो लोकमातरः ।

शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह ॥

ततः ।

ॐ आयाहि वरदे देवि महाषष्ठीतिविश्रुते ।

शक्तिभिः सह बालं मे रक्ष जागरवासरे ॥

ति मन्त्रेण षष्ठीं देवीमावाह्य—

शक्तिस्त्वं सर्व्वदेवानां लोकानां हितकारिणी ।

मातर्बालमिमं रक्ष महाषष्ठि नमोऽस्तु ते ॥

ति मन्त्रेण षोड़शोपचारैः पूजयेत् ।

हिरण्यवस्त्रशय्यादि यथावित्तं प्रदापयेत् ।

इति कृत्वा ततो देवीं षष्ठीं सम्प्रार्थयेन्नरः ।

मन्त्रेण वक्ष्यमाणेन सर्व्वारिष्टनिवृत्तये ॥

मन्त्रस्तु ।

गौरीपुत्त्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा ।

तथा ममाप्ययं बालः षष्ठिके रक्ष्यतां नमः ॥

इति मन्त्रेण तां देवीं विघ्नेशादीन् प्रणम्य च* ।

---

*अन्येऽपि प्रार्थनामन्त्राः सन्ति, ते च यथा—

लम्बोदर महाभाग सर्व्वोपद्रवनाशन ।

प्रसादात्तव विघ्नेश चिरं जीवतु मे शिशुः ॥

(एतट्टीकावशेषः परपृष्ठे द्रष्टव्यः ।)

गीतवादित्रनिर्घोषैस्तां रात्रिं जागृयान्नरः ॥
एवं विधानं यः कुर्य्यात् षष्ठीप्रीत्यै नरोत्तमः ।
चिरायुर्भविता तस्य शिशुर्नात्र विचारणा ॥
इति बालतन्त्रोक्तं षष्ठीपूजनविधानं समाप्तम् ।

प्रयोगपारिजाते तु व्यासः ।

सूतिकावासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्त्तिता ॥

तथा ।

प्रथमे दिवसे षष्ठे दशमे चैव सर्व्वदा ।
त्रिधाशौचं न कुर्व्वीत सूतके पुत्रजन्मनि ॥
दद्यात्तु प्रथमे हेम षष्ठसप्तमयोरपि ।
बलिदानन्तु दशमे ह्यत्र स्नानं प्रशस्यते ॥

मार्कण्डेयश्च ।

रक्षणीया तथा षष्ठीनिशा तत्र विशेषतः ।
रात्रौ जागरणं कार्य्यमत्र दानं तथा बलिः ॥
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कुर्य्युर्दशम्याश्चैव सूतके ॥ इति

---

जननी सर्व्वभूतानां बालानाञ्च विशेषतः ।
नारायणीस्वरूपेण बालं मे रक्ष सर्व्वदा ॥
भूतप्रेतपिशाचेभ्यो डाकिनीयोगिनीषु च ।
मातेव रक्ष बालं मे श्वापदे पन्नगेषु च ॥

सूतिकागृहस्थाप्यानि द्रव्याणि यथा मार्कण्डेयपुराणे ।

शस्त्रम्बुपशुशून्ये च निर्यूपे सूतिकागृहे ।
प्रदीपशस्त्रमुषलभूतिसर्षपवर्ज्जिते ॥
अनुप्रविश्य जातन्तु अपहृत्यात्मसम्भवम् ।
क्षणप्रसविनी बालं तत्रैवोत्सृजति द्विज ॥
सा जातहारिणी नाम सुघोरा पिशिताशना ।
तस्याः संरक्षणं कार्य्यं यत्नतः सूतिकागृहे ॥

शुष्कछागः यूपोऽपि तत्रैव उपस्थितत्वात् ।

इति प्रयोगपारिजातोक्तं षष्ठीपूजनविधानम् ।

अथ सूतिकास्नानम् ।

यथा ज्योतिःशास्त्रे ।

करेन्द्रयाम्यानिलवासवाश्व-
मैत्रेन्द्रवाश्विध्रुवभेऽह्नि पुंसाम् ।
तिथावरिक्ते शुभमामनन्ति
प्रसूतिकास्नानविधिं मुनीन्द्राः ॥

करो हस्ता इन्द्रो ज्येष्ठा अनिलः स्वाती मैत्रमनुराधा अन्त्यं रेवती ॥

इति सूतिकास्नानम् ।

अथ नामकरणम् ।

बृहस्पतिः ।

द्वादशे दशमे चापि जन्मतो दिवसे शुभे ।
षोडशे विंशतौ चैव द्वाविंशे* वर्णतः क्रमात् ॥

याज्ञवल्क्यः ।

अहन्येकादशे नामेति ।

भविष्यपुराणेऽपि ।

नामधेयं दशम्यान्तु द्वादश्यां मासि केचन ।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ॥

कात्यायनसूत्रेऽपि ।

दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोतीति ।

दशम्यामुत्थाप्य एकादशेऽह्नि नाम कुर्य्यादिति तद्व्याख्यानम्, अशौचापगमे नामधेयमिति विष्णूक्तेः ।

आश्वलायनगृह्यपरिशिष्टेऽपि ।

जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वा नामकरणमिति ।

व्युष्टे अतीते ।

ज्योतिर्निबन्धे गर्गः ।

* द्वाविंशे इत्यत्र द्वात्रिंशे इति क-पुस्तके पाठः ।

अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत् ।
गर्भाधानादिकर्म्माणि शुभे काले समाचरेत् ॥

श्रीधरः ।

मित्रादित्यमघोत्तराश्रवणभिषक्स्वातीधनिष्ठाच्युत-
प्राजेशाश्विशशाङ्कपौष्णदिनकृत्पुष्येषु राशौ स्थिरे ।
छिद्रां पञ्चदशीं विहाय नवमीं शुक्रेऽष्टमे भार्गव-
शाचार्य्यामृतपादभागदिवसे नामानि कुर्य्याच्छिशोः ॥*

मनुः ।

शर्म्मान्तं ब्राह्मणस्य स्याद्वर्म्मान्तं क्षत्रियस्य तु ।
वैश्ये गुप्तसमायुक्तं शूद्रस्य प्रैष्यसंयुतम् ॥

स्मृतिसङ्ग्रहे ।

कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्द्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥

क्रमोऽत्र मार्गशीर्षादिः ।   तथा शिष्टाचारदर्शनात् ।

तन्मासनाम प्रथमं दद्यात्सम्बुध्य चैव हि ।
देवालयगजाश्वानां वृक्षाणां वापिकूपयोः ॥
सर्व्वापगानां पुण्यानां चिह्नार्थं योषितां नृणाम् ।

---

* ध्रुवमृदुचरवर्गे वाजिहस्तासमेते चरणमुदयमथैषां सत्सु केन्द्रस्थितेषु ।
दिग्विविशिखशताद्र्ध्वं तत्कुलाचारतो वा प्रथमदिनतिथियोगे नाम कार्य्यं प्रशस्तम् ॥
इति च दीपिकायाम् ।

काव्यानाञ्च कवीनाञ्च पक्ष्यादीनाञ्च सर्व्वशः ।
राजप्रसादवस्तूनां नामकर्म्म विधिष्यते ॥

नाक्षत्रमपि नाम कार्य्यम् । अभिवादनीयञ्च समीक्षेत तन्माता-पितरौ विद्यातामोपनयनादित्याश्वलायनसूत्रात् । तच्च नक्षत्र-पादाद्यक्षरं कुर्य्यादिति परिशिष्टे । स्वाभीष्टं व्यावहारिकं नाम कुर्य्यादिति तत्प्रकारः ।

कात्यायनसूत्रे ।

द्व्यक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्य्यान्न तद्धितमयुजाक्षरमाकारान्तं स्त्रियै तद्धितं शर्म्म ब्राह्मणस्य वर्म्म क्षत्रियस्य गुप्तं वैश्यस्य दासं शूद्रस्य इति ।

दीर्घं द्विमात्रम् अभिनिष्ठानो विसर्गः कृतं कृदन्तं यथा विश्वम्भर इत्यादि । अयुजाक्षरमयुग्माक्षरं यथा यशोदा इत्यादि, अयुग्दान्तं स्त्रीणामिति गोभिलोक्तः ।

मनुः ।

स्त्रीणां सुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम् ।
माङ्गल्यं दीर्घवर्णान्तमाशीर्व्वादाभिधानवत् ॥

बालनामकरणं स्थिरलग्ने
केन्द्रपञ्चनवमस्थितसौम्ये ।
त्र्यायषष्ठसमधिष्ठितपापे
जीवशुक्रशशिसौम्यदिनेषु ॥

इति च नारायणपद्धतौ ।

इति नामकरणविधानं समाप्तम् ।

ग्रन्थस्थानि विधानानि मया सङ्ग्रथितानि च ।
परोपकृत्यै विष्णुर्मे तेन प्रीयतात् सर्व्वदः ॥
विधानपारिजातेऽस्मिन् पञ्चस्तबकसंयुते* ।
समाप्तिमागात्† प्रथमो गुच्छो विष्णोरनुग्रहात् ॥
अम्बा भागीरथी यस्य नागदेवः पिता सुधीः ।
तेनानन्तेन रचितः प्रथमः स्तबको गतः ॥

इति श्रीमत्परमवैदिकनागदेवभट्टसूनुना सकलविद्वज्जन-
कृपापात्रभूतेन श्रीमदनन्तभट्टेन विरचिते
विधानपारिजाताभिधे निबन्धे
प्रथमः स्तबकः समाप्तः ।

---

* दशार्द्धस्तबकान्विते इति ग-पुस्तके पाठः ।

† समाप्त एव इति क-पुस्तके पाठः ।

## अथ द्वितीयः स्तवकः प्रारभ्यते।

तत्रादौ दुष्टनक्षत्रादिजननशान्तिविधानानि प्रोच्यन्ते। तानि च जननाशौचोत्तरकाल एव कर्त्तव्यानि सङ्गतिकत्वात्*। जन्मतो द्वादशाहे वा इत्यादि वक्ष्यमाणवचननिचयात् शुचिकर्त्तृकत्वाच्च।

अथ नक्षत्रदेवताः कथ्यन्ते।

यथा रत्नमालायाम्।

मेशा दस्रयमाग्निधातृशशिनः शर्व्वोऽदितिर्वाक्पतिः
कद्रूजः पितरो भगोऽर्य्यमरवी त्वष्टा हयो मारुतः।
इन्द्राग्नी त्वथ मित्र इन्द्रनिर्ऋती तोयञ्च विश्वे विधि-
र्गोविन्दो वसवोऽम्बुपाजचरणाहिर्बध्नपूषाभिधाः॥ इति।

अनामीशा नक्षत्राणामधिदेवताः अश्वियमादयः अश्विन्यादिक्रमेण बोद्धव्यास्ते च अष्टाविंशतिसंख्याकाः अभिजितोऽपि नक्षत्रमध्ये परिगणितत्वात्। एतानि जननिमित्तशान्तिविधानानि नामकरणपूर्व्वं कर्त्तव्यानि नैमित्तिकत्वात्।

दुष्टनक्षत्रजातानां शान्तिं कृत्वा विधानतः।
द्वादशैकादशे वाह्नि नाम कुर्य्यात्ततः परम्॥

इति स्मृत्यन्तराच्च शान्तिविधानात्परं नामकरणमिति केचित्। द्वादशैकादशे इत्यत्र सन्धिरार्षः। यदा तु बहुनिमित्तसम्पातस्तदा प्रतिनिमित्तं नैमित्तिकमिति न्यायेन सर्व्वाण्येव नैमित्ति-

---

* सङ्गतिकत्वादित्यत्र सङ्गतत्वादिति पाठो युक्तः।

कानि कार्य्याणि। यथा अमावास्यायां ज्येष्ठानक्षत्रे व्यतीपातादौ जातस्य अमावास्यादिशान्तिः क्रियते तत्र क्रमस्त्वैच्छिकः। यद्वा तन्त्रेणैव कार्य्याणि कर्त्रादीनामेकत्वात्। कुमार्य्या अपि एतत् कार्य्यं न्यायसाम्यात्, सुतः सुता वेत्यादिवक्ष्यमाणवचनाच्च।

तत्र तावत् सर्व्वारिष्टशान्तिसाधारणत्वाद्गोमुखजननशान्ति-विधानमादावभिधीयते।

तथाच प्रयोगपारिजाते गर्गः।

प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन्।
सर्व्वारिष्टविनाशाय यदुक्तं ज्योतिरर्णवे॥
पित्रिरिष्टे सुतारिष्टे मातृरिष्टे तथैव च।
प्रायश्चित्तं तदा कुर्य्यात्तत्तद्दोषोपशान्तये॥
पूषाश्विनोर्गुरौ सर्पे मघाचित्रेन्द्रमूलभे।
एषु ऋक्षेषु जातस्य कुर्य्याद्गोजननं तथा॥

पूषा रेवती अश्विनी प्रसिद्धा गुरुः पुष्यः सर्पः अश्लेषा मघा प्रसिद्धा चित्रा च इन्द्री ज्येष्ठा मूलं प्रसिद्धम्। एषु नक्षत्रेषु जातस्येत्यर्थः। एवमुत्तरत्रापि द्रष्टव्यम्।

तत्र इतिकर्त्तव्यतामाह।

जन्मर्क्षे वा त्रिजन्मर्क्षे शुभे वारे शुभे दिने।
कृत्वाभ्यङ्गादिकं सर्व्वं गृहालङ्कारपूर्व्वकम्॥
गोमयेनोपलिप्याथ गृहस्येशानभागके।
पङ्कजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः॥

श्वेतवर्णकै रजोभिस्तण्डुलादिपिष्टैरित्यर्थः।

व्रीहींस्तत्र विनिक्षिप्य यथाविच्चानुसारतः ।
नवशूर्पन्तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥
स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् ।
प्राङ्मुखं तमवाक्पादं तिलगर्भगतं शिशुम् ॥
गोमुखं दर्शयित्वाथ पुनर्जातन्तु गोमुखात् ।
विष्णुर्योनिमितिसूक्तेन* गव्येन स्नपयेच्छिशुम् ॥
गवामङ्गेषु मन्त्रेण† गवामङ्गेषु संस्पृशेत् ।
विष्णोः श्रेष्ठेन मन्त्रेण‡ गोप्रसूतन्तु बालकम् ॥
आचार्यस्तु समादाय पत्न्याश्चाचे दद्देत्तदा ।
माता जघन्यभागस्था शिशुमानीय तन्मुखात् ॥
ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् ।
वस्त्रे स्थाप्य पितास्थाथ पुत्रस्य मुखमीक्षयेत् ॥
गोमूत्रं गोमयक्षीरं दधि सर्पिश्च संयुतम् ।
आपोहिष्ठादिभिर्मन्त्रैः§रभिषिञ्चेत्ततः शिशुम् ॥
मूर्ध्नि चाघ्राय तं पुत्रं तन्मन्त्रेण तदा पिता ।
अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे ॥

---

* १०८ पृष्ठे प्रदर्शितेन ।

† गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ ऋग्वेदिब्राह्मकर्म्मणि ।

‡ विष्णोः श्रेष्ठेन रूपेण अस्यां नार्य्यां गवीन्याम् ।
पुमांसं पुत्रमाधेहि दशमे मासि सूतवे स्वाहा ॥ ऋग्वेदिब्राह्मकर्म्मणि ।

§ ५८ पृष्ठे प्रदर्शितैः ।

आत्मा वै पुत्रनामासि स जीव शरदः शतम् ।
मूर्द्धनि त्रिरवघ्राय तं शिशुं स्थापयेत्ततः ॥
पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः ।
दरिद्रायाथ विप्राय तां गां चाभ्यर्च्य दापयेत् ॥
गोवस्त्रस्वर्णधान्यानि दद्यादर्कादितः क्रमात् ।
यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यस्तदा पिता ॥

अर्कादितः सूर्य्यादिग्रहेभ्य इत्यर्थः ।

ततो होमं प्रकुर्व्वीत स्वस्वशाखोक्तमार्गतः ।
उल्लेखनादिकं कृत्वा चाज्यभागान्तमाहरेत् ॥
होमस्येशानदिग्भागे धान्योपरि घटं शुभम् ।
पञ्चगव्यं घटे स्थाप्य तिलं तत्र विनिक्षिपेत् ॥
क्षीरद्रुमकषायांश्च पञ्चरत्नानि निक्षिपेत् ।

क्षीरद्रुमकषायाः पञ्चपल्लवाः पञ्चत्वच इत्यर्थः ।

वस्त्रयुग्मेन संछाद्य गन्धादिभिरथार्चयेत् ।
विष्णुं वरुणमभ्यर्च्य प्रतिमायां विधानतः ॥
यत इन्द्रादिभिर्मन्त्रैः* कुम्भं स्पृष्ट्वाभिमन्त्रयेत् ।
दधिमध्वाज्ययुक्तेन होमं कुर्य्याद्विधानतः ॥

---

* यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि ॥
(८म. ६१सू. १३ऋक् ।)

आपोहिष्ठेति तिसृभि:*रप्सु मे सोम† इत्यथ ।
तद्विष्णोः परमं पदम् अचोभ्यां तेऽथ सूक्ततः‡ ॥
ऋग्भिराभिः प्रत्यृचञ्च अष्टाविंशतिसंख्यया ।
अशक्तश्चाष्टसंख्यं वा दधिमध्वाज्यसंयुतम् ॥
आदित्यादिग्रहाणाञ्च होमं कुर्यात्समन्त्रकम् ।

मन्त्राश्च विष्णुर्योनिमित्यादय ऋग्वेदे प्रसिद्धाः । दधिमध्वाज्य-युक्तेनेति । अत्र भावे क्तप्रत्ययः तथाच दधिमध्वाज्यमेकीकृत्य होमयेदित्यर्थः । अध्याहारस्यान्याय्यत्वात् । अन्यत् स्पष्टम् ।

इति विधानपारिजाते गोमुखप्रसवशान्तिविधानम् ।

अथास्य स्पष्टप्रयोगः ।

उक्ते काले अस्य अमुकनक्षत्रोत्पत्तिसूचितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवं करिष्ये इति सङ्कल्प्य गणेशं सम्पूज्य चाचार्य्यं वृणुयात् । तत आचार्य्यः पूषाश्विनोरित्या-दिषु नक्षत्रेषु जातस्य गोजननङ्कृत्वा—

जन्मर्क्षे वा त्रिजन्मर्क्षे शुभे वारे शुभे दिने ।
कृत्वाभ्यङ्गादिकं सर्व्वं गृहालङ्कारपूर्व्वकम् ।
गोमयेनोपलिप्याथ गृहस्येशानभागके ॥

---

* २० पृष्ठे प्रदर्शिताभिः ।

† अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशम्भुवमापश्च विश्वभेषजीः ॥
(१म. २३सू. २०ऋक् ।)

‡ सूक्तमिदं ५५ पृष्ठे प्रदर्शितम् ।

पङ्कजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः।
व्रीहींस्तत्र विनिक्षिप्येति॥

ऐशानभागस्थपङ्कजमध्ये यथाशक्ति व्रीहीन् निक्षिप्य तेषु शूर्पं निधाय शूर्पे रक्तवस्त्रं प्रसार्य्य तत्र तिलान् विकीर्य्य शूर्पे प्राङ्मुखं शिशुं निधाय रक्तसूत्रेण शूर्पं वेष्टयित्वा शिशुसमीपे गोमुखमानीय प्रसवं भावयित्वा विष्णोर्नुकमिति सूक्तेन* मिलितेन पञ्चगव्येन शिशुं स्नापयित्वा—

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते॥

(१०म, १८४सू, १ऋक्।)

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा॥

(१०म, १८४सू, २ऋक।)

हिरण्ययी अरणी यं निर्मन्थतो अश्विना।
तं ते गर्भं हवामहे दशमे मासि सूतवे स्वाहा॥

(१०म, १८४सू, ३ऋक्।)

नेजमेष परापत सुपुत्रः पुनरापत।
अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान् स्वाहा॥
यथेयं पृथिवी मह्युत्ताना गर्भमादधे।
एवं तं गर्भमाधेहि दशमे मासि सूतवे॥
विष्णोः श्रेष्ठेन रूपेण अस्यां नार्य्यां गवीन्याम्।

---

* ५५ पृष्ठे प्रदर्शितेन।

पुमांसं पुत्त्रमाधेहि दशमे मासि सूतवे ॥

विष्णुर्योनिमिति मन्त्रस्य त्वष्टा ऋषिर्विष्णुर्देवता अनुष्टुप् छन्दः पञ्चगव्येन शिशोरभिषेके विनियोगः। इति एभिर्वैदिकैर्मन्त्रैः

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥
गावो मे चाग्रतः सन्तु गावो मे सन्तु पृष्ठतः।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥

इति पौराणमन्त्राभ्याञ्च अभिषेकः कार्य्यः।

विष्णोः श्रेष्ठेनेत्यस्य त्वष्टा ऋषिर्विष्णुर्देवता अनुष्टुप् छन्दः मात्रे शिशुदाने विनियोगः।

विष्णोः श्रेष्ठेन रूपेण अस्यां नार्य्यां गवीन्याम्।
पुमांसं पुत्त्रमाधेहि दशमे मासि सूतवे ॥

ततो माता बालं पित्रे दद्यात्। तत आचार्य्यो बालं पित्रा मात्रे प्रदापयेत्। वस्त्रे संस्थाप्य तं पिता तन्मुखमीक्षयेत्। पञ्चगव्येन बालमभिषिञ्चेत्।

आपो हि ष्ठा इति तृचस्य सिन्धुद्वीप ऋषिरापो देवता गायत्री च्छन्दः शिशोरभिषेके विनियोगः।

आपो हि ष्ठा मयो भुवः। १।
यो वः शिवतमो रसः। २।
तस्मा अरं गमाम वः। ३।

ततः पिता अङ्गादङ्गादिति सौत्रमन्त्रस्य हिरण्यगर्भ ऋषिर्धाता देवता अनुष्टुप् छन्दः शिशुमूर्द्धन्यवघ्राणे विनियोगः।

अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे ।

आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥

अनेन मन्त्रेण त्रिरवघ्राय मातृहस्ते दत्त्वा अस्य गोमुखप्रसवाख्य-कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इत्युक्त्वा तान् तद्वाचयित्वा गा-माचार्याय दत्त्वा ग्रहप्रीत्यर्थं प्रत्येकं गोवस्त्रस्वर्णधान्यानि दत्त्वा यथाशक्ति भूयसीं दक्षिणां दद्यात् ।

तत आचार्य्योऽग्निं ग्रहांश्च प्रतिष्ठाप्य अन्वाधानं कुर्य्यात् । तत्र प्रधानं विष्णुं सकृत् यज्ञहरणम् अष्टाविंशतिसंख्यया वा दधिमध्वाज्यद्रव्येण नवग्रहांश्चाज्यद्रव्येण यक्ष्ये शेषेण स्विष्टकृत-मित्याज्यभागान्तं कृत्वा अग्नेरीशान्यां कुम्भमेकं संस्थाप्य तत्र पञ्चगव्यं तिलान् व्रीहीन् क्षीरद्रुमकषायान् पञ्च रत्नानि च निक्षिप्य वस्त्रयुग्मेन सञ्छाद्य पूर्णपात्रोपरि तद्विष्णोरिति मन्त्रेण विष्णुप्रतिमां तत्त्वा यामीति* वरुणप्रतिमाञ्चाभ्यर्च्य कुम्भं स्पृष्ट्वा वक्ष्यमाणमन्त्रान् जपेत् ।

यत इन्द्रेति अस्यां काण्वपुत्र ऋषिः इन्द्रो वार्हतो देवते प्रगाथं छन्दः जपे विनियोगः ।

ॐ यत इन्द्र भयामहे ततो नो अभयं कृधि ।

मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि ॥

(८म, ६१सू, १३ऋक् ।)

---

* तत्त्वा यामि सुवीर्यं तद्ब्रह्म पूर्व्वचित्तये ।

येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥

(८म. ३सू. ९ऋक् ।)

त्वं हि राधस्पते राधसो महः क्षयस्यासि विधतः ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥
(८म, ६१सू, १४ऋक् ।)

इन्द्रः स्पळुत वृत्रहा परस्पा नो वरेण्यः ।
स नो रक्षिषच्चरमं स मध्यमं स पश्चात् पातु नः पुरः ॥
(८म, ६१सू, १५ऋक् ।)

त्वन्नः पश्चादधरादुत्तरात् पुर इन्द्र निपाहि विश्वतः ।
आरे अस्मत् कृणुहि दैव्यं भयमारे हेतीरदेवीः ॥
(८म, ६१सू, १६ऋक् ।)

अद्याद्या श्वः श्व इन्द्र त्रास्व परे च नः ।
विश्वा च नो जरितॄन् सत्पते अहा दिवा नक्तञ्च रक्षिषः ॥
(८म, ६१सू, १७ऋक् ।)

प्रभङ्गी शूरो मघवा तुवीमघः सम्मिश्लो वीर्य्याय कम् ।
उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥
(८म, ६१सू, १८ऋक् ।)

एतैर्मन्त्रैः कलशमभिमन्त्रयेत् ।

ततो मिलितदधिमध्वाज्यैर्होमं कुर्य्यात् । तत्र मन्त्राः—

आपो हि ष्ठेति तिसृणां सिन्धुद्वीप आम्बरीष ऋषी आपो देवता गायत्री छन्दः होमे विनियोगः ।

आपो हि ष्ठा मयो भुवः । १ ।

यो वः शिवतमो रसः । २ ।

तस्मा अरं गमाम वः । ३ ।

अप्सु मे इत्यस्य मेधातिथिर्ऋषिरापो देवतानुष्टुप् छन्दः होमे नियोगः ।

ॐ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं विश्वशम्भुवम् ॥ (१०म, ९सू, ६ऋक् ।)
अद्भ्य इदं न मम ।

तद्विष्णोरित्यस्य मेधातिथिर्ऋषिर्विष्णुर्देवता गायत्री छन्दः होमे विनियोगः ।

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ (१म, २२सू, २०ऋक् ।)
विष्णवे इदं न मम ।

अक्षीभ्यां ते इति अस्यां विवृहा ऋषिर्यक्ष्महा देवतानुष्टुप् छन्दः होमे विनियोगः ।

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि ।
यक्ष्मꣳ शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥
(१०म, १६३सू, १ऋक् ।)
ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यमꣳसाभ्यां बाहुभ्यां विवृहामि ते ॥
(१०म, १६३सू, २ऋक् ।)
आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते ॥
(१०म, १६३सू, ३ऋक् ।
ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।

यक्ष्मᳬं श्रोणिभ्यां भासदाद्भᳬंससो विवृहामि ते ॥

(१०म, १६३सू, ४ऋक्।)

मेहनाद्वनं करणाल्लोमभ्यस्ते नखेभ्यः।

यक्ष्मᳬं सर्व्वस्मादात्मनस्तमिदं विवृहामि ते ॥

(१०म, १६३सू, ५ऋक्।)

अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्व्वणि पर्व्वणि।

यक्ष्मᳬं सर्व्वस्मादात्मनस्तमिदं विवृहामि ते ॥

(१०म, १६३सू, ६ऋक्।)

यक्ष्मघ्न इदं न मम।

आदित्यादिग्रहाणाञ्च होमं कुर्य्यात्स्वमन्त्रकम्।

ग्रहाणाञ्च होमं दधिमध्वाज्यसंयुतं कुर्य्यादित्यन्वयः। ततः स्विष्टकृदादिहोमशेषं समापयेत्। तत आचार्य्यादिभ्यो दक्षिणां दत्त्वा यथाशक्ति ब्राह्मणान् भोजयेत्।

इति गर्गोक्तं गोमुखप्रसवविधानं समाप्तम्।

## अथ कृष्णचतुर्द्दशीशान्तिविधानम्।

मन्दरस्थं सुखासीनं गर्गं मुनिवरं शुभम्।

नमस्कृत्याथ पप्रच्छ शौनको मुनिसत्तमः ॥

शान्तिकर्म्माणि सर्व्वाणि त्वत्तो जानाम्यहं पुरा।

अधुना श्रोतुमिच्छामि कृष्णपक्षे चतुर्द्दशी।

जननस्य फलं तस्यां कीदृशं मुनिपुङ्गव ॥

गर्ग उवाच

कृष्णपक्षे चतुर्द्दश्यां प्रसूतेः षड्विधं फलम्।
चतुर्द्दशीञ्च षड्भागां कुर्य्यादादौ शुभं स्मृतम्॥

दशघटिकात्मक एको भागस्तत्र आद्यो भागः शुभः।

द्वितीये पितरं हन्ति तृतीये मातरन्तथा।
चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशकः॥
षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम्।
तस्मात्सर्व्वप्रयत्नेन शान्तिं कुर्य्याद्विधानतः॥
आचार्य्यं वरयेद्धीमान् पुत्त्रदारसमन्वितः।
स्वकर्म्मनिरतं शान्तं श्रोत्रियं वेदपारगम्॥
सर्व्वालङ्कारसंयुक्तं सर्व्वलक्ष्मसमन्वितम्।
ब्रह्माणमृत्विजश्चैव स्वस्तिवाचनपूर्व्वकम्॥
रुद्रोऽधिदेवता तस्याः कर्षमात्रसुवर्णतः।
तदर्द्धार्द्धेन वा कुर्य्याद्वित्तशाठ्यविवर्ज्जितः।
प्रतिमां कारयेच्छम्भोः सर्व्वलक्षणसंयुताम्॥

अधिदेवता प्रधानदेवतेत्यर्थः।

वृषभे च समासीनं वरदाभयपाणिनम्।
शुद्धस्फटिकसङ्काशं श्वेतमाल्याम्बरान्वितम्।
त्र्यम्बकेन मन्त्रेण* पूजां कुर्य्याद्विधानतः॥

अभयेन पणते इत्यभयपाणी तम्।

स्थापयेच्चतुरः कुम्भांश्चतुर्द्दिक्षु यथाक्रमम्।

---

* त्र्यम्बकं यजामहे इत्यादिना १८१ पृष्ठे उक्तेन।

पुण्यतीर्थजलोपेतान् धान्यस्योपरि विन्यसेत् ॥
तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् ।
एवञ्च पञ्च कलसाः स्थाप्याः पञ्चामृताचिताः ॥
पञ्चामृतञ्च रत्नानि पञ्चत्वक् पञ्चपल्लवान् ।
पञ्चधान्यं* सुवर्णञ्च तत्तन्मन्त्रैर्विनिक्षिपेत् ॥
शतौषधानि निक्षिप्य श्वेतवस्त्रेण वेष्टयेत् ।
सुरभीणि च पुष्पाणि श्वेतानि परिवेष्टयेत् ॥
सर्व्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥
आवाह्य वारुणैर्मन्त्रैरनेन च विधानतः ।
इमं मे वरुणेत्यनया† तत्त्वायामीत्यृचा‡ तथा ॥
त्वं नो अग्ने इत्यनया§ स त्वं न इति मन्त्रतः§ ।
आग्नेयकलसामारभ्य¶ पूजां कुर्य्याद्‌यथाक्रमात् ॥
पूजा तु वरुणस्यैव मन्त्रलिङ्गात्प्रतीयते ।
आनो भद्राश्च सूक्तेन‖ भद्रा अग्नेश्च सूक्तकम्** ॥

---

* सप्तधान्यमिति ग-पुस्तके पाठः ।

† ७४ पृष्ठे प्रदर्शितया ।

‡ ६९ पृष्ठे प्रदर्शितया ।

§ ऋक्‌द्वयं ७४ पृष्ठे प्रदर्शितम् ।

¶ आग्नेयं घटमारभ्य इति पाठे छन्दोभङ्गो न स्यात् ।

‖ ७१ पृष्ठे प्रदर्शितेन ।

** भद्रा अग्नेर्वभ्रचस्य संहती वाली अशीति[illegible] ।

जप्त्वा पुरुषसूक्तञ्च* कद्रुद्रञ्च† क्रमाज्जपेत् ।
ईश्वरस्याभिषेकञ्च ग्रहपूजाञ्च कारयेत् ॥
पूजाकर्म्म तु निर्व्वर्त्त्य होमं कुर्य्याद्विधानतः ।
गेहस्येशानदिग्भागे कुण्डं कुर्य्याद्विधानतः ॥
विस्तारायामखातञ्च करत्रिहयसंयुतम् ।
कुण्डकण्ठं परित्यज्य योनिं कुर्य्याद्विधानतः ॥
योनिं षडङ्गुलां तिर्य्यग्द्वादशाङ्गुलदैर्घ्यकाम् ।
अश्वत्थदलसङ्काशां किञ्चिन्निम्नायतां शुभाम् ॥
कुर्य्यादाधारपर्य्यन्तं खण्डयोक्तविधानतः ।
समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः ॥
अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ।
अष्टोत्तरसहस्रं वा अष्टोत्तरशतन्तु वा ॥
अष्टाविंशतिमेतैश्च होमं कुर्य्यात् पृथक् पृथक् ।

एतैर्दशभिः समिदादिभिरित्यर्थः ।

त्रैयम्बकेन मन्त्रेण तिलाज्याहुतिभिः क्रमात् ।
ग्रहानेवञ्च होतव्यं‡मस्मदुक्तविधानतः ॥
एवंक्रमेण हुत्वाथ होमशेषं समापयेत् ।
सर्व्वालङ्कारयुक्तानां त्रयाणामभिषेचनम् ॥

त्रयाणां मातृपितृबालानामित्यर्थः ।

---

* १२५ पृष्ठे प्रदर्शितम् ।

† ७४ पृष्ठे प्रदर्शितम् ।

‡ ग्रहा एवञ्च होतव्या इति पाठो युक्तः, ग्रहानिति पाठे उद्दिश्येत्यध्याहार्य्यम् ।

चतुर्भिः कलसैरन्यैर्बृहत्कुम्भसमन्वितम् ।

चतुःकलसोदकं बृहत्कुम्भे निषिच्य आचार्य्योऽभिषेकं कुर्य्यादित्यर्थः ।

धौताम्बराणि धृत्वाथ कुर्य्यादाज्यावलोकनम् ।
पूर्णाहुतिञ्च जुहुयाद्यजमानः समाहितः ॥
तत्सर्व्वं परया भक्त्या ईश्वराय निवेदयेत् ।
सर्व्वालङ्कारसंयुक्तां सवत्सां गां पयस्विनीम् ॥
प्रतिमां वस्त्रयुग्मञ्च आचार्य्याय निवेदयेत् ।
अन्येषामृत्विजाञ्चैव कुर्य्याद्ब्राह्मणभोजनम् ॥
तस्मादनेन विधिना वित्तशाठ्यविवर्ज्जितः ।
य एवं कुरुते शान्तिं सर्व्वारिष्टैः प्रमुच्यते ॥
सर्व्वान् कामानवाप्नोति स्थिरजीवी सुखी भवेत् ।
इत्युत्तरगर्गोक्तकृष्णचतुर्द्दशीजननशान्तिविधानम् ॥

अथ सिनीवालीकुहूजननशान्तिविधानम् ।

अमायुक्ता चतुर्द्दशी सिनीवालीत्युच्यते दृष्टचन्द्रा सिनीवालीत्यभिधानात् । नष्टचन्द्रा अमावस्या कुहूरित्युच्यते सा नष्टेन्दुकला कुहूरिति कोषात् ।

सिनीवाल्यां प्रसूता स्याद् यस्य भार्य्या पशुस्तथा ।
गजाश्वा महिषी चैव शक्रस्यापि श्रियं हरेत् ॥
ये सन्ति सकलाश्चान्ये स्वप्रसादोपजीविनः ।
वर्ज्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥

कुष्ठप्रसूतिरत्यर्थं सर्व्वदोषकरी भवेत् ।
कुष्ठप्रसूतिरेतेषां तस्यायुर्धननाशनम् ॥
सर्व्वगण्डसमस्तत्र दोषस्तु प्रबलो भवेत् ।
शान्तिं विना विशेषेण परित्यागो विधीयते ॥
परित्यागात्तत्र शान्तिं कुर्य्याद्धोमादिलक्षणः ।
तत्फलं तत्क्षणार्द्धेन पुनरेवानुपालनम् ॥
तद्‌योगं नाशयेत्किञ्चित् स्वयं वा नाशमश्नुते ।
कल्पोक्तशान्तिः कर्त्तव्या शीघ्रं दोषापनुत्तये ॥
रुद्रः शक्रश्च पितरः पूज्याः स्युर्द्देवताः क्रमात् ।
कर्षमात्रसुवर्णेन तदर्द्धार्द्धेन वा पुनः ॥
अथवा शक्तितः कुर्य्याद्वित्तशाठ्यविवर्ज्जितः ।
प्रतिमां कारयेच्छम्भोश्चतुर्भुजसमन्विताम् ॥
त्रिशूलखड्गवरदाभयहस्तां यथाक्रमात् ।
श्वेतवर्णां श्वेतपुष्पां श्वेताम्बरसुपस्थिताम् ॥
त्रैयम्बकेन मन्त्रेण पूजां कुर्य्याद्‌यथाविधि ।
इन्द्रश्चतुर्भुजो वज्राङ्कुशचापः ससायकः ॥
रक्तवर्णो गजारूढ़ो यत इन्द्रेति मन्त्रतः* ।
पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः ॥
अक्ष†सूत्रकमण्डल्वभयस्यैव च धारिणः ॥

---

* यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्विद्विषो विमृधो जहि ॥ (८म, ६१सू, १३ऋक् ।)

† अचेत्यत्र पद्मेति क-ग-पुस्तकयोः पाठः ।

ये सत्या इति मन्त्रेण* पूजां कुर्य्यादनन्तरम् ।
आग्नेयीं दिशमारभ्य कुम्भान् कोणेषु विन्यसेत् ॥
तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् ।
तेष्वेव पञ्चगव्यादि तत्तन्मन्त्रैश्च निक्षिपेत् ॥
कल्पोक्तशान्तिः कर्त्तव्या कुर्य्याच्छीघ्रं स्वशक्तितः ।
गोदानं वस्त्रदानञ्च सुवर्णं चोर्वरां शुभाम् ॥
दश दानानि चोक्तानि क्षीरमाज्यं गुडास्तथा ।
आज्यावेक्षणमेतानि तत्तन्मन्त्रैश्च कारयेत् ॥

इदं दानं होमाभिषेकानन्तरं कार्य्यम् । अन्यत्र सर्व्वशान्तिषु तथाक्रमोपलब्धेः ।

समिदाज्यचरोर्होमं तिलमाषैश्च सर्षपैः ।
अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥
अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयाद्द्विजः ।
त्र्यम्बकेन मन्त्रेण तिलान् व्याहृतिभिः पुनः ॥

मुख्यपदोपादानमशक्तौ संख्येतरस्य ज्ञापकम् । तेन अष्टाविंशतिरपि संख्या भवति ।

चतुर्भिः कलसैर्युक्तं हुत्वाकुम्भसमन्वितम् ।
शान्तिवत्कलसं कार्य्यमभिषेकञ्च कारयेत् ॥

---

* ये सत्यासो हविरदो हविष्पा इन्द्रेण देवैः सरथं दधानाः ।
आग्ने याहि सहस्रं देववन्दैः परैः पूर्व्वैः पितृभिर्घर्म्मसद्भिः ॥
(१०म. १५सू. १०ऋक् ।)

पितृमातृभ्रिशूनाञ्च अभिषिञ्चेत्तु वारुणैः ।
शङ्करस्याभिषेकञ्च कुर्य्याद्ब्राह्मणभोजनम् ॥
अन्येषाञ्चैव सर्व्वेषां ब्राह्मणानाञ्च तर्पणम् ।
कार्य्यं शक्त्यनुसारेण स्वस्तिवाचनपूर्व्वकम् ॥
इत्युत्तरगार्ग्योक्तसिनीवालीकुहूजननशान्तिविधानम् ।

## अथ दर्शजननशान्तिविधानम् ।

नारदः ।

अथातो दर्शजातानां मातापित्रोर्दरिद्रता ।
तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि नारदः ॥
पुण्याहं वाचयित्वादौ क्रतुसङ्कल्पपूर्व्वकम् ।
कुण्डं वा मण्डलं कुर्य्यात्तद्देशे स्थापयेद्घटम् ॥
तत्कुम्भे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकम् ।
न्यग्रोधोदुम्बराश्वत्थाः सचूता निम्बकास्तथा ॥
एतेषां वृक्षवर्य्याणां त्वगादीन् पल्लवांस्तथा ।
पञ्च रत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥
सर्व्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥
आपो हि ष्ठा त्वचेनाथ* कया नश्चित्र† इत्यृचा ।

---

* त्वचेनेत्यत्र त्र्यृचेनेति पाठो युक्तः, त्वचमित्यस्य अर्थविशेषे निपातसिद्धत्वात् ।

† कया नश्चित्र आभुव दूती सदा वृधः सखा ।
कया शचिष्ठया वृता ॥ (४म. ३१सू. १ऋक् ।) (टीकाशेषः पृष्ठे द्रष्टव्यः ।)

अभिमन्त्र्योदकं पश्चादग्नेः पूर्व्वप्रदेशके ॥
हारिद्रं रक्तकञ्चैव कृष्णं श्वेतञ्च नीलकम् ।
एतेषां तण्डुलैश्चैव सर्व्वतोभद्रमुद्धरेत् ॥
दर्शस्य देवतायाश्च सोमसूर्य्यस्वरूपकाः* ।
प्रतिमां स्वर्णजनितां राजतीं ताम्रजां तथा ॥
अयं धातुक्रमो दर्शे सोमसूर्य्यक्रमापेक्षया द्रष्टव्यः ।
सर्व्वतोभद्रमध्ये च स्थापयेद्दर्शदेवताम् ।
ग्रहवर्णं वस्त्रयुग्मं तद्वर्णं गन्धपुष्पकम् ॥
ग्रहवर्णं श्वेतरक्तवर्णमित्यर्थः ।
आप्यायस्वेति† मन्त्रेण सवितारं तथैव च ।
उपचारैः समाराध्य ततो होमं समाचरेत् ॥
सोमसूर्य्यपूजापि सर्व्वतोभद्र एव सान्निध्यात् ।
ततो वह्निं प्रतिष्ठाप्य क्रतुसङ्कल्प ईदृशः ।
आयुरारोग्यसिद्ध्यर्थं सर्व्वारिष्टप्रशान्तये ॥

---

कया सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृळ्हा चिदारुजे वसु ॥ (४म. ३१सू. २ऋक् ।)
अभी षु णः सखीनामविता जरितॄणां ।
शतं भवास्यूतिभिः ॥ (४म. ३१मू. ३ऋक् ।)

* प्रतिमा इति शेषः ।

† आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ॥ (९म. ९१सू. ४ऋक् ।)

पुत्रस्य दर्शजननदोषनिर्हरणाय च ।

मातापित्रोः कुमारस्य सर्व्वारिष्टप्रशान्तये ।

तेषामायुःश्रिये चैव शान्तिहोमं करोम्यहम् ॥

अयं सङ्कल्पः पूर्व्वमपि कार्य्यः । तत्रैतावान् विशेषो दर्शजनन-शान्तिं करिष्ये इति ।

ततः ।

समिधश्च चरुद्रव्यं क्रमेण जुहुयाद्गृही ।

हुनेत्सवितृमन्त्रेण* सोमो धेनुश्च मन्त्रतः† ॥

सवितृमन्त्र आकृष्णेनेत्यादिः ।

एतैर्मन्त्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतम् ।

दर्शस्य देवताहोममष्टाविंशतिसंख्यया ॥

दर्शदेवतामन्त्रस्तल्लिङ्गको ग्राह्यः । यद्वा दर्शदेवतापूजाहोमादि नाममन्त्रेण कार्य्यम् (वेदमन्त्रेण न कार्य्यम्) वेदमन्त्रानुपदेशात् ।

होममेवन्तु कृत्वाथ विद्याचाराभिषेचनम् ।

अभिषेकस्तु पूर्व्वस्थापितकुम्भेन कार्य्यः ।

---

आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥
(३३अ. ४३म. यजुः ।)

सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्म्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥
(१म. ९१सू. २०ऋक् ।)

श्रीसूक्त*मायुष्यसूक्तं समुद्रज्येष्ठपञ्चकम्† ।
एतैर्मन्त्रैश्चाभिषेकं मातापित्रोः शिशोस्तथा ॥

कुर्य्यादिति शेषः ।

ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् ।
हिरण्यं रजतञ्चैव कृष्णा धेनुः सदक्षिणा ॥

---

* हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ इत्यादिकमृग्वेदपरिशिष्टे मृग्यम्

† समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिविशमानाः ।
इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥
(७म. ४९सू. १ऋक् ।)

या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः ।
समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु ॥
(७म. ४९सू. २ऋक् ।)

यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु ॥
(७म. ४९सू. ३ऋक् ।)

यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति ।
वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ॥
(७म. ४९सू. ४ऋक् )

आ मां मित्रावरुणेह रक्षतं कुलाययद्विश्वयन्मा न आगन् ।
अजकावं दुर्दृशीकं तिरोदधे मा मां पद्येन रपसा विदत् त्सरुः ॥
(७म. ५०सू. १ऋक् ।)

यद्विजामन् परुषि वन्दनं भुवदष्ठीवन्तौ परिकुल्फौ च देहत् ।
अग्निष्टच्छोचन्नपबाधतामितो मा मां पद्येन रपसा विदत् त्सरुः ॥
(७म. ५०सू. २ऋक्

अन्येभ्योऽपि यथाशक्ति दातव्या दक्षिणा तथा।
ब्राह्मणान् भोजयेत्तत्र कारयेत्स्वस्तिवाचनम्॥

इति नारदोक्तदर्शजननशान्तिविधानं समाप्तम्।

अथ मूलजननशान्तिविधानम्।

यथा शौनकीये।

अथातः सम्प्रवक्ष्यामि मूलजातहिताय च।
मातापित्रोर्धनस्यापि कुलशान्तिहिताय च॥
त्यागो वा मूलजातस्य स्यादष्टाब्दाप्रदर्शनम्।
अभुक्तमूलजातानां परित्यागो विधीयते॥

तल्लक्षणमाह बृहद्वशिष्ठः।

ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम्।
अभुक्तमूलमित्याहुर्जातं तच्च विवर्जयेत्॥
अदर्शनाद्वापि पितुः समुत्तिष्ठेत्समाष्टकम्।
एवञ्च दुहितुर्ज्ञेयं मूलजातफलं बुधैः॥

ग्रन्थान्तरे तु कन्यकायाः फलमन्यथोक्तम्।

न बाला हन्ति मूलर्क्षे पितरं मातरं तथा।
मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम्॥
माहेन्द्रजाग्रजं हन्ति देवरं तु द्विदेवजा।
शान्तिर्वा पुष्कला स्याच्चेत्तदा दोषो न कश्चन॥

मुख्यकालं प्रवक्ष्यामि शान्तिस्तत्र प्रशस्यते* ।
जातस्यैकादशाहे तु जन्मर्क्षे वा शुभे दिने ॥
समाष्टके द्वादशाहे कुर्य्याद्वा शान्तिमादरात् ।
यदैव शान्तिकं कुर्य्यात्कर्म्म तत्र प्रचक्ष्महे ॥
सुसमे पुण्यदेशे तु मण्डपं कारयेद्बुधः ।
पुण्यर्ग्भिर्मन्त्रितैस्तोयैः प्रोक्षितायां क्षितौ ततः ॥

पुण्यर्ग्भिः आपोहिष्ठादयः ।

तत्रोदकुम्भं सुस्नग्धं रक्तं व्रणविवर्ज्जितम् ।
आचूडमूलनिर्णिक्तं पूरयेन्निर्म्मलाम्भसा ॥
वस्त्रावगुण्ठितं कुर्य्यात्पूरयेत्तीर्थवारिणा ।
कूर्च्चहेमसमायुक्तं चूतपल्लवसंयुतम् ॥

कूर्च्चं पञ्चगव्यम् । स्वस्तिकोपरि विन्यस्य पञ्चकूर्च्चेन पीतेनेति स्कान्दे तथा दर्शनात् ।

स्वस्तिकोपरि विन्यस्य सक्षीरद्रुमपल्लवैः ।
द्रोणप्रमाणव्रीहींश्च ऐशान्याञ्च निधापयेत् ॥
पञ्चरत्नानि निक्षिप्य सर्व्वौषधिसमन्वितम् ।
अर्च्चितं गन्धपुष्पाद्यैः श्रीरुद्रञ्च स्पृशन् जपेत् ॥

श्रीरुद्रं रुद्राध्यायम् ।

षडङ्गसहितं सम्यक् जपेद्रुद्रस्य संख्यया ।
बह्वृचो रुद्रसूक्तैर्वा छन्दोगो रुद्रसामगैः ॥

* शान्तेस्तस्य फलं शुभमिति ग-पुस्तके पाठः ।

रुद्रसूक्तानि चत्वारि । कद्रुद्रायेति नवर्चमेकम्* ।
इमा रुद्राय तवसे इत्येकादशर्चं द्वितीयम्† ।

---

कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे ।
वोचेम शंतमं हृदे ॥ (१म. ४३सू. १ऋक् ।)
यथा नो अदितिः करत् पश्वे नृभ्यो यथा गवे ।
यथा तोकाय रुद्रियम् ॥ (१म. ४३सू. २ऋक् ।)
यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति ।
यथा विश्वे सजोषसः ॥ (१म. ४३सू. ३ऋक् ।)
गाथपतिं मेधपतिं रुद्रं जलाषभेषजं ।
तच्छंयोः सुम्नमीमहे ॥ (१म. ४३सू. ४ऋक् ।)
यः शुक्र इव सूर्यो हिरण्यमिव रोचते ।
श्रेष्ठो देवानां वसुः ॥ (१म. ४३सू. ५ऋक् ।)
शं नः करत्यर्वते सुगं मेषाय मेष्ये ।
नृभ्यो नारिभ्यो गवे ॥ (१म. ४३सू. ६ऋक् ।)
अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् ।
महि श्रवस्तुविनृम्णम् ॥ (१म. ४३सू. ७ऋक ।)
मा नः सोमपरिबाधो मारातयो जुहुरन्त ।
आ न इन्दो वाजे भज ॥ (१म. ४३सू. ८ऋक् ।)
यास्ते प्रजा अमृतस्य परस्मिन् धामन्नृतस्य ।
मूर्धा नाभा सोम वेन आभूषन्तीः सोम वेदः ॥ (१म. ४३सू. ९ऋक् ।)

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ (१म. ११४सू. १ऋक् ।)
मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥
(१म. ११४सू. २ऋक् ।)

अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः ।
सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥

(१म. ११४सू. ३ऋक् ।)

त्वेषं वयं रुद्रं यज्ञसाधं वङ्कुं कविमवसे नि ह्वयामहे ।
आरे अस्मद्दैव्यं हेडो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥

(१म. ११४सू. ४ऋक् ।)

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे ।
हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥ (१म. ११४सू. ५ऋक् ।)

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृड ॥

(१म. ११४सू. ६ऋक् ।)

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥

(१म. ११४सू. ७ऋक् ।)

मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥

(१म. ११४सू. ८ऋक् ।)

उप ते स्तोमान् पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे ।
भद्रा हि ते सुमतिर्मृडयत्तमाथा वयमव इत्ते वृणीमहे ॥

(१म. ११४सू. ९ऋक् ।)

आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु ।
मृडा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥

(१म. ११४सू. १०ऋक् ।)

अवोचाम नमो अस्मा अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥

(१म. ११४सू. ११ऋक् ।)

## आ ते पितरिति पञ्चदशर्चं तृतीयम्* ।

---

आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्य्यस्य संदृशो युयोथाः ।
अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः ॥ (२म. ३३सू. १ऋक् ।)
त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः ।
व्यस्मद्द्वेषो वितरं व्यंहो व्यमीवाश्चातयस्वा विषूचीः ॥ २ ॥
श्रेष्ठो जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो ।
पर्षिणः पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥ ३ ॥
मा त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभिः भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥
हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय ।
ऋदूदरः सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥
उन्मा ममन्द वृषभो मरुत्वान् त्वक्षीयसा वयसा नाधमानम् ।
घृणीव छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥ ६ ॥
क्व स्य ते रुद्र मड़याकुर्हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्त्ता रपसो दैव्यस्याभी नु मा वृषभ चक्षमीथाः ॥ ७ ॥
प्र बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि ।
नमस्या कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥ ८ ॥
स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरेर्नवा उ योषद्रुद्रादसुर्य्यम् ॥ ९ ॥
अर्हन् बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं नवा ओजीयो रुद्र त्वदस्ति ॥ १० ॥
स्तुहि श्रुतं गर्त्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मड़ा जरित्रे रुद्र स्तवानोऽन्यं ते अस्मन्निवपन्तु सेनाः ॥ ११ ॥

इमा रुद्राय स्थिरधन्वने इति* चतुर्ऋचं चतुर्थम्। सामग
आवो राजानं†मित्येकादशरुद्रसामानि जपेत्। बह्वृचसा:

---

कुमारश्चित् पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम्।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे॥ १२॥
या वो भेषजा मरुत: शुचीनि या शन्तमा वृषणो या मयोभु।
यानि मनुरवृणीता पिता नस्ता शं च योश्च रुद्रस्य वश्मि॥ १३॥
परि णो हेती रुद्रस्य वृज्या: परि त्वेषस्य दुर्मतिर्मही गात्।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ॥ १४॥
एवा बभ्रो वृषभ चेकितान यथा देव न हृणीषे न हंसि।
हवनश्रुन्नो रुद्रेह बोधि बृहद्वदेम विदथे सुवीरा:॥ (२म. ३३सू. १५ऋक्।)
इमा रुद्राय स्थिरधन्वने गिर: क्षिप्रेषवे देवाय स्वधाव्ने।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु न:॥ (७म.४६सू.१ऋक्।)
स हि क्षयेण क्षम्यस्य जन्मन: साम्राज्येन दिव्यस्य चेतति।
अवन्नवन्तीरुप नो दुरश्चरानमीवो रुद्र जासु नो भव॥ २॥
या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु न:।
सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिष:॥ ३॥
मा नो वधी रुद्र मा परा दा मा ते भूम प्रसितौ हीळितस्य।
आ नो भज बर्हिषि जीवशंसे यूयं पात स्वस्तिभि: सदा न:॥
(७म. ४६सू. ४ऋक्।)
आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्यो:।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्॥ (४म. ३सू. १ऋक्।)
अयं योनिश्चकृमा यं वयं ते जायेव पत्य उशती सुवासा:।
अर्वाचीन: परिवीतो निषीदेमा उ ते स्वपाक प्रतीची:॥ २॥
आशृण्वते अदृपिताय मन्म नृचक्षसे सुमृळीकाय वेध:।
देवाय शस्तिममृताय शंस ग्रावेव सोता मधुषुद्यमीळे॥ ३॥

गयोरयं विशेषः। श्रीरुद्रस्तु सर्व्वसाधारणः। यजुर्व्वेदिन एव श्रीरुद्र इत्यन्ये। एकादशाष्टत्रिद्वेकसंख्यया वा शक्तितो जपेदिति केचित्। एतत्सूत्रजपसंख्येयं श्रीरुद्रस्य संख्यान्तरव्यासत्वात्।

तत्राप्रतिरथं सूक्तं शतरुद्रानुवाककम्।

अप्रतिरथं सूक्तम् आशुः शिशान इति* ।

---

त्वं चिन्नः शम्या अग्ने अस्या ऋतस्य बोध्यृतचित् स्वाधीः।
कदा त उक्था सधमाद्यानि कदा भवन्ति सख्या गृहे ते॥ ४॥
कथा ह तद्वरुणाय त्वमग्ने कथा दिवे गर्हसे कन्न आगः।
कथा मित्राय मीळ्हुषे पृथिव्यै ब्रवः कदर्यम्णे कद्भगाय॥ ५॥
कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे शुभंये।
परिज्मने नासत्याय क्षे ब्रवः कदग्ने रुद्राय नृघ्ने॥ ६॥
कथा महे पुष्टिम्भराय पूष्णे कद्रुद्राय सुमखाय हविर्दे।
कद्विष्णव उरुगायाय रेतो ब्रवः कदग्ने शरवे बृहत्यै॥ ७॥
कथा शर्धाय मरुतामृताय कथा सूरे बृहते पृच्छ्यमानः।
प्रति ब्रवोऽदितये तुराय साधा दिवो जातवेदश्चिकित्वान्॥ ८॥
ऋतेन ऋतं नियतमीळ आ गोरामा सचा मधुमत् पक्वमग्ने।
कृष्णा सती रुशता धासिनैषा जामर्य्येण पयसा पीपाय॥ ९॥
ऋतेन हि ष्मा वृषभश्चिदक्तः पुमाँ अग्निः पयसा पृष्ठ्येन।
अस्पन्दमानो अचरद्वयोधा वृषा शुक्रं दुदुहे पृश्निरूधः॥ १०॥
ऋतेनाद्रिं व्यसन् भिदन्तः समङ्गिरसो नवन्त गोभिः।
शुनं नरः परिषदन्नुषासमाविः स्वरभवज्जाते अग्नौ॥ (४म. ३सू. ११ऋक्।)
आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
संक्रन्दनो निमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः॥ (१७अ. ३३म. यजुः।)

रुद्रानुवाकः त्वमग्ने रुद्र इत्यादिः* ।

रक्षामन्त्रं तथा पुण्यं रक्षोघ्नञ्च सूक्तन् जपेत् ।

रक्षामन्त्रो रक्षाणो अग्न इति† । रक्षोघ्नं सूक्तं रक्षोहणमिति‡ पञ्चविंशदृचम् ।

---

* त्वमग्ने रुद्रो असुरो महोदिवस्त्वं शर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नु त्मना ॥ (२म. १सू. ६ऋक् ।)

† रक्षाणो अग्ने तव रक्षणेभी रारक्षाणः सुमख प्रीणानः ।
प्रतिष्फुर विरुज वीड्वंहो जहि रक्षो महि चिद्वावृधानम् ॥ (४म. ३सू. १४ऋक् ।

‡ रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥
(१०म. ८७सू. १ऋक् ।)

अयोदंष्ट्रो अर्चिषा यातुधानानुपस्पृश जातवेदः समिद्धः ।
आजिह्वया मूरदेवान्रभस्व क्रव्यादो वृक्त्व्यपि धत्स्वासन् ॥ २ ॥
उभोभयाविन्नुपधेहि दंष्ट्रा हिंस्रः शिशानोऽवरं परं च ।
उतान्तरिक्षे परियाहि राजञ्जम्भैः संधेह्यभि यातुधानान् ॥ ३ ॥
यज्ञैरिषूः संनममानो अग्ने वाचा शल्याँ अशनिभिर्दिहानः ।
ताभिर्विध्य हृदये यातुधानान् प्रतीचो बाहून् प्रतिभङ्ग्ध्येषाम् ॥ ४ ॥
अग्ने त्वचं यातुधानस्य भिन्धि हिंस्राशनिर्हरसा हन्त्वेनम् ।
प्रपर्वाणि जातवेदः शृणीहि क्रव्यात् क्रविष्णुर्विचिनोतु वृक्णम् ॥ ५ ॥
यत्रेदानीं पश्यसि जातवेदस्तिष्ठन्तमग्न उत वा चरन्तम् ।
यद्वान्तरिक्षे पथिभिः पतन्तं तमस्ता विध्य शर्वा शिशानः ॥ ६ ॥
उतालब्धं स्पृणुहि जातवेद आलेभानादृष्टिभिर्यातुधानात् ।
अग्ने पूर्वो निजहि शोशुचान आमादः क्ष्विङ्कास्तमदन्त्वेनीः ॥ ७ ॥
इह प्रब्रूहि यतमः सो अग्ने यो यातुधानो य इदं कृणोति ।
तमा रभस्व समिधा यविष्ठ नृचक्षसश्चक्षुषे रन्धयैनम् ॥ ८ ॥

तीक्ष्णेनाग्ने चक्षुषा रक्ष यज्ञं प्राञ्चं वसुभ्यः प्रणय प्रचेतः ।
हिंस्रं रक्षांस्यभि शोशुचानं मा त्वा दभन् यातुधाना नृचक्षः ॥ ९ ॥
नृचक्षा रक्षः परिपश्य विक्षु तस्य त्रीणि प्रतिशृणीह्यग्रा ।
तस्याग्ने पृष्टीर्हरसा शृणीहि त्रेधा मूलं यातुधानस्य वृश्च ॥ १० ॥
त्रिर्यातुधानः प्रसितिं त एत्वृतं यो अग्ने अनृतेन हन्ति ।
तमर्चिषा स्फूर्जयञ्जातवेदः समक्षमेनं गृणते निवृङ्धि ॥ ११ ॥
तदग्ने चक्षुः प्रतिधेहि रेभे शफारुजं येन पश्यसि यातुधानम् ।
अथर्ववज्ज्योतिषा दैव्येन सत्यं धूर्वन्तमचितं न्योष ॥ १२ ॥
यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः ।
मन्योर्मनसः शरव्या जायते या तयाविध्य हृदये यातुधानान् ॥ १३ ॥
परा शृणीहि तपसा यातुधानान् पराग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरदेवाञ्छृणीहि परासुतृपो अभि शोशुचानः ॥ १४ ॥
पराद्य देवा वृजिनं शृणन्तु प्रत्यगेनं शपथा यन्तु तृष्टाः ।
वाचास्तेनं शरव ऋच्छन्तु मर्मन् विश्वस्यैतु प्रसितिं यातुधानः ॥ १५ ॥
यः पौरुषेयेण क्रविषा समङ्क्ते यो अश्व्येन पशुना यातुधानः ।
यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसापि वृश्च ॥ १६ ॥
संवत्सरीणं पय उस्रियायास्तस्य माशीद्यातुधानो नृचक्षः ।
पीयूषमग्ने यतमस्तितृप्सात्तं प्रत्यञ्चमर्चिषा विध्य मर्मन् ॥ १७ ॥
विषं गवां यातुधानाः पिबन्त्वा वृश्च्यन्ता मदितये दुरेवाः ।
परैनान् देवः सविता ददातु पराभागमोषधीनां जयन्ताम् ॥ १८ ॥
सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्युः ।
अनुदह सहमूरान् क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥ १९ ॥
त्वं नो अग्ने अधरादुदक्तात्त्वं पश्चादुत रक्षा पुरस्तात् ।
प्रति ते ते अजरासस्तपिष्ठा अघशंसं शोशुचतो दहन्तु ॥ २० ॥
पश्चात् पुरस्तादधरादुदक्तात् कविः काव्येन परिपाहि राजन् ।
सखे सखायमजरो जरिम्णेऽग्ने मर्तां अमर्त्यस्त्वं नः ॥ २१ ॥

त्रैयम्बकं जपेत्सम्यगष्टोत्तरसहस्रकम् ।
एकवारं तथा जापी पावमानीं स्पृशन् जपेत् ।
संस्थाप्य पञ्च कुम्भांश्च द्वयं वा तदलाभतः ॥

तथाच रुद्रकलसो मध्ये स्थाप्यस्तस्य चतुर्द्दिक्षु चत्वारः स्थाप्य तत्र मध्ये रुद्रप्रतिमां सम्पूज्य तं कुम्भं स्पृशन् रुद्राध्यायं* रुद्रसूक्तानि† च जपेत् । इतरेषु पूर्व्वादिकुम्भेषु वरुणमावाह्य क्रमेणाप्रतिरथकद्रुद्रानुवाकरक्षोमन्त्ररक्षोघ्नानि जपेत्त्र्यम्बकं मध्य एवेत्यर्थः । पावमानमपि चतुर्थ एव । अथवा रुद्रकुम्भ एकः इतरसूक्तजपार्थं द्वितीय इति द्वौ कुम्भौ । यद्वा पञ्चमुखमेकमेव कुम्भं स्थापयित्वा पञ्चमुखकुम्भेतिकर्त्तव्यता कार्य्येत्याह कश्चित् यथा ।

श्रीरुद्रस्यैव कुम्भस्य सर्व्वसूक्तानि तत्र तु ।
तथान्यच्च शुभं कुम्भं पूर्व्वोक्तैर्लक्षणैर्युतम् ॥

---

परित्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावताम् ॥ २१ ॥
विषेण भङ्गुरावतः प्रतिष्म रक्षसो दह ।
अग्ने तिग्मेन शोचिषा तपुरग्राभिर्ऋष्टिभिः ॥ २२ ॥
प्रत्यग्ने मिथुना दह यातुधाना किमीदिना ।
सं त्वा शिशामि जागृह्यदब्धं विप्र मन्मभिः ॥ २४ ॥
प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति ।
यातुधानस्य रक्षसो बलं विरुज वीर्य्यम् ॥ (१०म. ८७सू. २५ऋक् ।)

* रुद्राध्यायः प्रसिद्धत्वाद्विस्तृतत्वाच्च नात्र प्रदर्शितः ।

† २१५—२२८ पृष्ठेषु प्रदर्शितानि ।

चतुःप्रस्थवर्णं कुर्य्यात्पञ्चवक्त्रञ्च तद्भवेत् ।
वस्त्रावगुण्ठितं कुर्य्यात्पूरयेत्तीर्थवारिणा ॥
पञ्चरत्नसमायुक्तमाम्रपल्लवसंयुतम् ।
गजाश्वरथ्यावल्मीक-सङ्गमाद्ध्रदगोकुलात् ॥
राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ।
कुम्भस्य नैर्ऋते देशे होमस्थानं प्रकल्पयेत् ॥
गोमयोपलेपिते देशे कुर्य्यात्स्थण्डिलमुत्तमम् ।
कृत्वाग्निमुखपर्य्यन्तमुल्लेखादि स्वशाखतः ॥
पूर्णपात्रनिधानान्तं कृत्वा पूजां समाचरेत् ।
निष्कमानेन चार्द्धेन पादेनाथ स्वशक्तितः ॥
प्रतिमां लक्षणैर्युक्तां कारयित्वा विचक्षणः ।
यद्वा मूल्यं सुवर्णस्य स्थापयित्वा प्रपूजयेत् ॥
सुवर्णं सर्व्वदेवत्वं सर्व्वदेवात्मकोऽनलः ।
सर्व्वदेवात्मको विप्रः सर्व्वदेवमयो हरिः ॥
संस्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनम् ।
रक्षोऽधिपं खड्गहस्तं दिव्याभरणभूषितम् ॥
प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् ।
पङ्कजं कारयेत्पूर्व्वं रक्ताभिर्व्रीहितण्डुलैः ॥
चतुर्व्विंशद्दलोपेतं शुक्लैर्वा कर्णिकान्वितम् ।
तस्योपरि न्यसेत्पात्रं स्वर्णं वा रूप्यमृन्मयम् ॥
शुक्लवस्त्रेण संछाद्य तत्र मूलानि निक्षिपेत् ॥

तत्र कलशे इत्यर्थः । तदलाभे तु ।

विष्णुक्रान्ता महादेवी तुलसी तु शतावरी ।
मूलानीमानि गृह्णीयाच्छतालाभे विशेषतः ॥
स्थापयेत्कर्णिकामध्ये वस्त्रगन्धाद्यलङ्कृतम् ।
कूर्चहेमजलोपेतं कुङ्कुमौषधिसंयुतम् ॥
कुम्भोपरि न्यसेद्विद्वान् मूलनक्षत्रदेवतम् ।
अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशयोः ।
अधिदेवं न्यसेदादौ ज्येष्ठानक्षत्रदेवताम् ॥

निर्ऋतिं स्थापयित्वा तद्दक्षिणदेशे इन्द्रं संस्थाप्य तदुत्तरतः अब्देवतां स्थापयेदित्यर्थः ।

ततः प्रागादितश्चतुर्विंशतिदलेषु भूसंस्थेषु उत्तराषाढाद्यनुराधान्तानि नक्षत्राणि स्थापयित्वा प्रपूजयेदित्याह ।

उत्तराषाढऋक्षाद्यमनुराधान्तमर्चयेत् ।
ऐन्द्रादीशानपर्यन्तं स्थापयेत् स्वस्वनामतः ।
स्वलिङ्गोक्तैस्तथा मन्त्रैः प्रधानादीन् प्रपूजयेत् ॥

स्वलिङ्गोक्ता मन्त्रा मोषूण* इत्यादयः ।

पञ्चामृतेन संस्नाप्य आवाह्याथ प्रपूजयेत् ।
उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः ॥
रक्तचन्दनगन्धाद्यैः पुष्पैः कृष्णसितादिभिः ।
मेषशृङ्गादिधूपैश्च घृतदीपैस्तथैव च ॥

---

मोषूण इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः ।
महश्चिद्यस्य मीळ्हुषो यव्या हविष्मतो मरुतो वन्दते गीः ।
(१म. १७१स. १२ऋक् ।)

सुरापोलिकमांसाद्यैर्नैवेद्यैर्भोजनादिभिः ।
मत्स्यमांससुरादीनि ब्राह्मणानां विवर्ज्जयेत् ॥
सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम् ।
पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् ॥
उक्तगन्धाद्यभावे तु यथालाभं समर्पयेत् ।
पुष्पाञ्जल्यन्तमभ्यर्च्य होमं कुर्य्याद्यथाविधि ॥
निर्व्वापप्रोक्षणादीनि चरोः कुर्य्याद्यथाविधि ।
हविर्गृहीत्वा विधिवन्निर्ऋतिश्च ऋचा हुनेत् ॥
मोषूणः* परापरे प्रियं ते देवीति वा पुनः ।
पायसं घृतसम्मिश्रं हुनेदष्टोत्तरं शतम् ।
समिदाज्यचरून् पश्चाच्छक्तितः संख्यया हुनेत् ॥
अधिदेवतयोश्चैव जुहुयात् स्वस्वमन्त्रतः ।
चतुर्थ्यन्तैर्नमोऽन्तैश्च स्वाहान्तैश्च स्वमन्त्रकैः ॥
नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत् ।
कृणुष्वेति पञ्चदशभि†र्जुहुयात्तत्परं ततः ॥
गायत्र्या जातवेदसे‡ त्रियम्बकमिति क्रमात् ।
सीरा युञ्जन्ति§ तामग्निं वास्तोस्पत्यग्निमेव च ॥

---

ऋगियं ३४४ पृष्ठे प्रदर्शिता ।

अनन्तरमेव मूले दर्शयिष्यमाणाभिः ।

जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ (१म. ९९सू. १ऋक् ।)

सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥ (१०म. १०१सू. ४ऋक् ।)

अग्निमग्निं दूतं हवीमहे* इतिमन्त्रसाम्यात् ।
क्षेत्रस्य पतिना† गृणानाः‡ अग्निं दूतं पुरोदधे§ ।
श्रीसूक्तेन¶ तथा विद्वान् समिदाज्यचरून् क्रमात् ॥
अष्टोत्तरशतैर्वाथ अष्टाविंशतिभिः क्रमात् ।
अष्टाष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः ॥
त्वं नः सोमेति|| पायसं जुहुयात्तु त्रयोदश ।
चतुर्गृहीतमाज्यस्य या ते रुद्रेति मन्त्रतः ॥
स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात् ।
हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्ताहुतीर्हुनेत् ॥
आचार्यो यजमानो वा अग्नौ पूर्णाहुतिं हुनेत् ।

---

* अग्निं दूतं हवामहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ (१म. १२सू. १ऋक् ।)

† क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥ (४म. ५७सू. १ऋक् ।)

‡ गृणाना जमदग्निना योनावृतस्य सीदतम् ।
पातं सोममृतावृधा ॥ (३म. ६२सू. १८ऋक् ।)

§ अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे ।
देवाँ आसादयादिह ॥ (८म. ४४सू. ३ऋक् ।)

¶ संग्रहीत्रा ग्रन्थान्तरमेव दर्शयिष्यमाणेन ।

|| त्वं नः सोम विश्वतो गोपा अदाभ्यो भव ।
सेध राजन्नपस्रिधो वि वो मदे मा नो दुःशंस ईशता विवक्षसे ॥
(१०म. २५सू. ७ऋक् ।)

समुद्रादूर्म्मिसूक्तेन* प्राजापत्यऋचा तथा ॥
पूर्णा दर्व्वि† सप्त तेऽग्ने‡ एतैः पूर्णाहुतिं हुनेत् ।
होमशेषं समाप्याथ जपेत्त्र्यम्बकं शतम् ॥
रुद्रकुम्भोक्तमार्गेण रुद्रमन्त्रं स्पृशन् जपेत् ।
धूपं दीपञ्च नैवेद्यं कुम्भयुग्मे निवेदयेत् ॥
प्रसादयेत्ततो देवमभिषेकार्थमादरात् ।
तस्मिन् काले ग्रहातिथ्यं कर्त्तव्यं भूतिमिच्छता ॥
पृथक् प्रशस्तं तेनैव नचचेद्या सहैव वा ।
अभिषेकविधिं वक्ष्ये सर्व्वाचार्य्यैरुदीरितम् ॥
भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः ।
दारपुत्रसमेतस्य कुर्य्युः सर्व्वेऽभिषेचनम् ॥
अक्षीभ्यामिति सूक्तेन§ पावमानीभिरेव च ।
आपोहिष्ठेति नवभिराप इद्वा द्वयेन|| च ॥

---

६१ पृष्ठे प्रदर्शितेन ।

ऋगियं १०९ पृष्ठे प्रदर्शिता ।

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्तधामप्रियाणि ।

सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥ (१७अ.७९म.यजुः।)

२२१ पृष्ठे प्रदर्शितेन ।

५८ पृष्ठे प्रदर्शिताभिः ।

आप इद्वा उ भेषजीरापो अमीवचातनीः ।

आपः सर्व्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥ (१०म. १३७सू. ६ऋक् ।)

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।

अनामयित्नुभ्यां त्वा ताभ्यां त्वोपस्पृशामसि ॥ (१०म. १३७सू. ७ऋक् ।)

सहस्राक्षद्यचेनापि* देवस्य त्वेति मन्त्रकै:† ।
शिवसङ्कल्पमन्त्रेण वक्ष्यमाणैश्च मन्त्रकैः ॥
योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः ।
मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥
योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः ।
सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु ॥
योऽसौ दण्डधरो देवो धर्म्मो महिषवाहनः ।
मूलजातशिशोर्दोषं व्यपोहतु यमो मम ॥
योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः ।
प्रशामयतु मूलोत्थं दोषं गण्डान्तसम्भवम् ॥
योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः ।
नक्रवाहः प्रचेता नो मूलोत्थाघं व्यपोहतु ॥
योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः ।
प्रशामयतु मूलोत्थं दोषं बालस्य शान्तिदः ॥
योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः ।
मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥
योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः ।
आश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु ॥
विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः ।

---

सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति ।
होता गृणीत उक्थ्यः । (१म. १८सू. ११ऋक् ।) इत्यादिना ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥ (१अ. १०म. यजु

सर्व्वदोषप्रशमनं सर्व्वं कुर्व्वन्तु शान्तिदाः ॥
तच्छ्रंयोरभिषिकन्तु सर्व्वदोषोपशान्तिदम् ।
सर्व्वकामप्रदं दिव्यं मङ्गलानाञ्च मङ्गलम् ॥
वस्त्रान्तरितकुम्भाभ्यां पश्चात्तु स्नपयेद्बुधः ।
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥
यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् ।
धेनुं पयस्विनीं दद्यादाचार्य्याय सवत्सकाम् ॥
निर्ऋतिप्रतिमां वस्त्रं कुम्भं हेम च दापयेत् ।
ग्रहार्थवस्त्रप्रतिमां तत्तद्द्रव्यञ्च दापयेत् ॥
श्रीरुद्रजापिने देयः कृष्णोऽनड्वान् प्रयत्नतः ।
तत्कुम्भवस्त्रप्रतिमां तस्मै दद्यात्प्रयत्नतः ॥
इतरेभ्योऽपि विप्रेभ्यः शक्त्या दद्याच्च दक्षिणाम् ।
उक्तालाभे ततो दद्यादाचार्य्यब्रह्मऋत्विजाम् ॥
तत्तन्मूल्यं प्रदातव्यं शक्त्या वाथ प्रदापयेत् ।
आचार्य्याय च यद्दत्तं तदर्द्धं ब्रह्मणो भवेत् ॥
सदस्याय ब्रह्मणोऽर्द्धमृत्विग्भ्यश्च तदर्द्धकम् ।
गृह्णीयादाशिषस्तेभ्यः प्रणम्याथ क्षमापयेत् ॥
दद्यादन्नं पायसादि ब्राह्मणान् भोजयेच्छतम् ।
अलाभे सति पञ्चाशद्दशकं तदलाभतः ॥
सर्व्वशान्तेश्च पठनं ब्राह्मणैराशिषस्तथा ।
गृही क्षमापयेद्विद्वान्निर्ऋतिः प्रीयतामिति ॥

विधाने चरितेऽस्मिंस्तु ततः शान्तिर्भवेद्ध्रुवम् ।
गण्डान्तेऽप्येवं कर्त्तव्यं पुत्रार्थं तद्वदेव तु ॥
सप्ताष्टके द्वादशाहे कुर्य्याद्वा शान्तिमाचरेत् ।
इत्युक्तं मनुना सम्यङ्मूलजातहिताय च ।
मातापित्रोर्धनस्यापि बन्धुशोकोपशान्तये ॥

इति शौनकीये मूलादिजननदोषशान्तिवाक्यानि ।

अथास्य स्पष्टप्रयोगो लिख्यते ।

मूलस्य प्रथमे पादे जनने पितृनाशः द्वितीये मातृनाशः तृतीये धननाशः चतुर्थे बालनाशः कुलारिष्टं वा, तत्र न दोष इति केचित् । कन्यापुत्रयोरविशेषेण मूलजनने श्वशुरनाशः ।

सुतः सुता वा नियतं श्वशुरं हन्ति मूलजा ।

इति नारदसंहितावचनात् ।

मूलाद्यनवघटिकाऽभुक्तजातस्य दोषबाहुल्याद्बालत्यागः । तत्राप्याद्यघटिकाद्वये दोषातिशयः । यदा तु त्यागस्तदा न शान्तिः त्यागमात्रविधानात् । स्नेहादिना त्यागाभावे तु अष्टवर्षपर्य्यन्तं षण्मासपर्य्यन्तं वा पिता तद्दर्शनशब्दश्रवणे न कुर्य्यात् । तदा अष्टवर्षानन्तरं षण्मासानन्तरं वा द्वादशाहे शान्तिः कार्य्या । यद्वा द्वादशदिने मूलनक्षत्रान्तरे वा अन्यस्मिन् शुभे दिने पुष्कला शान्तिः कार्य्या । यदा तु मूलनक्षत्रे व्यतीपातयोगामावास्याद्यनेकनिमित्तसन्निपातस्तदा निमित्तभेदान्नैमित्तिकानि शान्तिकानि पृथक् तन्त्रेण वा कार्य्याणि । शान्तिकर्म्मणि नवग्रह-

स्थलोऽङ्गत्वेनावश्यकः । सर्व्वत्र पाक्षिकत्वेन प्राप्तस्य मुख्यताप्रतिपादनार्थं तत्तत्प्रकरणे ग्रहमखस्य पुनः कथनात् ।

तत्र समे देशे अष्टहस्तादिकं मण्डपं कूटं वा कृत्वा तन्मध्ये स्थण्डिलं कुर्य्यात् । अथ उक्ते काले गोमुखप्रसवं कृत्वा कृतसामग्रीको यजमानः सपत्नीकः प्राणानायम्य देशकालादिकं कृत्वा मम अस्य कुमारस्य कुमार्य्या वा मूलप्रथमचरणादिजननसूचितपित्रिरिष्टादिशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं शौनकोक्तविधिना नवग्रहमखसहितां मूलशान्तिं करिष्ये इति सङ्कल्प्य गणेशपूजनपुण्याहवाचनादि नान्दिश्राद्धान्तं कृत्वा आचार्य्यं ब्रह्माणं सदस्यमृत्विजोऽष्टौ चतुरो वा वृत्वा मधुपर्कादिभिः पूजयेत् ।

अथाचार्य्यः प्राणानायम्य अस्मिन् कर्म्मणि आचार्य्यकर्म्म करिष्ये इति सङ्कल्प्य यदत्र संस्थितं भूतमित्यादिमन्त्रेण* मण्डपे सर्षपान् विकीर्य्य आपो हिष्ठादिमन्त्रैः† कर्म्मभूमिं सम्प्रोक्ष्य मण्डपं यक्ष्ये इति मण्डपदेवताः पूजयित्वा मण्डपस्येशानदेशे पञ्चवर्णकैः स्वस्तिकं कृत्वा तत्र मही द्यौरितिमन्त्रेण‡ भूमिं स्पृष्ट्वा ओषधयः संवदन्त§ इति मन्त्रेण द्रोणप्रमाणान्

---

* यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्व्वतः ।
स्थानं त्यक्त्वा तु तत्सर्व्वं यत्रस्थं तत्र गच्छतु ॥

† ५८ पृष्ठे प्रदर्शितैः ।

‡ १०८ पृष्ठे प्रदर्शितेन ।

§ ७७ पृष्ठे प्रदर्शितेन ।

व्रीहीन् प्रक्षिप्य तत्र कलशं संस्थाप्य तं तीर्थवारिणा आपूर्य्य तत्र गन्धाक्षतदूर्व्वापल्लवपञ्चमृत्तिकाफलरत्नानि पञ्चगव्यं सुवर्णञ्च सर्व्वं तत्तल्लिङ्गकमन्त्रेण क्षिप्त्वा वस्त्रेण कलशमावेष्ट्य तदुपरि ताम्रं वंशादिमयं वा पूर्णपात्रं निदध्यात्।

अथ तत्कलशाच्चतुर्दिक्षु भूस्पर्शनादिपूर्व्वकं समन्त्रं चतुरः कलसान् संस्थाप्य मध्यकलसे सुवर्णनिर्म्मितां रुद्रप्रतिमां त्र्यम्बकमन्त्रेणावाह्य ते॰व तं षोड़शोपचारैः पूजयेत्। तेनैव त्र्यम्बकमन्त्रेणेत्यर्थः।

तत एक ऋत्विक् रुद्रकुम्भं स्पृष्ट्वा न्यासपूर्व्वकं साङ्गं रुद्रैकादशिनीं जपेत्, यदि स याजुषः स्यात्। बह्वृचस्तु चत्वारि रुद्रसूक्तानि* जपेत्। छन्दोगस्तु रुद्रसामानि†। अत्रोभयत्र एकादशाष्टत्रिद्व्येकसंख्या शक्तितो ग्राह्या। केचित्तु रुद्रः सर्व्वसाधारणः बह्वृचसामगयोस्तु सूक्तसाम्नो रुद्रेण सह विकल्प इत्याहुः।

तत्र सूक्तऋष्यादि। कद्रुद्रायेति नवर्च्चस्य‡ घोरः कण्वऋषी रुद्रो देवता गायत्री छन्दः जपे विनियोगः। इमा रुद्राय तवसे इत्येकादशर्च्चस्य§ कुत्सऋषी रुद्रो देवता आद्या नव जगत्योऽन्त्ये द्वे त्रिष्टुभौ जपे विनियोगः। आ ते पितरिति पञ्चदश-

* ११५—११८ पृष्ठेषु प्रदर्शितानि।

† ११८।११९ पृष्ठयोः प्रदर्शितानि।

‡ ११५ पृष्ठे प्रदर्शितस्य।

§ ११५।११६ पृष्ठयोः प्रदर्शितस्य।

[illegible]* गृत्समदऋषी रुद्रो देवता त्रिष्टुप् छन्दः जपे विनियोगः । [illegible]ा रुद्राय स्थिरधन्वने इति चतसृणां† वशिष्ठऋषी रुद्रो देवताग्निस्तो जगत्योऽन्त्या त्रिष्टुप् छन्दः जपे विनियोगः । तथा [illegible]ा वो राजानमित्येकादशरुद्रसाम्नां‡ वामदेवऋषी रुद्रो देवता आद्यसाम्नस्त्रिष्टुप् ततश्चतुर्णां गायत्री ततस्त्रयाणां त्रिष्टुप् ततस्त्रयाणामुत्कृतिश्छन्दः जपे विनियोगः ।

ततोऽन्य ऋत्विक् तत्रैव कुम्भे त्र्यम्बकमन्त्रमष्टोत्तरशतं जपेत् । अन्येषु पूर्व्वादिकुम्भेषु अप्रतिरथादीनि चत्वारि सूक्तानि क्रमेण जपेत् । तानि च । आशुः शिशान इति त्रयोदशर्चस्य सूक्तस्य इन्द्रोऽप्रतिरथऋषिरिन्द्रो देवता चतुर्थ्यां वृहस्पतिस्त्रिष्टुप् अन्त्यानुष्टुप् जपे विनियोगः । त्वमग्ने रुद्र इत्यनुवाकस्य§ कण्वपुत्रऋषिरन्त्याग्ना रुद्रो देवता जगती छन्दः जपे विनियोगः । रक्षा णो अग्ने इति रक्षामन्त्रस्य§ वामदेवऋषिरग्निर्देवता त्रिष्टुप् छन्दः जपे विनियोगः । रक्षोहणमिति पञ्चविंशर्चस्य सूक्तस्य¶ आङ्गिरसऋषिर्वायुरग्निर्देवते त्रिष्टुप् छन्दस्ततस्तोऽन्त्या अनुष्टुभः जपे विनियोगः । अत्रापि संख्या पूर्व्ववत् । चतुर्थकुम्भे पवमानमप्येकवारं जपेत् ।

---

* ११७।११८ पृष्ठयोः प्रदर्शितस्य ।

† ११८ पृष्ठे प्रदर्शितानाम् ।

‡ ११८।११९ पृष्ठयोः प्रदर्शितानाम् ।

§ १४० पृष्ठे प्रदर्शितस्य ।

¶ १४०—१४१ पृष्ठे प्रदर्शितस्य ।

एवं पञ्चकुम्भासम्भवे कुम्भद्वयं स्थाप्यम्। अत्र पक्षे रुद्रकुम्भे सर्व्वसूक्तजपः कार्य्यः। अन्यकुम्भे वरुणमावाह्य रुद्रजपं कुर्य्यात्। अथवा एक एव पञ्चमुखः कुम्भः स्थाप्यः। तत्र मध्यकुम्भकार्य्याणि मध्यमुखे, कुम्भचतुष्टयकार्य्याणि तु चतुर्षु प्रस्रवणेषु कार्य्याणीति विवेकः।

ततः कुम्भस्थानादुत्तरतश्चतुर्व्विंशतिदलं पङ्कजं पञ्चवर्णैः शुक्लतण्डुलपिष्टेन वा कृत्वा तत्र कर्णिकायां मन्त्रपूर्व्वकं कुम्भं स्थापयित्वा जलादिपूर्णं कृत्वा तत्र शतमूलानि निक्षिपेत्। तानि च—सुवर्णमयमूल व्रीहि यव तिल माष प्रियङ्गु श्यामाक मुद्ग कर्म्मरी* सहदेवी† अपराजिता बाला पाठा शङ्खपुष्पी‡ मधुयष्टिका चक्राङ्किता§ मयूरशिखा¶ काकजङ्घा|| कुमारी-द्वय** जीवन्तिका†† अपामार्ग भृङ्गराज रक्तचन्दन लक्ष्मण सुलक्ष्मण जाती व्याघ्रपत्र‡‡ चक्रमर्द्दक§§ सिद्धेश्वर अश्वत्थ पलाश उदुम्बर जम्बू वट अर्क दूर्व्वा शतावरी¶¶ शमी रोहितक कुश रक्तोत्पल चम्पक विष्णुक्रान्ता||| बर्हिष तुलसी अश्व-गन्धा*** निर्गुण्डी††† रक्तपीतसर्षप पनस जीरक पद्मपत्र

* वंशलोचना। † बला (बेलिड़ा)। ‡ जलकृमि।
§ पद्मगुडूची। ¶ क्षुपभेद। || गुञ्जा।
** घृतकुमारी, अपराजिता। †† हथीयरिजालतक। ‡‡ करञ्ज रक्तैरण्ड
§§ क्षुपभेद। ¶¶ शतमूली। ||| नीलापराजिता
*** क्षुपभेद। ††† सिन्धुवार (निसिन्दा)।

नीलोत्पल कुरण्टक* गुञ्जा वच मद्रक मुस्ता कचोरा† कोष्ठ बालालमज‡ कुङ्कुम पञ्चत्वक् पञ्चरत्न पञ्चगव्य पञ्चामृत पद्मज केसर शैलज गुडूची शुभ्रचन्दन सप्तमृत्तिका नागवल्ली पूगीफल-पुष्पाणि इति । तदलाभे तु विष्णुक्रान्ता-सहदेवी-तुलसी-शता-वरी-कुशान् कुङ्कुमञ्च क्षिपेत् । तदुपरि पूर्णपात्रं न्यस्य तत्र अष्टदलसंयुतं वस्त्रं धृत्वा कर्णिकायां मोषू ण§ इति निर्ऋति-प्रतिमां पञ्चामृतस्नापितां संस्थाप्य तद्दक्षिणत इन्द्रं वः¶ इति इन्द्रम् तदुत्तरतः अप्सु मे इति|| अब्देवताश्च स्थापयेत् ।

ततो भूमिस्थचतुर्विंशतिदलेषु प्रागादित उत्तराषाढाद्यनु-राधान्तानि नक्षत्राणि तत्तद्देवताश्च स्थापयेत् । ता देवताश्चैवं—विश्वेदेवाः विष्णुः वसवः वरुणः अजैकपात् अहिब्रध्नः (अहि-र्बुध्नः) पूषा अश्विनौ यमः अग्निः ब्रह्मा इन्दुः रुद्रः दितिः वाक्-पतिः सर्पाः पितरः भगः अर्यमा रविः त्वष्टा मारुतः इन्द्राग्नी मित्रः इति ।

ततो लोकपालानावाह्य नैर्ऋतदेशे अग्निं स्थापयित्वा तदीशानभागे नवग्रहानावाह्य अन्वाधानं कुर्यात् । तच्चेत्थं—

---

* पीतझिण्टी ।    † धान्यभेद ।    ‡ बदर ।

§ ऋगियं १४४ पृष्ठे प्रदर्शिता ।

¶ इन्द्रं वो नरः सख्याय सेपुर्महो यन्तः सुमतये चकानाः ।
महो हि दाता वज्रहस्तो अस्ति महामु रण्वमवसे यजध्वम् ॥
(६म. २९सू. १ऋक् ।)

|| ऋगियं २०१ पृष्ठे प्रदर्शिता ।

समिद्द्वयमादाय चक्षुषी आज्येन इत्यन्तमुक्त्वा प्रजापतिमिन्द्रमग्निं सोमम् एता आज्येन। आदित्यं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनैश्वरं राहुं केतुमिति नवग्रहानर्कादिसमिद्भिः। ईश्वरमुमां स्कन्दं विष्णुं ब्रह्माणमिन्द्रं यमं कालं चित्रगुप्तमित्यधिदेवताः अग्निमपो विष्णुमिन्द्रमिन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणमिति प्रत्यधिदेवताः विनायकं दुर्गां वायुमाकाशमश्विनाविति पञ्च लोकपालान् तथा क्षेत्रपालं वास्तुपुरुषमिन्द्रमग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरमीशानं ब्रह्माणमनन्तञ्च प्रत्येकममुकसंख्याभिः पालाशादिसमिच्चर्व्वाहुतिभिः प्रतिद्रव्यमष्टसंख्यया अहं यक्ष्ये जपदशांशेन तिलाज्याद्युपकल्पितद्रव्येण यक्ष्ये।

अत्र प्रधानं निर्ऋतिं घृतमिश्रितपायससमिदाज्यचर्वाहुतिभिः प्रतिद्रव्यमष्टाविंशतिसंख्यया अहं यक्ष्ये तथा अधिदेवतामिन्द्रं प्रत्यधिदेवता अपो घृतमिश्रितपायससमिदाज्यचरुद्रव्यैरष्टाष्टसंख्याभिरहं यक्ष्ये।

अथावरणदेवताः—उत्तराषाढ़ां श्रवणां धनिष्ठां शततारकां पूर्व्वभाद्रपदाम् उत्तरभाद्रपदां रेवतीमश्विनीं भरणीं कृत्तिकां रोहिणीं मृगशिरसम् आर्द्रां पुनर्वसुं पुष्यम् अश्लेषां मघां पूर्वाम्* उत्तरां† हस्तां चित्रां स्वातीं विशाखामनुराधाम् यद्वा विश्वान् देवान् विधिं विष्णुं वसून् वरुणम् अजैकपदम् अहिर्ब्रध्नं पूषण-

* पूर्वां पूर्वफल्गुनीम् पूर्वाषाढ़ाञ्च।

† उत्तरामुत्तरफल्गुनीम् उत्तराषाढ़ाञ्च।

मश्विनौ यममग्निं ब्रह्माणं चन्द्रमसं रुद्रमदितिं बृहस्पतिं सर्पान् पितॄन् भगमर्य्यमणं सूर्य्यं त्वष्टारं मरुतः इन्द्राग्नी मित्रं प्रत्येकमष्टसंख्याभिः कृसराहुतिभिः* रक्षोहणं कृणुष्वेति पञ्चदशर्भिः प्रत्येकमष्टसंख्याभिः पायसाहुतिभिः कृसराहुतिभिर्वा सवितारं दुर्गां त्र्यम्बकं ऋत्विक्स्तुतिं देवतां वास्तोष्पतिम् अग्निं क्षेत्राधिपतिं मित्रावरुणौ च एताः प्रत्येकमष्टसंख्याभिः कृसराहुतिभिः श्रियं हिरण्यवर्णामिति पञ्चदशर्भिः† प्रत्यृचमष्टसंख्याभिः समिदाज्यचर्वाहुतिभिः सोमं त्रयोदशवारं पायसाहुतिभिः रुद्रं चतुर्गृहीतेनाज्येन अग्निं वायुं प्रजापतिमेकैकया आज्याहुत्या अहं यक्ष्ये ।

शेषेण अग्निं स्विष्टकृतमग्निं वायुं सूर्य्यम् अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणं प्रजापतिम् एता अङ्गप्रधाना देवता आज्येनास्मिन् कर्म्मण्यहं यक्ष्ये इति संकल्प्य उपयमनकुशादानादि पर्य्युक्षणान्तं कृत्वा स्वस्वमन्त्रैर्निर्ऋत्यादिपूजां कुर्य्यात् ।

वस्त्रयुग्मं रक्तचन्दनगन्धः कृष्णसुरभीणि पुष्पाणि धूपो मेषशृङ्गस्य आज्यदीपः पुरुषाहाराम्नं पोलिकाः । ब्राह्मणस्य सुरास्थाने सैन्धवमिश्रं क्षीरं मांसस्थाने लवणसंयुक्तं पायसम् । क्षत्रियादीनां तु सति सम्भवे मुख्यमेव । एतावन्नैवेद्यम् । एवं पुष्पा-

* कृसराहुतिभिरित्यत्र पायसाहुतिभिरिति ग-पुस्तके पाठः ।

† अनन्तरमेव मूले (२६१—२६५ पृष्ठेषु) वक्ष्यमाणाभिः ।

न्तमन्तं पूजनं कृत्वा अमुष्मै त्वेति अन्वाधानक्रमेण निर्व्वाण-प्रोक्षणादिपूर्व्वकं पायसकृसरचरून् श्रपयित्वा आज्यभागान्तं कुर्य्यात् ।

ततो यजमानस्त्यागं कुर्य्यात् । ततः सलिंगाचार्य्यो जुहु-यात् । तद्यथा—अन्वाधानक्रमेण नवग्रहक्रमेण नवग्रहनि-र्ऋतीन्द्राद्देवताहोमं कृत्वा ॐ विश्वेभ्यो देवेभ्यः स्वाहा इत्या-दिभिश्चतुर्व्विंशतिनाममन्त्रैः प्रत्येकमष्टसंख्याः पायसाहुतीर्हुत्वा ऋग्भिर्जुहुयात् ।

कृणुष्वेति पञ्चदशर्चस्य सूक्तस्य गौतमो वामदेवो रक्षोहा-त्रिष्टुप् कृसरहोमे विनियोगः ।

कृणुष्व पाजः प्रसितिं न पृथ्वीं
याहि राजेवामवाँ इभेन ।
तृष्वीमनुप्रसितिं द्रूणानो-
ऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ (४म,४सू,१ऋक् ।)
तव भ्रमास आशुया पतन्त्यनु
स्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गा-
नसन्दितो विसृज विष्वगुल्काः ॥ २ ॥
प्रति स्पशो विसृज तूर्णितमो
भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्य-
ग्ने माकिष्टे व्यथिरादधर्षीत् ॥ ३ ॥

उदग्ने तिष्ठ प्रत्या तनुष्व-
न्यमित्राँ ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे
नीचा तं धक्ष्यतसं न शुष्कम् ॥ ४ ॥
ऊर्ध्वो भव प्रतिविध्याध्यस्म-
दाविष्कृणुष्व दैव्यान्यग्ने ।
अवस्थिरा तनुहि यातुजूनां
जामिमजामिं प्रमृणीहि शत्रून् ॥ ५ ॥
स ते जानाति सुमतिं यविष्ठ
य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो
द्युम्नान्यर्यो विदुरो अभिद्यौत् ॥ ६ ॥
सेदग्ने अस्तु सुभगः सुदानु-
र्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे
विश्वेदस्मै सुदिना सासदिष्टिः ॥ ७ ॥
अर्चामि ते सुमतिं घोष्यर्वाक्
सं ते वावाता जरतामियङ्गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमा-
स्मे क्षत्राणि धारयेरनुद्यून् ॥ ८ ॥
इह त्वा भूर्या चरेदुपत्मन्
दोषावस्तर्दीदिवांसमनुद्यून् ।

क्रीळन्तस्त्वा सुमनसः सपेमा-
भि द्युम्ना तस्थिवांसो जनानाम् ॥ ९ ॥
यस्त्वा स्वश्वः सुहिरण्यो अग्न
उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा
यस्त आतिथ्यमानुषग् जुजोषत् ॥ १० ॥
महो रुजामि बन्धुता वचोभि-
स्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नो अस्य वचसश्चिकिद्धि
होतर्यविष्ठ सुक्रतो दमूनाः ॥ ११ ॥
अस्वप्नजस्तरणयः सुशेवा
अतन्द्रासोऽवृका अश्रमिष्ठाः ।
ते पायवः सध्र्यञ्चो
निषद्याग्ने तव नः पान्त्वमूर ॥ १२ ॥
ये पायवो मामतेयं ते अग्ने
पश्यन्तो अन्धं दुरितादरक्षन् ।
ररक्ष तान् सुकृतो विश्ववेदा
दिप्सन्त इद्रिपवो नाह देभुः ॥ १३ ॥
त्वया वयं सधन्यस्त्वोता
स्तव प्रणीत्यश्याम वाजान् ।
उभा शंसा सूदय सत्य-
ताते ऽनुष्ठुया कृणुह्यह्रयाण ॥ १४ ॥

अया ते अग्ने समिधा विधेम

प्रतिस्तोमं शस्यमानं गृभाय।

दहाशसो रक्षसः पाह्यस्मान्

द्रुहो निदो मित्रमहो अवद्यात्॥ (४म,४सू,१५ऋक्।)

इति प्रत्यर्च*मष्टसंख्यया हुत्वा तत्सवितुरित्यस्य विश्वामित्र-ऋषिः सविता देवता गायत्री छन्दः लक्षहोमे विनियोगः।

ॐ तत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि।

धियो यो नः प्रचोदयात्॥ (३ष, ३५म, यजुः।)

इदं सवित्रे।

जातवेदसे इत्यस्य काश्यपऋषिर्दुर्गा देवता त्रिष्टुप् छन्दः लक्षहोमे विनियोगः।

ॐ जातवेदसे सुनवाम सोम

मरातीयतो निदहाति वेदः।

स नः पर्षदति दुर्गाणि विश्वा

नावेव सिन्धुं दुरितात्यग्निः॥ (१म,९९सू,१ऋक्।)

इदं जातवेदसे। इदं दुर्गायै।

त्र्यम्बकमित्यस्य वशिष्ठऋषी रुद्रो देवता अनुष्टुप् छन्दः लक्षहोमे विनियोगः।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।

उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥

इदं रुद्राय। (३ष, ६०म, यजुः।)

* प्रत्यर्चमित्यत्र प्रत्यृचमिति पाठो युक्तः।

सीरा युञ्जन्तीत्यस्य बुधः सौम्य ऋषिर्ऋत्विक्स्तुतिर्देवता गायत्री छन्दः क्षमरहोमे विनियोगः ।

सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥ (१०म, १०१सू, ४ऋक् ।)

इदमृत्विक्स्तुतिदेवतायै ।

तामग्निवर्णामित्यस्य सौभरिर्ऋषिर्दुर्गा देवता त्रिष्टुप् छन्दः क्षमरहोमे विनियोगः ।

तामग्निवर्णां तपसा ज्वलन्तीं
परिरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये
सुतरसितरसे नमः सुतरसितरसे नमः ॥

(ऋग्वेदपरिशिष्टे ।)

इदं दुर्गायै ।

वास्तोष्पते इत्यस्य वशिष्ठ ऋषिर्वास्तोष्पतिर्देवता त्रिष्टुप् छन्दः क्षमरहोमे विनियोगः ।

वास्तोष्पते प्रतिजानीह्यस्मान्
स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व
शं नो भव द्विपदे शं चतुष्पदे ॥ (७म, ५४सू, १ऋक् ।)

इदं वास्तोष्पतये ।

अग्निः कण्व इत्यस्य मेधातिथिर्ऋषिरग्निर्देवता गायत्री छन्दः क्षमरहोमे विनियोगः ।

अग्निः कण्वो मेधातिथिमग्निः सा तमुपस्तुतम्।
अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे॥

इदमग्नये।

क्षेत्रस्य पतिनेत्यस्य वामदेव ऋषिः क्षेत्रपालो देवता अनुष्टुप् छन्दः कुसरहोमे विनियोगः।

क्षेत्रस्य पतिना वयं हितेनेव जयामसि।
गामश्वं पोषयित्वा स नो मृडातीदृशे॥

(४म, ५७सू, १ऋक्।)

इदं क्षेत्रपालाय।

गृणाना जमदग्निवदित्यस्य मित्रावरुणावृषी गायत्री छन्दः कुसरहोमे विनियोगः।

गृणाना जमदग्निवत् स्तुवाना च वशिष्ठवत्।
जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः। वः।
सरस्वन्तं हवामहे॥

इदं मित्रावरुणाभ्याम्।

अग्निं दूतमित्यस्य आङ्गिरसऋषिर्विरूपोऽग्निर्देवता गायत्री छन्दः कुसरहोमे विनियोगः।

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्।
अस्य यज्ञस्य सुक्रतुम्॥ (१म, १२सू, १ऋक्।)

इदमग्नये।

हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य आनन्दकर्दम-चिक्लीतेन्दिरासुता ऋषयः श्रीर्देवता आद्यास्तिस्रोऽनुष्टुभः चतुर्थी

प्रस्तारपङ्क्तिः पञ्चमीषष्ठ्यौ त्रिष्टुभौ ततोऽष्टावनुष्टुभः अन्त्या प्रस्तारपङ्क्तिः समिदाज्यचरुहोमे विनियोगः ।

ॐ ऐं—हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

ॐ ऐं क्लीं—तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥

ॐ क्लीं श्रीं—अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥

ॐ श्रीं क्लीं—कां सोस्मितां हिरण्यप्राकारा-
मार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां
तामिहोपह्वये श्रियम् ॥ ४ ॥

ॐ क्लीं वद वद—चन्द्रां प्रभासां यशसा ज्वलन्तीं
श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणमहं प्रपद्ये
अलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥

ॐ वद वद वाग्वादिनि—
आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु
या अन्तरा याश्च बाह्या अलक्ष्मीः ॥ ६ ॥

ॐ वाग्वादिनि ॐ ऐं—

उपैतु मां देवसखः कीर्त्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्त्तिमृद्धिं ददातु मे ॥७॥

ॐ ऐं सौं—क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिञ्च सर्व्वां निर्णुद मे गृहात् ॥ ८ ॥

ॐ सैं हं सः—गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्व्वभूतानां त्वामिहोपह्वये श्रियम् ॥ ९ ॥

ॐ सोऽहम्—मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

ॐ क्लीं—कर्द्दमेन प्रजाभूता मयि सम्भव कर्द्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥

ॐ क्लीं क्रीं—आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥

ॐ क्रीं क्रीं—आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्य्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥

ॐ क्रीं स्रीं—आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥

ॐ स्रीं हूं—तां म आवह जातवेदो
लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो
दास्योऽश्वान् विन्देयं पुरुषानहम् ॥ १५ ॥

(ऋग्वेदपरिशिष्टे ।)

इदं श्रियै । प्रत्यृचमष्टशताद्यन्यतमसंख्यया जुहुयात् ।

त्वन्नः सोमेत्यस्य प्रगाथ ऋषिः सोमो देवता त्रिष्टुप् छन्दः पायसहोमे विनियोगः।

ॐ त्वं नः सोम विश्वतो वयोधा-
स्त्वं स्वर्विदा विशा नृचक्षाः।
त्वं न इन्द्र ऊतिभिः सजोषाः
पाहि पश्चातादुत वा पुरस्तात्॥

(८म, ४८सू, १५ऋक्।)

इदं सोमाय।

या त इत्यस्य कश्यप ऋषी रुद्रो देवता अनुष्टुप् छन्दः चतुर्गृहीताज्यहोमे विनियोगः।

या ते रुद्र शिवा तनूरघोरा पापकाशिनी।
तया नस्तन्वाशन्तमया गिरिशन्ताभिचाकशीहि॥

(१६अ, २म, यजुः।)

इदं रुद्राय।

तत आज्येन सकृद्गृहीतेन चतस्रो व्याहृतीर्हुत्वा स्विष्टकृदादि प्रायश्चित्तहोमान्तं कृत्वा दिक्पालेभ्यो नवग्रहेभ्यो निर्ऋतये इन्द्राय मरुद्भ्यो रुद्राय क्षेत्रपालाय च बलीन् दद्यात्। तत आचार्यो यजमानो वा पूर्णाहुतिं जुहुयात्।

तत्र मन्त्राः।

समुद्रादूर्मिरित्येकादशर्चस्य सूक्तस्य गौतमवामदेवावृषी अग्निर्देवता त्रिष्टुप् छन्दः अन्त्या जगती पूर्णाहुतिहोमे विनियोगः।

समुद्रादूर्म्मिर्म्मधुमाँ उदार-
दुपांशुना सममृतत्वमानट्।
घृतस्य नाम गुह्यं यदस्ति
जिह्वा देवानाममृतस्य नाभिः॥(१७अ,८९म,यजुः)
वयं नाम प्रब्रवामा घृतस्या-
स्मिन् यज्ञे धारयामानमोभिः।
उपब्रह्मा शृणवच्छस्यमान-
ञ्चतुःशृङ्गोऽवमीद्गौर एतत्॥ ९० ॥
चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति
महोदेवो मर्त्याँ आविवेश॥ ९१ ॥
त्रिधाहितम्पणिभिर्गुह्यमान-
ङ्गवि देवासो घृतमन्वविन्दन्।
इन्द्र एकꣳ सूर्य्य एकञ्जजान
वेनादेकꣳ स्वधयानिष्टतक्षुः॥ ९२ ॥
एता अर्षन्ति हृद्यात्समुद्रा-
च्छतव्रजा रिपुणा नावचक्षे।
घृतस्य धारा अभिचाकशीमि
हिरण्ययो वेतसो मध्य आसाम्॥ ९३ ॥
सम्यक् स्रवन्ति सरितो न धेना
अन्तर्हृदा मनसा पूयमानाः।

एते अर्षन्त्यूर्मयो घृतस्य
मृगा इव क्षिपणो रोषमाणाः ॥ ६४ ॥
सिन्धोरिव प्राध्वने शूघनासो
वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी-
काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥ ६५ ॥
अभिप्रवन्त समनेव योषाः
कल्याण्यः स्मयमानासो अग्निम् ।
घृतस्य धाराः समिधो नसन्त
ता जुषाणो हर्यति जातवेदाः ॥ ६६ ॥
कन्या इव वहतु मेत वा उ
अञ्ज्यञ्जाना अभिचाकशीमि ।
यत्र सोमः सूयते यत्र यज्ञो
घृतस्य धारा अभि तत्पवन्ते ॥ ६७ ॥
अभ्यर्षत सुष्टुतिङ्गव्यमाजि
मस्मासु भद्राद्रविणानि धत्त ।
इमं यज्ञं नयत देवतानो
घृतस्य धारा मधुमत्पवन्ते ॥ ६८ ॥
धामन् ते विश्वभुवनमधिश्रित-
मन्तःसमुद्रे हृद्यन्तरायुषि ।
अपामनीके समिथे य आभृत-
स्तमश्याम मधुमन्तन्त ऊर्मिम् ॥ (१७अ,६९म,यजुः।)

प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् पूर्णाहुतिहोमे विनियोगः। पूर्णा दर्व्वि विश्वेदेवाः शतक्रतुरनुष्टुप् पूर्णाहुतिहोमे विनियोगः। सप्त ते अग्ने सप्तवानग्निर्जगती पूर्णाहुतिहोमे विनियोगः।

इति पूर्णाहुतिं हुत्वा प्रणीतानिनयादिकर्म्मशेषं समाप्य रुद्रकुम्भं स्पृष्ट्वा त्र्यम्बकमन्त्रं शतवारं जपेत्। याजुषश्चेद्यजमानस्तदा रुद्रैकादशिनीं जपेत्। बह्वृचश्चेद्रुद्रसूक्तानि*। सामगश्चेद्रुद्रसामानि†। आथर्व्वणश्चेत् त्र्यम्बकमन्त्रम्। अथवा एकादशाष्टत्रिद्वेकसंख्यया रुद्रजपः कार्य्यः।

ततो रुद्रं निर्ऋतिञ्च पञ्चोपचारैः सम्पूज्य त्र्यम्बकं मोषू ण इति मन्त्राभ्याम्‡।

इन्द्रं वो नरः सख्याय सेपु-
र्महो यन्तः सुमतये चकानाः।
महो हि दाता वज्रहस्तो अस्ति
महामु रण्वमवसे यजध्वम्॥ (६म, २८सू, १ऋक्।)

अप्सु मे सोमोऽब्रवीदन्तर्विश्वानि भेषजा।
अग्निञ्च विश्वशंभुवम्॥ (१०म, ८सू, ६ऋक्)

इत्येताभ्याञ्च नक्षत्रदेवता उपस्थाय सर्व्वकलशोदकं पात्रान्तरे गृहीत्वा सलिङ्गाचार्य्यौ यजमानं सर्व्वौषधीभिरनुलिप्ताङ्गं घृत-

---

* ११५—११८ पृष्ठेषु प्रदर्शितानि।

† ११८ पृष्ठे प्रदर्शितानि।

‡ १८१।१४४ पृष्ठयोः प्रदर्शिताभ्याम्।

नववस्त्रं तद्वामभागे धृतनववस्त्रां सपुत्रां तत्पत्नीमुपवेश्य वक्ष्य-माणैर्मन्त्रैरभिषिञ्चेत् ।

ते च मन्त्राः—आपो हि ष्ठाः* आतारमिन्द्रं† इममग्ने‡ मापोमौषधीः§ भगप्रणेतः¶ इदमापः‖ समुद्राय त्वा** पुनन्तु मा पितरः†† आप्यायस्व‡‡ पञ्चनद्यः§§ (नव) शिरोमे

* ५८ पृष्ठे प्रदर्शिताः ।

† १४१ पृष्ठे प्रदर्शितः ।

‡ ७४ पृष्ठे प्रदर्शितः ।

§ मापोमौषधीर्हिंꣳसीर्धाम्नो धाम्नो राजꣳस्ततो वरुण नो मुञ्च ।
यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥
सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु
योऽस्मान् द्वेष्टि यं च वयं द्विष्मः । (६अ. २२म. यजुः ।)

¶ भगप्रणेतर्भग सत्यराधो भगे मां धियमुदवाददन्नः ।
भगप्र णो जनय गोभिरश्वैर्भगप्रनृभिर्नृवन्तः स्याम ॥ (३४अ. ३६म. यजुः ।)

‖ ६१ पृष्ठे प्रदर्शितः ।

** समुद्राय त्वा वाताय स्वाहा । सरिराय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा । अप्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा । अशिमिदाय त्वा वाताय स्वाहा । (३८अ. ७म. यजुः ।)

†† पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः ।
पुनन्तु प्रपितामहाः पवित्रेण शतायुषा ॥
पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ (१९अ. ३७म. यजुः ।)

‡‡ ६८ पृष्ठे प्रदर्शितः ।

§§ पञ्चनद्यः सरस्वतीमपि यन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ (३४अ. ११म. यजुः ।)

स्य त्वा* सोमस्य त्वा द्युम्नेन† यज्जाग्रतः‡ ।

पालाशं भवति तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणा चैनमभिषिञ्चति ।

औदुम्बरं भवति तेन स्वोऽभिषिञ्चति अन्नं वा ऊर्ग् यदुदुम्बर ऊर्ग् वै स्वं यावद्वै पुरुषस्य स्वम्भवति नैव तावदशनायति तेनोर्क् सर्व्वं तस्मादुदुम्बरेण स्वोऽभिषिञ्चति ।

नैयग्रोधपादं भवति तेन मित्र्यो राजन्योऽभिषिञ्चति पद्भि-र्न्यग्रोधः प्रतिष्ठितो मित्रेण राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोध-पादेन मित्र्यो राजन्योऽभिषिञ्चति ।

आश्वत्थं भवति तेन वैश्योऽभिषिञ्चति स यदेवादावश्वत्थे (यदेवाद्रावश्वत्थे) तिष्ठत इन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेन वैश्योऽभिषिञ्चति ।

सर्व्वसुरभ्युन्मर्दनं भवति परमो वा एष गन्धो यत्सर्व्वसुरभ्यु-न्मर्दनं गन्धेनैवमेतदभिषिञ्चति ।

---

* देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
आददे रावासि गभीरमिममध्वरं कृधीन्द्राय सुषूतमम् ।
उत्तमेन पविनोर्ज्जस्वन्तं मधुमन्तं पयस्वन्तं निग्राभ्या स्थ देवश्रुतस्तर्पयत मा ।
(६अ. ३०म. यजुः ।)

† सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण ।
क्षत्राणां क्षत्रपतिरेध्यति दिद्यून् पाहि ॥ (१०अ. १७म. यजुः ।)

‡ यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरङ्गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥
(३४अ. १म. यजुः ।)

यद्देवकल्यान् जुहोति प्राणा वै कल्या अमृतं वै प्राणा अमृतेनैवेनमेतदभिषिञ्चति ।

सर्व्वेषां वा वेदानामेष रसो यत्सोम सर्व्वेषामेवैनमेतद्वेदानां रसेनाभिषिञ्चति ।

नवग्रहमन्त्राश्च ।

मूलं प्रजां (व्रजां) वीर (चीर) इन्द्रो ज्येष्ठां यादिव्या आपः* त्र्यम्बकं यजामहे इत्यादिरूपाः ।

अथ ऋङ्मन्त्राः ।

अक्षीभ्यामिति अस्यां कश्यपो विवृहा यक्ष्मनाशनोऽनुष्टुप् अभिषेके विनियोगः ।

त्रिभिष्ट्वं देवेति† सप्तानां वशिष्ठ ऋषिराद्यानां त्रयाणा-

---

* यादिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः ।
हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः संश्योनाः सुहवा भवन्तु ॥
(श्राद्धतत्त्वे ।)

† त्रिभि ष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः ।
अग्ने दक्षैः पुनीहि नः ॥ (९म. ६७सू. २६ऋक् ।)
पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।
विश्वेदेवाः पुनीत मा जातवेदः पुनीहि माम् ॥ २७ ॥
प्रप्यायस्व प्रस्यन्दस्व सोम विश्वेभिरंशुभिः ।
देवेभ्य उत्तमं हविः ॥ २८ ॥
उपप्रियं पनिप्नतं युवानमाहुतीवृधम् ।
अगन्म बिभ्रतो नमः ॥ २९ ॥
अलाय्यस्य परशुर्ननाश तमापवस्व देव सोम ।
आखुं चिदेव देव सोम ॥ ३० ॥ (टीकाशेषः परपृष्ठे द्रष्टव्यः ।)

अग्निर्देवता चतुर्णां विश्वेदेवा आद्या गायत्री द्वितीयानुष्टुप् ततस्तिस्रो गायत्र्यः अन्त्ये द्वे अनुष्टुभौ अभिषेके विनियोगः।

आपो हि ष्ठेति नवर्चस्य* अम्बरीषसिन्धुद्वीप आपो गायत्री पञ्चमी वर्द्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे अनुष्टुभौ अभिषेके विनियोगः।

आप इद्वेति द्वयस्य† सप्तर्षयो विश्वेदेवा अनुष्टुप् अभिषेके विनियोगः।

सहस्राक्षेणेत्यस्य‡ प्राजापत्यो यक्ष्मनाशनो यक्ष्महा त्रिष्टुप् अभिषेके विनियोगः।

यद्वा सहस्राक्षं शतधारमित्यृचम्§। तच्छंयोः शंयुर्विश्वेदेवाः शक्करी अभिषेके विनियोगः।

अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥

(१०म, १६३सू, १ऋक।)

---

यः पावमानीरध्येत्यृषिभिः संभृतं रसम्।
सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥ ३१ ॥
पावमानीर्यो अध्येत्यृषिभिः संभृतं रसम्।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ (९म. ६७सू. ३२ऋक्।)

* ५८ पृष्ठे प्रदर्शितस्य।

† १७६ पृष्ठे वक्ष्यमाणस्य।

‡ सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम्।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ॥ (१०म.१६१सू.३ऋक्।)

§ १७६ पृष्ठे वक्ष्यमाणम्।

ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् ।
यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते ॥ २ ॥
आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते ॥ ३ ॥
ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् ।
यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामि ते ॥ ४ ॥
मेहनाद्वनं करणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्व्वस्मादात्मनस्तमिदं विवृहामि ते ॥ ५ ॥
अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्व्वणि पर्व्वणि ।
यक्ष्मं सर्व्वस्मादात्मनस्तमिदं विवृहामि ते ॥ ६ ॥
त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोमधामभिः ।
तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥ ७ ॥
पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतं हितम् ॥

(१म, १६३सू, ८ऋक्।)

प्रदेव मच्छा मधुमन्त इन्दवः*
धर्त्ता दिवः पवते कृत्व्यो रसः† ।

---

* प्रदेव मच्छा मधुमन्त इन्दवोऽसिष्यन्दन्त गाव आ न धेनवः ।
बर्हिषदो वचनावन्त ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥

(९म. ६८सू. १ऋक्।)

† धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजांसि कृणुते नदीष्वा ॥

(९म. ७६सू. १ऋक्।)

पवित्रं ते विततं ब्रह्मणस्पते
प्रभुर्गात्राणि पर्य्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते
शृतास इद्वहन्तस्तत्समाशत ॥ (९म, ८३सू, १ऋक् ।)
तपोः पवित्रं विततं दिवस्पदे
शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतारमाशवो
दिवस्पृष्टमधितिष्ठन्ति चेतसा ॥ (९म,८३सू,२ऋक ।)
स्वादुः पवस्व* ।
त्वं पवित्रे रजसो विधर्मणि
देवेभ्यः सोम पवमान पूयसे ।
त्वामुशिजः प्रथमो अगृभ्णत्
तुभ्येमा विश्वा भुवनानि येमिरे ॥
(९म, ८६सू, ३०ऋक् ।)
आपो हि ष्ठाः† शन्नो देवीः† ।
ईशाना वार्य्याणां क्षयन्तीश्चर्षणीनाम् ।
अपो याचामि भेषजम् ॥ (१०म, ९सू, ५ऋक् ।)
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निञ्च विश्वशम्भुवम् ॥ (१म, २३सू, २०ऋक् ।)
आपः पृणीत भेषजं वरूथं तन्वे मम ।
ज्योक् च सूर्य्यं दृशे ॥ (१०म, ९सू, ७ऋक् ।)

---

* ऋचियं ७१ पृष्ठे प्रदर्शिता । † ऋगियं १० पृष्ठे प्रदर्शितम् ।

इदमापः प्रवहत यत्किञ्च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वाशेप उतानृतम् ॥
(६म, १७म, यजुः ।)

आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आगहि तं मा संसृज वर्चसा ॥
(१०म, ९सू, ९ऋक् ।)

आप इद्वा उ भेषजीरापो अमीवचातनीः ।
आपः सर्व्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥
(१०म, १३७सू, ६ऋक् ।)

हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी ।
अनामयित्नुभ्यां त्वा ताभ्यां त्वोपस्पृशामसि ॥
(१०म, १३७सू, ७ऋक् ।)

सहस्राक्षेण शतशारदेन* । यद्वा ।

सहस्राक्षं शतधारमृषिभिः पावनङ्कृतम् ।
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते (मे) ॥
भगन्ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः ।
भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ।
ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्व्वदा ॥
ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसम्भूतां पीड़ां दहतु ते रविः ॥

---

*ऋगियं २७२ पृष्ठे प्रदर्शिता ।

रोहिणीशः सुधामूर्त्तिः सुधागात्रः सुधाशनः ।
विषमस्थानसम्भूतां पीड़ां दहतु ते विधुः ॥
भूमिपुत्रो महातेजा जगतां भयकृत्सदा ।
वृष्टिकृद्वृष्टिहर्त्ता च पीड़ां दहतु ते कुजः ॥
उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ।
सूर्य्यप्रियकरो देवः पीड़ां दहतु ते बुधः ॥
दे .मन्त्री विशालाक्षः सदा लोकहिते रतः ।
अनेकशिष्यसम्पूर्णः पीड़ां दहतु ते गुरुः ॥
दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः ।
प्रभुस्ताराग्रहाणाञ्च पीड़ां दहतु ते भृगुः ॥
सूर्य्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ।
मन्दचारः प्रसन्नात्मा पीड़ां दहतु तेऽर्कजः ॥
महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ।
असुरश्चोर्द्धबाहुश्च पीड़ां दहतु ते तमः ॥
अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः ।
उत्पातभूतो जगतां पीड़ां दहतु ते शिखी ॥
सुदर्शन महाज्वालविदीपितदिगम्बर ।
त्रायस्व चैनमापन्नो भद्रं प्रदिशते नमः ॥
दैतेयनिकराभोगशैलनिर्भेददीक्षित* ।
पद्मशङ्खमनोनन्द चाद्येऽ†तमपि नन्दक ॥

* शैलाभोभेददीक्षित इति क-पुस्तके पाठः ।

† चाद्योच्च पाद्योति पाठो युक्तः, चाद्योक्तस्य चविद्यत्वात् ।

विपक्षकायमथन तच्छिरोलुलितानन ।
कमलाकान्तदैतेय पाशेनं मुशलायुध ॥
विश्वोद्भवलयत्राणलीलस्य परमात्मनः ।
लीलारविन्दसुभग पात्वेनमपि पङ्कज ॥
कौमोदकी गदा शौरेर्यासौ दिशतु मङ्गलम् ।
या मुकुन्दकराम्भोजे विलसद्भूषणायिता* ॥
स्वविस्फारहृताशेषरक्षोदनुजजीवित ।
एनसौ रक्षतादेनं विष्णोः शार्ङ्ग धनुर्वर ॥
दैत्यसीमन्तिनीगर्भनिर्भेदचतुरस्वन ।
स्रवदच्युतवक्त्राब्जमधुपूर्ण सुशङ्खराट् ॥
दैत्यरक्षोऽधिपप्राणवसारुधिरभोजनाः ।
एनं सर्व्वत्र रक्षन्तु शार्ङ्गपाणेः शरोत्कराः ॥
अरातिहेतिप्रमुखशश्वयोजःक्षपणक्षमा ।
आपद्भ्यो रक्षतादेनं शक्तिर्विष्णोर्वरायुधम् ॥
योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः ।
मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥
योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः ।
सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु ॥
योऽसौ दण्डधरो देवो धर्मो महिषवाहनः ।
मूलजातशिशोर्दोषं व्यपोहतु यमो मम ॥

---

* भूषणायिता इत्यत्र भूषणावृता इति ख-ग-पुस्तकयोः पाठः ।

योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः ।
प्रशामयतु मूलोत्थदोषं गण्डान्तसम्भवम् ॥
योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः ।
नक्रवाहः प्रचेता नो मूलोत्थाघं व्यपोहतु ॥
योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः ।
प्रशामयतु मूलोत्थं दोषं बालस्य शान्तिदः ॥
योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः ।
मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥
योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः ।
अश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु ॥
विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः ।
सर्व्वदोषप्रशमनं सर्व्वं कुर्व्वन्तु शान्तिदाः ॥
सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्व्वे दिक्पालाः पान्तु ते सदा* ॥
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्षमा धृतिः† ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥

---

* पान्तु ते सदा इत्यत्र आपयन्तु ते इति ख-पुस्तके पाठः ।

† क्षमा धृतिरित्यत्र क्रिया मतिरिति ग-पुस्तके पाठः ।

ऋषयो मनवो गावो देवमातर एव च ।
देवदानवगन्धर्व्वा यक्षराक्षसपन्नगाः ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ।
अस्त्राणि सर्व्वशस्त्राणि राजानो वाहनानि च ॥
औषधानि च रत्नानि कालस्यावयवाश्च ये ।
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥
एते त्वामभिषिञ्चन्तु सर्व्वकामार्थसिद्धये ।
आदित्यश्चन्द्रमा भौमो बुधो जीवः सितोऽर्कजः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।

ततस्त्र्यंबकं यजामहे इति पठेत्। ततो रुद्रनिर्ऋति-कलशोदकेन अन्येन च शतच्छिद्रमन्तर्धाय अभिषिक्तो यजमानो धौते वाससी परिधाय तिलकं विभूतिञ्च कृत्वा सङ्कल्पपूर्व्वक-माचार्य्यादीन् पूजयित्वा तेभ्यो दक्षिणां दद्यात् ।

तत्र आचार्य्याय सवत्सां धेनुं ब्रह्मणे वृषभं रुद्रजापिने कृष्ण-मनड्वाहम् ।

तत्र मन्त्रः ।

अङ्गारक नमस्तेऽस्तु अनड्वांस्तव दानतः ।
शिशुजन्मनि दोषांश्च निवारय महाप्रभो ॥ इति ।

तत ऋत्विग्भ्यो यथाशक्ति दक्षिणां दद्यात् । तत नैर्ऋत्या-दीनामुत्तरपूजनं कृत्वा "उत्तिष्ठ ब्रह्मणस्पते"* इति विसृज्य

---

* उत्तिष्ठ ब्रह्मणस्पते देव यं तस्त्वेमहे ।
उपप्रयं तु मरुतः सुदानव इंद्र प्राशूर्भवा स चा । (१म. ४०सू. १ऋक् ।)

आचार्य्याय प्रतिमादिकं दत्त्वा रुद्रप्रतिमादि रुद्रजापिने दत्त्वा भूयसीं दक्षिणामन्येभ्यो दत्त्वा शततदर्द्धादिसंख्याकान् ब्राह्मणान् भोजयित्वा सर्व्वं कर्म्म ईश्वराय समर्प्य यस्य स्मृत्या इत्युक्त्वा शान्तिसूक्तजपं कारयित्वा सुहृद्युतो भुञ्जीत ।

इति शौनकोक्तमूलजातशान्तिप्रयोगः समाप्तः ।

अथ कात्यायनपरिशिष्टोक्तमूलजातशान्तिविधानम् ।

यथा हेमाद्रौ शान्तिकाण्डे ।

अथातो मूलजातस्य शान्तिविधिं व्याख्यास्यामः । मूलांशे प्रथमे पितुर्नाशो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थे कुलशोकावग्रहः स्वयं पुण्यभागी स्यात् । मूलनक्षत्रे जातो मूलशान्तिविधानं कुर्य्यात् ।

तत्रादौ सर्व्वौषध्या सर्व्वगन्धैश्च संयुक्तमुदकुम्भं वस्त्रगन्धपुष्पसहितं श्वेतसिद्धार्थकुसुमयुक्तञ्च कुर्य्यात् ।

ततस्तस्मिन्रुद्रमभ्यर्च्य रुद्रानप्रतिरथं रक्षोघ्नञ्च सूक्तं जपित्वा द्वितीयोदकुम्भं चतुःप्रस्रवणसंयुक्तं कृत्वा तदुपरिष्टात् मूलानि निधाय वंशपात्रे कृत्वा वस्त्रेण बद्धा तस्मिन् प्रधानानि मूलानि वक्ष्याम्यष्टादश माषहिरण्मयमूलं सप्तधान्यानि प्रथमा काश्मर्यी सहदेवी अपराजिता बाला पाठा शङ्खपुष्पी मधुयष्टिका चक्राङ्किता मयूरशिखा काकजङ्घा कुमारीद्वयं जीवन्ती अपामार्गी भृङ्गारको लक्ष्मणा च सुलक्ष्मणा जाती व्याघ्रपत्र चक्रमर्द्दक

सिद्धेश्वराश्वत्थ पलाशोदुम्बर प्लक्ष वटार्क दूर्व्वा शतावरी शमी रोहितकान्येवमादिमूलानि पूरयित्वा तस्मिन्निषिद्धानि मूलानि वक्ष्यामि वैकङ्कत बैल्व धव निम्ब कदम्ब राजवृक्षाक्ष शाल पियाल दधि कपित्थ कोविदार श्लेष्मातक शाल्मलि सर्व्वकण्टकि-वर्ज्जम्।

तत्राभिषेकं कुर्य्यात् पितुः शिशोर्जनन्याश्च "देवस्य त्वे"*-त्यौदुम्बर्य्या यथालिङ्गमङ्गं संस्नाप्य अर्द्धं नैर्ऋतं पयसि पायसं श्रपयित्वा कार्ष्ण्यमयं स्रुक् स्रुवञ्च प्रतप्य सम्मृज्य च आघारा-ज्यभागौ हुत्वा असुन्वन्तमयजमानमिच्छेति† चतस्रः स्थाली-पाकेन जुहुयात्।

ततः कृणुष्व पाजः‡ इति पञ्चदशाज्याहुतीर्हुत्वा चतुर्गृहीतेन जुहोति। मा नः स्तोके इति§ द्वाभ्यां या ते रुद्र शिवा तनू-रिति¶ षड्भिः अग्ने रक्षांसि सेधति शुक्रशोचिरमर्त्यः शुचिः पावक इति|| त्वन्नः सोम विश्वत** इति च स्विष्टकृदादिप्राशनान्ते

* मन्त्रोऽयं ६१ पृष्ठे प्रदर्शितः।

† असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ (११अ.६२म.यजुः।)

‡ कृणुष्वेत्यादिकमृक्पञ्चकं ३५८।३५९ पृष्ठयोरुक्तम्।

§ मन्त्रोऽयं १०० पृष्ठे प्रदर्शितः।

¶ मन्त्रोऽयं १४६ पृष्ठे प्रदर्शितः।

|| शुचिः पावक उच्यते सोमः सुतस्य मध्वः।
देवावीरघशंसहा॥ (९म. २४सू. ७ऋक्।)

** ऋगियं २६६ पृष्ठे उक्ता।

कृष्णा गौः कृष्णाश्च तिला हेममयमूलं सप्तधान्यसमेतमाचार्य्याय देयानि कृष्णोऽनड्वान् ब्रह्मणे देयः नक्षत्रसूचकेभ्यो वासो दद्यात् अन्येभ्यो ब्राह्मणेभ्यः सुवर्णं दद्यात् । कृसरपायसेन ब्राह्मणान् भोजयेत् । सार्पदैवते गण्डान्तजातानामयमेव विधिरेवं कृते शान्तिर्भवतीति ।

इति कात्यायनपरिशिष्टोक्तमूलाश्लेषा-
गण्डान्तशान्तिविधानम् ।

## अथ अश्लेषाजननशान्तिविधानम् ।

मानवसंहितायाम् ।

अश्लेषायान्तु जातानां शान्तिं वक्ष्याम्यतः परम् ।
जातस्य द्वादशाहे च शान्तिहोमं समाचरेत् ॥
असम्भवे तु जन्मर्क्षे अन्यस्मिन् वा शुभे दिने ।
स्नानाभ्यङ्गादिभि*स्तस्मिन् वरयेत्तु द्विजोत्तमान् ॥
विभवे पञ्चकुम्भाः स्युर्द्वयं वा तदलाभतः ।
देवतास्थापनं चैकमेकं रुद्राभिमन्त्रणं ॥
मूलर्क्षोक्तप्रकारेण कुम्भे निक्षिप्य पूजयेत् ।
गोमयालेपिते देशे धान्याद्यैः परिशोभिते ॥
पङ्कजं कारयेत्तत्र चतुर्विंशद्दलान्वितम् ।
तण्डुलैः कारयेद्‌यद्वा रक्तपीतसितासितैः ॥

---

* स्नातोऽभ्यङ्गादिभिरिति ख-पुस्तके पाठः ।

इत्युक्तेन विधानेन सर्व्वारिष्टं व्यपोहति ।
सर्व्वकामाश्च सिध्यन्ति वेदोक्तायुर्भविष्यति ॥
इत्युक्तं वेदशास्त्रार्थमारभागमचोदितम् ।
मानवानां हितार्थाय मनुना सार्व्वकामिकम् ॥
सर्पाधीश नमस्तुभ्यं नागानाञ्च गणाधिप ।
गृहाणार्घ्यं मया दत्तं सर्व्वारिष्टप्रशान्तये ॥
इति मन्त्रेण सर्पाणां दद्यादर्घ्यं सुशोभितम् ।
मूलनक्षत्रवत् कुर्य्यात् सर्पगण्डे च नामतः ॥

इति मानवसंहितायामश्लेषाजननशान्तिमूलवाक्यानि ।

अथास्य स्पष्टप्रयोगो लिख्यते ।

स च मूलर्क्षोक्तप्रकारेण इति मूलोक्तेन विधानेन च इत्या-द्यतिदेशान्मूलशान्तिवत् कार्य्यः ।

यथा ।

द्वादशाहादिके शुभे दिने कृताभ्यङ्गो* यजमानः प्राणाना-यम्य देशादि सङ्कीर्त्त्य ममास्य कुमारस्य कुमार्य्या वा अश्लेषा-नक्षत्रजननसूचितमातृरिष्टादिशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सनवग्रहमखां गोमुखप्रसवशान्तिसहिताम् अश्लेषाजननशान्तिं करिष्ये इति सङ्कल्प्य तदङ्गतया गणेशपूजनपुण्याहवाचनादि कृत्वा आचार्य्यादीन् हृत्वा अष्टावृत्विजो वृणुयात् ।

अथ आचार्य्योऽस्मिन् कर्म्मणि आचार्य्यकर्म्म करिष्ये इति सङ्कल्प्य—

* कृताभ्यङ्ग इत्यत्र कृताभ्यङ्गादिक इति ग-पुस्तके पाठः ।

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्व्वदा ।
स्थानं त्यक्त्वा तु तत्सर्व्वं यत्रस्थं तत्र गच्छतु ॥

इति मन्त्रेण सर्षपान् सर्व्वतो विकीर्य्य आपो हि ष्ठेत्यादिना* कर्म्मभूमिं संप्रोक्ष्य गोमुखप्रसवं कृत्वा मण्डपैशानदिग्भागे पञ्च-वर्णकैः स्वस्तिकं विरच्य† मही द्यौरिति‡ भूमिं स्पृष्ट्वा ओषधयः संवदन्ते इति§ द्रोणप्रमाणान् व्रीहीन् प्रक्षिप्य तत्र मन्त्रपूर्व्वकं कलशं निधाय जलेनापूर्य्य गन्धपुष्पैरभ्यर्च्य यवदूर्व्वा-श्वत्थादिपल्लवपञ्चक-सप्तमृत्तिका-फल--हिरण्य--रत्न--पञ्चगव्यानि¶ तत्तल्लिङ्गकैर्मन्त्रैः कलशे निधाय कण्ठे वस्त्रेणावेष्ट्य तदुपरि पूर्णपात्रं निदध्यात् ।

ततस्तत्कलसात् पूर्व्वादिचतुर्दिक्षु यवराश्युपरि पूर्व्ववत्कलश-चतुष्टयं स्थापयेत् ।

अथ मध्यकलशे वस्त्रोपरि सौवर्णीं रुद्रप्रतिमां स्थापयित्वा त्र्यम्बकमन्त्रेण पूजयेत् । तत्रैक ऋत्विक् कुम्भं स्पृष्ट्वा रुद्रैका-दशिनीं न्यासपूर्व्वकं साङ्गां जपेत् । चत्वारि रुद्रसूक्तानि च तेषामृष्यादिकं मूलशान्तिप्रयोगे द्रष्टव्यम् । ततोऽन्य ऋत्विक् तत्रैव कुम्भे त्र्यम्बकमन्त्रमष्टोत्तरसहस्रं पावमानीमप्येकवारं जपेत् । उत्तरदिक्स्थकुम्भे पावमानीजप इति केचित् ।

* ५२ पृष्ठे प्रदर्शितम् ।

† विरच्य इत्यत्र विरचय्येति पाठो युक्तः ।

‡ मन्त्रोऽयं १०८ पृष्ठे प्रदर्शितः ।

§ ऋगियं ७४ पृष्ठे प्रदर्शिता ।

¶ २१५ २१८ पृष्ठेषु प्रदर्शितानि ।

ततः प्रागादिकुम्भचतुष्टये आशुः शिशान इत्यादि सूक्तचतुष्टयं* मूलशान्त्युक्तं क्रमेण जपेत्।

ततः कुम्भोत्तरदेशे चतुर्व्विंशतिदलं पङ्कजं पञ्चवर्णैः कृत्वा कर्णिकायां व्रीहीव्व्हृनिती निधाय तदुपरि कलशं स्थापयित्वा तत्रौषधिफलरत्नादीनि निधाय पूर्णपात्रं स्थापयित्वा तदुपरि सर्पाख्यामश्लेषाप्रतिमां पञ्चामृतस्नापितां प्रतिष्ठाप्य नमोऽस्तु सर्पेभ्य इति मन्त्रेण† सर्पमावाहयेत्।

ततः।

सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः।
फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः॥

इति मन्त्रेण सर्पं ध्यात्वा तद्दक्षिणतो बृहस्पते अतीति‡ बृहस्पतिमावाह्य तदुत्तरत उदीरतामितिषु§ पितॄनावाह्य पूजयेत्।

ततः पङ्कजस्य चतुर्व्विंशतिदलेषु पूर्व्वामारभ्य पुनर्वसुपर्य्यन्तं नक्षत्राणि तत्तद्देवता वा पूर्व्वादिदलेषु आवाहयेत्। देवतास्त्वेत्थम्—भगः अर्य्यमा सविता त्वष्टा वायुः इन्द्राग्नी मित्रः इन्द्रः निर्ऋतिः आपः विश्वेदेवाः विष्णुः वसवः वरुणः अजैकपात् अहिर्बुध्नः पूषा अश्विनौ यमः अग्निः प्रजापतिः सोमः

* २३९ — २४२ पृष्ठेषु प्रदर्शितम्।

† २२२ पृष्ठे प्रदर्शितम्।

‡ ऋगियं ९२ पृष्ठे प्रदर्शिता।

§ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु॥
(१९अ ४९म यजुः।)

रुद्रः अदितिरिति चतुर्व्विंशतिदेवानावाह्य लोकपालानावाहयेत्।

ततः पदार्थानुसमयेन काण्डानुसमयेन वा सर्व्वान् पूजयेत्। नैवेद्यादिद्रव्यं मूलशान्तिवर्ज्जयम्।

तत आचार्य्योऽग्निं स्थापयित्वा नवग्रहस्थापनं कृत्वा तदीशान्यां ग्रहकलशं स्थापयित्वा वरुणं सम्पूजयेत्।

ततः समिद्द्वयमादाय देवतापरिग्रहार्थमन्वाधानं करिष्ये इति सङ्कल्प्य चक्षुषी आज्येन इत्यन्तमुक्त्वा नवग्रहान् प्रत्येकममुकसंख्याभिः समिच्चर्व्वाहुतिभिरधिदेवताः प्रत्यधिदेवताश्चामुकसंख्याहुतिभिर्विनायकादीँ ल्लोकपालादींश्चामुकसंख्याभिः समिच्चर्व्वाहुतिभिः प्रधानदेवतां सर्पं प्रतिद्रव्यमष्टोत्तरशतसंख्याभिर्घृतमिश्रपायससमिदाज्यचर्व्वाहुतिभिर्बृहस्पतिं पितृंश्च प्रतिद्रव्यमष्टाविंशतिसंख्याकाभिर्घृतमिश्रपायस-समिदाज्य-चर्व्वाहुतिभिर्भगादिचतुर्व्विंशतिदेवताः प्रत्येकमष्टसंख्याभिः पायसाहुतिभी रक्षोहणं कृणुष्वेत्यादिपञ्चदशर्ग्भिः* प्रत्यृचमष्टसंख्याभिः कृसराहुतिभिः† सवितारं दुर्गां त्र्यम्बकं ऋत्विक्स्तुतिं वास्तोष्पतिम् अग्निं क्षेत्राधिपतिं मित्रावरुणौ अग्निश्च एता देवताः प्रत्येकमष्टाष्टसंख्याभिः कृसराहुतिभिः श्रियं हिरण्यवर्णामिति पञ्चदशर्ग्भिः‡

* ३५८।३५९ पृष्ठयोर्द्रष्टव्याः।

† कृसराहुतिभिरित्यत्र पायसाहुतिभिरिति क्व पुस्तके पाठः।

‡ ३६४।३६५ पृष्ठयोर्द्रष्टव्याः।

प्रतिमन्त्रमष्टाष्टसंख्याभिः समिदाज्यचर्वाहुतिभिः सोमम् अप्सु मे सोम इति* त्रयोदशसंख्याभिः पायसाहुतिभी रुद्रं चतुर्गृहीतेनाज्येन अग्निं वायुं सूर्य्यं प्रजापतिञ्चाज्येन हुत्वा स्रुवेणाग्निं स्विष्टकृतमित्यादि पूर्णपात्रनिधानान्तं कर्म्म कृत्वा पायसं क्षमरचरुञ्च सहैव श्रपयित्वा आज्यभागान्ते यजमानेन अग्नेर्दक्षिणत उपविष्टेन त्यागं कारयित्वा सलिङ्गाचार्य्योऽन्वाधानक्रमेण तत्तन्मन्त्रैर्यथाविधि होमं कुर्य्यात्। होममन्त्राणामृष्यादिकं मूलशान्तिप्रयोगे द्रष्टव्यम्।

ततः स्विष्टकृदादि होमशेषं समाप्य दिक्पालेभ्यो ग्रहेभ्यो विनायकादिभ्यः सर्पेभ्यो बृहस्पतये पितृभ्यश्च रुद्राय क्षेत्रपालाय च सदीपमाषभक्तबलीन् दत्त्वा मूलशान्तिवत् पूर्णाहुतिं हुत्वा प्रणीतानिनयनादिकर्म्मशेषं समाप्य रुद्रकुम्भं स्पृष्ट्वा त्र्यम्बकमन्त्रं शतमष्टोत्तरं जप्त्वा याजुषश्चेद्यजमानस्तदा रुद्रैकादशिनीं जपेत्। बह्वृचश्चेत्तदा चत्वारि रुद्रसूक्तानि कद्रुद्रायेत्यादीनि†। सामगश्चेद्रुद्रसामानि‡। आथर्व्वणश्चेत् त्र्यम्बकमन्त्रम्। एकादशाष्टविंशैकसंख्या अत्र सूक्तजपे द्रष्टव्या।

ततो रुद्रं सर्पांश्च पञ्चोपचारैः पूजयित्वा तत्तन्मन्त्राभ्यामुपस्थाय सर्व्वकलसोदकं पात्रान्तरे गृहीत्वा तत्र होमसम्पातकं

---

* ऋग्विध ३२१ पृष्ठे उक्ता।

† ३३५ ३३८ पृष्ठेषु प्रदर्शितानि।

‡ ३३८।३३९ पृष्ठयोः प्रदर्शितानि।

प्रविश्य च ऋत्विगाचार्य्यास्तिष्ठन्तः सकुटुम्बं यजमानमभि-षिञ्चेयुः षष्ठीभ्यामित्यादिभिर्मूलशान्त्युक्तैर्मन्त्रैः*।

तथा।

योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः।
सर्पजातशिशोर्दोषं मातापित्रोर्व्यपोहतु॥
योऽसौ खड्गधरो देवो निरृती राक्षसाधिपः।
प्रशामयतु सर्पोत्थं दोषं गण्डान्तसम्भवम्॥
योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः।
नक्रवाहः प्रचेता नः सर्पोत्थाघं व्यपोहतु॥
योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः।
प्रशामयतु सर्पोत्थं दोषं बालस्य शान्तिदः॥
योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः।
सप्तजिह्वश्च देवोऽग्निः सर्पदोषं व्यपोहतु॥
योऽसौ दण्डधरो देवो धर्म्मो महिषवाहनः।
सर्पजातशिशोर्दोषं व्यपोहतु यमो मम॥
योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः।
मातापित्रोः शिशोश्चैव सार्पदोषं व्यपोहतु॥
योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः।
अश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु॥
विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः।
सर्व्वदोषप्रशमनं सर्व्वे कुर्व्वन्तु शान्तिदाः॥

---

* ३२१।३२२ पृष्ठयोरुक्तैः।

योऽसौ वज्रधरो देव इत्यादयः सर्व्वे कुर्व्वन्तु शान्तिदा इत्यन्ताश्च मन्त्रा जह्निता द्रष्टव्याः। अभिषेकमथाचरेदित्युपक्रम्य दारपुत्रसमेतस्य यजमानस्य पूर्व्ववदिति मूलशान्त्यतिदेशात्। एवं गण्डान्तशान्त्यादावपि द्रष्टव्यम्। गण्डान्तेऽप्येवं कर्त्तव्यं पुष्याश्लेषा तं हि दैवतं इति वचनात्।

किञ्च अनूहिता अपि वक्ष्यमाणमन्त्राः पाठ्याः। यथा।

अश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च।
भ्रातृज्ञातिकुलस्थानां दोषं सर्व्वं व्यपोहतु॥
योऽसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः।
मातापित्रोः शिशोश्चैव गण्डान्तं स व्यपोहतु॥
पितरः सर्व्वभूतानां रक्षन्तु पितरः सदा।
सर्पनक्षत्रजातस्य वित्तं ज्ञातिश्च बान्धवान्॥

ततः सुरास्त्वामभिषिञ्चन्तु इत्यादिभि*रभिषिच्य तच्छंयोरावृणीमहे शंयुर्विश्वेदेवा इत्यादिकं पठेत्।

ततो रुद्रकलशसर्पकलसोदकेन अन्येन च शतच्छिद्रं कलशमन्तर्धाय अभिषिक्तो यजमानो धौते वाससी परिधाय तिलकं कृत्वा सङ्कल्पपूर्व्वकमाचार्य्यादीन् पूजयित्वा तेभ्यो दक्षिणां दद्यात्।

तत्र आचार्य्याय सवत्सां दोग्ध्रीं धेनुं ब्रह्मणे वृषं रुद्रजापिने कृष्णवर्णमनड्वाहं दद्यात्।

* ७५ पृष्ठे प्रदर्शिताः।

तत्र मन्त्रो यथा ।

अङ्गारक नमस्तेऽस्तु अनड्वांस्तव दानतः ।

शिशुजन्मनि दोषांश्च निवारय महाप्रभो ॥ इति ।

तत ऋत्विग्भ्यो यथाशक्ति दक्षिणां दत्त्वा रुद्रसर्पादीनामुत्तरपूजनं विधाय ताम्रपात्रे फलपुष्पादियुतं जलं प्रक्षिप्य सर्पायार्घ्यं दद्यात् ।

तन्मन्त्रो यथा ।

सर्पाधीश नमस्तुभ्यं नागानाञ्च गणाधिप ।

गृहाणार्घ्यं मया दत्तं सर्व्वारिष्टं प्रणाशय ॥ इति ।

तत उत्तिष्ठ ब्रह्मणस्पते* अभ्यारं† यान्तु देवगणा इति विसृज्य सङ्कल्पपूर्व्वकं प्रतिमादिकमाचार्य्याय दत्त्वा‡ अग्निं सम्पूज्य गच्छ गच्छ सुरश्रेष्ठ इति विसृज्य शततदर्द्धदशान्यतमब्राह्मणभोजनं कारयित्वा कर्म्म ईश्वराय समर्प्य यस्य स्मृत्येत्युक्ता शान्तिसूक्तजपं कारयित्वा सुहृद्युतो भुञ्जीत इति ।

इति श्रीविधानपारिजाते अश्लेषाजननशान्तिविधानं समाप्तम् ।

* उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥
(१म. ४सू. १ऋक्।)

† अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।
अवतस्य विसर्जने ॥ (८म. ७२सू. ११ऋक्।)

‡ आचार्य्यहस्ते प्रतिपाद्य इति क पुस्तके पाठः ।

## अथ ज्येष्ठाजननशान्तिविधानम्।

वृद्धगार्ग्यसंहितायाम्।

सुखासीनं मुनिश्रेष्ठं गार्ग्यं मुनिगणान्वितम्।
कृताञ्जलिपुटो भूत्वा परिपप्रच्छ शौनकः॥
ज्येष्ठानक्षत्रसम्भूतगण्डदोषविनिर्णयम्।
तस्य शान्तिविधानञ्च वद मे मुनिसत्तम॥
शौनकस्य वचः श्रुत्वा* प्रत्युवाच महामुनिः।
शृणु शौनक यत्नेन गण्डदोषविनिर्णयम्।
तस्य शान्तिविधानञ्च यथावत्कथयामि ते॥
घटिकैका च मैत्रान्ते ज्येष्ठादौ घटिकाद्वयम्।
तयोः सन्धिरिति ज्ञेयं शिशुगण्डं मनीषितम्॥

मैत्रमनुराधा।

प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके।
पादत्रये जातनरो ज्येष्ठोऽप्यत्र प्रजायते॥

ज्येष्ठाद्यघटिकाद्वयं परित्यज्य प्रथमादिचरणत्रये जातो नरो ज्येष्ठः श्रेष्ठ इत्यर्थः दोषाभावात्।

ज्येष्ठान्त्यपादजातस्तु पितुः स्वस्य च नाशकः।
जायते नात्र सन्देहो दशाहाभ्यन्तरे तथा॥
ज्येष्ठर्क्षे कन्यका जाता हन्ति शीघ्रं धवाग्रजम्।
तस्य शान्तिं प्रवक्ष्यामि गण्डदोषप्रशान्तये॥

---

* तस्य तद्वचनं श्रुत्वा इति ग पुस्तके पाठः।

सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते ।
सूतकान्ते तथा कुर्य्याज्जेष्ठाशान्तिं विधानतः ॥
वज्राङ्कुशधरं देवमैरावतगजस्थितम् ।
कुर्य्याच्छचीपतिं रम्यं देवेन्द्रं सुरपूजितम् ॥
कर्षमात्रसुवर्णेन तदर्द्धेनाथ पादतः ।
तद्विधानं प्रकुर्व्वीत वित्तशाठ्यं न कारयेत् ॥
शालितण्डुलसम्पूर्णकुम्भस्योपरि पूजयेत् ।
इन्द्रायेन्दो मरुत्वत* इति मन्त्रेण पूजयेत् ॥
गन्धपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः ।
पूजयेद्विधिना विप्र लोकपालगणान्वितम् ॥
रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकम् ।
तत्पुरः स्थापयेत्कुम्भांश्चतुर्दिक्षु विशेषतः ॥
पुण्योदकसमायुक्तान् वस्त्रयुग्मविवेष्टितान् ।
तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् ॥
कुम्भेषु विन्यसेद्धीमान् पञ्चगव्यं समन्त्रकम् ।
पञ्चामृतं पञ्चरत्नं मृत्तिकाः पञ्चसंख्यकाः ॥
पञ्चवृक्षकषायांश्च पञ्चपल्लवकांस्तथा ।
सुवर्णं कुशदूर्व्वाश्च शतौषधिमपि क्षिपेत् ॥

---

* इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
ऋतस्य योनिमासदम् ॥ (९म. ६४सू. २२ऋक् ।)

पूजयेद्वारुणैर्मन्त्रैः कुम्भान् धीमान् प्रयत्नतः* ।
त्वन्नो अग्ने† जपेदादौ स त्वन्नोऽपि† द्वितीयके ॥
तृतीये पौरुषं सूक्तं‡ कद्रुद्रायं§ चतुर्थके ।
समुद्रज्येष्ठा इति¶ चेमं मे गङ्गे|| चतुर्थके ॥
पूजयेद्वस्त्रयुग्माद्यैश्चतुरः कलशानपि ।
जपं कुर्य्युः प्रयत्नेन मन्त्रैरेभिर्द्विजोत्तमाः ॥
भानो भद्रा** जपश्चादौ भद्रा अग्ने†† द्वितीयके ।
आचार्य्यो मूलमन्त्रेण होमं कुर्य्याद्विशेषतः‡‡ ॥
मूलमन्त्र इन्द्रायेन्दो इति ।
इन्द्रसूक्तं रुद्रजाप्यं मृत्युञ्जयजपस्ततः ।
इत्थं सम्पूज्य देवेन्द्रं वरुणं कुम्भसंस्थितम् ॥
सुसङ्कल्प्य विधानेन होमकर्म्म ततश्चरेत् ।
समिद्भिर्ब्रह्मवृक्षस्य शतमष्टोत्तरं तथा ॥

* प्रयत्नत इत्यत्र विशेषत इति क-पुस्तके पाठः ।

† मन्त्रद्वयं ७४ पृष्ठे प्रदर्शितम् ।

‡ १२५ पृष्ठे प्रदर्शितम् ।

§ ७४ पृष्ठे प्रदर्शितम् ।

¶ ६२ पृष्ठे प्रदर्शितम् ।

|| मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः ।

** मन्त्रोऽयं ७१ पृष्ठे प्रदर्शितः ।

†† ऋगियं ३२४ पृष्ठे प्रदर्शिता ।

‡‡ जप कुर्य्यात् प्रयत्नत इति ग पुस्तके पाठः ।

सर्पिषा चरुणा चैव मूलमन्त्रेण वाग्यतः ।
पुनस्त्वाप्यस्व* तेनैव यत इन्द्र भयेति† च ॥
तिलान् व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ।
भार्य्याग्निगुरुसमीपे तं यजमानं विशेषतः ॥
अभिषिक्तं प्रकुर्व्वीत मन्त्रैर्वारुणसंज्ञकैः ।
समुद्रज्येष्ठादिभिर्मन्त्रैः‡रिमं मे वरुणे§स्तथा ॥
द्यौः शान्त्यादिभिर्मन्त्रैः¶रभिषेकमथाचरेत् ।
अभिषेकं निवर्त्त्याथ यजमानः समाहितः ॥
शुक्लाम्बराणि धृत्वाथ कुर्य्यादाज्यविलोकनम् ।
रूपं रूपेति मन्त्रेण|| चित्रं** तच्चक्षुरेव†† वा ॥

---

* आप्यस्व इत्यत्र आप्यस्वेति पाठो युक्ततया प्रतिभाति ।

† ऋगियं ११९ पृष्ठे उक्ता ।

‡ १३२ पृष्ठे प्रदर्शितैः ।

§ मन्त्रोऽयं ७४ पृष्ठे प्रदर्शितः, शेषा चाकरे मृग्याः ।

¶ द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ।

(३६अ. १७म. यजुः ।)

|| ७६ पृष्ठे प्रदर्शितेन ।

** चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य्य आत्मा जगतस्तस्थुषश्च ॥ (१३अ. ४६म. यजुः ।)

†† तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ।

(३६अ. २४म. यजुः ।)

देवतापुरतः स्थित्वा धूपदीपौ निवेदयेत् ।
दद्यादाचमनं सम्यक्ताम्बूलार्थं तथैव च ॥

अर्घ्यमन्त्रो यथा ।

नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते ।
गृहाणार्घ्यं मया दत्तं गण्डदोषप्रशान्तये ॥
कारयेत्पूजकादीनां कारितं यत्फलं शुभम् ।
लब्ध्वा तु तत्फलं सर्व्वं देवेन्द्राय निवेदयेत् ॥
आचार्य्याय च गां दद्यात् सुशीलाञ्च पयस्विनीम् ।
रक्तवर्णां वत्सयुक्तां सर्व्वालङ्कारभूषिताम् ॥
वस्त्रयुग्मपिधानाञ्च यथाविभवसारतः ।
यक्षगन्धर्व्वसिद्धैश्च पूजितोऽसि शचीपते ॥
दानेनानेन देवेश गण्डदोषं विनाशय ।
इति सम्प्रार्थयेद्देवमिन्द्राणीसखमुत्तमम् ।
अष्टोत्तरशतं संख्यां कुर्य्याद्ब्राह्मणभोजनम् ॥

कुर्य्यात् कारयेदित्यर्थः ।

तेभ्योऽपि दक्षिणां दत्त्वा प्रणिपत्य क्षमापयेत् ।
इमाङ्कृत्वा ज्येष्ठशान्तिं* यथाविध्युक्तमार्गतः ।
गण्डदोषं विनिर्जित्य आयुष्मान् जायते नरः ॥
इत्युक्तं वृद्धगार्ग्येण शौनकाय विशेषतः ।
ज्येष्ठानक्षत्रसम्भूतगण्डदोषप्रशान्तये ॥

---

* ज्येष्ठशान्तिमित्यत्र ज्येष्ठाशान्तिमिति क पुस्तके पाठः ।

अज्ञानाद्यथवा ज्ञानाद्वैकल्याद्वा धनस्य च।
यन्न्यूनमतिरिक्तं वा तत्सर्व्वं क्षन्तुमर्हसि॥
इति वृद्धगार्ग्यसंहितायां ज्येष्ठानक्षत्रजननशान्तिविधानम्।

## अथैकनक्षत्रजननशान्तिः।

तत्रैव वृद्धगार्ग्यः।

एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः।
प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः॥

तद्दोषनाशाय तदा प्रशस्तां
शान्तिञ्च कुर्य्यादभिषेचनञ्च।
सम्पूज्य ऋक्षप्रतिमां तदग्रे
दानञ्च कुर्य्याद्विभवानुरूपम्॥

तत्र शान्तिं प्रवक्ष्यामि सर्व्वाचार्य्यमतेन तु।
शुभर्क्षे शुभवारे च चन्द्रताराबलान्विते॥
रिक्ताविष्टिवियुक्ते तु प्रारभेद्दिवसे सुधीः।
आचार्य्यं वरयेत्पूर्व्वं चतुरोऽथ द्विजोत्तमान्॥
पुण्याहं वाचयित्वा तु शान्तिकर्म्म समाचरेत्।
अग्नेरीशानदिग्भागे नक्षत्रप्रतिमां ततः॥
तन्नक्षत्रोक्तमन्त्रेण अर्च्चयेत्कलशोपरि।
रक्तवस्त्रेण सञ्छाद्य वस्त्रयुग्मेन वेष्टयेत्॥
स्वशाखोक्तेन मन्त्रेण कुर्य्यादग्निमुखं ततः।
अनेनैव तु मन्त्रेण जुहुयादष्टोत्तरं शतम्॥

प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तान्तमेव च ।
अभिषेकं ततः कुर्य्यादाचार्य्यः पितृपुत्रयोः ॥
वस्त्रालङ्कारगोदानैराचार्य्यं पूजयेत्पुनः ।
ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकम् ॥
देवताप्रतिमादानं धान्यवस्त्रादिभिः सह ।
यानशय्यासनादीनि दद्यात्तद्दोषशान्तये ।
भोजयेद्ब्राह्मणान्सर्व्वान् वित्तशाठ्यविवर्ज्जितः ॥

इति वृद्धगार्ग्योक्तमेकनक्षत्रजननशान्तिविधानम् ।

अथ प्रकारान्तरेण एकनक्षत्रजननशान्तिविधानम् ।

ज्योतिर्निबन्धे ।

समानभे यदा देवि पितापुत्रौ च सोदरौ ।
भगिन्यौ वा सबन्धू वा तदा पूर्व्वस्य नाशनम् ॥
विधानं तत्र कर्त्तव्यं जन्मनक्षत्रपूजनम् ।
नक्षत्रदेवता पूज्या साधिप्रत्यधिदेवतम् ॥

तत्पूर्व्वोत्तरनक्षत्रदेवते अधिदेवताप्रत्यधिदेवते ।

यस्य ऋक्षस्य यद्द्रव्यं दक्षिणापूजनादिकम् ।
तस्य तच्च विधातव्यमृक्षदेवततुष्टये ॥
गृह्योक्तेन विधानेन हवनं तत्र कारयेत् ।
समिच्चरुतिलैश्चैव पृथगष्टोत्तरं शतम् ।
भक्त्या हरिहरौ देवौ सर्वकर्म्ममयौ शुभौ ॥

पूज्याविति शेषः ।

तद्दानमन्त्रो यथा ।

विविधस्यास्य विश्वस्य पितरौ विश्वतोमुखौ ।
प्रीयेतां मूर्त्तिदानेन देवौ हरिहरावुभौ ॥
दानं होमविधिः पश्चाद्दानादन्वभिषेचनम् ।
अभिषेचनपूर्व्वात विप्रपूजा स्मृता शिवे ॥
ततोऽभिगम्य गोविन्दशूलिनोश्च निकेतनम् ।
तूर्य्याणाञ्च निनादेन जयघोषेण पार्व्वति ॥
पूजाविधिं समाप्यैवं सर्व्वोपस्करसंयुतम् ।
प्रार्थयेद्देवदेवेशौ लक्ष्मीशैलसुतेश्वरौ ॥
दण्डवत्प्रणिपातेन पूजनीयौ पुनः पुनः ।
ततः स्वगृहमागत्य ब्राह्मणान् भोजयेत् सुधीः ॥
तोषयेद्दक्षिणादानैर्यथाशक्ति वरानने ।
एवं कृते विधानेन विघ्ननाशो भवेद्ध्रुवम् ।
तुष्टिदं पुष्टिदं नृणां विधानमिदमुत्तमम् ॥

इति शिवसंहिताधृतज्योतिर्निबन्धोक्तमेकनक्षत्रजनन
शान्तिविधानं समाप्तम् ।

अत्रेदमवगन्तव्यं यत्र सजातीयान्यनेकविधानानि उपलभ्यन्ते तत्र इच्छयान्यतमं विधातव्यं तावतैव शास्त्रार्थसिद्धिरिति ।

अथ नक्षत्रगण्डान्तशान्तिविधानम् ।

प्रयोगपारिजाते एव गर्गः ।

अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः ।
रेवतीशक्रसर्पान्ते मासाश्च ऋतुसायकाः ॥

शक्रो ज्येष्ठा सर्पोऽश्लेषा मासा द्वादशघटिका ऋतुः षट् सायकाः पञ्च दुष्टा इत्यर्थः ।

ग्रन्थान्तरे तु ।

अश्विनीमघमूलादौ नाड़िकाद्वितयं तथा ।
रेवतीशक्रसर्पान्ते नाड़िकाद्वितयं तथा ॥

अपिच ।

अश्विनीमघमूलानां पूर्व्वार्द्धे बाध्यते पिता ।
पूषाहिशक्रपश्चार्द्धे जननी बाध्यते शिशोः ॥
पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा ।
आत्मघ्नः सन्ध्ययोर्जातो नास्ति गण्डे निरामयः ॥

दिवादिजननमपि एष्वेव नक्षत्रेषु दुष्टमित्यवगन्तव्यम्, तस्यैव प्रकरणाद्गण्डशब्दनिर्द्देशाच्च ।

सर्व्वेषां द्वन्द्वजातानां* परित्यागो विधीयते ।
वर्ज्जयेद्दर्शनं तावद्†यावत् षाण्मासिको भवेत् ।
तस्य शान्तिं प्रवक्ष्यामि सोममन्त्रेण भक्तिमान् ॥

सोममन्त्र आप्यायस्वेत्यादिः‡ ।

कांस्यपात्रं प्रकुर्व्वीत फलैः षोड़शभिर्वृतम् ।
अष्टाभिश्च चतुर्भिर्वा द्वाभ्यां वा शोभनं तथा ।

---

* द्वन्द्वजातानामित्यत्र गण्डजातानामिति निर्णयसिन्धौ पाठः ।

† तावदित्यत्र वापीति धर्मसिन्धौ पाठः ।

‡ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवावाजस्य संगथे ॥ (१२अ. ११२म. यजुः ॥)

तन्मध्ये पायसं शङ्खे नवनीतेन पूरिते ॥

कांस्यपात्रे पायसं निक्षिप्य तत्र नवनीतपूर्णं शङ्खं स्थापयित्वा चन्द्रप्रतिमामर्चयेदित्याह।

राजतं चन्द्रमभ्यर्च्य सितपुष्पसहस्रकैः।
देवस्तः क्षौमवासास्तु शुक्लमाल्याम्बरार्च्चितः ॥
सोमोऽहमिति सञ्चिन्त्य पूजां कुर्य्यात्समाहितः।
दद्याद्वै दक्षिणामिष्टां गण्डदोषोपशान्तये ॥
शुक्लां वागीश्वरञ्चैव ताम्रपात्रे समर्च्चितम्।
गण्डदोषप्रशान्त्यर्थं दद्याद्वेदविदे शुचिः ॥ इति।

इदं शान्तिकं गोमुखप्रसवपूर्व्वकं कर्त्तव्यम्।

पूषाश्विनोर्गुरौ सर्पमघाचित्रेन्द्रमूलभे।
एषु ऋक्षेषु जातस्य कुर्य्याद्गोजननं तथा ॥

इति गर्गोक्तनक्षत्रगण्डान्तशान्तिविधानम्।

## अथ तिथ्यादिगण्डान्तशान्तिविधानम्।

अभुक्तिरजातस्य सूतकान्त्यदिनेऽथवा।
शान्तिं शुभेऽह्नि वा कुर्य्यात्तावत् पुत्रं न लोकयेत् ॥

ज्योतिर्निबन्धे नारदः।

पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाड़ीद्वयं तथा।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिकम्* ॥

* व्रतादिकमित्यत्र व्रतादिषु इति ख-ग पुस्तकयोः पाठः।

नन्दा प्रतिपत् ।

कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः ।
गण्डान्तमन्तरालं स्याद्घटिकार्द्धं मृतिप्रदम् ॥ इति ।
तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुमेव च ।
काञ्चनं लग्नगण्डे तु दद्याद्दोषो विनश्यति ॥
आद्यभागे पितुर्गण्डं त्रयाणामभिषेचनम् ।
इतरत्र शिशोर्मातुरभिषेकञ्च कारयेत् ॥
उत्तरे तिलपात्रं स्यात् पुष्ये गोदानमुच्यते ।
आज्यप्रदानं त्वाष्ट्रे च पूर्व्वाषाढ़े च काञ्चनम् ।

त्वाष्ट्रं चित्रानक्षत्रम् ।

उत्तरातिष्यचित्रासु पूर्व्वाषाढ़ोद्भवस्य च ।
कुर्य्याच्छान्तिं प्रयत्नेन नक्षत्राकारतो बुधः ॥

नक्षत्राकारत इत्यत्र ल्यब्लोपे पञ्चमी नक्षत्राकारं विधायेत्यर्थः ।

सुवर्णेन तदर्द्धेन यथावित्तानुसारतः ।
नक्षत्राधिपतेः रूपं कृत्वा वस्त्रद्वयान्वितम् ॥
वरुणस्यार्च्चनं कार्य्यं स्वस्तिवाचनपूर्व्वकम् ।
शतौषधानि रत्नानि मृत्त्वक्पल्लवसंयुतम् ॥

वरुणपूजा कलशे कार्य्या लिङ्गात् ।

पूजान्ते समिदाज्यैर्होमं तिलयवैस्तथा ।

कुर्य्यादिति शेषः ।

ततः पूर्णाहुतिं हुत्वा वेदाध्यायिकुटुम्बिने ।
उत्तराप्रथमे पादे तिलपात्रं तथैव च ॥

तिष्ये तु गां सवत्साञ्च सुशीलाञ्च पयस्विनीम् ।
अजां चित्रासु वै दद्यात् पूर्व्वाषाढे तु काञ्चनम् ॥
यवांश्च व्रीहिमाषांश्च तिलमुद्गान् प्रदापयेत् ।
यथावित्तानुसारेण कुर्य्याद्ब्राह्मणभोजनम् ।
पित्रायुष्यवृद्ध्यर्थं शान्तिरत्र विधीयते ॥
एवं यः कुरुते सम्यक् शान्तिकर्म्म समाहितः ।
न दोषैर्लिप्यते नूनं पद्मपत्रमिवाम्भसा ॥
आयुरारोग्यमैश्वर्य्यं समाप्नोति दिने दिने ।
धनधान्यसमृद्धिश्च पुत्रपौत्रसमृद्धिमान् ॥

नक्षत्रगण्डान्तलक्षणमुक्तं नारदेन ।

सार्पेन्द्रपौष्णभेष्वन्त्यषोड़शांशा भसंज्ञकाः ।
तदग्रभेष्वाद्यपादा भानां गण्डान्तसंज्ञकाः ॥
सर्व्वेषां गण्डजातानां परित्यागो विधीयते ।
वर्ज्जयेद्दर्शनं आवं तत्र षाण्मासिकं भवेत् ॥

आवं श्रवणं षण्मासपर्य्यन्तं तदुत्पत्तिमपि न शृणुयादित्यर्थः ।

इत्युत्तरगार्ग्योक्ततिथ्यादिगण्डान्तशान्तिः ।

## अथ दिनक्षयादिसर्व्वगण्डान्तशान्तिः ।

अथातः सम्प्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डान्तानाञ्च नामानि महादोषकराणि वै ॥
दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥

कालगण्डे मृत्युयोगे दग्धयोगे सुदारुणे ।
तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥
अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य्य तत्र धर्म्मज्ञः शान्तिं कुर्य्याद्यथाविधि ॥
यजनं देवतानाञ्च ग्रहादेश्चैव पूजनम् ।
दीपं शिवालये भक्त्या घृतेन प्रतिपादयेत् ॥
अभिषेकं शङ्करस्य चाश्वत्थस्य प्रदक्षिणम् ।
आयुर्वृद्धिकरं जाप्यं सर्व्वारिष्टविनाशनम् ॥
गुरुदेवतविप्राणां पूजनं गोत्रवर्द्धनम् ।
पुष्ट्यायुस्तुष्टिवृद्ध्यर्थमभीष्टफलसिद्धये ।
सर्व्वारिष्टहरार्थाय ग्रहयज्ञं समाचरेत् ॥
शिवाय विधिवद्भक्त्या दीपदानं करोति यः ।
अखण्डं गोघृतेनैव स वै मृत्युञ्जयेन्नरः ॥

पुनर्ग्रहपूजनशिवदीपदानादिकथनं गुणफलसम्बन्धार्थम् । ततो न कर्म्मान्तरमिति द्रष्टव्यम् ।

विष्णुमूर्त्तिर्म्महापुण्यमश्वत्थं श्रीकरं सदा ।
प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युञ्जयेद्ध्रुवम्* ॥
अर्थसम्पत्समृद्ध्यर्थं नित्यकल्याणवृद्धये ।
अभीष्टफलसिद्ध्यर्थं कुर्य्याद्ब्राह्मणभोजनम् ॥
अभिषेकं शिवे शान्तिं कृत्वा भक्त्या नरोत्तमः ।
अकालमृत्युं निर्ज्जित्य दीर्घायुर्जायते नरः ॥

---

* ध्रुवमित्यत्र नरेति क-पुस्तके पाठः ।

विधानान्तरमाह ।

गाणपत्यं* पुरुषसूक्तं सौरं† मृत्युञ्जयं‡ शुभम् ।
शान्तिजाप्यं रुद्रजाप्यं कृत्वा मृत्युञ्जयो भवेत् ॥
मूले वा सर्पगण्डे वा कुर्य्यादेतानि यत्नतः ।
आयुर्वृद्धिकरार्थाय गण्डदोषप्रशान्तये ॥
इत्युत्तरगार्ग्योक्तदिनक्षयादिगण्डान्तशान्तिविधानम् ।

* गणेशसूक्तं यथा—

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय । महाहस्ती दक्षिणेन ॥ १ ॥
विद्मा हि त्वा तुविकूर्म्मिं तुविदेष्णं तुवीमघं । तुविमात्रमवोभिः ॥ २ ॥
नहि त्वा शूर देवा न मर्त्तासो दित्सन्तं । भीमं न गां वारयन्ते ॥ ३ ॥
एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजं । न राधसा मर्द्धिषन्नः ॥ ४ ॥

(इत्यादिकमृग्वेदस्य अष्टममण्डले द्रष्टव्यम् ।)

† सौर सूर्य्यसूक्तम्—

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्य्यम् ॥ इत्यादिकम् ।

(१म. ५०सू. १ऋक् ।)

‡ गायत्रीप्रथमं पादं त्र्यम्बकपादैकं तथा ।
गायत्रीद्वितीयं पादं त्र्यम्बकद्वितीय पादम् ॥
गायत्रीतृतीयपादं त्र्यम्बकशेषपादम् ।
ततश्च मृत्युञ्जयमन्त्र एवं पर्य्यवस्यति ॥

यथा—ओँ तत्सवितुर्वरेण्यं । त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ॥
भर्गो देवस्य धीमहि । उर्व्वारुकमिव बन्धनात् ।
धियो यो नः प्रचोदयात् । मृत्योर्मुक्षीय मामृतात् ॥ इति ।

(तन्त्रसार ।)

## अथ व्यतीपातादिशान्तिः।

यथा शौनकीये।

अथातः सम्प्रवक्ष्यामि शौनकः शान्तिमुत्तमाम्।
वैधृतौ व्यतिपाते च महादोषोऽभिजायते॥
कुमारजन्मकाले च व्यतीपातश्च वैधृतिः।
संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः॥
दरिद्राणां महद्दुःखं व्याधिपीड़ा महद्भयम्।
अप्रियं मृत्युमाप्नोति नात्र कार्य्या विचारणा॥
स्त्रीणाञ्च शोको दुःखञ्च सर्व्वनाशकरो भवेत्।
शान्तिर्वा पुष्कला कार्य्या तद्दोषो न च कश्चन* ॥
गोमुखप्रसवं कुर्य्याच्छान्तिं कुर्य्यात्प्रयत्नतः।
सर्पाभिषेकदानैश्च होमादपि विशेषतः॥
नवग्रहमखं कुर्य्यात्तस्य दोषोपशान्तये।
प्रथमं गोमुखाज्जन्म ततः शान्तिं समाचरेत्॥
गृहस्य पूर्व्वदिग्भागे गोमयेनोपलिप्य च।
अलङ्कृतस्वदेशे तु व्रीहिराशिं प्रकल्पयेत्॥
पञ्चद्रोणमितं धान्यं तदर्द्धं तण्डुलेन च।
तदर्द्धन्तु तिलैः कुर्य्यादन्योऽन्यं परिकल्पयेत्॥

धान्यं व्रीहिः। प्रथमं व्रीहिपरिधिस्तन्मध्ये तण्डुलपरिधिस्तदन्त-र्भ्तिलपरिधिरिति राशित्रयविवेकः।

* तदा दोषो न कश्चन इति ग पुस्तके पाठः।

सूर्य्यान्वितयराशौ तु अष्टपत्रं लिखेद्बुधः ।
पुण्याहं वाचयित्वा तु आचार्य्यं वृणुयात्परम् ॥
आचारवन्तं धर्मज्ञं कुलीनञ्च कुटुम्बिनम् ।
मन्त्रतन्त्रार्थतत्त्वज्ञं शान्तिकर्म्मणि कोविदम् ॥
पश्चादङ्गभूषणं दद्यात्पट्टवस्त्राङ्गुलीयकम् ।
राशौ प्रतिष्ठितं कुम्भमव्रणं सुमनोहरम् ॥
तीर्थोदकेन सम्पूर्य्य मरुद्दोषधिपल्लवम् ।
मङ्गल्यं गन्धरत्नञ्च वस्त्रयुग्मेन वेष्टयेत् ॥
तस्योपरि न्यसेत्पात्रं सूत्रवस्त्रेण वेष्टयेत् ।
प्रतिमां स्थापयेद्धेमान्साधिप्रत्यधिदैवताम् ॥
चन्द्रादित्यावतो पार्श्वे मध्ये वैधृतिमर्च्चयेत् ।
एवमेव व्यतीपातशान्तौ संक्रमणस्य तु ॥
भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत् ।
निष्कमात्रेण चार्द्धेन पादेनापि स्वशक्तितः ॥
प्रतिमाः कारयेद्धेमांस्तत्तल्लक्षणलक्षिताः ।
प्रतिमापूजनार्थाय वस्त्रयुग्मं निवेदयेत् ॥
अधिदैवं भवेत्सूर्य्यश्चन्द्रः प्रत्यधिदैवतम् ।
तत्तद्द्रव्याहुतिपूर्व्वेण तत्तन्मन्त्रेण पूजयेत् ॥

अयमत्र विवेकः । वैधृतिर्व्यतीपातश्च प्रधानदेवता उभयत्रापि सूर्य्योऽधिदेवता चन्द्रः प्रत्यधिदेवता संक्रान्तौ तु भानुः प्रधानदेवता रुद्रोऽधिदेवता अग्निः प्रत्यधिदेवतेति ।

त्रैयम्बकेन मन्त्रेण* प्रधानप्रतिमां यजेत् ।
तत्सूर्य्यमिति मन्त्रेण† सूर्य्यपूजां समाचरेत् ।
आप्यायस्वेति मन्त्रेण‡ सोमपूजां समाचरेत् ॥

संक्रान्तिदेवतादिपूजनन्तु तत्तल्लिङ्गकैर्मन्त्रैः कार्य्यम् । व्याहृति-मन्त्रस्तु सर्व्वैः§ समुच्चीयते ।

उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः ।
अर्च्चितं गन्धपुष्पाद्यैः फलैर्नैवेद्यमर्पयेत् ॥
मृत्युञ्जयेन मन्त्रेण¶ प्रधानदेवतां‖ स्पृशन् ।
अष्टोत्तरसहस्रं वा अष्टोत्तरशतन्तु वा ॥
अष्टाविंशतिधा वाथ प्रजप्याथ स्वशक्तितः ।
सर्व्वसौरं प्रजप्याथ सोमार्थं सोममन्त्रतः ॥
आनो भद्रेति सूक्तञ्च** भद्रा अग्नेश्च सूक्तकम्††।
जपेच्च पौरुषं सूक्तं‡‡ त्रैयम्बकमतः परम् ॥

---

* त्र्यम्बकं यजामहे इत्यादिना ।

† १४२ पृष्ठे प्रदर्शितेन ।

‡ ६८ पृष्ठे प्रदर्शितेन ।

§ सर्व्वैरित्यत्र सर्व्वत्रेति ख पुस्तके पाठः ।

¶ ४०७ पृष्ठे प्रदर्शितेन ।

‖ देवतामित्यत्र प्रतिमामिति क-पुस्तके पाठः ।

** सूक्तमिदं ७१ पृष्ठे प्रदर्शितम् ।

†† २२४ पृष्ठे प्रदर्शितम् ।

‡‡ १२५ पृष्ठे किञ्चित् प्रदर्शितम् ।

कुम्भं स्पृष्ट्वा चतुर्द्दिक्षु जपं कुर्य्युस्तथर्त्विजः ।
कुम्भस्य पश्चिमे देशे स्थण्डिलेऽग्निं प्रकल्पयेत् ॥
स्वगृह्योक्तविधानेन कारयेत्संस्कृतानलम् ।
त्र्यम्बकेन मन्त्रेण समिदाज्यचरुं हुनेत् ॥
अष्टोत्तरसहस्रं वा अष्टोत्तरशतन्तु वा ।
अष्टाविंशतिं वा कुर्य्यात् स्वस्य शक्त्यनुसारतः ॥
मृत्युञ्जयेन मन्त्रेण तिलहोमं समाचरेत् ।
ततः स्विष्टकृतं हुत्वा अभिषेकञ्च कारयेत् ॥
समुद्रज्येष्ठाः सूक्तेन* आपो हि ष्ठा तृचेन† च ।
अक्षीभ्यामिति सूक्तेन‡ पावमानीभिरेव च ॥
त्र्यम्बकेन तत्सूर्य्यम्§ आप्यायस्वेति मन्त्रकैः¶ ।
सुरास्त्वामिति मन्त्रेण‖ अभिषेकं समाचरेत् ।
अभिषेकाप्लुतं वस्त्रमाचार्य्याय प्रदापयेत् ॥
श्वेतवस्त्रधरो भूत्वा भूषणाद्यैरलङ्कृतः ।
यजमानः स्त्रिया युक्त आज्यावेक्षणमाचरेत् ॥
आचार्य्यं पूजयेत्पश्चाद्वस्त्रहैमाङ्गुलीयकैः ।
गोदानं वस्त्रदानञ्च स्वर्णदानं विशेषतः ॥

---

* ६२ पृष्ठे प्रदर्शितम् ।
† २० पृष्ठे प्रदर्शितम् ।
‡ १४३ पृष्ठे प्रदर्शितम् ।
§ मन्त्रोऽयं १४३ पृष्ठे प्रदर्शितः ।
¶ ६८ पृष्ठे प्रदर्शितः ।
‖ ८५ पृष्ठे प्रदर्शितम् ।

तद्दोषशमनार्थाय आचार्य्याय प्रदापयेत् ।
प्रच्छादनपटं दद्यात्ततः शान्तिर्भविष्यति ॥
जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् ।
दीनान्धकृपणेभ्यश्च प्रदद्याद्भूरिदक्षिणाम् ॥
ब्राह्मणाञ्छतसंख्याकान् मिष्टान्नैर्भोजयेत्ततः ।
बन्धुभिः सह भुञ्जीत यथाविभवसारतः ॥
एवं यः कुरुते मर्त्त्यो नैव दुःखमवाप्नुयात् ।
आयुरारोग्यमैश्वर्य्यं मातापित्रोः शिशोरपि ॥
सर्व्वदुःखनिवृत्त्यर्थं पुत्रपौत्रविवर्द्धनम् ।
सर्व्वान् कामानवाप्नोति सुखी भूत्वा चिरं वसेत् ॥

इति शौनकोक्तं वैधृतिव्यतीपातसंक्रान्तिजननशान्तिविधानम्

## अथ विषघटिकाजननशान्तिविधानम् ।

तदुक्तं वृद्धगार्ग्यैः ।
नाशकृद्विषशस्त्राद्यैः क्रूरे लग्ने समेऽपि वा ।
तद्दोषपरिहाराय शान्तिकर्म्म समाचरेत् ॥
रुद्रो यमोऽग्निर्मृत्युश्च देवताः परिकीर्त्तिताः ।
सुवर्णेन यथाशक्त्या तत्तल्लक्षणसंयुताः ॥
प्रतिमाः कारयित्वा तु आढकव्रीहिभिः स्थले ।
स्थण्डिले परिकल्प्याथ कुम्भमोषधिसंयुतम् ॥
[illegible]

वस्त्रद्वयेन संवेष्ट्य पञ्चरत्नानि निक्षिपेत् ॥
कुम्भस्योपरि संस्थाप्य चतस्रः प्रतिमास्तथा।
ततस्तन्त्रेण सम्पूज्य गन्धपुष्पोपचारकैः ॥
कद्रुद्रायेति मन्त्रेण* यमाय त्वेति मन्त्रतः† ।
अग्निर्मूर्द्धेति मन्त्रेण‡ परम्मृत्यो इति त्वथ§ ॥
एतैश्चतुर्भिर्मन्त्रैश्च क्रमाद्वै जुहुनेत्तथा।
समिच्चरुघृतद्रव्यैः प्रत्येकञ्च यथाक्रमात् ॥
ऋत्विग्भिश्च सहाचार्य्यो जुहुनेदष्टसहस्रकम् ।
अष्टोत्तरशतं वाथ अष्टाविंशतिमेव वा ॥
ततस्तिलैर्जुहुनेद्देवांस्तत्तन्मन्त्रैश्च कल्पवित् ।
ततोऽभिषेचयेद्द्वानं मन्त्रैः पौराणिकैः क्रमात् ॥
ानं प्रतिमानां कुर्य्यादिति शेषः।
प्रीयतां भगवानीशः पिनाकी सर्व्वतोमुखः।
तव¶ मूर्त्तिप्रदानेन समस्ताभीष्टदो भव ॥

---

७४ पृष्ठे प्रदर्शितेन।

यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे। देवस्त्वा सविता मध्वानक्तु।
पृथिव्या सꣳस्पृशस्पाहि। अर्चिरसि शोचिरसि तपोऽसि॥ (३७अ. ११म. यजुः।)

२१ पृष्ठे प्रदर्शितेन।

परम्मृत्यो अनुपरेहि पन्थां यस्ते अन्य इतरो देवयानात्।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान्॥
(३५अ. ७म यजुः।)

तवेत्यत्र ममेति क पुस्तके पाठः।

ईषत्पीनो यमः कालो दण्डहस्तः प्रसन्नधीः ।
रत्नाट्टक् पालकः कृष्णो महिषस्थः शिवं कुरु ॥
पिङ्गभ्रूश्मश्रुकेशान्तः पिङ्गाक्षश्चरणोऽव्रणः ।
छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिलोचनः ।
तव मूर्त्तिप्रदानेन मम पापं विनाशय ॥
दंष्ट्राकरालवदनो नीलाञ्जनसमाकृतिः ।
रक्तखड्गगदापाणिर्मृत्युर्मां पातु सर्व्वदा ॥
दानमेवंविधैर्मन्त्रैर्यथाविधि समाचरेत् ॥
गोभूहिरण्यदानैश्च आचार्य्यं पूजयेत् सुधीः ।
एवं कुर्व्वन् विधानेन सर्व्वदोषं प्रशामयेत् ॥
इति वृद्धगार्ग्योक्तविषघटिकाजननशान्तिविधानम् ।

### अथ ग्रहणजननशान्तिः ।

सा च रजोदर्शनप्रकरणे अभिहिता ।
ग्रहणे चन्द्रसूर्य्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीड़ा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥
इत्यादिरूपा । अत्रापि तथा द्रष्टव्या ।

### अथ यमलजननशान्तिः ।

तत्रादौ तयोः संस्कारार्थं ज्येष्ठकनिष्ठभावमाह देवलः ।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठं प्रतिष्ठितम् ॥ इति ।

भागवते तु ।

द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्य्ययात्* । इति

पश्चादुत्पन्नस्य ज्येष्ठत्वमुक्तम् । तत्र देशाचारतो व्यवस्था विज्ञेया

देशानुशिष्टमिति† वचनात् ।

तत्र आश्वलायनकारिका ।

अथ यस्य वधूर्गौर्वा जनयेच्चेद्यमौ ततः ।

स मरुद्भ्यश्चरुं कुर्य्यात्पूर्णाहुतिमथापि वा ॥ इति ।

अत्र च आश्वलायनब्राह्मणं भवति । तदाहुः—

य आहिताग्निर्यस्य भार्य्या गौर्वा यमौ जनयेत् का तत्र प्रायश्चित्तिरिति । सोऽग्नये मरुत्वते त्रयोदशकपालं पुरोडाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि क्षये पाद वेद चरमा अहेवेत्याहुतिं वाहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिरिति ।

मारुतचर्व्वितिकर्त्तव्यता दर्शपूर्णमासस्थालीपाकवद्द्रष्टव्या ।

अथ कात्यायनगृह्यपरिशिष्टोक्तयमलशान्तिविधानम् ।

अथातो यमलजनने प्रायश्चित्तं व्याख्यास्यामः । यस्य

---

* वेशः प्रवेशः गर्भस्येत्यर्थः तस्य विपर्य्ययात् वैपरीत्यात् पश्चात् प्रविष्टगर्भोत्पन्नस्य आदौ सूतिः पूर्व्वप्रविष्टगर्भोत्पन्नस्य पश्चात् सूतिरिति गर्भोत्पत्तिक्रमेण तस्य ज्येष्ठत्वं न तु प्रसवक्रमेण पूर्व्वं प्रसूतस्य इति तात्पर्य्यम् ।

† देशानुशिष्टं कुलधर्म्ममग्र्यं स्वगोत्रधर्म्मं न हि संत्यजेच्च । इति शुद्धितत्त्वम् ।

भार्य्या गौर्महिषी वडवा वा विकृतं प्रसवेत् स प्रायश्चित्ती भवेत्। पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमुपसंहरेत् प्लक्षवटोदुम्बराश्वत्थशमीदेवदारुगौरसर्षपास्तेषामपो(मथो) मिश्रं हिरण्यदूर्वाङ्कुराम्रपल्लवैरष्टौ कलशान् प्रपूर्य्य सर्व्वौषधीनां* दम्पती स्नापयित्वा आपो हि ष्ठेति तिसृभिः† कया नश्चित्र इति द्वाभ्याम्‡ आ नः सुत इति§ एकया पञ्चेन्द्रेण पञ्च वारुणेन इद-माप: प्रवहत इति एकया पञ्चभिः अपाघ¶मिति च स्नापयित्वा अलङ्कृत्य तौ दर्भेषूपवेश्य मारुतं स्थालीपाकं श्रपयित्वा आज्य-भागाविष्ट्वा आज्याहुतीर्जुहोति पूर्व्वोक्तैः स्नानमन्त्रैः स्थाली-पाकस्य जुहोति।

अग्नये स्वाहा अन्तकाय स्वाहा मृत्यवे स्वाहा सोमाय स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मारुताय स्वाहा मरुद्भ्यः स्वाहा यमाय स्वाहा ब्रह्मणे स्वाहा अग्नये स्विष्टकृते स्वाहा इति।

* सर्व्वौषधं मामित्यत्र सर्व्वौषधिभिरित्येव पाठो युक्तः।

† २० पृष्ठे प्रदर्शितभिः।

‡ कया नश्चित्र आभुव दूती सदावृधः सखा। कया शचिष्ठया वृता॥ (३९अ. २म. यजुः।)

कस्त्वा सत्यो मदानाम्मंहिष्ठो मत्सदन्धसः। दृढाचिदा रुजे वसु॥

(२७अ. ४०म. यजुः।)

§ आ नः स्तुत उपवाजेभिरुती इन्द्र याहि हरिभिर्मन्दनः।

तिरश्चिदर्य्यः सवना पुरूण्या ङ्गूषेभिर्गृणानः सत्यराधाः॥ (४म. २९सू. १मण्ड.।)

¶ अपाघमपकिल्विषमपकृत्यामपोरपः।

अपामार्ग त्वमस्मदपदुःष्वप्न्यं सुव॥ (३५अ. ११म. यजुः।)

गृहोत्पातेषु उलूककपोतगृध्रश्येनानां गृहप्रवेशे स्तम्भप्ररोहे वल्मीकप्ररोहे मधुजालजनने उदकुम्भप्रज्वलन आसनशयनयानभङ्गेषु गृहगोधिकाकृकलासशरीरसर्पणे वज्रो(पक्षी)पतने खरटारोहणे छत्रध्वजविनाशेषु सार्पे नैर्ऋते गण्डयोगे देवप्रसर्पे कूपोद्गर्जने पर्व्वतपतनेष्वन्येष्वप्येवंविधेषूत्पातेषु ।

एतदेव प्रायश्चित्तं गृह्योक्तेन विधिना कृत्वा आचार्य्याय वरं दत्त्वा ब्राह्मणान् भोजयित्वा स्वस्ति वाचयित्वा आशिषः प्रतिगृह्य शान्तिर्भवति शान्तिर्भवति ।

इति हेमाद्रौ शान्तिकाण्डे कात्यायनपरिशिष्टोक्तं
यमलजननादिशान्तिविधानम् ।

अथ त्रिकप्रसवशान्तिः ।

सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि ।
मातापित्रोः कुलस्यापि तदारिष्टं* महद्भवेत् ॥
धनहानिर्ज्येष्ठनाशो दुःखं वा सुमहद्भवेत् ।
तत्र शान्तिं प्रकुर्व्वीत वित्तशाठ्यविवर्ज्जितः ॥
जातस्यैकादशाहे वा द्वादशाहे शुभे दिने ।
आचार्य्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरम् ॥
सह वा ग्रहयज्ञः स्यात् स्वस्य वित्तानुसारतः ।
ब्रह्मविष्णुमहेशेन्द्रप्रतिमाः स्वर्णतः कृताः ॥

* अरिष्टमित्यत्र अनिष्टमिति धर्म्मसिन्धौ पाठः ।

पूजयेन्नान्यराशिस्थकलसोपरि शक्तितः ।
पञ्चमे कलसे रुद्रं पूजयेद्रुद्रसंख्यया ॥

पञ्चमशब्दनिर्द्देशादन्येऽपि ब्रह्मविष्णुमहेशेन्द्रप्रतिष्ठाकलशाश्चत्वारो द्रष्टव्याः । रुद्रसूक्तानि मूलशान्तिके स्पष्टीकृतानि ।

द्विज एको जपेद्धोमकाले शुद्धः समाहितः ।
आचार्य्यो जुहुयात्तत्र समिदाज्यतिलांश्चरुम् ॥
अष्टोत्तरसहस्रं वा शतं वा विंशतिश्च वा ।
देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरम् ॥

चतुर्वक्त्रादिभ्यो ब्रह्मादिभ्यः पञ्चभ्य इत्यर्थः ।

ब्रह्मादिमन्त्रैर्ब्रह्मादेरिन्द्रस्यापीन्द्रमन्त्रतः ।

पूजा कार्य्येति शेषः ।

ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं चरेत् ।
अभिषेकं कुटुम्बस्य कृत्वाचार्य्यं प्रपूजयेत् ॥
हिरण्यं धेनुरेका च ऋत्विजां दक्षिणा ततः ।
प्रतिमा गुरवे देया उपस्कारसमन्विताः ॥
कांस्याज्यवीक्षणङ्कृत्वा शान्तिपाठन्तु कारयेत् ।
ब्राह्मणान् भोजयेत्पश्चाद्दीनानाथांश्च तर्पयेत् ।
कृत्वैवंविधिना शान्तिं सर्व्वारिष्टाद्बहिर्भवेत् ॥

बहिर्वियुक्त इत्यर्थः ।

इति गर्गसंहितोक्तं पुत्त्रत्रयोत्पत्त्यनन्तरं कन्योत्पत्तौ
कन्यात्रयोत्पत्त्यनन्तरं पुत्त्रोत्पत्तौ
शान्तिविधानम् ।

अथ सदन्तोपरिदन्तजननशान्तिः ।

तत्र पद्मपुराणे विष्णुधर्म्मोत्तरखण्डे परशुरामं प्रत्याह पुष्करः ।

दन्तजन्मनि बालानां लक्षणं तन्निबोध मे ।
उपरि प्रथमं यस्य जायन्ते वै शिशोः* द्विजाः ॥

द्विजा दन्ताः, दन्तविप्राण्डजा द्विजा इत्यभिधानात् ।

दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ।
मातरं पितरञ्चाथ खादेदात्मानमेव वा ॥
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ।
यदा दन्ताश्च जायन्ते मासे चैव महद्भयम् ॥
तत्र शान्तिं प्रवक्ष्यामि तान्मे निगदतः शृणु ।
गजपृष्ठगतं बालं तैस्तथा स्नापयेद्द्विजः† ॥

तैरिति वक्ष्यमाणसर्व्वौषधादिभिः सम्बध्यते ।

तदभावे तु धर्म्मज्ञः काञ्चने च वरासने ।
सर्व्वौषधैः सर्व्वगन्धैर्वीजैः पुष्पैः फलैस्तथा ॥
पञ्चगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव ।
स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् ।
सप्ताहं चात्र कर्त्तव्यं तथा ब्राह्मणभोजनम् ॥

---

* वै शिशोरित्यत्र तच्छिशोरिति क-ग-पुस्तकयोः पाठः ।

† तैस्तथा स्नापयेद्द्विज इत्यत्र तीर्थं वा स्नापयेद्द्विजः इति पाठो निर्णयसिन्धौ दृश्यते ।

स्थालीपाकेन धातृपूजनं नैवेद्यहोमात्मकम् ।

अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ।
काञ्चनं रजतं गाश्च भुवञ्चासनमेव च ।
दन्तजन्मनि सामान्ये शृणु स्नानमतः परम् ॥

सामान्ये सदन्तोपरिदन्तजननव्यतिरिक्त-स्वाभाविकदन्तजनने इत्यर्थः ।

भद्रासने निवेश्यैनं मूर्ध्नि मूलफलैस्तथा ।
सर्व्वौषधैः सर्व्ववीजैः सर्व्वगन्धैस्तथैव च ।
स्नापयेत्पूजयेदत्र वह्निं सोमं समीरणम् ॥

समीरणं वायुम् ।

पर्व्वतांश्च तथाख्यातान् देवदेवञ्च केशवम् ।
एतेषामेव जुहुयादघृतमग्नौ यथाविधि ॥

एतेषां ब्रह्मादिपञ्चकानां होमसंख्या चात्र अष्टोत्तरशतादिर्वेदितव्या ।

ब्राह्मणानान्तु दातव्या यथाशक्त्या च दक्षिणा ।
ततस्त्वलङ्कृतं बालमासने तूपवेशयेत् ॥
आसीनं छत्रमूर्द्धानं वीजैः सुस्नापयेत्ततः ।
स्वस्ति वै बालकानाञ्च तेषु कार्य्यञ्च पूजनम् ।
पूज्याश्चाविधवा नार्य्यो ब्राह्मणाः सुहृदस्तथा ॥ इति ।

इति श्रीविधानपारिजाते पद्मपुराणोक्त-
सदन्तोपरिदन्तस्वाभाविकदन्त-
जननशान्तिविधानम् ।

अथ अर्हद्दन्तजननमासशान्तिः ।

ब्रह्मयामले ।

प्रथमं दन्तनिर्मोक अर्हं बालस्य चेद्भवेत् ।
क्लेशाय मातुलस्येह स च प्रोक्तो मनीषिभिः ॥
विघ्नभङ्गं* प्रवक्ष्यामि विधानं विधिपूर्व्वकम् ।
सौवर्णं राजतं वापि ताम्रं कांस्यमयन्तु वा ॥
दध्योदनेन सम्पूर्य्य पात्रं दद्याच्छिशोः करे ।
समन्त्रं भाजनं दत्त्वा तं पश्येन्मातुलः शिशुम् ॥
सालङ्कारं सवस्त्रञ्च शिशुमालिङ्ग्य सादरम् ।
प्रार्थयेन्नियतात्मा च मन्त्रेणानेन भार्गव ॥
रक्ष मां भागिनेय त्वं रक्ष मे सकलं कुलम् ।
गृहीत्वा भाजनं मात्रं प्रसन्नो भव मे सदा ॥
निर्विघ्नं कुरु कल्याणं निर्विघ्नाञ्च स्वमातरम् ।
मय्यात्मानमधिष्ठाप्य चिरं जीव मया सह ॥ इति ।
ततोऽभिनन्दयेद्विद्वान् भगिनीं भगिनीपतिम् ।
ज्येष्ठांश्छ्रेष्ठान् गुरून् विप्रानपरानपि पूजयेत् ।
होमङ्कृत्वा तिलाज्येन ब्राह्मणानपि भोजयेत् ॥

होमसंख्या च अष्टोत्तरशतादिः ।

एवङ्कृते विधाने तु विघ्नः कोऽपि न जायते ।
तस्मात्प्रयत्नतो विद्वान् विधानं सम्यगाचरेत् ॥

इति ब्रह्मयामलोक्ता अर्हद्दन्तजननशान्तिः ।

---

* विघ्नस्य भङ्गो यस्मात्तद्विघ्ननिवारकमित्यर्थः ।

अथ वैकृतप्रसवशान्तिः ।

प्रयोगपारिजाते गार्ग्यः ।

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
अमानुषा अखण्डाश्च अज्ञातव्यञ्जनास्तथा ॥

अखण्डाः पिण्डीभूताः ।

हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ।
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
निर्वासयेत्तान् नृपतिः स्वराष्ट्रात्
स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।
चिकित्सनैर्ब्राह्मणतोषणैश्च
ततस्य शान्तिं समुपैति पापम् ॥
इति अकालप्रसवादिवैकृतशान्तिः ।

अथ विकृतजननशान्तिः ।

विधानमालायाम् ।

विकृताङ्गानि जायन्ते त्वपत्यानि नृपोत्तम ।
यानि यानि महाबाहो तच्छृणुष्व विधानतः ॥
हीनाङ्गान्यधिकाङ्गानि सदन्तानि विशेषतः ।
उत्पन्नान्येव पश्यन्ति प्रवदन्ति हसन्ति च ॥

सकूर्चाणि च जायन्ते पिचोर्मृत्युं दिशन्ति च।
सिंहव्याघ्रवृकादीनां रूपैर्नानाविधैर्नृप॥
जायन्ते प्राणिनां गर्भा महाभयविधायकाः।
उत्पद्यन्ते विलीयन्ते कालेनैकेन देहिनः॥
तज्जन्मभयनाशाय विधानं कथ्यते मया।
यस्या उदरसम्भूता दृश्यते विकृता प्रजा॥
दशाहादूर्द्धमुद्दिग्नाः स्नापनीयाः शुभैर्जलैः।
जनयित्री च राजेन्द्र जनकश्च विशेषतः॥
सकुल्या अपि मानुष्याः शुक्लमाल्यानुलेपनाः।
शुक्लाम्बरधराश्चापि स्नातावाचः प्रयत्नतः॥
कृताह्निकस्तु कर्त्ता च विदधीत विधानकम्।
सदनस्योत्तरे भागे स्थण्डिलन्तु प्रकल्पयेत्॥
वाचयित्वा द्विजान् स्वस्ति कृत्वा याम्यीं हिरण्मयीम्।
नवेन वस्त्रयुग्मेन वेष्टयित्वा विधानतः॥
चतुर्भुजा पिङ्गकेशा पिङ्गश्मश्रुविलोचना।
कर्णिकारभवैः पुष्पैः पूजिता सुमनोहरा॥
यमस्य पूजा कर्त्तव्या सुवर्णस्य विशेषतः।
वामहस्ते गदा पूज्या दक्षिणे कालदण्डकः॥
अङ्कं वामे हला पूज्या तथा खड्गश्च दक्षिणे।
यमः प्रेतसखः कालः श्राद्धदेव महामते।
कालदण्डधरः श्रीमान् वैवस्वत नमोऽस्तु ते॥

अयं पूजामन्त्रः।

अथातोऽग्निं प्रतिष्ठाप्य हवनं कारयेत्ततः ।
तिलाज्यतण्डुलास्तत्र प्रधानद्रव्यमीरितम् ॥
कृणुष्व पाजमन्त्रेण* जुहुयाच्च सहस्रकम् ।
रक्षोघ्नांश्च जपेन्मन्त्रान्† शं न इत्यादि‡ शान्तये ॥
ततो वै स्विष्टकृद्धेयं प्रायश्चित्तन्तु सर्पिषा ।
ततो दीपबलिं दत्त्वा धर्म्मराजस्य तुष्टये ॥
पूर्णाहुतिं ततो दत्त्वा ततो दानं समारभेत् ।
नीलाम्बरयुतं चण्डं महिषं यमवाहनम् ॥
आचार्य्याय ततो दद्यात्सवस्त्रञ्च सदक्षिणम् ।
पुष्पमालावृताङ्गञ्च स्वर्णशृङ्गमनोरमम् ॥
ताम्रपृष्ठं रौप्यखुरं रत्नपुच्छं सचामरम् ।
दक्षिणार्थं सुवर्णञ्च दद्याद्धर्म्मस्य तुष्टये ।
सम्पूज्य विधिवद्विप्रं वस्त्रालङ्कारभूषणैः ॥

दानमन्त्रो यथा ।

यमवाह नमस्तुभ्यमकालमरणापह ।
लुलाप तव दानेन प्रीयतां मे सदा यमः ।
एवं दत्त्वा तु महिषं सम्पूज्याथ ऋत्विजस्तथा ॥

---

* १५८ पृष्ठे उक्तेन ।

† रक्षोहणं वाजिनमाजिघर्म्मि मित्रं प्रथिष्ठमुपयामि शर्म्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् ॥ (१०म.८७सू.१ऋक् ।)

‡ शन्नो वातः पवताᳪं शन्नस्तपतु सूर्य्यः ।
शन्नः कनिक्रदद्देवः पर्ज्जन्यो अभिवर्षतु ॥ (३६अ. १०म. यजुः ।) इत्यादिकान् ।

ततोऽभिषेको विकृतैर्मातापित्रोः सगोत्रयोः ।

अथ आचार्य्याय प्रतिमादानं तन्मन्त्रो यथा ।

यमोऽसि पुण्यरूपोऽसि पुण्यमूर्त्तिर्निरामय ।

दानेन तव देवेश विघ्ना नश्यन्तु मे सदा ।

ब्राह्मणास्तर्पणीयाः स्युरेवं शान्तिर्भवेदिह ॥

इति विधानमालोक्तपद्मपुराणधृतविकृतजननशान्तिविधानम् ।

## अथ दत्तकपुत्रविधानम् ।

प्रयोगपारिजाते ।

एवं पूर्व्वोक्तपुत्रकामेष्ट्यादिनाप्यजातकुमारस्य पुत्रपरिग्रह-विधिरभिधीयते ।

नापुत्रस्य लोकोऽस्तीति श्रुत्या अपुत्रस्य मुखं दृष्ट्वा भानु-मण्डलमीक्षयेदित्यादि स्मृत्या च अपुत्रस्य निन्दाश्रवणात् । तस्मादपुत्रेण* पुत्रपरिग्रहः कार्य्यः ।

अत्र विशेषः कालिकापुराणे ।

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।

आचूड़ान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥

---

* अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा ।
पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम ॥  इति वचनात् ।

इति दत्तकमीमांसा ।

चूडोपनयसंस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥
ऊर्द्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ॥ इति ।

तत्प्रकारश्च शौनकेन प्रदर्शितः । यथा—

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम् ।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥

सङ्ग्रहं सङ्ग्रहणविधिम् । समुपोष्य पूर्व्वदिने कृतोपवासः ।

वाससी कुण्डले दत्वा उष्णीषञ्चाङ्गुलीयकम् ।
आदाय धर्म्मसंयुक्तं वैष्णवं वेदपारगम् ॥
बर्हिःकुशमयञ्चैव पालाशं चेध्ममेव च ।
एतानाहृत्य बन्धूंश्च* ज्ञातीनाहूय† सत्तमः ॥
देशस्वामिनमाहूय मधुपर्कादिनार्चयेत् ।
बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः ॥
अग्न्याधानादिकं तत्र कृत्वाज्योत्पवनान्तिकम् ।
दातुः समक्षं गत्वा तु पुत्रं देहीति वाचयेत् ॥

वाचनं कारयेत् । पूर्व्वव्रतैर्ब्राह्मणैरित्यर्थः ।

दाने समर्थो दातास्मै ये यज्ञेनेति‡ पञ्चभिः ।

दद्यादिति शेषः ।

---

* बन्धून् आत्ममातृपितृबन्धून् ।

† ज्ञातीन् सपिण्डान् इति दत्तकचन्द्रिका ।

‡ ये यज्ञेन दक्षिणया समक्ता इन्द्रस्य सख्यममृतत्वमानश ।
तेभ्यो भद्रमङ्गिरसो वोऽस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥ (१०म. ६२सू. १ऋक् ।)

पश्यतामुपविष्टानां समर्थं पुत्रमर्पयेत् ॥
देवस्य त्वेति मन्त्रेण* हस्ताभ्यां परिगृह्य च ।
अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनि ॥

ऋक्पाठस्तु ।

अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ इति ।
वस्त्रादिभिरलङ्कृत्य छत्रच्छायावृतं सुतम् ।
नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैर्निरन्तरम् ॥
गृहमध्ये तमाधाय चरुञ्च जुहुयात्ततः ।
यस्त्वा हृदेत्यृचा† चैव तुभ्यमग्न ऋचैकया‡ ॥

---

स उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे बलम् ।
दीर्घायुत्वमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥ (१०म. ६२सू. २ऋक् ।)
य ऋतेन सूर्यमारोहयन् दिव्यप्रथयन् पृथिवीं मातरं वि ।
सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥ (१०म. ६२सू. ३ऋक् ।)
अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन ।
सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रतिगृभ्णीत मानवं सुमेधसः ॥ (१०म. ६२सू. ४ऋक् ।)
विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे ॥ (१०म. ६२सू. ५ऋक् ।)

* देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्यां जुष्टं गृह्णामि ॥ (१अ. १०म. यजुः ।)

† यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ (५म. ४सू. १०ऋक् ।)

‡ तुभ्यमग्ने पर्यवहन् सूर्यां वहतुना सह ।
पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ (१०म. ८५सू. ३८ऋक् ।)

सोमोऽददद्दित्येताभिः* प्रत्यृचं पञ्चभिस्तथा।
पायसं तत्र साज्यञ्च शतसंख्यञ्च होमयेत्॥
प्रजापते न त्वदेतान्†मीत्युद्दिश्य प्रजापतिम्।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत्॥
ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसङ्ग्रहः।
तदभावेऽसपिण्डेषु अन्यत्र तु न कारयेत्‡॥
क्षत्रियाणां स्वजातौ वा गुरुगोत्रे समेऽपि वा।
वैश्यानां वैश्यजातौ वा शूद्राणां शूद्रजातिषु॥
सर्व्वेषाञ्चैव वर्णानां जातिष्वेव च नान्यथा।
दौहित्रं भागिनेयं वा शूद्रानाञ्च पतिर्यदि॥
नैकपुत्रेण कर्त्तव्यं पुत्रदानं कदाचन।
बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः॥
दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः।
नृपो राष्ट्रार्द्धमेवापि§ वैश्यो वित्तशतत्रयम्।
शूद्रः सर्व्वस्वमेवापि अशक्तश्चेद्यथाबलम्॥

---

* सोमोऽददद्गन्धर्व्वाय गन्धर्व्वोऽदददग्नये।
रयिं च पुत्रांश्चाददद्ग्निर्मह्यमथो इमाम्॥ (१०म. ८५सू. ४१ऋक्।)

† प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥ (१०म. १२१सू. १०ऋक्।)

‡ अन्यत्र तु न कारयेदित्यनेन ब्राह्मणातिरिक्तः क्षत्रियादिसमानजातीयो दत्तको व्याव-र्त्त्यते इति दत्तकचन्द्रिका।

§ राज्ञार्द्धमङ्गराज्योत्पन्नमेकवर्णीयद्रव्यं प्रदद्यादङ्गराज्योत्पन्नमेकवर्णाश्रम धनमिति वचनात्। इति दत्तकचन्द्रिका।

राज्यादिदानं तु प्रतिग्राह्यस्य कुमारस्य पित्रे एव तस्य तत्परितोषकत्वादिति केचित् ।

दौहित्रो भागिनेयश्च शूद्रैश्च क्रियते सुतः ।
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥

हेमाद्रौ तु वशिष्ठः ।

शोणितशुक्रसम्भवः पुरुषो मातापितृनिमित्तकस्ततस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि त्रायते पूर्व्वः* । न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुः ।

अनुमतिश्च अप्रतिषेधेऽपि भवति अप्रतिषिद्धमनुमतं भवतीति न्यायात् ।

पुत्रम्प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनमध्ये लौकिकाग्निं प्रतिष्ठाप्य आज्यभागान्ते व्याहृतिचतुष्टयं हुत्वा अदूरबान्धवं बान्धवसन्निकृष्टमेव प्रतिगृह्णीयात् । सन्देहे चोत्पन्ने† दूरबान्धवं शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन च बहूंस्त्रायत इति ।

निवेशनं गृहम् ।

तस्मिंश्च प्रतिगृहीतेऽथ त्वौरसपुत्र उत्पद्येत स चतुर्थभागभागी स्यादिति ।

---

* स हि सन्तानाय पूर्व्वेषामिति दत्तकचन्द्रिकापाठः ।

† दूरस्थबान्धवस्य अत्यन्तदेशभाषादिविप्रकर्षेण कुलशीलादिसन्देहो भवत्येव । तथात्वे अभिषेकादौ न व्यवहरेदिति दत्तकचन्द्रिका ।

अदूरबान्धवमित्यादेरयमर्थः अदूरश्चासौ बान्धवश्चेति अदूरबान्धवः। अयं भावः प्रथमं तावत्सति सम्भवे सन्निहितो बन्धुरेव पुत्रीकार्य्यः। तदभावे व्यवहितो बन्धुः। तदभावे बन्धुव्यतिरिक्तोऽपि। तस्य च कुलशीलादिविषयकसन्देहे उत्पन्ने सति दूरबान्धवं बन्धुभ्यो दूरदेशवर्त्तिनमासन्देहनिवृत्तेर्बन्धुभ्यो दूरे स्थापयेत् न तेन व्यवहरेदित्यर्थः। तस्मात्प्रतिग्रहेणापि पुत्त्रमर्ज्जयेदिति श्रुतिमुपन्यस्यति। विज्ञायते ह्येकेन बहूनिति। एकेन पुत्त्रेण बहून् पुरुषान् वंश्यांस्तारयत इत्यर्थः। चतुर्थभागभागीति गृहीतपुत्त्रविषयम्।

उत्पन्ने त्वौरसे पुत्त्रे चतुर्थांशहराः* सुताः।
सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः॥

इति कात्यायनोक्तेः।

ग्रन्थान्तरे तु।

दत्तपुत्त्रे गृहीते तु कदाचित्त्वौरसो भवेत्।
पितुर्वित्तस्य सर्व्वस्य भवेतां समभागिनौ† ॥

इदन्तु दत्तपुत्त्रस्य गुणवत्तरत्वे द्रष्टव्यं दत्तस्य गुणवत्तरत्वे समो भाग इति हारीतस्मरणात्।

अविधाय विधानं यं परिपुष्णाति नन्दनम्।
विवाहविधिभाजं तं न कुर्य्याद्धनभागिनम्॥

---

* तृतीयांशहरा इति दत्तकचन्द्रिकापाठः।

† एतद्वचन शूद्रविषय एव योजनीयम्। शूद्रस्य तु सवर्णैव जान्या भार्य्योपदिश्यते। तस्यां जाताः समांशाः स्युर्यदि पुत्त्रशतं भवेत्॥ इति वचनादिति दत्तकचन्द्रिका।

तस्मिन् जाते सुते पूर्व्वं कृतं सति विधानकं* ।
तत् स्वं तस्यैव सर्व्वस्य स स्वामी पितुरज्ञमाः* ॥
जातेष्वन्येषु पुत्त्रेषु दत्तपुत्त्रपरिग्रहात् ।
पिता चेद्विभजेद्वित्तं नैवाप्नो ज्येष्ठभाग्भवेत् ॥

इति दत्तकपुत्त्रविधानम् ।

## अथ खट्टारोहणविधानम् ।

तत्र नामकरणानन्तरं ज्योतिःशास्त्रे विहितम् ।

तथाच बृहस्पतिः ।

खट्टारोहम् कर्त्तव्यो दशमे द्वादशेऽपि वा ।
षोड़शे दिवसे वापि द्वात्रिंशे दिवसेऽपि वा ॥

भविष्यपुराणे ।

अभीष्टे पुण्यदिवसे चन्द्रताराबलान्विते ।
मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः ॥
योगशायिहरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् ॥ इति ।

मृद्वादिलक्षणमुक्तं श्रीपतिना यथा ।

रोहिण्युत्तरभं स्थिरं गिरिशमूलेन्द्रोरगा दारुणं
क्षिप्रस्वाश्विदिनेशपुष्यमनलेन्द्राग्नी तु साधारणम् ।
उग्रं पूर्व्वमघान्तकं मृदु मृगत्वाष्ट्रान्त्यमैत्रं चरा
विष्णुस्वातिशतोडुवस्वदितयः कुर्य्युः स्वसंज्ञाफलम् ॥ इति ।

---

* न कृतं च विधानकं ।

* तत् स्वं तस्यैव वित्तस्य यः स्वाम्नोति दत्तकचन्द्रिकापाठः ।

प्रयोगसारे ।

आन्दोलाशयने पुंसो द्वादशो दिवसः शुभः ।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा* ॥ इति ।

इतिकर्त्तव्यताविशेषस्तु शिष्टाचारतोऽवगन्तव्यः ।

इति खट्वारोहणविधानम् ।

## अथ दुग्धपानविधानम् ।

श्रीधरीये ।

एकत्रिंशे वासरे च द्वितीये
जन्मर्क्षे वा शुद्धलग्नेऽनुकूले ।
शङ्खक्षीरं सन्निदध्याच्छिशूनां
वक्त्रे धात्री पूज्यपूजां विधाय ॥

अस्यार्थः । जातस्य बालस्य जन्मदिवसादेकत्रिंशद्दिवसे तदलाभे द्वितीयजन्मनक्षत्रादौ पयःपानं कारयितव्यम् ।

तथाच श्रीनृसिंहः ।

एकत्रिंशद्दिने चैव पयः शङ्खेन पाययेत् ।
जन्मप्राशननक्षत्रदिवसोदयराशिषु ॥
नाद्यन्ते मासि सम्पूर्णे जातस्य तु विशेषतः ।
मासान्ते दुग्धपानं स्यात्सत्कालेषु शोभने† ॥

---

* न तत्रर्क्षविचारणा इति ख पुस्तके पाठः ।

† काले सुशोभने इति पाठो युक्तः ।

उत्तरात्रयहस्तौ च स्वाष्ट्रवैष्णववासवाः ।
पौष्णाश्विनौ मघास्वाती वरुणादितिजीवनम् ॥
रोहिण्यैन्दवमैत्राश्च दुग्धपाने शिशोः शुभाः ।
षष्ठीरिक्ताष्टमीदर्शा वर्ज्या विष्टिश्चिराखि च ॥
वर्ज्यास्त्वशुभयोगाश्च क्रूरोपाख्यविभागकाः ।
अधोमुखानि वर्ज्यानि मीनाजालिक्टहाणि च ॥
जीवशुक्रेन्दुसौम्यानां वारवर्गोदये क्षणाः ।
शुभानां राशयः श्रेष्ठा विशेषाः शुभकर्मणि ॥
चन्द्रे सद्गुणसंयुक्ते शुभग्रहदृशायुते ।
स्वोच्चमित्रस्ववर्गस्थे शुक्रे चातिबलान्विते ॥
पारावतगते वापि सुरेश्वरगतेऽपि वा ।
ऐरावतगते वापि दुग्धपानं शुभावहम् ॥ इति ।
पारावतादीनां लक्षणं ज्योतिःशास्त्रे व्युत्क्रमेणोक्तम् ।
चतुर्भिः पञ्चभिः षड्भिः स्थितिवर्गैः शुभान्वितैः ।
ऐरावतपारावतसुरेशपुष्कराः क्रमात् ॥
अत्र चतुर्भिरित्यादि सम्बन्धोराशिषड्वर्गमध्ये । शुभान्वितैः शुभग्रहान्वितैरित्यर्थः ।

इति प्रयोगपारिजातोक्तं बालकस्य दुग्धपानविधानम् ।

## अथ ताम्बूलभक्षणम् ।

सार्द्धमासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः ।
कर्पूरादिकसम्मिश्रं विलासाय हिताय च ॥

मूलार्कचित्रकरतिष्यहरीन्दुभेषु
पौष्णे तथा मृगशिरोऽदितिवासवेषु ।
अर्केन्दुजीवभृगुबोधनवासरेषु
ताम्बूलभक्षणविधिर्मुनिभिः प्रदिष्टः । इति ।

अथ जन्मनक्षत्रकर्त्तव्यविधानम् ।

शौनकीये ।

अथ स्वजन्मनक्षत्रे स्नातः शुक्लाम्बरो नृपः ।
कृतकौतुकबन्धश्च सर्व्वाभरणभूषितः ॥

नृपग्रहणं तस्यात्यावश्यकत्वार्थम् । तेन अन्यस्यापि भवतीति गम्यते आयुर्वृद्धिहेतुत्वात् ।

नक्षत्रदेवतापूजां कुर्य्याद्गुरुसमन्वितः ।
आचार्य्येणैव होतव्यो होमः सर्व्वत्र कर्म्मणि ॥
स्थण्डिलाद्याज्यभागान्तं कृत्वा सर्व्वं यथाक्रमम् ।
दूर्व्वा घृताक्ता जुहुयादष्टोत्तरशताहुतीः ॥
यद्दैवताकं नक्षत्रं मन्त्रस्तद्दैवतः स्मृतः ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥
गोभूहिरण्यवस्त्राद्यैर्ब्राह्मणांस्तोषयेत्ततः ।
तस्मिन्नहनि सर्व्वत्र देवतायतनानि च ॥

गच्छेदिति शेषः ।

दुःखितान् सर्व्वपक्षांश्च मोचयेन्नृपतिस्ततः ।

द्विजान् सर्व्वानथाभ्यर्च्य तस्मिन्नहनि सक्रमात् ॥
पूजयित्वा विधानेन पूजितव्याः स्वबान्धवाः ।
न हिंस्यात् सर्व्वभूतानि तदहस्तु विशेषतः ।
एवं समाचरन्राजा सुखी भवति सर्व्वदा ॥
इति शौनकीये जन्मनक्षत्रकर्त्तव्यविधानम् ।

अथ जन्ममासादिकर्त्तव्यविधानम् ।

विधानमालायाम् ।
जन्ममासे जन्मतिथौ जन्मर्क्षे जन्मलग्नके ।
विधानन्तु प्रकर्त्तव्यं विदुषायुर्विवृद्धये ।
यस्मिन् मासे तु यो देवस्तमादौ पूजयेन्नरः ॥
मासदेवास्तु ।
कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्द्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥
मासादिक्रमस्तु चैत्रादिर्मार्गशीर्षादिर्वा ।
गणेशप्रमुखा देवा दुर्गाद्या मातरस्तथा ।
पूज्यास्तल्लिङ्गकैर्मन्त्रैर्धूपपुष्पादिभिस्तथा ॥
सप्तधान्यमये राशौ स्थापयेत्पीठमुत्तमम् ।
यवाः प्रियङ्गवो माषा आढ़कायणकास्तिलाः ॥
व्रीहयश्च समुद्दिष्टं धान्यानां सप्तकं बुधैः ।

पीठं तत्रोपरि न्यस्य वस्त्रच्छन्नमनुत्तमम् ॥
हुत्वा चाग्निं व्याहृतिभिः*र्होमशेषं समाप्य च ।
अभिषेकं ततः कुर्य्यादाचार्य्यं पूजयेदथ ॥
ततस्तु भोजयेद्विद्वान् ब्राह्मणान् वेदपारगान् ।
एवं कृते विधानेऽस्मिन् विघ्नः कोऽपि न जायते ॥
इति विधानमालोक्तं जन्ममासादिकर्त्तव्यविधानम् ।

अथ स्त्रीस्तन्याक्षरणहरविधानम् ।

मदनमहार्णवे ।

क्षीरं मुष्णाति या नारी पूर्व्वजन्मनि सुव्रता ।
जन्मान्तरे तु तस्या वै क्षीरं न क्षरतः स्तनौ ॥
क्षीरान्नं भोजयेद्विप्रान् साज्यं समधुमण्डकम् ॥
विप्रानिति बहुत्वनिर्द्देशात्त्रयो विप्रा अवश्यं भोजनीयाः ।
अनुलिम्पेच्च तेनैव तूच्छिष्टान्नेन भक्षितः ।
विप्रपादोदकेनापि क्षालयेत्कुचमण्डलम् ॥
सुरामांसक्षौद्रघृतापूपान्नैर्गन्धपुष्पकैः ।
भूतेभ्यश्च बलिं दद्याद्भूतान्यत्र च संस्मरन् ॥
मधुच नवनीतच पिण्डमालोक्य(प्य)चित्तकः ।
भूतमध्यञ्च शक्तिश्च भूतानां पञ्चकं त्विदम् ॥

---

* भूर्भुवः स्वरित्येतैस्तिसृभिः ।

अत्र सुरादीनि ब्राह्मणैरनिषिद्धान्येव ग्राह्याणि ।
इति मदनमहार्णवोक्तं कौसल्याचरणहरविधानम् ।

अथ निष्क्रमणविधानम् ।

तत्र बृहस्पतिः ।

अथ निष्क्रमणं नाम गृहात्प्रथमनिर्गमः ।
अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ।
कृते सम्पद्विवृद्धिः स्यादायुर्वर्द्धनमेव च ॥ इति ।

श्रीधरीयेऽपि ।

मासे तृतीये दिवसे दिनेशं
शिशुं चतुर्थे शशिनञ्च धेनुम् ।
विलोकयित्वात्रविधिप्रयुक्ते
काले गृहान्निष्क्रमणं विदध्यात् ॥

तथा ।

केन्द्रत्रिकोणगाः सौम्याः पापाः षट्‌त्रिलाभगाः ।
उपनिष्क्रमणे शस्ता मातुलो वाहयेच्छिशुम् ॥

अपिच ।

आर्द्राधोमुखवर्जितासुपवतेष्वृक्षेष्वरिक्ते तिथौ
वारे भौमशनीतरे घटतुलाकन्यामृगेन्द्रोदये ।
सहृष्टेऽथ चतुर्थमासि यदि वा मासे तृतीये शशि-
न्यस्मीणे शुभदे शिशोरभिनवं निष्क्रामणं कारयेत् ॥

तथा ।

चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं भवेत् ।
स्नातं स्वलङ्कृतञ्चापि कृतस्वस्त्ययनं शिशुम् ॥
आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयम् ।
अभ्यर्च्य देवताः सम्यगाशिषो वाचयेदथ ॥
कृत्वा प्रदक्षिणं गेहमानयेयुः* स्ततः स्वकम् ।
मातृष्वसृगृहं नीत्वा मातुलादेर्गृहं नयेत् ॥
तदाशीर्व्वचनाद्यैः स्याद्दीर्घायुरभिनन्दितः ।
जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रमः ॥ इति ।
दर्पणः पूर्णकलशः कन्याः सुमनसोऽक्षताः ।
दीपमाला ध्वजं लाजाः सम्प्रोक्तञ्चाष्टमङ्गलम् ॥

सुमनसः पुष्पाणि ।

विवाहे निष्क्रमे काम्ये वृद्धौ पूर्त्ते समागमे ।
उत्सवेषु च यात्रायां प्रशस्तञ्चाष्टमङ्गलम् ॥

अत्र विशेषमाह श्रीधरीये बृहस्पतिः ।

चतुरस्रे शुचौ देशे गोमयेनोपलेपिते ।
धान्यपुञ्जे समासीनं बालं बालामथापि वा ॥
अर्च्चयेद्गन्धपुष्पाद्यैस्तस्मिन्मूर्ध्नि ललाटके ।
तस्य रक्षां ततः कृत्वा मृतसञ्जीवनीं जपेत् ॥

मृतसञ्जीवनी त्र्यम्बकमन्त्रः ।

---

* आनयेयुरित्यत्र आनयन्तीति क पुस्तके पाठः ।

तत्रार्च्चयेद्दिगीशानं भूतेशानं तथैव च ।
भक्ष्यैर्विचित्रैः सफलैः शिशुनभ्यर्च्चयेद्बुधः ॥ इति ।

शङ्खस्तु तृतीये मासि निष्क्रमणमाह ।

अत ऊर्द्धं तृतीये मासि निष्क्रमणिका कार्य्येति ।

विष्णुधर्म्मोत्तरे च ।

चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात् ।
दिगीशानां दिशां तत्र तथा चन्द्रार्कयोर्द्विज ॥
पूजनं वासुदेवस्य गगनस्य च कारयेत् ।
ततस्त्वलङ्कृता धात्री बालमादाय पूजितम् ॥
वहिर्निष्क्रामयेद्गेहाच्छङ्खपुण्याहनिःस्वनैः ।
ततस्तत्र पठेन्मन्त्रद्वयं राम निबोध मे ॥
चन्द्रार्कयोर्दिगीशानां दिशाञ्च गगनस्य च ।
निक्षेपार्थमिमं दद्मि ते मे रक्षन्तु बालकम् ॥
अप्रमत्तं प्रमत्तं वा दिवा रात्रावथापि वा ।
रक्षन्तु सततं सर्व्वे देवाः शक्रपुरोगमाः ॥
स्त्रीणामविधवानाञ्च द्विजानां सुहृदां तथा ।
तदा तु पूजा कर्त्तव्या नृत्यगीतैः सदोत्सवा ॥ इति ।

अथास्य स्पष्टप्रयोगः ।

जननाच्चतुर्थे मासि मम कुमारस्य कुमार्य्या वा आयुःश्रीवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं निष्क्रमणाख्यं कर्म्म करिष्ये इति सङ्कल्प्य स्वस्तिवाचनाभ्युदयिके कृत्वा इन्द्रादिदिक्पालानां प्राच्यादिदिशां चन्द्रार्कवासुदेवगगनानां च यथाक्रमेण पूजां

कृत्वा ब्राह्मणान् भोजयित्वा सायंसन्ध्यां कृत्वा शिशुं भूषयित्वा अग्निचन्द्रधेनूनां दर्शनं कारयित्वा मातुलेन धात्र्या वा शिशुं वाहयित्वा वेदतूर्य्यघोषपुरःसरं शाकुनादिमङ्गलसूक्तं पठन् गृहा-न्निर्गत्य चन्द्रार्कयोरिति मन्त्रद्वय*मुच्चार्य्य देवालयं गत्वा देवं सम्पूज्य तत्र गोमयानुलेपिते देशे धान्यं निधाय तत्र शिशुं शाययित्वा रक्षां कुर्य्यात्।

त्र्यम्बकमित्यस्य वशिष्ठ ऋषी रुद्रो देवता अनुष्टुप् छन्दः जपे विनियोगः।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्।
उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥

इति त्रिर्जप्त्वा विभूत्या कुमारललाटे रक्षां विधाय मातुलाद्या-स्वगृहं नीत्वा स्वगृहं गच्छेत्।

इति निष्क्रमणविधानम्।

## अथ पञ्चमे मासि बालकोपवेशनविधानम्।

प्रयोगपारिजाते परशुरामं प्रत्याह पुष्करः।

पञ्चमेऽथ तथा मासि भूमौ तमुपवेशयेत्। इति।
तत्र सर्व्वे ग्रहाः शस्ताः सौम्या राम विशेषतः।
तिथिं विवर्ज्जयेद्रिक्तां शस्तानि शृणु भानि मे।
उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम्॥

* पूर्व्वपृष्ठे मूले उक्तम्।

प्राजापत्यञ्च हस्तञ्च शस्तमाश्विनमित्रभम्* ।
वराहं पूजयेद्देवं पृथिवीञ्च तथा द्विजः ॥
पूजनं पूर्व्ववत्कृत्वा गुरुदेवद्विजन्मनाम् ।
भूभागमुपलिप्याथ कृत्वा तत्र तु मण्डलम् ।
शङ्खपुण्याहशब्देन भूमौ तमुपवेशयेत् ॥

अत्र शङ्खशब्दः सर्व्ववाद्योपलक्षणार्थः । अनेनैतदुक्तं भवति स्वस्तिवाचनं कृत्वा मङ्गलतूर्य्यादिध्वनौ क्रियमाणे बालं धरण्यामुपवेशयेत् ।

तत्र मन्त्रानाह स एव ।

मन्त्रस्तत्र भवेद्राम तं मे निगदतः शृणु ॥
रक्षैनं वसुधे देवि सदा सर्व्वगतं शुभे ।
आयुःप्रमाणं सकलं निक्षिपस्व हरिप्रिये ॥
आयुषस्तस्य ये केचिदचिरात्परिपन्थिनः ।
जीवितारोग्यवित्तेषु निर्द्दहस्वाचिरेण तान् ॥
धरण्यशेषभूतानां मातुस्त्वमधिका ह्यसि ।
अजरा चाप्रमेया च सर्व्वभूतनमस्कृते ॥
त्वमेवाशेषजगतां प्रतिष्ठा चाश्रया ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ॥ इति ।

---

*ब्रह्मोत्तरेन्द्रमृगमित्रकराश्विनीषु वारेषु सप्तसु विहाय कुजस्य सार्कं ।
मासेऽथ पञ्चम इह प्रतिमुच्य रिक्तां शस्तः शिशोर्भवति भूम्युपवेशनं प्राक् ॥

इति दीपिका ।

ततः कर्त्तव्यमाह स एव ।

तस्योपवेशनं कृत्वा भूमौ ब्राह्मणभोजनम् ।
ततः कुर्य्यात्ततः कार्य्य उत्सवः पूर्व्ववद्दिज ॥

उत्सवो नीराजनादिः । एतद्द्वयं कुमार्य्या अपि कार्य्यं प्रश्नत्वाद्बालोपरक्षणार्थत्वाच्च ।

इति बालोपवेशनविधानम् ।

## अथ कर्णवेधविधानम् ।

तत्रैव श्रीधरीये ।

मासे षष्ठे सप्तमे वाष्टमे वा
कर्णौ वेध्यौ द्वादशे षोडशेऽह्नि ।
मध्ये वाह्नः पूर्व्वभागे न रात्रौ
नक्षत्रे द्वे द्वे तिथौ वर्ज्जयित्वा ॥

बृहस्पतिरपि ।

जन्मतो दशमे वाह्नि द्वादशे वाथ षोडशे ।
सप्तमे मासि वा कुर्य्याद्दशमे मासि वा पुनः ॥

गर्गः ।

मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥

अत्र जन्ममासो निषिद्धः ।

व्यासः ।

यो जन्ममासे क्षुरकर्म्म यात्रां
कर्णस्य वेधं कुरुते तु मोहात् ।
मूढः स रोगं धनपुत्त्रनाशं
प्राप्नोति शोकञ्च समस्तमेतत्* ॥

नक्षत्रादीन्याह श्रीधरः ।

हरिहरकरचित्रासौम्यपौष्णोत्तरार्थ्या-
दितिवसुषु घटालीसिंहवर्ज्ये सुलग्ने ।
शशिबुधगुरुकाव्यानां दिने पर्व्वरिक्ता-
रहिततिथिषु शुक्लेनैधते कर्णवेधः ॥

अन्यत्रापि ।

नो जन्मेन्दुभमाससूर्य्यरविजक्ष्माजाहसुप्ताच्युते
शस्तेऽर्के लघुविष्णुयुग्ममृदुभस्वात्युत्तरादैवतैः ।
सौम्यैस्त्र्यायत्रिकोणकण्टकगतैः पापैस्त्रिलाभारिगै-
रोजोऽब्दे श्रुतिवेध इज्यदिवसे लग्ने च काले शुभे ॥

तथा ।

सुनक्षत्रे शुभे चन्द्रे सुस्थे शौर्य्योदये शुभे ।
दिनच्छिद्रव्यतीपातविष्टिवैधृतिवर्ज्जिते ॥
शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः ।
सौचिको वेधयेत्कर्णौ सूच्या द्विगुणसूत्रया ॥

---

* समस्तमेतदित्यत्र वधबन्धनाशमीति लिखितस्तु पाठः ।

शातकुम्भमयी सूची वेधने तु शुभप्रदा ।
राजती वायसी वापि यथा विभवसारतः* ॥
सुभूमौ प्राङ्गणे रम्ये शुचौ देशेऽम्बरे रवेः ।
सन्निधौ वेधयेत्कर्णौ स्त्रीपुंसोर्वामदक्षिणौ ।
क्रमेण पूर्वं वेध्यौ द्वौ शिशोरायुष्यवर्द्धनौ ॥

अर्थर्वेऽप्युक्तम् ।

शुक्लसूत्रसमायुक्तताम्रसूच्याथ वेधयेत् ।
वेधात्तृतीयनक्षत्रे क्षालयेदुष्णवारिणा ॥
रोपणार्थं सुशुद्धर्थं नालसम्पतिमाप्नुयात् ।
एवञ्छिन्ने च भिन्ने च छित्वा योज्यानि योजयेत् ॥

विष्णुधर्म्मोत्तरे पुष्करः ।

शिशोरेवाथ कर्त्तव्यं कर्णवेधं यथा शृणु ॥
पूर्व्वाह्ने पूजनं कृत्वा केशवस्य हरस्य च ।
ब्रह्मणश्चन्द्रसूर्य्याभ्यां दिगीशानां तथैव च ॥

चन्द्रसूर्य्याभ्यां चन्द्रसूर्य्ययोरित्यर्थः ।

नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा ।
गुरूणां मङ्गलं कृत्वा तत्र दत्वा वरासनम् ॥
तथोपवेशयेत्तत्र धात्री शुक्लाम्बरा तथा ।
अलङ्कृतं तदुत्सङ्गे बालं धृत्वा तु साम्बिता† ॥

---

* यथा विभवतः शुभा इति क-पुस्तके पाठः ।

† साचिता इति क-पुस्तके पाठः ।

धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ।
विध्येद्दैवं कृते छिद्रे सकृदेवात्र लाघवात् ॥
प्राग्दक्षिणे कुमारस्य भिषग्वामे तु योषितः ।
शिरोविवर्द्धनं कार्य्यं यावदाभरणक्षमम् ॥

विवर्द्धनं छेदनं वृधु छेदे इति गणपाठात् ।

कर्णवेधदिने विप्राः सांवत्सरचिकित्सकौ ।
पूज्याश्च विविधा नार्य्यः सुहृदश्च तथा द्विजैः ॥ इति ।

अत्र पुरुषकर्णरन्ध्रवृद्धिविषये विशेषमाह हेमाद्रौ देवलः ।

कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः ।
तं (तां) दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः ॥

तत्प्रमाणं प्रसङ्गान्तरेणाह शङ्खः ।

अङ्गुष्ठमात्रसुषिरौ कर्णौ न भवतो यदि ।
तस्मै श्राद्धं न दातव्यं यदीच्छेद्*दासुरं भवेत् ॥

लम्बकर्णत्वं निषेधति शालङ्कायनः ।

अविद्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च ।
दग्धकर्णैश्च यद्भुक्तं तद्वै रक्षांसि गच्छति ॥

तत्प्रमाणे विशेषमाहतुः शङ्खलिखितौ ।

हनूमूलादधःकर्णौ लम्बौ तु परिकीर्त्तितौ ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्ताविति शातातपोऽब्रवीत् ॥

अन्ये चात्र विशेषाः स्वसूत्रादेव अवगन्तव्याः ।

इति प्रयोगपारिजातोक्तं कर्णवेधविधानं समाप्तम् ।

---

* यदीच्छेदित्यत्र दत्तवर्दिति निर्णयसिन्धौ पाठः ।

## अथ अन्नप्राशनम् ।

प्रयोगपारिजाते नारदः ।

जन्मतो मासि षष्ठे स्यात् सौरेणान्नाशनं परम् ।
तदभावेऽष्टमे मासि नवमे दशमेऽपि वा ॥
द्वादशे वापि कुर्व्वीत प्रथमान्नाशनं शिशोः ।
संवत्सरे वा सम्पूर्णे केचिदिच्छन्ति पण्डिताः ॥

मदनरत्ने लौगाक्षिः ।

षष्ठेऽन्नप्राशनं जातेषु दन्तेषु च इति ।

शङ्खः ।

संवत्सरेऽन्नप्राशनमर्द्धसंवत्सरे वेति ।

नारदः ।

षष्ठे वाप्यष्टमे मासि पुंसां स्त्रीणान्तु पञ्चमे ।
सप्तमे मासि वा कार्य्यं नवान्नप्राशनं शुभम् ॥
रिक्तां दिनक्षयं नन्दां दशमीमष्टमीममाम् ।
त्यक्त्वान्यतिथयः प्रोक्ताः सितजीवज्ञवासराः ।
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ॥

श्रीधरः ।

आदित्यतिष्यवसुसौम्यकरानिलाश्वि-
चित्राजविष्णुवरुणोत्तरपौष्णमित्राः ।
बालान्नभोजनविधौ दशमे विशुद्धे
छिद्रां विहाय नवमीं तिथयः शुभाः स्युः ॥

दीपिकायाम्।

पूर्व्वंशान्तकसर्पमूलरहितेष्वृक्षेष्वरिक्ते तिथौ
षष्ठे मासि सितेन्दुजीवदिवसे गोमर्कमीनोदये।
केन्द्राष्टान्त्यत्रिकोणभैः शुभगतैस्तैरेव पापोज्झितै-
र्हित्वेन्दुं रिपुरन्ध्रगं शिशुजनस्यान्नाशनं शोभनम्॥

वशिष्ठः।

बालान्नभुक्तौ व्रतबन्धने च
राजाभिषेके खलु जन्मधिष्ण्यम्।
शुभं त्वनिष्टं सततं विवाहे
सीमन्तयात्रादिषु मङ्गलेषु॥

मार्कण्डेयः।

ब्रह्माणं शङ्करं विष्णुं चन्द्रार्कौ च दिगीश्वरान्।
भुवं दिशश्च सम्पूज्य हुत्वा वह्नौ तथा चरुम्॥
देवतापुरतस्तस्य धात्र्युत्सङ्गतस्य च।
अलङ्कृतस्य दातव्यमन्नं पात्रे सकाञ्चनम्॥
मध्वाज्यदधिसंयुक्तं प्राशयेत्पायसं तु वा॥ इति।

एवम्पूर्व्वोक्तरीत्या षष्ठे मासि बालस्य अन्नप्राशनं कृत्वा जीविकापरीक्षा कर्त्तव्या।

तत्र मार्कण्डेयः।

अग्रतोऽथ प्रविन्यस्य शिल्पभाण्डानि सर्व्वशः।
शस्त्राणि चैव वस्त्राणि ततः पश्येत्तु लक्षणम्॥

प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ॥

इति जीविकापरीक्षाविधानम् ।

अथ शिशुरक्षाविधानम् ।

(तत्रैव) कपिलसंहितायाम् ।

शिशुसंरक्षणार्थाय शिशुग्रहनिवारणीम् ।
रक्षां सन्ध्यासु कुर्वीत निम्बसर्षपगन्धनैः ॥
फलीकरणसम्मिश्रैः कारञ्जै(जै)रवलोकनम् ।
रक्षां द्वारप्रदेशेषु बालग्रहविमुक्तये ॥

कुर्यादिति शेषः ।

वासुदेवो जगन्नाथः पूतनाभञ्जनो हरिः ।
रक्षतां त्वरितो बालं मुञ्च मुञ्च कुमारकम् ॥
कृष्ण रक्ष शिशुं शङ्खमधुकैटभमर्द्दन ।
प्रातः सङ्गवमध्याह्नसायाह्नेषु च सन्ध्ययोः ॥
महानिशि सदा रक्ष कंसारिष्टनिषूदन ।
यक्षोरगपिशाचांश्च ग्रहान् मातृग्रहानपि ॥
बालग्रहान् विशेषेण छिन्धि च्छिन्धि महाभयात् ।
त्राहि त्राहि हरे नित्यं त्वद्रक्षारक्षितं शिशुम् ॥
इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना ।
शिरो ललाटाद्यङ्गेषु रक्षां कुर्याद्यथाविधि ।
मन्त्रसंरक्षणादेव शिशुः संवर्द्धतेऽन्वहम् ॥ इति ।

अथ यदि प्रमादाद्बालकस्य भुवि पतनादिभीतिरुपजायते तदा पार्थिवं रजः परिगृह्य शिशुशिरः प्रदक्षिणमावर्त्त्य विष्णुस्ते पूर्व्वतः पातु इत्यादिभिर्मन्त्रैः* रक्षां कुर्य्यात् । एष च रक्षाविधिः शकटभञ्जनसमये नन्दगोपेन भीतोऽयं शिशुरिति बुद्ध्या कृष्णस्य कृतः ।

तथाच हरिवंशे ।

नन्दोऽङ्कमेनमारोप्य भूरेणुं परिगृह्य च ।
शिरःप्रदक्षिणं कुर्व्वन् मन्त्रमेनं जजाप ह ॥
विष्णुस्ते पूर्व्वतः पातु रुद्रो रक्षतु दक्षिणम् ।
ब्रह्मा च पश्चिमं पायाच्चन्द्रो रक्षत्वथोत्तरम् ॥
उपरिष्टात्तथा सूर्य्यः पायाच्चाधश्च वासुकिः ।
पायादूर्द्धमधो वर्म्म† शिष्टाः काष्ठाः समीरणः ।
स्वस्तिं‡ करोतु भगवान् पिनाकी वृषभध्वजः ॥
गावो रक्षन्तु सर्व्वत्र भूमिः पातु सदा शिशुम् ।
एवमुच्चार्य्य नन्दस्तु कृष्णं पस्पर्श सर्व्वतः ।
एष मन्त्रो हि बालानां रक्षायै परिकीर्त्तितः ॥ इति ।

इति हरिवंशोक्तं बालरक्षणविधानम् ।

---

* अनन्तरमेव वक्ष्यमाणैः ।

† वर्म्मेत्यत्र धर्म्म इति क पुस्तके पाठः ।

‡ स्वस्तिमित्यत्र स्वस्तीति पाठो युक्तः, स्वस्तिशब्दस्याव्ययत्वात् ।

अथ बालस्य दन्तसङ्घर्षदोषे तत्परिहारविधानम् ।

यथा मार्कण्डेयपुराणे ।

दन्ताकृष्टिः प्रसूतानां बालानां दशनस्थितः ।
करोति सङ्घर्षमतिचिकीर्षुर्दुःसहागमम् ॥
तस्योपशमनं कार्य्यं सुप्तस्य सितसर्षपैः ।
शयनस्योपरि क्षिप्तैर्मासञ्च दशनोपरि ॥

मासं मासपर्य्यन्तमित्यर्थः ।

सुवर्चलौषधिस्नानात्तथा सच्छास्त्रकीर्त्तनात् ।
उष्ट्रकण्टकखड्गास्थिक्षौमवस्त्रादिधारणात् ॥

दन्ताकृष्टिः शमं यातीति शेषः ।

इति प्रयोगपारिजातोक्तानि शिशुरक्षणविधानानि समाप्तानि

अथ अब्दपूर्त्तिविधानम् ।

तथाच श्रीधरीये ।

वर्षान्तजन्मदिवसे रविमासशुद्धे
संस्नाप्य शान्तिकरकर्म्म चिराय कृत्वा ।
आबध्य हैमकटिसूत्रमथानुकूले
लग्ने शिशोर्नवतराम्बरयोगमाहुः ॥

अस्यायमर्थः । सौरवर्षान्ते जन्मदिने बालं स्नापयित्वा आयुर्वृद्धिकरमायुष्यहोमादि कृत्वा हैमकटिसूत्रमाबध्य नवतरवस्त्रधारणं कारयितव्यम् ।

नारसिंहेऽपि ।

सौरेणाव्दान्तजन्मर्षे शिशुं संस्नाप्य शास्त्रतः ।
आबध्य क्षेमसूत्रन्तु राश्यादावनुकूलके ॥
नवक्षौमाम्बरादीनि यथार्हं धारयेत्तदा ।
हस्तादिभूतनक्षत्राण्युक्तानि चुरन्तराणि च ॥
वसुपौष्णादितौ पुष्यवाजिभानि शुभानि तु ।
रिक्ता पर्व्वाष्टमीश्चैव क्षणे चाक्यत्रिकं विना ॥
शकुन्यादीनि विष्टिश्च वर्ज्या योगाः शुभेतराः ।
शुभानां वारवर्गाश्च राशयश्च धनुर्विना ॥
श्रेष्ठा नेष्टास्तथाशेषा मकरो मध्यमो भवेत् ।
लग्ने सर्व्वे शुभाः श्रेष्ठास्तथा केन्द्रत्रिकोणयोः ।
चन्द्रः शुभप्रदो ज्ञेयो द्वादशाष्टमभाद्विना ॥
पापास्त्रिलाभषष्ठस्थाः शुभा वस्त्रादिधारणे ।
उच्चमित्रस्ववर्गेषु(ष्ट) शुभे केन्द्रत्रिकोणगे(गैः) ॥
वस्त्रवाहनशस्त्रादिभूषणानि सुसम्पदः ।
सद्गुणस्थे निशानाथे कुर्य्यात्तच्छोभने दिने ॥
नद्यादिगमने चैव तथा देवादिदर्शने ।
शिशोर्लीलादि चान्यच्च वस्त्रधारणवद्भवेत् ॥

इति तत्तत्कर्म्मणि मुहूर्त्तशुद्धिर्ज्ञेया ।
इदन्तु प्रत्यब्दं कार्य्यमित्याह गर्गः यथा ।

यस्मिन् दिने सवितरि तन्नक्षत्रदिनं भवेत् ।
प्रत्यब्दान्ते च नक्षत्रे विधिं वक्ष्ये नृणां परम् ॥

येनायुर्वर्द्धते नित्यं बलं तेजः सुखं सदा ।
पूर्व्वं जन्मदिनाद्रात्रौ कृत्वा कौतुकबन्धनम् ॥
कृत्वा शान्त्युदकञ्चैव बालन्तेनाभिषेचयेत् ।
ग्रहशान्तिं समाप्यैवं नक्षत्राधिपपूजनम् ॥
आयुष्यहोमं कृत्वा च दिगीशानर्च्चयेद्बुधः ।
देवांश्च वैदिकान् विप्रान् गुरून् बन्धून् सुहृज्जनान् ॥
प्रणम्य पूजयेद्विद्वान् गन्धमाल्यानुलेपनैः ।
नवाम्बरधरो भूत्वा शुक्लस्रग्वस्त्रभूषणः ॥
गुरुप्रणामं कृत्वा च राजा तु महिषीसखः ।

राजेत्युपलक्षणं तेन अन्येनापि कर्त्तव्यम् आयुष्यत्वात् ।

निगडेभ्यो विमुच्याथ* मनुजान्निगडस्थितान् ॥
अन्यानि पुण्यकर्म्माणि प्रकुर्व्वीत यथाविधि ।
पापं कर्म्म न कुर्व्वीत यस्माच्छतगुणं भवेत् ॥ इति ।

शाक्तेऽपि ।

प्रतिसंवत्सरं तार्क्ष्य वक्ष्ये नृणां विधिम्परम् ।
पूर्व्वाह्ने चैव जन्मर्क्षे स्नात्वा नद्यां नरोत्तमः ॥
मध्वाज्यदधिसंयुक्ता दूर्वा मृत्युञ्जयेन च[1] ।
जुहुयाच्च सहस्रं वा अष्टाविंशतिमेव वा ॥
ततोऽपराह्ने सम्प्राप्ते कुर्य्यात्कौतुकबन्धनम् ॥ इत्यादि ।

---

* विमुच्याथ इति ख पुस्तके पाठः ।

[1] मृत्युञ्जयेन मृत्युञ्जयमन्त्रेण ४०७ पृष्ठे प्रदर्शितेन ।

विष्णुधर्म्मोत्तरे तु पुष्करं प्रत्याह परशुरामः ।

स्नानमन्त्रसमाचक्ष्व भगवन् पुष्टिवर्द्धनम् ।
न तृप्तिमधिगच्छामि तव वाक्यामृतं पिबन् ॥

पुष्कर उवाच ।

जन्मनक्षत्रगे सोम्ये सर्व्वौषधिसमन्वितम् ।
कुम्भं तु पूजितं कृत्वा स्नपनञ्चैव कारयेत् ॥
स्नातश्चैवार्च्चयेद्देवं वासुदेवं जगत्पतिम् ।
नक्षत्रदैवतं चन्द्रं नक्षत्रं वरुणं तथा ॥
वाहनायुधपीठाद्यं क्रमं सम्पूजयेत्तथा ।
यथोक्तदेवतालिङ्गैर्मन्त्रैश्च जुहुयाद्दृतम् ॥
शक्त्या च दक्षिणा देया ब्राह्मणेभ्यो भृगूत्तम ।
ततोऽनुलिप्तः सुरभिः स्रग्वी विविधभूषणः ॥
तिष्ठेन्मनुजशार्दूल हविष्याशी जितेन्द्रियः ।
उपवासं विनाप्येतत्स्नानं पुष्टिप्रदं नृणाम् ॥
अलक्ष्मीशमनं धन्यं कलिदुःस्वप्ननाशनम् ।
सर्व्वव्याधिहरं पुण्यं पवित्रं पापनाशनम् ॥
मातृस्थानश्च जगतां जन्मतारा विधीयते ।
चन्द्ररूपी च भगवान् पिता विष्णुः प्रकीर्त्तितः ॥
तस्मात्सर्व्वप्रयत्नेन जन्मनक्षत्रसंस्थितम् ॥
भक्त्या सम्पूजयेच्चन्द्रं जन्मर्क्षञ्च विशेषतः ॥

पूजां सदा चन्द्रमसस्तु कृत्वा
जन्मर्क्षसंस्थस्य भृगुप्रधान ।

कामानवाप्नोति नरस्तु सर्व्वान्
सुखी तदा स्याद्भुवि नष्टपापः ॥ इति ।

सायनीयेऽपि अब्दपूर्त्तिविधिं प्रकृत्योक्तम् ।

आबध्य कटिसूत्रञ्च वासः संगृह्य नूतनम् ।
दूर्व्वाङ्कुरैरथाज्येन चरुणा वा पिनाकिनम् ॥
आयुष्यहोमं कृत्वा च तर्पयेत्पितृदेवताः ॥ इति ।

अथ कटिसूत्रबन्धनं गृहिव्यतिरिक्तविषयम् ।

यत्किञ्चित्कुरुते कर्म्म वैदिकञ्चाथ तान्त्रिकम् ।
कटिबन्धेन संयुक्तं तत्सर्व्वं निष्फलं भवेत् ॥
रौप्यं कार्पासकं हैमं पट्टसूत्रकृतन्तु वा ।
वर्ज्जयेत्कर्म्मकालेषु काञ्चीं विप्रो विशेषतः ॥

इति गृहस्थधर्म्मप्रकरणे आश्वलायनेन तन्निषेधात् ।

कौपीनाच्छादनार्थाय मौञ्जीं कार्पासकीं द्विज ।
अन्तरे त्रिवृतां तावद्वाससी चाहते पुनः ॥

इति आश्वलायनेनैव ब्रह्मचारिणः कटिसूत्रविधानाच्च । न चेयं मेखलेति मन्तव्यं तस्याः पृथगुपादानात् ।

आयुष्यहोमस्तु शौनकीये ।

आयुष्यहोमं वक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
कुर्य्यान्निजजन्मर्क्षे विषुवे संक्रमेऽपि वा ॥
पौर्णमास्याममावास्यां ग्रहणे चन्द्रसूर्य्ययोः ।
स्नातः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ॥
अलङ्कृतः स्वस्ति वाच्य अर्घं दद्याद्द्विजातये ।

अथाज्यभागपर्य्यन्तं कृत्वोपलेपनादिकम् ॥
कृतार्थं जुहुयात्सम्यगवदानस्य सम्पदा ।
आ नो भद्रा: क्रतव इत्यृचां दशकेन तु* ॥
इमं स्तोममर्हत इत्यृचां षोड़शकेन च† ।

---

* आ नो भद्रा: क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिद: ।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ (१म. ८९सू. १ऋक् ।)
देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्त्तताम् ।
देवानां सख्यमुपसेदिमा वयं देवा न आयु: प्रतिरन्तु जीवसे ॥ २ ॥
तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
अर्यमणं वरुणं सोममश्विना सरस्वती न: सुभगा मयस्करत् ॥ ३ ॥
तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौ: ।
तद्ग्रावाण: सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥
तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्ध: स्वस्तये ॥ ५ ॥
स्वस्ति न इन्द्रो वृद्धश्रवा: स्वस्ति न: पूषा विश्ववेदा: ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमि: स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥
पृषदश्वा मरुत: पृश्निमातर: शुभंयावानो विदथेषु जग्मय: ।
अग्निजिह्वा मनव: सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ ७ ॥
भद्रं कर्णेभि: शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्रा: ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायु: ॥ ८ ॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तो: ॥ ९ ॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्र: ।
विश्वे देवा अदिति: पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥ (१म. ८९सू. १०ऋक् ।)

† इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।

यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्य्यम् ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥ २ ॥
शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
त्वमादित्याँ आवह तान् ह्युश्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ ३ ॥
भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणा पर्वणा वयम् ।
जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥ ४ ॥
विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः ।
चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥ ५ ॥
त्वमध्वर्य्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः ।
विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ६ ॥
यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन् तळिदिवाति रोचसे ।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७ ॥
पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः ।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८ ॥
वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥ ९ ॥
यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः ।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥ १० ॥
अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् ।
सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥ ११ ॥
अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः ।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥ १२ ॥
देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे ।
शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥ १३ ॥
तत्ते भद्रं यत् समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः ।
दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥ १४ ॥

एकया जातवेदस्या* कुर्य्यात्स्विष्टकृतं ततः ॥
होमशेषं समाप्याथ ब्राह्मणान् भोजयेत्ततः ।
स्वस्ति वाच्यं द्विजाग्र्यांस्तैर्धेनुं दद्याच्च दक्षिणाम् ॥

इति शौनकीये आयुष्यहोमविधिः ।

अथैतेषां वचनानामेकवाक्यतया प्रयोगः ।

अथ कर्त्ता पूर्व्वाह्ने अभ्यज्य स्नात्वा शान्तिप्रकरणोक्तसर्व्वौ-
षधियुतमुदकुम्भं सम्पूज्य तदुदकेन स्नात्वा शुक्लाम्बरधरः सु-
वर्णादिकटिसूत्रमाबध्य विधिवत्स्वस्ति वाच्य† कौतुकमाबध्य
ाहयज्ञपूर्व्वकं दूर्व्वाहोममायुष्यहोमं तन्त्रेण करिष्ये इति सङ्कल्प्य
ाग्निं प्रतिष्ठाप्य ग्रहानभ्यर्च्य अन्वाधानं कुर्य्यात् ।

तद्यथा देशादि सङ्कीर्त्य अस्मिन् दूर्व्वायुष्यहोमे देवतापरि-
ग्रहार्थमन्वाधानं करिष्ये इत्युक्त्वा अस्मिन्नन्वाहिते अग्नावित्यादि
चक्षुषी आज्येन इत्यन्तमुक्त्वा अत्र प्रधानं मृत्युञ्जयमष्टोत्तरशतं
दूर्व्वाद्रव्येण तथा विश्वान् देवान् दशकृत्वः अग्निं षोड़शकृत्वः
जातवेदोऽग्निमेकवारं चरुद्रव्येण शेषेण स्विष्टकृतमित्याद्याज्य-

यस्मै त्वं सुकृते जातवेदस्त्वं लोकमग्ने कृणवः स्योनम् ।
... [footnote lines as printed below]

भागान्तं कृत्वा ग्रहान् हुत्वा दधिमधुघृताक्तदूर्वाङ्कुरं गृहीत्वा त्र्यम्बकं वसिष्ठो मृत्युञ्जयस्त्र्यम्बकोऽनुष्टुप् ॐ जूं इत्यन्तेन मन्त्रेण अष्टोत्तरशतमष्टाविंशतिं वा हुत्वा चरुहोमं कुर्य्यात् ।

आ नो भद्रा इति दशर्चस्य सूक्तस्य गौतम ऋषिर्विश्वेदेवा-देवता आदितः पञ्च सप्तमी च जगत्यः षष्ठी विराट्स्थाना अष्ट-म्याद्यास्तिस्रस्त्रिष्टुभः प्रधानहोमे विनियोगः। इति प्रत्यृचं होमः।

इमं स्तोममिति षोडशर्चस्य सूक्तस्य आङ्गिरसः कुत्सोऽग्नि-रादितश्चतुर्दश जगत्यः अन्त्ये द्वे त्रिष्टुभौ देवदेवत्याः प्रधानहोमे विनियोगः। इति प्रत्यृचं होमः।

जातवेदसे इत्यस्य मारीचः काश्यप ऋषिर्जातवेदोऽग्नि-र्देवता त्रिष्टुप् छन्दः होमे विनियोगः।

एवं सप्तविंशतिमन्त्रैस्तावतीराहुतीर्हुत्वा स्विष्टकृदादिहोम-शेषं समाप्य वासुदेवं नक्षत्रदेवतां चन्द्रं सनक्षत्रं वरुणञ्च षोड-शोपचारैरभ्यर्च्य तत्प्रकाशकैर्मन्त्रैराज्याहुतीर्जुहुयात् ।

ततो नवघटकलशोदकेनाभिषिक्तो यथाशक्ति गोभूहिर-ण्यादिकं दत्त्वा देवगुरुब्राह्मणसुहृद्बन्धुयुतोऽश्ववारणायुधपीठ-च्छत्रसुवर्णपूजां कृत्वा ब्राह्मणान् भोजयित्वा गन्धादिभिरलङ्कृतो धृतभूषणो धृतपुष्पमाल्यो नूतनवस्त्रं धृत्वा पतिपुत्रवतीभिः स्त्रीभिर्नीराजितो ब्राह्मवेश्म चाशिषः श्रुत्वा स्वयं हविष्याशी जितेन्द्रियो वर्त्तेत। अत्र वा सुवर्णादिनिर्म्मितकटिसूत्रधारणं कर्त्तव्यम् ।

इति विधानपारिजाते भुन्दपूर्त्तिविधानम् ।

लुप्तजातके तु प्रकारान्तरेणोक्तम् । यथा ।

सम्प्राप्ते द्वादशे मासि विधानान्तरमादिशेत् ।
सुदृढाः कारयेत्स्थूलाः सुशुभा वंशपेटिकाः ॥
निधाय मोदकादीनि ताम्बूलादीनि सर्व्वशः ।
आच्छाद्य नूतनैर्वस्त्रैः पूर्णा द्वादश पेटिकाः ॥
जीवत्प्रजासु नारीषु भक्त्या सम्प्रतिपादयेत् ।
प्रत्यब्दमेवं कुर्य्याच्च वर्षवर्द्धनमुत्तमम् ॥
सन्ततेः क्षेमहेतवे जननी स्वयमेव वा ।
अब्दानां षष्टिर्यावच्च सम्प्राप्ते अयनद्वये ॥
स्नात्वा शुभेन तैलेन पूजयेदमराधिपम् ।
ब्राह्मणान् भोजयेद्भक्त्या* तेनारोग्यमवाप्नुयात् ॥ इति ।

अथ मार्कण्डेयपूजनमपि केचिदिच्छन्ति । तदुक्तं प्रकीर्णके ।

प्रतिसंवत्सरं कुर्य्यान्मार्कण्डेयस्य पूजनम् ।
गन्धपुष्पादिनैवेद्यैरेव पुष्पाञ्जलिं ददेत् ॥

तत्र मन्त्रः ।

आयुष्प्रद महाभाग सोमवंशसमुद्भव ।
महातपो मुनिश्रेष्ठ मार्कण्डेय नमोऽस्तु ते ॥
इति पुष्पाञ्जलिं दत्त्वा प्रार्थयेदरमुत्तमम् ।
मार्कण्डेयवत् तुभ्यं कामर्द्धिं चिरजीविनि ॥

---

* स्नात्वा सम्यक् यथाविधि क-पुस्तके पाठः ।

मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ।
आयुरारोग्य*सिद्ध्यर्थमस्माकं वरदो भव ॥ इति ।
नराणामायुरारोग्यैश्वर्य्यसौख्यैः सुखप्रद ।
सौम्यमूर्त्ते नमस्तुभ्यं भृगुवंशवराय च ॥
महातपो मुनिश्रेष्ठ सप्तकल्पान्तजीवन ।
मार्कण्डेय नमस्तुभ्यं दीर्घायुष्यं प्रयच्छ मे ॥
मार्कण्डेय महाभाग प्रार्थये त्वां कृताञ्जलिः ।
चिरजीवी यथा त्वं भो भविष्येऽहं† तथा मुने ॥
मार्कण्डेयादरं लब्ध्वा द्रौण्यादीन् संस्मरेत्ततः ।
अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
अन्याश्च देवताश्चैव सम्पूज्य तदहर्नरः ।
ब्राह्मणेभ्यस्ततो दद्यात्तिलान् धान्यं ततो घृतम् ।
पातव्यश्च ततः क्षीरमायुर्वृद्धिकरं परम् ॥

तत्पानमन्त्रो यथा ।

अञ्जल्यर्द्धमितं क्षीरं सतिलं गुड़मिश्रितम् ।
मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे ॥
नीराजितो ब्राह्मणांश्च तोषयेद्भोजनादिभिः ॥

इति विधानपारिजाते वर्षवर्द्धापनविधानम् ।

---

* आरोग्येत्यत्र इष्टार्थेति लिखितस्थ पाठः ।

† भविष्येऽहमित्यत्र भविष्यामीति क पुस्तके पाठः ।

## अथ चूड़ाकरणम् ।

तत्र मनुः ।

चूड़ाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः ।
प्रथमेऽब्दे तृतीये वा* कर्त्तव्यं श्रुतिचोदनात् ॥

यमस्तु ।

ततः संवत्सरे पूर्णे चूड़ाकर्म्म विधीयते ।
द्वितीये वा तृतीये वा कर्त्तव्यं श्रुतिचोदनात्† ॥
शिशोर्मातरि गर्भिण्यां चूड़ाकर्म्म न कारयेत् ।
पञ्चमाब्दादथोर्द्धन्तु गर्भिण्यामपि कारयेत् ॥

गर्भिण्यामपि पञ्चममासपर्य्यन्तं न दोष इत्युक्तं गर्गेण ।

पञ्चममासादूर्द्धन्तु मातुर्गर्भस्य जायते ।

त्युरिति शेषः ।

मध्ये शिरसि चूड़ा स्याद्वसिष्ठानान्तु दक्षिणे ।
उभयोः पार्श्वयोरत्रि-कश्यपानां शिखा मता ।
सच्छूद्रस्य शिखा कार्य्या कुलधर्म्मानुसारतः ॥
स्त्रीशूद्रौ तु शिखाञ्छित्त्वा क्रोधाद्वैराग्यतोऽपि वा ।

---

* नात्र प्रथमाब्दस्य प्राधान्यं किन्तु तृतीयाब्दस्य —

"चूड़ाकार्य्यं तृतीयाब्दे सर्व्वगृह्यादिसम्मतः ।
तत्कालेऽशौचदग्धेषु सुप्त्वा ऽप्यवगम्यते ॥" इति वचनात् ।

† श्रुतिचोदनादिति ज्योतिस्तत्त्वे पाठः ।

प्राजापत्यं प्रकुर्य्यातां नान्यथा निष्कृतिस्तयोः* ॥
यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं यदि ।
सहोपनीत्या कुर्य्याच्चेत्तदा दोषो न विद्यते ॥

लिङ्गात्तु ।

निवृत्ते चौलहोमे तु प्राङ्नामकरणात्तथा ।
चरेत्सान्तपनं भुक्त्वा जातकर्म्मणि चैव हि ॥
अतोऽन्येषु तु संस्कारेषूपवासेन शुध्यति ॥

आश्वलायनकारिकापि ।

तृतीये वत्सरे चौलं प्रकुर्व्वीतोत्तरायणे† ।
शुक्लपक्षे शुभर्क्षे तु कृत्वाभ्युदयिकं तथा ॥
यथान्वयं वा केषाञ्चिदुपनीत्या सहेष्यते ॥

इत्यादिकालशुद्धिं ज्ञात्वा स्वस्वसूत्रोक्तप्रकारेण चूडाकर्म्म कार्य्यम् ।

दक्षोऽपि ।

षष्ठ्यष्टमी पञ्चदशी उभे पक्षे चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
मेषसिंहतुलाकर्कि-वृश्चिकेतरलग्नके ।
श्रवणादित्रयस्वाती-चित्रापुष्याश्विचन्द्रभे ॥
आदित्यरेवतीहस्ता ज्येष्ठामूले च चौडकम् ॥
पौष्णाश्विपुष्यवसुवासववासुदेव-
ब्रह्मार्कचन्द्रवरुणादितिचित्रभेषु ।

---

* प्राजापत्यं प्रकुर्य्याच्चेत्तदा दोषो न विद्यते इति ग पुस्तके पाठः ।

† कुर्व्वीतास्योत्तरायणे इति ग पुस्तके पाठः ।

वारेषु सोमबुधवाक्पतिभार्गवाणां
क्षौरं करोति कुशलं खलु मानवानाम्॥

अन्यत्रापि।

सूर्य्ये दक्षिणमार्गगामिनि हरौ सुप्ते विरंशे रवौ
क्षोणि शीतरुचौ महीजयमयोर्वारे निशासन्ध्ययोः।
भुक्तेऽभ्यक्ततनौ निषिद्धसमयेऽलङ्कारयुक्ते शिशौ
क्षौराद्रोगभयं वदन्ति यवना मृत्युं तथान्ये जगुः॥

राजमार्त्तण्डे।

मानं हरेत्क्षौरमिहायुषोऽर्कः
शनैश्वरः पञ्च कुजस्तथाष्टौ।
आचार्य्यभृग्विन्दुबुधाः क्रमेण
दद्युर्दशैकादशसप्तपञ्च॥

गर्गोऽपि।

जन्मर्क्षे जन्ममासे च युग्मे मासे च वत्सरे।
न कुर्य्यात्प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः॥

अन्यत्रापि।

मानं क्षौरे हन्ति गुरुः शुक्रं शुक्रो धनं रविः।
आयुरङ्गारको हन्ति सर्व्वं हन्ति शनैश्वरः॥

केशवमानन्तपुरं पाटलिपुत्रं पुरीमहिच्छत्राम्।
दितिमदितिञ्च स्मरतां क्षौरविधौ भवति कल्याणम्॥

इति चूड़ाकर्म्मविधानम्।

अथ अक्षरस्वीकारविधानम् ।

तत्कालमाह नृसिंहः ।

अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने ।
उत्तरायणगे सूर्य्ये कुम्भमासं विवर्ज्जयेत् ॥

अथ नक्षत्राणि ।

हस्तादित्यमरुन्मित्र रौद्रपौष्णाश्विचित्रभम् ।
श्रवणञ्च प्रशस्तं स्यादक्षरग्रहणे शिशोः ॥

श्रीधरः ।

हस्तादित्यसमीरमित्रपुरुजित्पौष्णाश्विचित्राच्युते
धाराकंशदिनोदयादिरहिते राशौ स्थिरे चोभये ।
पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं
षष्ठीमष्टमशुद्धभाजि भवने प्रोक्ताक्षरस्वीकृतिः ॥

तदितिकर्त्तव्यतामाह विष्णुधर्मोत्तरे परशुरामं प्रति पुष्करः ।

प्राप्तेऽथ पञ्चमे वर्षे त्वप्रसुप्ते जनार्द्दने ।
षष्ठीं प्रतिपदञ्चैव वर्ज्जयित्वा तथाष्टमीम् ॥

चूडा माघादिषट्के लघुचरमृदुभे मैत्रश्रोणे समङ्के
मानंशे सत्सु केन्द्रेष्वशुभगणगतैर्हरिगैर्विष्णुबोधे ।
नो रिक्ताष्टषष्ठाम्यतिथिषु न यमाराहयुग्माब्दमासे
नो जन्मर्क्षेन्दुमासे विघटकुजशशीनर्क्षलग्नेऽर्कशुद्धौ ॥

इति च दीपिकायाम् ।

रिक्तां पञ्चदशीञ्चैव सौरभौमदिने तथा ।

एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीञ्चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वविद्याश्च विशेषतः ॥

सूत्रकाराः पाणिन्यादयः । विद्याश्च पाणिनिव्याकरणादयः ।

एतेषामेव देवानां नाम्ना तु जुहुयाद्घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यञ्चाभ पूजनम् ॥
प्राङ्मुखो गुरुरासीनो वारुण्यभिमुखं शिशुम् ।
अध्यापयेत्तु प्रथमं द्विजाशीर्भिः सुपूजितम् ॥
ब्राह्मणानां गुरूणाञ्च देवतानामनन्तरम् ।
ततः सम्पूज्य वित्तेन धात्रीं राम गुरुंस्तथा ॥
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यं तर्पणं तथा ।
ततः प्रभृत्यनध्यायान् वर्ज्जनीयान् विवर्ज्जयेत् ॥
अष्टमीद्वितयं राम पक्षान्ते च दिनद्वयम् ।
आशौचे चेन्द्रयात्रायां भूकम्पे राहुदर्शने ॥
व्यतीपाते त्वहोरात्रमुल्कापाते तथैव च ।
अकालस्तनिते चैव निर्घातेऽपि तथाम्बरे ॥
तथाकाले प्रचण्डश्च यदा वायुस्तदा भवेत् ।
प्रदोषे चाथ संयुद्धे (संशुद्धे) चैत्यद्रुमे चतुष्पथे ॥
गोस्थाने कुञ्जरे चाश्वे न चेत्यपि तथा पठेत् ।
श्वसृगालरवैर्घोरैस्तथाच खरनिस्वनैः ॥
तथा वादित्रशब्दे च प्रवृत्ते नगरोत्सवे ।

रुधिरे च स्रुते गात्रात् अश्लेष च परिस्रुते* ॥
कालेषु दैवेषु मयोदितेषु†
पठन्ति ये राम न तेषु विद्या ।

अन्यत्रापि ।

विद्यारम्भः सुरगुरुसितश्रेष्ठभीष्टार्थदायी
कर्त्तुश्चायुश्चिरमपि करोत्यंशुमान् मध्यमोऽत्र ।
नीहारांशौ भवति जड़ता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्त्तयन्त्येवमाद्याः ॥
लघुचरशिवमूलाधोमुखत्वष्टृपौष्ण-
श्रविषु च हरिबोधे शुक्रजीवार्कवारे ।
उदितवति च जीवे केन्द्रकोणेषु सौम्यै-
रपठनदिनवर्ज्यं पाठयेत्पञ्चमेऽब्दे ॥
प्रागल्भ्यहीनस्य नरस्य विद्या
शस्त्रं यथा कापुरुषस्य हस्ते ।
न तृप्तिमुत्पादयते शरीरे
अन्धस्य दारा इव दर्शनीयाः ॥
इति बालकस्य अक्षरस्वीकृतिविधानम् ।

---

* रुधिरस्रवं विना अश्लेषा जन्ममात्रेऽपि इति ज्योतिस्तत्त्वम् ।

† उदितेषु दृष्टतरेष्वर्थः ।

अथेदानीं प्रसङ्गादनुपनीतधर्म्माः कथ्यन्ते ।

तथाच स्मृतिचन्द्रिकायां गौतमः ।

प्रागुपनयनात्कामचार-कामवाद कामभक्षा इति ।

कामचारः स्वेच्छागतिः । कामवादोऽश्लीलादिभाषणम् । काम-
क्ष: पर्य्युषितान्नादिभोजनम् । एतेषु क्रियमाणेषु उपनयनात्
ाङ्न दोष इति भाव: ।

एतन्महापातकव्यतिरिक्तविषयम् । तथाच स्मृत्यन्तरम् ।

स्यात्कामचारभक्षोक्तिर्महत: पातकाद्दते ।

ाहापातके तु प्राप्ते पित्रादिभिः प्रायश्चित्तं कार्य्यम् ।

तथाचोक्तं पाराशरेण ।

अनुपनीतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि ।

तस्य कृच्छ्रत्रयं कार्य्यं पिता भ्रातापि वा तथा ॥ इति ।

अन्यत्र ।

वैश्वदेवं पुरोडाशमग्निमध्ये च यद्धुतम् ।

प्रमादाच्छिशुराश्नन् माता रक्ष: प्रयत्नत: ॥

इदं त्वतिबालविषयम् । तदाचारविषये वशिष्ठः ।

न ह्यस्य विद्यते कर्म्म किञ्चिदामौञ्जिबन्धनात् ।

वृत्त्या शूद्रसमस्तावद्यावद्वेदे न जायते ॥ इति ।

गौतमोऽपि ।

यथोपपादमूत्रपुरि(पुरी)षो भवति न तस्याचमनकल्पो

विद्यते न तस्य उदङ्मुखो दिवा दक्षिणामुखो रात्रा-

अस्पृश्यस्पर्शने चापस्तम्ब आह ।

आन्नप्राशनादशुचितो भवत्यावत्सरादित्येके ।

गौतमोऽपि ।

न तदुपस्पर्शनादाशौचमिति ।

तस्य अनुपनीतस्य उदक्यादिस्पृष्टस्यापि स्पर्शेन स्नानमिति हरदत्तः ।

स्मृतिदीपिकायान्तु ।

शिशोरभ्युक्षणम्प्रोक्तं बालस्याचमनं स्मृतम् ।

रजस्वलादिसंस्पर्शे स्नानमेव कुमारके ॥

तेषां लक्षणान्यपि तत्रैवोक्तानि । यथा ।

प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।

कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥ इति ।

कृतशौचमपि नाग्निहोत्रादौ नियुञ्ज्यात् ।

तदाह गौतमः ।

न त्वेनमग्निहरणबलिहरणयोर्नियुञ्ज्यादिति ।

तस्य मन्त्रहीनत्वादित्यभिप्रायः ।

अन्यत्रापि ।

नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः ।

होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥ इति ।

न च मन्त्रान् ग्राहयित्वा नियोज्य इत्याह गौतमः ।

न ब्रह्माभिव्याहारयेदन्यत्र स्वधानिनयनादिति ।

मनुरपि ।

न ह्यस्मिन् विद्यते कर्म्म किञ्चिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ।
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥

स्वधानिनयनं श्राद्धं तच्च अनुपनीतेनापि कार्य्यं कर्त्रन्तराभावे ।

इत्यनुपनीतधर्म्माः ।

अथ बालपितृधर्म्माः ।

विष्णुधर्म्मोत्तरे परशुरामम्प्रति पुष्करः ।
अपथ्यन्न च बालानां तथा भार्गव पश्यताम् ।
प्रार्थितं बालकानाञ्च दातव्यं स्याद्धितं ततः ॥
बालानाम्प्रार्थितं दत्त्वा नाकलोके महीयते ।
बालकाश्चानुनेयाः स्युर्धर्म्मकामैः सदा नरैः ॥
तेषाम्भोज्यप्रदानेन गोदानफलमाप्नुयात् ।
तेषां क्रीड़नकं दत्त्वा मोदते नन्दने वने ॥
आह्लादयन्ति सततं यस्य पृष्ठे न बालकाः ।
दौर्भाग्यं महदाप्नोति यत्र यत्राभिजायते ॥
तस्मात्सर्व्वप्रयत्नेन बालानग्रे तु भोजयेत् ।
अभुक्तवत्सु बालेषु न चाश्नीयात्कदाचन ।
अन्नं दद्यान्न चाश्नीयात्कदाचिदपि च स्वयम् ॥ इति ।

इत्यनुपनीत-तत्पित्रादिधर्म्मविधानम् ।

## अथ उपनयनविधानम् ।

तच्च स्वस्वसूत्रोक्तप्रकारेण कार्य्यम् ।

तत्कालादिकमुच्यते याज्ञवल्क्येन ।

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥

सैके द्वादशे ।

काम्योपनयनकालमाह मनुः ।

ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे ॥

विष्णुः ।

षष्ठे तु धनकामस्य* विद्याकामस्य सप्तमे ।
अष्टमे सर्व्वकामस्य नवमे कान्ति†मिच्छतः ॥

आपस्तम्बसूत्रेऽपि ।

गर्भाष्टमेषु ब्राह्मणमुपनयीतेति ।

अत्र गर्भाष्टमेष्विति बहुवचननिर्द्देशो गर्भषष्ठसप्तमाष्टमवर्षप्राप्त्यर्थ इति सुदर्शनभाष्यकारः ।

आपस्तम्बः ।

अथ काम्यानि । सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं

---

* केचित्तु विप्रस्य षष्ठं न मन्यन्ते इति निर्णयसिन्धुः ।

† कान्तिमित्यत्र कीर्त्तिमिति निर्णयसिन्धौ पाठः ।

नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं द्वादशे पशुकाममुपनयेदिति ।

गौणकालमाह मनुः ।

आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥

ज्योतिर्निबन्धे गर्गः ।

अग्रजा बाहुजा वैश्याः स्वावधेरूर्द्ध्वमव्रताः ।
अकृतोपनयाः सर्व्वे वृषला एव ते स्मृताः ॥

विप्रं वसन्ते क्षितिपं निदाघे
वैश्यं घनान्ते व्रतिनं विदध्यात् ।
माघादिशुक्रान्तिकपञ्चमासाः
साधारणा वा सकलद्विजानाम् ॥

शुक्रो ज्यैष्ठः ।

हेमाद्रावपि ।

माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते ।

कालादर्शे ।

माघादिमासषट्के तु मेखलाबन्धनं मतम् ।
चूड़ाकरणमत्र श्रावणादौ विवर्ज्जयेत् ॥

बृहस्पतिः ।

अजचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥

बृहस्पतिः तु ।

न जन्मधिष्ण्ये न च जन्ममासे
न जन्मकालीनदिने विदध्यात् ।
ज्येष्ठे न मासि प्रथमस्य सूनो-
स्तथा सुताया अपि मङ्गलानि ॥

कुर्य्यादिति शेषः ।

गर्गोऽपि ।

ज्येष्ठे मासि विशेषेण सर्व्वज्येष्ठस्य चैव हि ।
सर्व्वज्येष्ठस्य पुत्रस्य जड़त्वं मृत्युमादिशेत् ॥

अत्र विशेषमाह राजमार्त्तण्डः ।

जातं दिनं दूषयते वशिष्ठो
ह्यष्टौ च गर्गो नियतं दशात्रिः ।
जातस्य पक्षं किल भागुरिश्च
शेषाः प्रशस्ताः खलु जन्ममासे ॥

अन्यत्रापि ।

जन्ममासे तिथौ भे च विपरीतदले सति ।
कार्य्यं मङ्गलमित्याहुर्गर्गभार्गवशौनका. ॥
जन्ममासनिषेधेऽपि दिनानि दश वर्ज्जयेत् ।
आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे ॥

ग्रन्थान्तरे च ।

व्रते जन्मत्रिकारिस्थो जीवोऽपीष्टोऽर्चनात्सकृत् ।
शुभोऽतिकाले तुर्य्याष्टव्ययस्थो द्विगुणार्चनात् ॥
अष्टमेनैव गुरोर्यस्य वर्षे प्राप्तेऽष्टमे यदि ।

चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ॥
जन्मभाद्दष्टमे सिंहे नीचे वा शत्रुभे गुरौ ।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥

नारदः ।

बालस्य बलहीनोऽपि शान्त्या जीवो बलप्रदः ।
यथोक्तवत्सरे कार्य्यमनुक्ते नोपनायनम् ॥ इति ।

गुरुशान्तिश्च तृतीयस्तवके वक्ष्यते ।

ज्योतिर्निबन्धे नृसिंहः ।

तृतीया पञ्चमी षष्ठी द्वितीया चापि सप्तमी ।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिता ॥
धर्म्मकामैः सिते पक्षे कृष्णे च प्रथमा तथा ।
शुक्लत्रयोदशीं केचिदिच्छन्ति मुनिसत्तमाः ॥

वशिष्ठोऽपि ।

नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।
मेखलाबन्धनं शस्तं चौले वेदव्रतेष्वपि ॥
प्रशस्ता प्रतिपत्कृष्णा न पूर्व्वापरसंयुता ।

एतदतीतकालस्यार्त्तस्य वटोरुपनयनविषयम् ।

प्रशस्ता प्रतिपत्कृष्णा कदाचिच्छुभगे विधौ ।
चन्द्रे बलयुते लग्ने वर्णानामपि लङ्घने ॥ इति व्यासोक्तेः ।

एवं सप्तम्यपि तस्या गलग्रहत्वोक्तेः ।

बृहस्पतिः ।

शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ।
मिथुने संस्थिते भानौ ज्यैष्ठमासो न दोषकृत् ॥

रत्नसङ्ग्रहे नारदः ।

विनर्त्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥

विनेत्यस्य वसन्ते गलग्रहो न दोषाय इत्यर्थः ।

गलग्रहमाह नारदः ।

त्रयोदशीचतुष्कञ्च सप्तम्यादित्रयं तथा ।
चतुर्थी चैव सम्प्रोक्ता अष्टावेते गलग्रहाः ॥

वशिष्ठः ।

पापांशकगते चन्द्रे अरिनीचगतेऽपि वा ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥

तथा ।

अनध्यायस्य पूर्व्वेद्युस्तस्य चैव परेऽहनि ।
व्रतबन्धं विसर्गञ्च विद्यारम्भं न कारयेत् ॥

राजमार्त्तण्डः ।

आरम्भानन्तरं यत्र प्रत्यारम्भो न सिध्यति ।
गर्गादिमुनयः सर्व्वे तमेवाहुर्गलग्रहम् ॥

ज्योतिर्निबन्धे ।

अष्टकासु च सर्व्वासु युगमन्वन्तरादिषु ।
अनध्यायं प्रकुर्व्वीत तथा सोपपदास्वपि ॥

तत्स्वरूपमाह स्मृत्यर्थसा(ग)रे ।

सिता ज्यैष्ठे द्वितीया च आश्विने दशमी सिता ।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥

एवम्प्रदोषदिनमपि वर्ज्यम् ।

तदाह गोभिलः ।

षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिका ।
प्रदोषमिह कुर्व्वीत तृतीया तूनयामिका* ॥

कुत्रचिद्युगादावदोषमाह ज्योतिर्निबन्धे व्यासः ।

या चैत्रवैशाखसिता तृतीया
माघस्य सप्तम्यपि फाल्गुनस्य ।
कृष्णे तृतीयोपनये प्रशस्ताः
प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥

गर्गः ।

ग्रहे रवीन्द्वोरवनिप्रकम्पे
केतूद्गमोल्कापतनादिदोषे ।
व्रतं दशाहानि वदन्ति तज्ज्ञा-
स्त्रयोदशाहानि वदन्ति केचित् ॥

सङ्कटे तु चण्डेश्वरः ।

दाहे दिशाञ्चैव धराप्रकम्पे
वज्रप्रपाते च विदारणे च ।
केतौ तथोल्कांशुकणप्रपाते
त्र्यहं न कुर्य्याद्व्रतमङ्गलानि ॥

* तृतीयाह्निका इति निर्णयसिन्धौ पाठः ।

स एव ।

वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्ययनेऽपि च ॥

तथा ।

भृगोरङ्गिरसो मौञ्ज्ये कर्त्तव्यं नोपनायनम् ।

नारदः ।

गुरुशुक्रबुधानान्तु वाराः श्रेष्ठतमा व्रते ।
मध्यमः सोमवारस्तु सूर्य्यवारस्तु मध्यमः ॥
वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यौ निशापतेः ।
अस्तङ्गतस्य सौम्यस्य वारौ वर्ज्यौ द्विजन्मनि ॥

मन्दः शनिः आरो मङ्गलः । द्विजन्मनि उपनयने ।

ज्योतिर्निबन्धे ।

सर्व्वेषां जीवशुक्रज्ञवाराः प्रोक्ता व्रते शुभाः ।
चन्द्रार्कौ मध्यमौ ज्ञेयौ सामबाहुजयोः कुजः ॥
शाखाधिपतिवारश्च शाखाधिपबलं तथा ।
शाखाधिपतिलग्नञ्च दुर्लभं त्रितयं व्रते* ॥

शाखाधिपाश्च रत्नसङ्ग्रहे ।

ऋगथर्व्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ।
जीवसितौ विप्राणां क्षत्रस्यारोऽर्कगू विशां चन्द्रः ॥ इति ।

बृहस्पतिः ।

---

* त्रयमेतत् सुदुर्लभमिति ख पुस्तके पाठः ।

बह्वृचानां गुरोर्वारे यजुर्वेदजुषां बुधे।
सामगानां धरासूनोरथर्व्वविदुषां रवेः॥

मेधभाष्याद्य स एव।

हस्तत्रये पुष्यधनिष्ठयोश्च
पौष्णाश्विसौम्यादितिविष्णुभेषु।
शस्ते तिथौ चन्द्रबलेन युक्ते
कार्य्यौं द्विजानां व्रतबन्धमोक्षौ॥

ज्योतिर्निबन्धे नारदः।

श्रेष्ठान्यर्कत्रयाश्व्येज्यचन्द्रादित्युत्तराणि च।
विष्णुत्रयाश्विमित्राजयोनिभान्युपनायने॥

बृहस्पतिः।

त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे।
त्वाष्ट्रे सौम्यपुनर्वस्वोरुत्तमं ह्युपनायनम्॥

ज्योतिर्निबन्धेऽपि।

पूर्व्वाहस्तत्रये सार्पश्रुतिमूलेषु बह्वृचाम्।
यजुषां पौष्णमैत्रार्कादित्यपुष्यस्तदुध्रुवैः॥
सामगानां हरीशार्कवसुपुष्योत्तराश्विभैः।
धनिष्ठादितिमैत्रार्केष्विन्दुपौष्णेष्वथर्वणाम्॥

राजमार्त्तण्डस्तु ब्राह्मणस्य पुनर्वसुं निषेधति।

ताराचन्द्रानुकूलेषु यद्यान्येषु शुभेष्वपि।
पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति॥

तत्रैव नारदः।

व्याघातं परिघं वज्रं व्यतीपातञ्च वैधृतिम् ।
गण्डातिगण्डौ शूलञ्च विष्कुम्भञ्चैव वर्जयेत् ।
शिष्टाष्टादशयोगेषु प्रशस्तमुपनायनम् ॥

अत्र विशेषमाह श्रीपतिः ।

सवैधृतिस्तु व्यतिपातनामा
सर्व्वोऽप्यनिष्टः परिघस्य चार्द्धम् ।
तिस्रस्तु योगे प्रथमे सवज्रे
व्याघातसंज्ञे नव पञ्च शूले ।
गण्डेऽतिगण्डे च षडेव नाड्यः
शुभेषु कार्य्येषु विवर्ज्जनीयाः ॥

गर्गः ।

ववादीनान्तु षट्कं स्यादुपनाये सुपूजितम् ।
शकुन्यादीनि विष्टिञ्च वर्ज्जयेत्तु विशेषतः ॥ इति ।

अत्र अन्यज्ञन्मशुद्व्यादिकं दैवज्ञेभ्योऽवगन्तव्यम् ।

तदाह नारदः ।

एवं सम्यग्विचार्य्यैव काले निर्द्दोषताकृते ।
दैवज्ञं सम्यगभ्यर्च्य वस्त्रैः कनकभूषणैः ।
कृतोपवीतः शिष्यः स्याद्दीर्घायुः सर्व्वयज्ञकृत् ॥ इति ।

लल्लः ।

व्रतेऽह्नि पूर्व्वसन्ध्यायां वारिदो यदि गर्ज्जति ।
तद्दिने स्यादनध्यायो व्रतं तत्र विवर्ज्जयेत् ॥

ज्योतिर्निबन्धे ।

नान्दीश्राद्धं कृतञ्चेत्स्यादनध्यायस्त्वकालिकः।
प्रदोषे नयनं कार्य्यं वेदारम्भं न कारयेत्॥

एतच्च आश्वलायनकात्यायनाद्यन्यविषयम्। तेषां तद्दिने वेदारम्भाभावात्। अत एषामुपनयनं तद्दिने न भवत्येव। एतच्च प्रातःस्तनिते। सायंस्तनिते तु पूर्व्वं चरुं श्रपयित्वा सायंसन्ध्योत्तरं होमं कुर्य्यात्।

न सन्ध्यागर्ज्जिते काले न वृष्ट्युत्पातदूषिते।
ब्रह्मौदनं पचेदग्नौ पक्वश्चेन्न निवर्त्तते॥

पूर्व्वं चरुश्रपणाभावे शान्तिरुक्ता नृसिंहप्रसादे।

ब्रह्मौदनविधेः पूर्व्वं प्रदोषे गर्ज्जितं यदि।
तदा विघ्नकरं ज्ञेयं वटोरध्ययनस्य तत्॥
तस्य शान्तिप्रकारन्तु वक्ष्ये शास्त्रानुसारतः।
प्रधानं पायसं साज्यं द्रव्यं शान्तियजौ* भवेत्॥
सूक्तं बृहस्पतेर्विद्वान् पठेत्सर्व्वाविघ्नक्षये।
गायत्री चैव मन्त्रः स्यात्प्रायश्चित्तन्तु सर्पिषा॥
धेनुं सवत्सकां दद्यादाचार्य्याय पयस्विनीम्।
ब्राह्मणान् भोजयेत्पश्चात्ततो ब्रह्मौदनञ्चरेत्॥ इति।

नेदं कात्यायनादेः तेषां ब्रह्मौदनाभावात्।

गर्गः।

ज्वरस्योत्पादनं यस्य लग्नं तस्य न कारयेत्।
दोषनिर्गमनात्पश्चात् स्वस्थो धर्म्मं समाचरेत्॥

---

* यजियोगः, शान्तियजौ शान्तियागे इत्यर्थः।

बृहस्पतिः ।

प्राप्तमभ्युदयश्राद्धं पुत्रसंस्कारकर्म्मणि ।

पत्नी रजस्वला चेत्स्यान्न कुर्य्यात्तत्पिता तदा ॥

पितेति कर्त्तृमात्रोपलक्षणम् ।

सङ्कटे तु वाक्यसारे ।

चलामि सुमुहूर्त्तस्य रजोदोषे ह्युपस्थिते ।

श्रियं सम्पूज्य विधिवत्ततो मङ्गलमाचरेत् ॥

अत्र शान्तिविशेषस्तृतीयस्तबके वक्ष्यते ।

पूर्व्वसंस्कारातिपत्तौ तु मण्डनः ।

कालातीतेषु कार्य्येषु प्राप्तवत्स्वपरेष्वपि ।

कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ॥

तत्र सर्व्वकर्म्मणां तन्त्रेण नान्दीश्राद्धं कुर्य्यात् देशकालकर्त्रैक्यात् ।

गणशः क्रियमाणानां मातॄणां पूजनं सकृत् ।

सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

इति कात्यायनोक्तेः ।

उपनीतिदिने मध्याह्नसन्ध्यामाह पारिजाते जैमिनिः ।

यावद्ब्रह्मोपदेशस्तु तावत्सन्ध्यादिकन्न च ।

ततो मध्याह्नसन्ध्यादि सर्व्वं कर्म्म समाचरेत् ॥

यत्तु ।

उपनाये तु कर्त्तव्यं सायंसन्ध्याद्युपासनम् ।

आरभेद्ब्रह्मयज्ञन्तु मध्याह्ने तु परेऽहनि ॥

इति वचनं तच्छाखान्तरविषयमिति पारिजातकृत् । विकल्प-मित्यन्ये ।

जैमिनिः ।

अनुपाकृतवेदस्य कर्त्तव्यो ब्रह्मयज्ञकः ।
वेदस्थाने तु सावित्री गृह्यते तत्समा यतः ॥

शौनकः ।

कुमारस्योपनयनं श्रुताभिजनवृत्तवान् ।
तपसा धूतनिःशेष-पाप्मा कुर्य्याद्द्विजोत्तमः ॥

व्यासोऽप्याह ।

वेदैकनिष्ठं धर्म्मज्ञं कुलीनं श्रोत्रियं शुचिम् ।
स्वशाखाज्ञमनालस्यं विप्रं कर्त्तारमीप्सति ॥ इति ।

श्रोत्रियलक्षणञ्च ब्राह्मे ।

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥ इति ।

वृद्धगार्ग्यः ।

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपनायेऽधिकारी स्यात्पूर्व्वाभावे परः परः ॥ इति ।

प्रयोगरत्ने ।

पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥

पितेति विप्रपरं न क्षत्रियादेः तेषां पुरोहित एव उपनयनस्य

दृष्टार्थत्वात् तेषामध्यापनेऽनधिकाराच्च। अत्र पितृव्यस्य ज्येष्ठ-भ्रातृभावेऽधिकारः।

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः।

इति याज्ञवल्क्योक्तेः। तेनेदमविभक्तपरं, पूर्व्वन्तु विभक्तपरम्।

अन्धमूकादीनां विशेषमाह प्रयोगपारिजाते।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः।
तस्माच्च अन्धबधिरकुब्जवामनपङ्गुषु॥
जडगद्गदरोगार्त्तशुष्काङ्गविकलाङ्गिषु।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये॥
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम्।
मत्तोन्मत्तौ न संस्कार्य्याविति केचित्प्रचक्षते॥
कर्म्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः।
तदपत्यञ्च संस्कार्य्यमपरे त्वाहुरन्यथा॥
संस्कारमन्त्रहोमादीन् करोत्याचार्य्य एव तु।
उपनेयाश्च विधिवदाचार्य्यस्य समीपतः॥
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत्।
कन्यास्वीकरणादन्यत्सर्व्वं विप्रेण कारयेत्।
एवमेव द्विजैर्जातौ संस्कार्य्यौ कुण्डगोलकौ॥ इति।

अथोपनेया द्वादशविधा अपि पुत्राः।

तेषां लक्षणमाह याज्ञवल्क्यः।

औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥

गृहे प्रच्छन्न उत्पन्नो गूढ़जस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
माता पिता वा यं दद्यात्स पुत्रो दत्तको भवेत् ॥
क्रीतस्तु ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयङ्कृतः ।
दत्तात्मा तु स्वयंदत्तो गर्भविन्नः सहोढ़जः ।
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः ॥ इति ।

शङ्खः ।

एते द्वादश पुत्राश्च संस्कार्य्याः स्युर्द्विजातयः । इति ।

कलौ तु द्वावेव पुत्रौ ।

दत्तौरसेतरेषां न पुत्रत्वेन परिग्रहः । इति स्मृतेः ।

षण्डादीनामनुपनेयत्वं पूर्व्वमुक्तम् ।

एकमातृप्रसूतानां कन्ययोः पुत्रयोर्द्वयोः ।
सहोद्वाहं न कुर्व्वीत तथैव व्रतबन्धनम् ॥

पराशरः ।

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत् ॥

अथ संस्कारातिपत्तिप्रायश्चित्तमुच्यते ।

तत्र भृगुः ।

गर्भाद्यसंस्कृतस्यापि कर्त्तव्यस्योपनायनम् ।
प्रायश्चित्तन्तु पूर्व्वेषां नौपनायनिकस्य तु ।
श्रौतस्मार्त्ताधिकारी स्यान्नौपनायनिकं विना ॥ इति ।

प्रायश्चित्तप्रकारमाह शौनकः।

आरभ्याधानमा चौलात्कालेऽतीते तु कर्म्मणाम्।
व्याहृत्याज्यं सुसंस्कृत्य हुत्वा कर्म्म यथाक्रमम्॥
एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत्।
चूड़ाया अर्द्धकृच्छ्रं स्यादापदि त्वेवमीरितम्॥
अनापदि तु सर्व्वत्र द्विगुणं द्विगुणञ्चरेत्।
लुप्ते कर्म्मणि सर्व्वत्र प्रायश्चित्तं विधीयते॥
प्रायश्चित्ते कृते पश्चाल्लुप्तकर्म्म समाचरेत्।
प्रायश्चित्ते कृते पश्चादतीतमपि कर्म्म वै॥
कार्य्यमित्येक आचार्य्या नेत्यन्ये तु विपश्चितः।
त्वं नः* स त्वं न† इत्याभ्यामिमं मेति‡ तथा ऋचा॥
ये ते§ शतं वा य¶श्चाभ्यामुदुत्तम‖श्चाहुती:।

---

* त्वं नो अग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्वश्च वन्द्य।
त्राता तोकस्य तनये गवामस्यनिमेषᳬ रक्षमाणस्तव व्रते॥ (१४अ. १२म. यजुः।)

† स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।
अवयक्ष्व नो वरुणᳬ रराणो वीहि मृड़ीकं सुहवो न एधि॥ (२१अ. ४म. यजुः।)

‡ इमं मे वरुण श्रुधि हवमद्या च मृड़य।
त्वामवस्युराचके॥ (२१अ. १म. यजुः।)

§ ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव॥ (१४अ. २७म. यजुः।)

¶ शतं वा यः शुचीनां सहस्रं वा समाशिरां।
एदु निम्नं न रीयते॥ (१म. ३०सू. २ऋक्।)

‖ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमᳬ श्रथाय।
अथा वयमादित्यव्रते तवानागसो अदितये स्याम॥ (१२अ. १२म. यजु.।)

कृत्वा पृथक् पृथक् पादमर्द्धचौले समाचरेत्।
स्त्रीणामप्येवमेव स्यान्नातायाममन्त्रिका क्रिया॥ इति।

इति संस्कारातिपत्तिप्रायश्चित्तम्।

अथ यथाकालमाचरितेषु चौलान्तेष्वपि कर्मसु आचार्य्यकुमारयोरुपनेतृत्वोपनेयत्वाधिकारसिद्धार्थं प्रत्येकं कृच्छ्रत्रयमाचरितव्यमित्याह वृहद्विष्णुः।

कृच्छ्रत्रयञ्चोपनेता त्रीन् कृच्छ्रांश्च वटुश्चरेत्।

आचार्य्यस्य विशेष उच्यते तत्रैव।

सावित्रीमभ्यसेदग्निं पवित्राणि च संस्मरन्।
आचार्य्यो दशसाहस्रं सावित्रीं प्रजपेद्बुधः।
स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम्॥

अथास्य सङ्क्षेपेण प्रयोगः प्रतन्यते।

यथा आचार्य्य उपनयनदिनात् पूर्व्वेद्युर्वटुना सह कृतमङ्गलस्नानः प्राणानायम्य तिथ्यादि सङ्कीर्त्य मम कुमारस्य गर्भाधानादिचौलकर्म्मान्तानां संस्काराणां मध्ये यः संस्कारो नाचरितस्तत्कालातिपत्तिप्रायश्चित्तद्वारा श्रीपरमेश्वरप्रीत्यर्थं प्रायश्चित्तहोमं करिष्ये इति सङ्कल्प्य उपलेपादिपूर्णपात्रनिधानान्तं कृत्वा विधिवदाज्यं संस्कृत्य स्रुवसम्मार्जनादि कृत्वा अतीतकर्म्मसंख्ययाऽनादिष्टहोमं हुत्वा स्विष्टकृतं च हुत्वा चौलव्यतिरिक्तानां कर्म्मणां प्रमादादकरणे पादकृच्छ्रं बुद्धिपूर्व्वकाकरणे तु प्रत्येकमर्द्धकृच्छ्रं चौलस्यैककृच्छ्रञ्च वटुना कारयेत्।

असमर्थौ तु तत्प्रत्याम्नायत्वेन गोदानसहस्रतिलहोमदश-

सहस्रगायत्रीजपद्वादशब्राह्मणभोजनादिष्वन्यतमं प्रायश्चित्तं कारयित्वा अतीतानि जातकर्मादीनि कृत्वा उपनयनं कुर्य्यात्।

तथा उपनेतृपनेयौ प्रत्येकं कृच्छ्रत्रयं चरेताम्। आचार्य्यस्तु द्वादशसहस्रगायत्रीजपं कुर्य्यात्।

उपनयनकर्म्मणा सह चौलकर्म्मकरणपक्षे पूर्व्वेद्युः सङ्कल्पसमये कर्म्मद्वयं सङ्कीर्त्त्य युगपत् स्वस्तिवाचनमातृपूजननान्दीश्राद्धद्वयप्रधान् कृत्वा परेद्युः स्वसूत्रोक्तप्रकारेण चौलकर्म परिसमाप्य उपनयनं तत्र कुर्य्यात्।

इति श्रीविधानपारिजाते उपनयनोपयुक्तविचारः।

## अथ पुनरुपनयनविधानम्।

तत्र आश्वलायनकारिका।

वेदान्तरमधीत्यैव ऋग्वेदं ये त्वधीयते।
उपनीतिरियं तेषामलङ्करणवर्ज्जिता।
यद्वैतदुपनीतस्य प्रायश्चित्तं यदा भवेत्॥

एतत् पुनरुपनयनम्।

कृताकृतश्च वपनं मेधाजननमेव च*।

---

* अनिन्दितायां दिश्येकमूलं पलाशं कुशस्तम्बं वा पलाशापचारे प्रदक्षिणमुदकुम्भेन त्रिः परिषिञ्चन्तं वाचयति सुश्रवः सुश्रवा असि यथा त्वं सुश्रुवः सुश्रुवा अस्येवं मां सुश्रवः सुश्रवसं कुरु। यथा त्वं देवानां यज्ञस्य निधिपोऽस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति। इदं मेधाजननम् १।२२।१८ गृह्यसूत्रे।

मेधाजननसद्भावे व्रतचर्य्या भवेदिह ॥
अनुप्रवचनीयश्च तदभावे इयं न च।
परिदानं* न कार्य्यं स्यान्निमित्तानन्तरन्त्विदम् ॥
पूर्व्वस्यावाचयेत् स्थाने तत्सवितुर्वृणीमहे।† ।
भिक्षेतान्नं दिवा रात्रावाचार्य्यायात्मतुष्टये।
भणितोऽत्र विशेषोऽयं समानमितरद्भवेत् ॥ इति।

आश्वलायनगृह्यमपि।

अनुपेतपूर्व्वस्य अथोपेतपूर्व्वस्य कृताकृतं केशवपनं मेधाजननं वा निरुक्तं परिदानं कालश्च तत्सवितुर्वृणीमहे इति सावित्रीमिति।

काल उदगयनादिस्तन्नियमो नास्तीत्यर्थः। अथोपेतपूर्व्वस्येत्यत्र हरदत्तस्त्वेवं व्याचख्यौ। अथ अनन्तरं वेदान्तरे उपेतपूर्व्वो यत्मं वेदमध्येतुमिच्छति तस्योपनयने विशेषो वक्ष्यते। एवं प्रवचनं ज्ञापयति तेन प्रकारेण प्रतिवेदमुपनयनं कर्त्तव्यमिति। अन्ये तु सकृत्कृतमुपनयनं सर्व्ववेदार्थमिति मन्यन्ते।

यथाहापस्तम्बः।

सर्व्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणमिति।

शौनकोऽपि।

---

* कस्य ब्रह्मचार्य्यसि प्राणस्य ब्रह्मचार्य्यसि कस्त्वा कमुपनयते काय त्वा परिददामि इति। एतत् परिदानम् १।२०।७ गृह्यसूत्रे।

† तत्सवितुर्वृणीमहे वयं देवस्य भोजनम्।

यो वेदान्तरमध्येति तत्मूत्रविधिना ततः ।
कृतोपनयनोऽधीत्य तं वेदं सकलं द्विजः ॥
द्वितीयमिममृग्वेदमध्येतुमभिवाञ्छया ।
एतद्गृह्योक्तविधिना पुनरप्युपनीयते ॥
केशानां वपनं तस्य न क्रियेत क्रियेत वा ।
मेधाजननकर्म्मापि विज्ञेयञ्च कृताकृतम् ॥
कर्त्तव्यपक्षाश्रयणे मेधाजननकर्म्मणः ।
ब्रह्मौदनस्य होमः स्याच्चिरात्रादिव्रतं तथा ॥
कस्य ब्रह्मादिमन्त्रेण* परिदानं न चेष्यते ।
तत्रोदगयनादिश्च कालो नापेक्ष्यतेऽत्र तु ॥
तत्सवितुर्वृणीमहे वयमित्येवमादिका ।
ऋक्सावित्री परिग्राह्या यद्यदन्यत्कमीरितम् ॥
अस्योपनयने तत्तदलङ्कारविवर्ज्जितम् ।
इहापि सर्व्वं कुर्व्वीतेत्युपनीतः पुनर्भवेत् ॥ इति ।

अथ पुनरुपनयनस्य निमित्तान्तराण्युच्यन्ते ।

तत्र मनुः ।

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ इति ।

विष्णुरपि ।

विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु च सर्व्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते पुनः संस्कारान् कुर्य्यादिति ।

शातातपस्तु ।

लशुनं गृञ्जनं जग्ध्वा पलाण्डुञ्च तथा शुनाम् ।
उष्ट्रमानुषकेभाश्वरासभक्षीरभोजनात् ॥
उपनायं पुनः कुर्य्यात्तदा कृच्छ्रं चरेन्मुहुः ।
भूसुरो मद्यपाने च कृते गोभक्षणे तथा ।
तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुध्यति ॥

अन्यच्च ।

चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणञ्चरेत् ।
बुद्धिपूर्व्वन्तु कृच्छ्राब्दं पुनः संस्कारमर्हति ॥

यस्तु देशान्तरगतश्चिरकालान्मृतमात्रसम्भावः पुत्रादिना कृतप्रेतकार्य्यो यदि जीवन् समागच्छेत्तदा तस्य पुनरुपनयनविधिरुक्तः सङ्ग्रहे ।

जीवन् यदि समागच्छेद्घृतकुम्भे निमज्ज्य च ।
उद्धृत्य स्नापयित्वा*स्य जातकर्म्मादि कारयेत् ॥

स्मृतिचन्द्रिकायां बौधायनस्तु ।

सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ॥

प्रत्यन्तोऽन्त्यदेशः ।

हिमवत्कौशिकां(कीं) विन्ध्यां पारं पद्मस्य पश्चिमम् ।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति ॥

---

* स्नापयित्वा इत्यत्र स्नापयित्वेति निर्णयसिन्धौ पाठः ।

आदिपुराणे ।

सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम् ।
एतान्देशान् द्विजो गत्वा पुनः संस्कारमर्हति ॥

निबन्धसौमेतौ ।

कर्म्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात् पुनः संस्कारमर्हति ॥

हेमाद्रौ वृद्धगौतमः ।

खरमुष्ट्रञ्च महिषमनड्वाहमजन्तथा ।
वस्तमारुह्य मुखजः पुनः संस्कारमर्हति* ॥

मार्कण्डेयः ।

खरमारुह्य विप्रस्तु योजनं यदि गच्छति ।
ततस्तत्कृच्छ्रत्रयं प्रोक्तं शरीरस्य विशोधनम् ।
प्रायश्चित्तं प्रकुर्व्वीत घृतगर्भविधानतः ॥

मदनरत्ने तु स्नानमात्रमुक्तम् ।

पराशरस्तु ।

विण्मूत्रभक्षी शुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ।
पञ्चगव्यं प्रकुर्व्वीत स्नात्वा पीत्वा शुचिर्भवेत् ॥

प्राजापत्याचरणं पञ्चगव्यस्नानं पञ्चगव्यप्राशनञ्च पुनः संस्कारात् पूर्व्वमेव कार्य्यं प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यादिति विष्णुस्मृतेः ।

---

* कौशं चान्द्रं विनिर्दिश्येत् इति निर्णयसिन्धौ पाठः ।

तत्र विशेषमाह काश्यपः।

चीर्णप्रायश्चित्तः प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्राम्यपशूनां शब्दो न श्रूयते तस्मिन् देशे अग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य्य प्राक् प्रणीतेन विधिना पुनः संस्कारमर्हतीति।

पराशरः।

अजिनं मेखला दण्डो भैक्षचर्य्या व्रतानि च।
निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि॥ इति।

वपनमपि निवर्त्तते इत्याह विष्णुः।

सर्व्वेषु तेषु द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात् वपनदण्डमेखलाभैक्षचर्य्याव्रतानि पुनःसंस्कारकर्म्मणि वर्ज्जनीयानीति।

व्रतानि सौम्यप्राजापत्यादीनि महानाम्न्यादीनि वा।

इति विधानपारिजाते प्रयोगपारिजातोक्तं
पुनरुपनयनविधानम्।

अथ ब्रह्मचारिधर्म्माः।

तत्र मनुः।

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च॥

यमः।

मेखलामजिनं दण्डमुपवीतञ्च नित्यशः ।
कौपीनं कटिसूत्रञ्च ब्रह्मचारी तु धारयेत् ॥
अभ्यञ्जनं मेखलञ्चासध:शय्यां गुरोर्हितम् ।
आ समावर्त्तनात्कुर्यात्कृतोपनयनो द्विजः ॥

आश्वलायनः ।

त्रिवृता मेखला कार्य्या त्रिवारं स्वात्ममावृता ।
तिस्रस्तद्ग्रन्थयः कार्य्याः पञ्च वा सप्त वा पुनः ॥

प्रवरसंख्यानियम इति शिष्टाः । अत्र उपनीतेन उपाकरण-पर्य्यन्तं गायत्र्या ब्रह्मयज्ञः कार्य्य इत्याह आश्वलायनकारिका-कारः ।

उपाकरणपर्य्यन्तं गायत्र्या ब्रह्मयज्ञकम् । इति ।

आश्वलायनः ।

अञ्जनाभ्यञ्जनं क्षौरं गन्धपुष्पाक्षतान् व्रती ।
वर्ज्जयेत्पादुकां छत्रं पानोष्णीषरथादिकान् ॥
न ग्रथीतान्तरिक्षे तु नाशुची न परैः सह ।
न चासीत न नग्नश्च नालीकं बिभृयाद्व्रती ॥

नालीकं नालिकेरं कमण्डलुमित्यर्थः ।

मनसापि न चोल्लङ्घ्या गुरोराज्ञा कथञ्चन ।
गुरुवद्गुरुपत्नीषु तत्पुत्रादिषु सर्व्वदा ॥
प्रत्यक्षे वा परोक्षे वा चरेत्प्रथमाश्रमी ।
वेदोदितव्रतैरन्यान् व्रतान्सर्व्वान् सञ्चरेत् ॥
न स्नायात्सर्व्वतीर्थेषु न भुञ्जीयादितस्ततः ।

भैक्षमाहृत्य भुञ्जीयात्तायम्प्रातर्गुरौ वसन् ॥
तदाज्ञया निवसथं ध्यायीत च सदा शुचिः ।
व्रते नोपवसेज्जातु पित्रोः संस्थितयोर्ऋते ॥
देवर्षिपितृपूजाञ्च कुर्य्याद्वा गुर्व्वनुज्ञया ।
यज्ञियान् धारयेन्नित्यं दण्डाजिनकमण्डलून् ॥
यज्ञसूत्रपवित्रे च मेखलाञ्च गुरौ वसन् ।
छिन्नेष्वेतेषु संग्राह्य नवानन्यान् पुनर्द्विजः ॥
विधिना सुप्रशस्तेऽग्नौ छिन्नान् वाप्सु विनिक्षिपेत् ।
छिन्नेष्वेतेषु दुष्टेषु प्राङ्नान्यधारणात्त्यजेत् ।
त्यागात्प्राग्विभयादन्यत्प्रायश्चित्तीयते त्यजन् ॥

प्राङ्नान्यधारणादिति । अन्येषां नवानां धारणात् प्राक् पूर्व्वं न त्यजेदित्यर्थः ।

त्यक्तेताश्वरता येषां दिनमात्रं द्विजन्मनाम् ।
लक्षेण तेषां शुद्धिः स्यात्तान्यथा ब्रह्मचारिणाम् ॥
प्रमादाद्वाथवा स्वप्ने विसर्गे रेतसो द्विजः ।
व्रती शुध्यति लक्षेण चिरात्तोपोषणेन वा ॥
स्वेच्छया त्यजतो रेतो मैथुनं वा प्रकुर्व्वतः ।
प्राजापत्येन चीर्णेन जपेन च शुचिर्भवेत् ॥
भुक्त्वा तु सूतकाद्यन्नं मत्वा विप्रस्त्र्यहं चपेत् ।
अमत्यैकदिनं जप्त्वा तथा गर्भात्पुरोहितात् ॥
न शावसूतकस्त्वान्नं मातापित्रोर्मृते ऋते ।
व्रतिनश्चोत्सवाशौचः श्राद्धान्नञ्च न शस्यते ॥

न भक्षयेच्च ताम्बूलमथ मैथुनमेव च ।
वर्ज्जयेन्मधुनं लाजापूपकादींस्तथा व्रती ॥
चरित्वा चतुरो वेदांस्त्रीन् द्वौ चैकमथापि वा ।
तोषयेद्दक्षिणाभिस्तु गुरून् भक्त्या विचक्षणः ॥
धनात्पित्रादिसम्भूतात्समाहृत्याथवा परात् ।
राजन्याद्वा गुरुं सम्यक् तोषयेत्साधको व्रती ॥
व्रतान्तरे संस्थितयोः पित्रोः कुर्य्यात्समीरितम् ।
स समाप्य क्रियाः सर्व्वाः मौनः संवत्सरावधि ॥
तयोः पितृत्वसम्प्राप्तेः पश्चादेव समापयेत् ।
तद्व्रतं व्रतवान् विप्रो विधिवद्गुरुचोदितः ॥
गुर्व्वादा नतिभिः कार्य्या पूजा भक्तिपुरस्कृता ॥ इति ।

यमः ।

खट्वासनञ्च शयनं वर्ज्जयेद्दन्तधावनम् ।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्क्वचित् ॥

कूर्म्मपुराणेऽपि ।

आदर्शं नैव वीक्षेत नाचरेद्दन्तधावनम् ।
गुरूच्छिष्टं भेषजार्थं प्रभुञ्जीत न कामतः ॥

एतच्च व्याधिसाक्षित्वे वेदितव्यम् । वैद्योपदिष्टं मधुमांसादिकं गुरूच्छिष्टं कृत्वा प्राश्नीयादि र्थः ।

तथाच बृहस्पतिः ।

अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

इदमुच्छिष्टमपि गुरुव्यतिरिक्तं वर्ज्यम् ।

तथाच वशिष्ठ: ।

उच्छिष्टमगुरोरभोज्यमिति ।

आपस्तम्बस्तु ।

पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यमिति ।

अन्यच्च मनु: ।

उत्सादनन्तु गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्य्याद्गुरुपुत्त्रस्य पादयोश्चावनेजनम् ॥
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥

मातापित्रोर्विपत्तावपि ब्रह्मचारिणा शावाशौचं न कर्त्तव्यमित्याह स्मृतिचन्द्रिकायां संवर्त्त: ।

मातापित्रोर्विपत्ते तु ब्रह्मचर्य्यप्रिय: सुत: ।
सव्रतश्चापि कुर्व्वीत अग्निपिण्डोदकक्रियाम् ॥
तेनाशौचं न कर्त्तव्यं सन्ध्या चैव न लुप्यते ।
अग्निकार्य्यञ्च कर्त्तव्यं सायम्प्रातश्च नित्यश: ॥

कात्यायनोऽपि ।

त्यजेत् सूतके कर्म्म ब्रह्मचारी स्वयं चरेत् । इति ।

## अथ भिक्षाचरणम् ।

तत्र व्यास: ।

ब्राह्मणक्षत्त्रियविशश्चरेयुर्भैक्षमन्वहम् ।
सजातीयगृहेष्वेव सार्व्ववर्णिकमेव वा ॥

सार्व्ववर्णिकं भैक्षचरणमापद्विषयम् ।

तथाच भविष्यपुराणे ।

चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन । इति ।

आपद्यपि शूद्रस्य पक्वान्नं न गृह्णीयात्तदाह अङ्गिराः ।

आममेवाददीतास्मादापत्स्वेकरात्रकम् ।

आमपूर्व्वेति संस्कारौ धर्म्मं तेभ्यः प्रतीच्छताम् ।

तस्मादामं ग्रहीतव्यं शूद्रादप्यङ्गिरोऽब्रवीत् ॥

एतदपि आपद्विषयम् ।

पराशरः ।

यस्तु वेदानधीयानः शूद्रान्नमुपजीवति ।

शूद्रो वेदफलं याति शूद्रत्वं सोऽधिगच्छति ॥

अन्यच्च ।

शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि ।

त्रिकालज्ञो वेदवेदी धर्म्मज्ञोऽप्यषडन्वितः ।

चतुर्व्वेद्यपि यो विप्रः स प्रेतो जायते ततः ॥ इति ।

अनापद्यपि सजातीयेभ्योऽपि प्रशस्तेभ्य एव भैक्षमाहरेदित्याह मनुः ।

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्म्मसु ।

ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥

क्वचिदपवादमाह स एव ।

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।

अलाभे त्वन्यगेहानां पूर्व्वं पूर्व्वं परिवर्जयेत् ॥

सर्व्वं वापि चरेद्ग्रामं पूर्व्वोक्तानामसम्भवे।
नियमप्रयतो वाचमभिशस्तांश्च वर्ज्जयेत्॥

तत्र भैक्ष्यं भोजनपर्य्याप्तमेव ग्राह्यं कर्त्तव्यमित्याह यमः।

आहारमात्रादधिकं न क्वचिद्भैक्ष्यमाहरेत्।
युज्यते स्तेनदोषेण कामतोऽधिकमाहरन्॥
उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्।
आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत्॥

निषिद्धमप्याहात्रिः।

हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च।
भुक्त्वा ह्यशुचितां याति दाता स्वर्गं न गच्छति॥
माधुकरीं य आदाय ब्राह्मणेभ्यः प्रयच्छति।
स याति नरकं घोरं भुञ्जतो निरयस्तथा॥

गौतमः।

निवेद्य गुरवे भिक्षां भुञ्जीतासन्निधौ गुरोः।
तद्भार्य्यापुत्त्रसब्रह्मचारिभ्य इति चान्वहम्॥ इति।

याज्ञवल्क्यः।

कृताग्निकार्य्यो भुञ्जीत वाग्यतो गुर्व्वनुज्ञया।
आपोशान*क्रियापूर्व्वं सत्कृत्यान्नमकुत्सयन्॥

सत्कारश्च हारीतेन दर्शितः।

भैक्षमेव हितं पथ्यम्भिक्षतमादित्यदर्शितं गुरवे वेदितमनु-

* आपोशानमाचमनम्।

प्रातमम्तसम्मितं प्राश्नुयदश्नाति ब्रह्मचारी स ब्रह्मसिद्धि-
मवाप्नोतीति ।

ब्रह्मचारिण एकान्ननिषेधमाह मनुः ।

भैक्षेण वर्त्तयेन्नित्यं नैकान्नाशी भवेद्व्रती ।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥
व्रते वा वेददैवत्ये पित्र्ये कर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयाद्व्रतमस्य न लुप्यते ॥

अकरणे प्रत्यवायमाह स एव ।

अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।
अनातुरः सप्तरात्रमवकीर्णिव्रतञ्चरेत् ॥

इति भिक्षाचरणविधानम् ।

अथ अग्निकार्य्यविधिः ।

तत्र आश्वलायनकारिका ।

अग्निकार्य्यञ्च भिक्षायाः प्रागूर्द्ध्वं वा तदिष्यते ।
पर्य्युक्षणोपयमौ स्यातामादावन्ते च कर्म्मणः ॥

मनुः ।

दूरादाहृत्य समिधः सन्निदध्याद्विहायसि ।
सायम्प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥

विहायसि अन्तरिक्षे ।

समिदाहरणविधिमाह वैजवापायनः ।

पुरास्तमयात्प्रागुदीचीं दिशं गत्वा अहिंसन्नरण्यात्समिध-
माहरेदार्द्रामन्नाद्यकामः शुष्कां ब्रह्मवर्चसकाम उभयी-
मुभयकाम इति ।

समिल्लक्षणमाह कात्यायनः ।

नाङ्गुष्ठादधिका कार्य्या समित्स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिकान्यूना तथा न स्याद्विशाखिता ।
नातिपर्णा नातिपामा होमेषु तु विजानता ॥
विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्दष्टाः कर्म्मसिद्धिविनाशिकाः ॥

समिन्नियममाह वायुपुराणे ।

पलाशसमिधः कार्य्याः खादिर्य्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसौ ॥

अग्निकार्य्याकरणे प्रत्यवायमाह हारीतः ।

पुरा जग्राह वै मृत्युर्हिंसयन् ब्रह्मचारिणम् ।
अग्निस्तं मोचयामास तस्मात्परिचरेद्धि तम् ॥
ब्रह्मचारी यदा त्वग्नावादध्यात्समिधो न हि ।
गृह्णीयात्तं तदा मृत्युरादध्यात्समिधस्ततः ॥

तदकरणे प्रायश्चित्तमुक्तमग्निधाने ।

मानस्तोके* जपेन्मन्त्रं शतसङ्ख्यं शिवालये ।

---

* मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः ।
वीरान् मानो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ (१६अ १६म मण्ड ।)

अग्निकार्य्यं विना भुङ्क्ते पापं न ब्रह्मचारिणः ॥ इति ।

इदन्तु सकृल्लोपे । असकृल्लोपे तु मनुः ।

अकृत्वा भैक्षचरणमसमिध्य च पावकम् ।

अनातुरः सप्तरात्रमवकीर्णिव्रतञ्चरेत् ॥ इति ।

इति अग्निकार्य्यविधिः ।

अथ अभिवादनविधिः ।

तत्कालमाह यमः ।

ततोऽभिवादयेद्विद्वानग्निकार्य्यादनन्तरम् ।

तत्प्रकारमाह आचार्य्यः ।

वामं वामेन संस्पृश्य दक्षिणेन तु दक्षिणम् ।

हस्तेन कर्णहस्ताभ्यां गुरूणामभिवादनम् ॥

वामोपरि करङ्कृत्वा दक्षिणं नाम चोच्चरेत् ।

तनुप्रभृति पादान्तमारभ्य पदयोर्नमेत् ॥

एतच्च प्रत्युत्थाय कर्त्तव्यम् ।

तदाह आपस्तम्बः ।

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।

प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥

विष्णुः ।

श्रिष्याणामाशिषं दद्यात्पादोपग्रहणे गुरोः ।

स्पृष्ट्वा कर्णौ तु विदुषां मूर्खाणां लिकपाणिना ॥

अग्निरपि ।

दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत् ।
श्रोत्रिये त्वञ्जलिः कार्य्यः पादोपग्रहणं गुरोः ॥

ब्राह्मणसमाजे अभिवादनप्रकारमाह मनुः ।

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
यो ददाति यतो ज्ञानं तं पूर्व्वमभिवादयेत् ॥
नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्व्वास्तथैव च ॥

यः पुनर्ज्ञानन्नपि प्रत्यभिवादनं न करोति आशिषञ्च न ददाति तस्य दोषोऽभिहितो भविष्यपुराणे ।

अभिवादे कृते यस्तु न करोत्यभिवादनम् ।
आशिषं वा न कुरुते स याति नरकं ध्रुवम् ॥

तत्फलमाह मनुः ।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्द्धन्ते आयुर्व्विद्या यशो बलम् ॥ इति ।

स्मृत्यर्थसारे ।

विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ।
विप्रोष्य विप्रं कुशलं पृच्छेत्नृपमनामयम् ॥
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ।
न वाच्यो दीक्षितो नाम्ना यवीयानपि सर्व्वथा ॥
पूज्यैस्तमभिभाषेत* भो भवत्कर्म्मनामभिः ।

* पूज्यास्तमभिभाषेयुरिति पाठो युक्तः ।

परपत्नीमसम्बद्धां भगिन्येवेति भावयेत् ॥

त्रिवर्णपूर्व्वः श्रोत्रियोऽभिवाद्यः। अत्रिवर्णाः सम्बन्धिनश्च स्वल्पेनापि स्वयोनिजाः। अन्ये च ज्ञानवृद्धाः सदाचाराश्चाभिवाद्याः।

अथ अनभिवाद्यास्तत्रैव।

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम्।
पाषण्डं पतितं व्रात्यं महापातकिनं शठम् ॥
नास्तिकं कितवं स्तेनं कृतघ्नं नाभिवादयेत्।
मत्तं प्रमत्तमुन्मत्तं धावन्तमशुचिं नरम् ॥
वमन्तं जृम्भमाणञ्च कुर्व्वन्तं दन्तधावनम्।
अभ्यक्तशिरसं स्नानं कुर्व्वन्तं नाभिवादयेत् ॥
जपयज्ञजलस्थञ्च समित्पुष्पकुशानलान्।
उदपात्रञ्च भैक्षान्नं वहन्तं नाभिवादयेत् ॥
अभिवाद्य द्विजश्चैतानहोरात्रेण शुध्यति ॥

अहोरात्रेण उपोषितेनेति शेषः। असवेष्वाभिवादने च विप्रस्य इदमेव प्रायश्चित्तम्। शूद्राद्यभिवादने त्रिरात्रम्।

कायन्तु रजकादिषु।

कायं प्राजापत्यमित्यर्थः।

चाण्डालादिषु चान्द्रं स्यादिति सङ्ग्रहवचनम्।
देवताप्रतिमां दृष्ट्वा यतिञ्चैव त्रिदण्डिनम् ॥
नमस्कारं न कुर्य्याच्चेदुपवासेन शुध्यति।
सर्व्वे वापि नमस्कार्य्याः सर्व्वावस्थासु सर्व्वदा ॥

याज्ञवल्क्योऽपि ।

आशीर्वाच्या, नमस्कार्यो वयस्यस्तु पुनर्नमेत् ॥

स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः ।

ततोऽधीयीत वेदांश्च स्वाध्याये गुरुशिक्षितः ॥

तथा ।

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।

आयुष्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

इति स्मरणात् गुर्व्वादिनाम न ग्राह्यम् ।

इति श्रीविधानपारिजाते अभिवादनविधानम् ।

## अथ ब्रह्मचर्य्यकालः ।

तत्र योगीश्वरः ।

प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ।

ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥

केशान्तो नाम गोदानम् ।

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।

अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ॥

इति उपकुर्व्वाणब्रह्मचारिधर्म्माः ।

नेमसम्बद्धां भगिन्येवेति भाषयेत ॥

नैष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसन्निधौ ।
तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा ॥

मनुः ।

यदि वात्यन्तिकः कालो रोचतेऽस्य गुरोः कुले ।
युक्तं परिचरेदेनमा शरीरविमोक्षणात् ॥
आचार्य्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते ।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥
एतेषु विद्यमानेषु स्नानासनविहारवान् ।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥

वशिष्ठोऽपि ।

ब्रह्मचर्य्यं चरेन्नीमाना शरीरविमोक्षणात् ।

आचार्य्ये तु खलु प्रेते तत्तनयादावग्निं परिचरेद् यतवाक् चतुर्थ-षष्ठाष्टमकालभैक्षाशी गुर्व्वधीनो बद्धाञ्जलिः शिखी वा गुरुं गच्छन्तमनुगच्छेदासीनमुपतिष्ठेच्छयानमेदासीत आहूताध्यायी सर्व्वलब्धनिवेदी खट्वाशयनदन्तप्रक्षालनाभ्यञ्जनजीवस्नानाभ्यञ्जन-वर्ज्जी स्थानासनशीलस्त्रिरह्नोऽभ्युपेयादप इति । त्रिरिति त्रिष-वणस्नायी स्यादित्यर्थः ।

एवं कुर्व्वतः फलमाह मनुः ।

आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ इति ।

याज्ञवल्क्योऽपि ।

अनेन विधिना देहं सादयन् विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेह जायते पुनः ॥

यत्तु हारीतः ।

द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च तत्र ब्रह्म-
वादिनीनामुपनयनमग्नीन्धनं वेदाध्ययनं स्वगृहे भैक्ष-
चर्य्या चेति ।

तद्युगान्तरविषयम् ।

पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवाचनं तथा ॥

इति यमेन विशेषोक्तेः ।

एवमुपकुर्व्वाणस्य नैष्ठिकस्य च धर्म्मानुक्त्वा तयोर्व्रतातिपत्तौ विशेषप्रायश्चित्तमुच्यते ।

तत्र शातातपः ।

ब्रह्मचारी तु योऽश्नीयान्मधु मांसन्तथैव च ।
प्राजापत्यं चरेत्कृच्छ्रं मौञ्जीहोमेन शुध्यति ॥
भिक्षाशनमकृत्वा यः स्वे स्वे ह्येकान्नमश्नुते ।
अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत् ॥
दिवा स्वपिति यः स्वस्थो ब्रह्मचारी कथञ्चन ।
स्नात्वा सूर्य्यं समभ्यर्च्य गायत्र्यष्टशतं जपेत् ॥
सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च ।
ब्रह्मचारी तु योऽश्नीयात्त्रिरात्रेणैव शुध्यति ॥

ऋग्विधाने।

एकोद्दिष्टे ब्रह्मचारी प्रजपेद्युभिरक्तुभिः*।
पादं भुङ्क्ते ब्रह्मचारी मुच्यते किल्बिषात्ततः॥

पुनः।

अरिष्टः स† जपेत्पादं षोडशे भोजयेद्यदि।
पञ्चायुतं ब्रह्मचारी जले वा कल्मषं न हि॥
तन्नो मित्रो‡ जपेत्पादं वृषोत्सर्गे च भोजयेत्।
शिवालये ब्रह्मचारी अयुतं नैव दुष्कृतम्॥
अग्न ओजिष्ठ§ पादञ्च न्यूने भुङ्क्ते जले यदा।
अयुतञ्चेद्ब्रह्मचारी तदा पापात्प्रमुच्यते॥
अदितिः प्रजपेत्पादं¶ सपिण्ड्यां भोजयेद्यदि।
अयुतञ्चेद्ब्रह्मचारी नरकान्मुच्यते तदा॥

---

* द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ (१म. ११२सू. २५ऋक्

† अरिष्टः स मर्त्यो विश्व एधते प्रजाभिर्जायते धर्मणस्परि।
यमादित्यासो न यथा सुनीतिभिरतिविश्वा दुरितानि स्वस्तये॥ (१०म. ६३सू. १३ऋक्
अरिष्टः स इत्यत्र अरिष्टेभिरिति ग पुस्तके पाठः, तथा पाठस्य साधुत्वे द्युभिरक्तुभिरित्यस्य द्वितीयपादो ज्ञाप्यः।

‡ द्युभिरक्तुभिरित्यस्यास्तृतीयं पादम्।

§ अग्न ओजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो।
प्र नो राया परीणसा रत्सि वाजाय पन्थाम्॥ (५म. १०सू. १ऋक्।)

¶ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्॥ (२५अ. २३म. यजुः।)

धर्म्मौ समन्ताश्नन्नच व्रतचारं यदा तदा ।
व्रतलोपे ब्रह्मचारी भुक्तिकाले न किञ्चिषम् ॥

पाराशरप्रायश्चित्तकाण्डे तृहदूयमस्तु ।

मासिकादिषु नाश्नीयादसमाप्तव्रतो द्विजः ।
त्रिरात्रमुपवासोऽत्र प्रायश्चित्तं विधीयते ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ इति ।

इदमज्ञानविषयम् ।

ज्ञानपूर्व्वके तु स एव ।

मधु मांसञ्च योऽश्नीयाच्छ्राद्धं सौतिकमेव वा ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥ इति ।

अनृतप्रायश्चित्तमाह गर्गः ।

त्रिरात्रमेकरात्रं वा ब्रह्मचार्य्यनृते चरेत् ।

कृच्छ्रमित्यनुषज्यते ।

स्त्रीसङ्गप्रायश्चित्तं याज्ञवल्क्य आह ।

अवकीर्णी भवेत्कृत्वा ब्रह्मचारी तु योषितम् ।
गर्द्दभं पशुमालभ्य नैर्ऋते स विशुध्यति ॥

मनुरपि ।

अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे ।
स्थालीपाकविधानेन यजेत नैर्ऋतं निशि ॥ इति ।

शातातपस्तु ।

ब्रह्मचारी तु यो गच्छेत्स्त्रियं कामेन पीड़ितः ।
प्राजापत्यं चरेन्नित्यमब्दमेकमतन्द्रितः ॥

निर्वपेच्च पुरोडाशं ब्रह्मचारी तु पर्व्वणि ।
मन्त्रैः शाकलहोमीयैरभ्यावाण्यस्य श्रावयेत् ॥

मैथुनमष्टाङ्गमित्याह दक्षः ।

ब्रह्मचर्य्यं सदा रक्षेदष्टधा वारणं पृथक् ।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्य्यं ब्रह्मा प्राह प्रजापतिः ॥

नष्टं भवतीति शेषः* ।

न ध्यातव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन ।
एतैः सर्व्वैः सुनिष्पन्नो यतिर्भवति नान्यथा ॥

शुना दष्टस्य प्रायश्चित्तमाह पाराशरः ।

ब्रह्मचारी शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
गृहस्थस्तु द्विरात्रं वाप्येकाहं वाग्निहोत्रवान् ॥
नाभिकर्ण्णन्तु दष्टस्य तदेव द्विगुणं भवेत् ।
स्यादेतत्त्रिगुणं वक्त्रे मस्तके च चतुर्गुणम् ॥

एतत्प्रायश्चित्तं सर्व्वं नैष्ठिकेन द्विगुणं कार्य्यमित्याह हारीतः ।

उपकुर्व्वंस्तु यत्कुर्य्यात्कामतोऽकामतोऽपि वा ।
तदेव द्विगुणं कुर्य्याद्ब्रह्मचारी तु नैष्ठिकः ॥ इति ।

तथा ।

यज्ञसूत्रपवित्रे च मेखलाञ्च गुरौ वसन् ।

---

* अष्टाङ्गेन मैथुनेनेति यावत् ।

दण्डञ्च धारयेन्नित्यं ब्रह्मचारी समाहितः ॥
त्यक्तैतांश्चरतां येषां दिनमात्रं द्विजातिनाम्[1] ।
कृच्छ्रेण तेषां शुद्धिः स्यान्नान्यथा ब्रह्मचारिणाम्* ॥
प्रमादात्स्वेच्छया वापि विसर्गे रेतसो द्विजः ।
व्रती शुध्यति कृच्छ्रेण त्रिरात्रोपोषणेन वा ॥
स्वेच्छया त्यजतो रेतो मैथुनं वा प्रकुर्व्वतः ।
प्राजापत्येन चीर्णेन जपेन[2] च शुचिर्भवेत् ॥
तं वो धिया जपेन्मन्त्रं[3] लक्षञ्चैव शिवालये ।
ब्रह्मचारी स्वधर्म्मेषु न्यूनश्चेत्पूर्णमेति (तु) तत्§ ॥

इति ऋग्विधानवचनमस्योपघातपरम् ।

इति ब्रह्मचारिप्रायश्चित्तविधानम् ।

## अथ उपाकरणम् ।

तत्र शौनकः ।

अथातः श्रावणे मासि श्रवणर्क्षयुते दिने ।
श्रावण्यां श्रावणे मासि पञ्चम्यां हस्तसंयुते ॥

---

[1] त्रिरात्रोपोषणेन वा इति क पुस्तके पाठः, द्विजातिनामित्यत्र द्विजन्मनामिति पाठो युक्तः ।
[2] जपेन शुचिता भवेत् इति पाठो युक्तः, त्यजतः प्रकुर्व्वत इत्यनयोरनन्वयापत्तः ।
[3] तं वो धिया नव्यस्या शविष्ठं प्रत्नं प्रत्नवत् परितंसयध्यै ।
स नो वक्षदनिमानः सुवह्मेन्द्रो विश्वान्यतिदुर्गहाणि ॥ (६म. २२सू. ७ऋक् ।)
§ पूर्णतां व्रजेदिति ग-पुस्तके पाठः ।

दिवसे विदधीतैतदुपाकर्म्म यथोदितम् ।
अध्यायोपाकृतिं कुर्य्यात्तत्रोपासनवह्निना ॥ इति ।

श्रवणस्य खण्डने व्यासः ।

धनिष्ठासंयुतं कुर्य्याच्छ्रावणं कर्म्म यद्भवेत् ।
तत्कर्म्म सफलं ज्ञेयमुपाकरणसंज्ञितम् ॥
श्रवणेन तु यत्कर्म्म उत्तराषाढ़संयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥

यत्तु ।

अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥

इति याज्ञवल्क्यादिभिः केवलायाः श्रावण्याः पञ्चम्याश्च ग्रहणं तद्वाजसनेयिविषयम् ।

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्य्या वाजसनेयिभिः ॥

इति प्रयोगपारिजातवचनात् ।

अत स्पष्टमाह गार्ग्यः ।

पर्व्वण्यौदयिके कुर्य्युः श्रावणं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्य्युर्ग्रहसंक्रान्तिवर्ज्जिते ॥ इति ।
उदयव्यापिनी चैव विद्वर्च*घटिकाद्वयी ।
तत्कर्म्म सफलं ज्ञेयं तस्य पुण्यमनन्तकम् ॥

अत काले विशेषमाह हव्यमनुः ।

---

* विद्वर्चेत्यत विधवृचेति वाचस्पत्याभिधाने पाठः ।

अर्द्धरात्रादधस्ताच्चेद्ग्रहः संक्रम एव वा।
नोपाकर्म्म तदा कुर्य्याच्छ्रावण्यां श्रवणेन च॥

कात्यायनोऽपि।

अर्द्धरात्रादधस्ताच्चेद्ग्रहः संक्रम एव वा।
नोपाकर्म्म तदा कुर्य्यात्परतश्चेन्न दोषकृत्॥

भृगुस्तु।

प्रेते राजनि राष्ट्रे वा परचक्रादिपीड़िते।
अनुप्तबीजे नाहर्य्यां नोपाकुर्य्याद्विचक्षणः॥

वशिष्ठोऽपि।

अनुप्तबीजे नृपतौ विनष्टे
सूते मृते राष्ट्रसमाकुले च।
उत्सर्ज्जनोपाकरणे न कार्य्ये
ग्रस्तेन्दुसूर्य्ये गुरुवस्त्ययाते॥

यत्तु।

वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ।
उपाकर्म्म न कर्त्तव्यं कर्त्तव्यं सिंहयुक्तके॥

इति विरुद्धवचनं तद्देशान्तरविषयम्।

तथाच बृहस्पतिः।

नर्म्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके।
कर्कटे संस्थिते भानावुपाकुर्य्यात्तु दक्षिणे॥ इति।

स्मृत्यर्थसारेऽपि।

श्रवणे आदौ घटिकाचतुष्टयाभिजिन्नक्षत्राद्यवर्ज्यं श्रवण-

खण्डे सति धनिष्ठासंयुतं ग्राह्यं नोत्तराषाढ़संयुतं हस्त-
नक्षत्रं प्रयोगपर्य्यन्तं ग्राह्यम् । सूतकादिविघ्नसम्भवे वा
ओषध्युत्पत्त्यभावे वा श्रावणभाद्रपदयोरेकस्मिन् दिने
ग्रहणसंक्रान्तिवर्ज्जिते कार्य्यम् । एवं कृते कर्म्मणो न
लोपो नोत्कर्षश्चेति ।

स्मृत्यर्थसारे मनुः ।

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तं छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ॥

अत्र अपिशब्देन भाद्रपदपञ्चमीहस्तश्रवणानामुपादानमिति
हेमाद्रौ व्याख्यातम् ।

यत्पुनर्मनुवचनम् ।

शुक्रे मूढ़ेऽप्युपाकृत्य विद्यावित्तविनाशनम् ।
आयुःक्षयमवाप्नोति तस्मात्तत्कर्म्म वर्ज्जयेत् ॥

काश्यपीयमपि ।

गुरुशुक्रतिरोधाने वर्ज्जयेच्छ्रुतिचोदितान् ।
इत्याह भगवानत्रिः श्रावणन्तु विशेषतः ॥ इति ।

तदेतत् प्रथमोपाकर्म्मविषयम् ।

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा ।
तथाधिमाससमये मलमासादिषु द्विजः ।
नोपाकुर्य्यात्प्रथमतः कृतं कर्म्म विनाशकृत् ॥

इति सङ्ग्रहकारवचनात् ।

स्मृतिसमुच्चयेऽपि ।

यज्ञोपवीतं ध(क)र्त्तव्यं श्रावणे गुरुशुक्रयोः ।
मौढ्येऽपि वार्द्धके बाल्ये नित्यवत्कर्म्म चोदितम् ॥ इति ।

स्मृतिभास्करेऽपि ।

चण्डांशोर्मण्डलम्प्राप्तौ यदा शुक्रबृहस्पती ।
सर्व्वकर्म्मनिवृत्तिः स्यान्नित्यं नैमित्तिकं विना ॥

स्मृत्यन्तरेऽपि ।

नित्ये नैमित्तिके जाप्ये होमयज्ञक्रियासु च ।
उपाकर्म्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥ इति ।

तद्द्वितीयादिविषयम् । तदपि अधिमासे न कार्य्यमित्याह चन्द्रिकायां ज्योतिःपराशरः ।

उपाकर्म्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ परे कार्य्या वर्ज्जयित्वा तु पैतृकम् ॥ इति ।

प्रसवाहोत्सवो जातेष्टिः जातकर्म्मणो जननकाल एव विहितत्वात् । परे उत्तरे मासेत्यर्थः ।

कात्यायनोऽपि ।

उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि ।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ॥

यत्तु ऋष्यशृङ्गवचनम् ।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्म्म महाषष्ठ्यां ह्येतदिष्टं वृषादितः ॥ इति ।

तच्छन्दोगविषयम् । तेषां कालवृद्धावपि सिंहार्क एव उपाकर्म्म भवति ।

तथाच गर्गः ।

सिंहे रवौ तु पुष्यर्क्षे पूर्व्वाह्णेऽविवरे* बहिः ।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं स्वस्वच्छन्दसाम् ।
शुक्लपक्षे तु हस्तेन उपाकर्म्मापराह्णिकम् ॥ इति ।

निषिद्धे चेत् क्रियते तदा दोषमाह स एव ।

अथ चेद्दोषसंयुक्ते पर्व्वणि स्यादुपाक्रिया ।
दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन् द्विजातयः ॥ इति ।

एतच्च मध्याह्नादूर्द्ध्वं कर्त्तव्यम् ।

तथाचोक्तं हेमाद्रौ ।

उपाकर्म्मापराह्णे स्यादुत्सर्गः प्रातरेव च । इति ।

गोभिलोऽपि ।

अध्यायानामुपाकर्म्म कुर्य्यात्कालेऽपराह्णके ।
पूर्व्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः ॥

एवमुक्तप्रकारेण कालशुद्धिं विज्ञाय स्वस्वसूत्रोक्तप्रकारेण उपाकर्म्म कार्य्यम् । केचित्त्विदं कर्म्मद्वयं लौकिकेऽग्नौ कार्य्यमित्याहुः ।

तथाच आश्वलायनकारिका ।

कर्म्मद्वयमिदं केचिल्लौकिकेऽग्नौ प्रकुर्व्वते ।
आज्यसंस्कारपर्य्यन्तमुपलेपादि पूर्व्ववत् ॥ इति ।

अत्र इतिकर्त्तव्यताविशेषो भविष्योत्तरपुराणे ।

सम्प्राप्ते श्रवणस्यान्ते पौर्णमास्यां दिनोदये ।

---

*अविवरे ग्रहादिदोषरहिते ।

स्नानं कुर्व्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥
ततो देवान् पितॄंश्चैव तर्पयेत्परमात्मना ।
उपाकर्म्मणि चैवोत्सर्गे ऋषीणाञ्चैव तर्पणम् ।
कुर्व्वीत ब्राह्मणः श्राद्धं देवानुद्दिश्य शक्तितः ॥ इति ।

कार्ष्णाजिनिस्तु ।

उपाकर्म्मणि चोत्सर्गे यथाकालं समेत्य च ।
ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः ॥ इति ।

बौधायनोऽपि ।

गौतमाद्यानृषीन्सर्व्वान् कृत्वा दर्भमयान् पुनः ।
पूजयित्वा यथाशक्ति तर्पयेद्दंशमुच्चरन् ॥ इति ।

स्मृतिभास्कर्यां व्यासस्तु ।

विष्टरं सप्तभिर्दर्भैर्द्वादशाङ्गुलदैर्घ्यकम् ।
चतुरङ्गुलमग्रं स्याद्ग्रन्थिमेकाङ्गुलं तथा ॥
प्रदक्षिणभ्रमङ्कृत्वा ऋषीनावाह्य पूजयेत् ।
ऋषीणामर्च्चनं सर्व्वं कर्त्तव्यञ्च निवीतिना ॥
आसनं पाद्यमर्घ्यञ्च स्नानं पञ्चामृतैः पृथक् ।
वस्त्रोपवीतं गन्धांश्च पुष्पाण्याभरणानि च ॥
धूपदीपबलीन्दत्त्वा नत्वा स्तुत्वा तथोदकैः ।
तर्पयित्वा यथान्यायं गृह्योक्तविधिना ततः ॥ इति ।

वायुपुराणे तु ।

उपाकर्म्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् ।
आयुष्मान् जायते तेन कर्म्मणा मानवो भुवि ॥ इति ।

वेदोपाकरणविषये विशेषमाह व्यासः ।

दर्भासनो दर्भकरः प्राङ्मुखो वाप्युदङ्मुखः ।
उपक्रमेत वेदान् वा वेदौ वा वेदमेव वा ॥
प्रणवं प्राक् प्रयुञ्जीत व्याहृतीः प्रणवं ततः ।
पच्छोऽर्धर्चश्च शिरसा सावित्रीमनुवाच्य च ॥
उपक्रमेत्ततो मन्त्रानादौ च ब्राह्मणं ततः ।
तथोपनिषदं कल्पं रहस्यान्यपि शक्तितः ॥
अधीत्य प्रणवश्चोक्त्वा भूमिं स्पृष्ट्वा जलं स्पृशेत् ।
नमस्कृत्य ततो देवानृषींश्चैव गुरूनपि ॥ इति ।

अथ ब्रह्मचारिविषये विशेष उक्तः कालादर्शे ।

मौञ्जीयज्ञोपवीते च नवं दण्डञ्च धारयेत् ।
कटिसूत्रञ्चैव नवं नवं वस्त्रन्तथैव च ॥ इति ।

ग्रन्थान्तरेऽपि ।

दण्डाजिनोपवीतानि मेखलां कटिसूत्रकम् ।
धृत्वोपाकरणङ्कृत्वा ततः स्वाध्यायमारभेत् ।
पुराणानि विसृज्याथ पुनः पुनरिति क्रमात् ॥

एतदुपाकर्म्म गृहस्थस्यावश्यकमित्याह व्यासः ।

वेदव्रतानि कृत्वैव विप्रो यद्युद्वहेत्तदा ।
अधीयीत गृहस्थोऽपि नियमाद्ब्रह्मचारिवत् ॥ इति ।

गोभिलोऽपि ।

उपाकर्मोत्सर्जनञ्च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम् ॥ इति ।

अस्य फलमाह कात्यायनः ।

प्रत्यब्दं यदुपाकर्म्म सोत्सर्गं विधिवद्विजैः ।

क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥

अयातयामैश्छन्दोभिर्यत्कर्म्म क्रियते द्विजैः ।

क्रीड़मानैरपि सदा तत्तेषां हृद्धिकारणम् ॥

उत्सर्ज्जनञ्च वेदानामुपाकरणकर्म्म वा ।

अकृत्वा वेदजाप्येन फलं नाप्नोति मानवः ॥ इति ।

अथ उत्सर्ज्जनकालः ।

तत्र याज्ञवल्क्यः ।

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।

जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्वहिः ॥

हारीतः ।

अर्द्धपञ्चमान् मासानधीत्य अर्द्धमुत्सृजतीति ।

यद्वा एतदुत्सर्ज्जनमुपाकर्म्मदिने कार्य्यम् ।

तथाच खादिरगृह्यम् ।

पुष्ये तूत्सर्ज्जनङ्कार्य्यमुपाकर्म्मदिनेऽथवा ।

तस्मिन् पक्षे आरब्धोपाकर्म्मोत्सर्ज्जनैर्नरैः पूर्व्वमुत्सर्ज्जनं कृत्वा तदनन्तरमुपाकर्म्म कार्य्यमिति विवेकः ।

इति श्रीविधानपारिजाते उपाकर्म्मोत्सर्ज्जनविधानम् ।

अथेदानीमध्ययनविधानम् ।

तत्र याज्ञवल्क्यः ।

वेद एव द्विजातीनां निःश्रेयसकरः परः ।
यं यं क्रतुमधीयीत तस्य तस्याप्नुयात् फलम् ॥

स्मृतिसमुच्चयेऽपि ।

वेदो यस्य शरीरस्थो न स पापेन लिप्यते ।
वेदात्मा स तु विज्ञेयः शरीरं किम्प्रयोजनम् ॥
वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्त्तितानि न संशयः ॥
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो ज्ञेयः सर्व्वधर्म्मबहिष्कृतः ॥
नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म्म वैदिकम् ।
अनधीतस्य विप्रस्य सर्व्वं भवति निष्फलम् ॥
अनधीत्य द्विजो यस्तु शास्त्राणि च बहून्यपि ।
शृणोति ब्राह्मणो नाशे नरकाणि प्रपद्यते ॥

नाशे शरीरनाशे सतीत्यर्थः ।

नाधीतवेदो यो विप्र आचारेषु प्रवर्त्तते ।
नाचारफलमाप्नोति यथा शूद्रस्तथैव सः ॥
अनधीतस्य विप्रस्य पुत्त्रोऽप्यध्ययनान्वितः ।
शूद्रपुत्त्रः स विज्ञेयो न वेदफलमश्नुते ॥

स्कान्दे ।

अनभ्यासाच्च वेदानामाचारस्य च लङ्घनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्रं जिघांसति ॥
तस्माद्ब्राह्मणेन वेदोऽवश्यमध्येतव्यः।
मनुस्तु।
अन्नाब्दादध्ययनमापत्काले विधीयते।
अनुव्रज्यादिशुश्रूषा यावदध्ययनं गुरोः॥ इति।
वेदस्वरूपमाह वशिष्ठः।
पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः।
तच्छाखं कर्म्म कुर्व्वीत तच्छाखाध्ययनं तथा॥
यः स्वशाखां परित्यज्य परां समधिगच्छति*।
स शूद्रवद्बहिष्कार्य्यः सर्व्वकर्म्मसु साधुभिः॥
न जातु परशाखोक्तं बुधः कर्म्म समाचरेत्।
आचरन् परशाखोक्तं शाखारण्डः स उच्यते॥
अधीत्य शाखामात्मीयां परशाखां ततः पठेत्।
तच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत्।
तच्छाखाध्ययनं कुर्य्यान्न तेन पतितो भवेत्॥ इति।
अथ शाखापदं धर्म्मशास्त्रादेरुपलक्षकम्।
तथाच व्यासः।
धर्म्मशास्त्रन्तु विज्ञेयं शब्दशास्त्रन्तथैव च।
पुराणानीतिहासाद्यं तथाख्यानानि यानि च।
महात्मनाञ्च चरितं श्रोतव्यं नित्यमेव हि॥ इति।

---

* पारक्यामधिगच्छति इति क-ख-पुस्तकयोः पाठः।

आरम्भश्च शुभदिने कार्य्यः ।

तथाच ज्योतिःशास्त्रम् ।

विद्यारम्भः प्रशस्तो भवति मधुरिपौ प्राप्तबोधे सुधांशौ
शस्ते तीक्ष्णद्युतौ च त्रिदशपतिगुरावुद्गते चापि शुक्रे ।
अप्राप्ते सिंहराशौ दशशतकिरणे चापि दैत्यारिपूज्ये
स्वाध्यायो भानुशुक्रत्रिदशगुरुदिने लग्नसंस्थे च जीवे ॥

तथा ।

षष्ठीं प्रतिपदञ्चैव वर्ज्जयित्वा तथाष्टमीम् ।
रिक्तां पञ्चदशीञ्चैव सौरभौमदिने तथा ॥

विद्यारम्भः प्रशस्त इति पूर्व्वेणान्वयः ।

रत्नमालायामपि ।

विद्यारम्भः सुरगुरुसितज्ञेष्वभीष्टार्थदायी
कर्त्तुश्चायुश्चिरमपि करोत्यंशुमान्मध्यमोऽत्र ।
नीहारांशौ भवति जड़ता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्त्तयन्त्येवमाद्याः ॥

अथ नक्षत्राणि ।

मृगादिपञ्चस्वपि भेषु मूले
हस्तादिके च त्रितयेऽश्विनीषु ।
पूर्व्वात्रये च श्रवणे च तद्वद्-
विद्यासमारम्भमुशन्ति सिद्ध्यै ॥

## अथ अध्ययनप्रकारः ।

तत्र याज्ञवल्क्यः ।

गुरुञ्चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।

मनुश्च ।

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः ॥
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा* ।
व्यत्यस्तपाणिना कार्य्यमुपसङ्ग्रहणं गुरोः ॥
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ।
ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्व्वदा ॥
स्रवत्यनोङ्कृतं पूर्व्वं परस्ताच्च विशीर्य्यति ।
प्राञ्जलिः पर्य्युपासीत[1] पवित्रैश्चैव पावितः ॥
प्राणायामैस्त्रिभिः पूतस्तत ओं कारमर्हति ।
अध्येष्यमाणञ्च गुरुर्नित्यकालमतन्द्रितः ॥
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत् ।
नोदितो गुरुणा नित्यमप्रणोदित एव वा ॥
कुर्य्यादध्ययने योगमाचार्य्यस्य हितेषु च ।
द्वितीये तु तथा भागे वेदाभ्यासो विधीयते ॥
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः ।

---

* अतः परं "संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः" इति पादद्वयं मनुसंहितायां दृश्यते ।

१ प्राक्कूलान् पर्य्युपासीन इति मनुसंहितापाठः ।

तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥
नित्यमुद्धृतपाणिः स्यात्स्वाध्यायार्थं समाहितः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥
हीनान्नवस्त्रवेशः* स्यात्सर्व्वदा गुरुसन्निधौ ।
उत्तिष्ठेत्प्रथमं चास्य चरमञ्चैव संविशेत् ॥

प्राणिनीयशिक्षायाम् ।

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥
हस्तहीनन्तु योऽधीते स्वरवर्णविवर्ज्जितम् ।
ऋग्यजुःसामभिर्दग्धो वियोनिं†मधिगच्छति ॥

पराशरस्त्वाह ।

वेदः सार्थोऽध्येतव्य इति ।
ज्ञातव्यः सर्व्वदैवार्थो वेदानां कर्म्मसिद्धये ।
पाठमात्रमधीती च पङ्के गौरिव सीदति ॥

व्यासोऽपि ।

वेदस्याध्ययनं सर्व्वं धर्म्मशास्त्रस्य चैव हि ।
अजानतोऽर्थं तद्व्यर्थं तुषाणां कण्डनं यथा ॥

यमः ।

य इमां पृथिवीं सर्व्वां सर्व्वरत्नोपशोभिताम् ।
दद्याच्छास्त्रञ्च शिष्येभ्यस्तच्च तत्र द्वयं समम् ॥

---

* हीनान्नवस्त्रवेशत्वं गुर्व्वपेक्षया बोध्यम् ।

† वियोनिं पक्षियोनिं, मृतः पक्षी भवतीत्यर्थः ।

मनुः ।

गुरोरनुमतिं लब्ध्वा वेदाध्ययनमारभेत् ।
अध्यापयेत्ततः शिष्यान् न्याययुक्तान् गुणान्वितान् ॥

याज्ञवल्क्यः ।

कृतज्ञाद्रोहिमेधावि-शुचिकल्यानसूयकाः ।
अध्याप्या धर्म्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥

अनध्याप्यानाह मनुः ।

धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
न तत्र विद्या दातव्या उप्तं* बीजमिवोषरे ॥
विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना ।
आपद्यपि हि कष्टायां न त्वेनामीरिणे वपेत् ॥
विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दास्तथा स्यां वीर्य्यवत्तमा ॥
यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम् ।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥
न निन्दाताड़ने कुर्य्यात्पुत्रं शिष्यञ्च ताड़येत् ।
अधोभागे शरीरस्य नोत्तमाङ्गे न वक्षसि ।
अतोऽन्यथा तु प्रहरन् न्याययुक्तो भवेन्नरः ॥

न्याययुक्तो दण्डः ।

सर्व्वधर्म्ममयं ब्रह्म प्रदानेभ्योऽधिकं† यतः ।

---

* तत्र विद्या न वक्तव्या शुभमिति मनुसंहितायां पाठः ।

† प्रदानेऽभ्यधिकमिति ग-पुस्तके पाठः । तमेव युक्तमुत्पश्यामः ।

तद्दत्त्वमवाप्नोति ब्रह्मलोकमविप्लुतम् ॥ इति ।

स्मृत्यर्थसारे ।

उदगयने शुक्लपक्षे शुभेऽहनि स्वाध्यायं प्रारभेत्पूर्व्वाह्णे गणेशं सरस्वतीं गुरुञ्च सम्पूज्य ब्रह्मचारी विप्रसुवासिनी-रभ्यर्च्य आशिषो गृहीत्वा ब्रह्मयज्ञवद्दर्भान् धारयमाणः प्रणवव्याहृतिसहितां सावित्रीमुक्त्वा प्रणवपूर्व्वकं स्वाध्यायं प्रारभ्य किञ्चिदधीत्य प्रणवेन विरामोऽस्त्वित्युक्त्वा भूमिं स्पृष्ट्वा गुरुं हृष्टांश्च प्रणमेत् । ततोऽपरेद्युर्गणेशं गुरुञ्च नत्वा प्रणवेन प्रारब्धसमाप्तिं कुर्य्यादिति ।

अथ अध्ययनधर्म्माः ।

अहन्यहन्यधीयीत मार्गेणोक्तेन धर्म्मतः ।
न त्वेव चतुरो वेदानन्यायेन कदाचन ॥ इति लघुव्यासः ।

कूर्म्मपुराणेऽपि ।

एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः ।
आहूतोऽध्ययनं कुर्य्याद्वीक्षमाणो गुरोर्मुखम् ॥
नासीनो न च भुञ्जानो न तिष्ठन् न पराङ्मुखः ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥
नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्यानुकुर्व्वीत गतिभाषणचेष्टितम् ॥
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

तथा।

लङ्घितं हसितञ्चैव कण्ठ(कुण्ठ)प्रहरणं तथा।
वर्ज्जयेत्सन्निधौ नित्यमवस्फोटनमेव च॥
कामं लोभं भयं निद्रां गीतवादित्रनर्त्तनम्।
द्यूतं जनपरीवादं स्त्रीप्रेचालम्भनं तथा।
परोपघातं पैशुन्यं प्रयत्नेन विवर्ज्जयेत्॥
उदकुम्भं दण्डकाष्ठं गोमयमृत्तिकाकुशान्।
आहरेद्यावदर्थानि भैचचाहरहश्चरेत्॥
घृतञ्च लवणं सर्व्वं वर्ज्यं पर्य्युषितञ्च यत्।
नादर्शञ्चैव वीचेत नाचरेद्दन्तधावनम्।
एकान्तमशुचिस्त्रीभिः शूद्राद्यैरपि भाषणम्॥

नाचरेदिति पूर्व्वेणान्वयः।

आश्वलायनः।

दद्यात्तर्जांनुरासीत भूमावभिमुखो गुरोः।
कम्पयेन्न शिरः किञ्चिन्न क्रुध्येत न मत्सरी॥
गुरुणापि सहासीत न शिलाफलकेषु च।
सहसैव समुत्तिष्ठेद्गुरोरागमने द्विजः॥

तथा।

उदक्ये मध्यरात्रे च विण्मूत्रे च विसर्ज्जिते।
उच्छिष्टे श्राद्धभुक्तौ च मनसापि न चिन्तयेत्॥

स्वाध्यायमिति शेषः।

स्मृतिसारे।

सर्व्वकुत्सितगन्धेषु परिवेषे सभासु च ।
अभ्यङ्गे स्नानकाले च महाखेदेऽतिकम्पने ॥
गोविप्ररोधने सर्व्वश्राद्धेषु श्राद्धपंक्तिषु ।
श्मशाने शूद्रसम्पर्के चण्डालादिप्रदर्शने ॥
रोदने व्याकुले देशे जपस्थाने महालये ।
महोत्पातेषु च तथा स्वाध्यायं वर्ज्जयेद्बुधः ॥

नारदः ।

द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव च ।
स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट् ॥
पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
न शोभते सभामध्ये जारगर्भ इव स्त्रियाः ॥

मनुः ।

नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ ।
न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् ॥

तथा ।

शूद्राक्षरसपृष्टस्य ह्यधीयानस्य नित्यशः ।
जपतो जुह्वतो वापि गतिरूर्द्ध्वा न विद्यते ॥ इति ।

अथ मन्दमत्यादिदोषादध्ययनेऽसमर्थस्य प्रायश्चित्तमुक्तस्मृगविधाने ।

वामिन्द्रियविमूढास्तु ये विद्यां न विजानते ।
इन्द्रियार्थान्यथार्थांश्च यो न वेत्ति कथञ्चन ॥
विद्या वाधिगता यस्य प्रणश्येत पुनःपुनः ।

ससर्परी*रिति जपन् विद्यां सम्प्रतिपद्यते ॥
एष द्रप्सो जपेन्मन्त्रं† शतवारं दिने दिने ।
भ्रान्तिबुद्धिर्न शास्त्रेषु यथातथ्यञ्च दृश्यते ॥
या ते काकुत्‡ जपेन्मन्त्रं शतवारं दिने दिने ।
विपरीतं न शास्त्रेषु यथार्थं दृश्यते सदा ॥
सुतः सोमो§ जपेन्मन्त्रं शतवारं दिने दिने ।
अन्यथार्थं न शास्त्रेषु यथार्थं दृश्यते सदा ॥
कया नश्चित्रमन्त्रञ्च¶ शतवारं दिने दिने ।
व्यासोक्तस्तु पुराणार्थो यथार्थं दृश्यते सदा ॥
अहेडमानो मन्त्रञ्च‖ दिनम्प्रति जपेच्छतम् ।
शास्त्रेषु संशयो नास्ति विश्वासः सर्व्वथा भवेत् ॥

---

ससर्परीरभरत्तूयमेभ्योऽधिश्रवः पाञ्चजन्यासु कृष्टिषु ।
सा पक्ष्या नव्यमायुर्दधाना यां मे पलस्तिजमदग्नयो ददुः ॥ (३म. ५३सू. १६ऋक्) ।
एष द्रप्सो वृषभो विश्वरूप इन्द्राय वृष्णे समकारि सोमः ।
एतं पिब हरिवः स्थातरुग्र यस्येशिषे प्रदिवि यस्ते अन्नम् ॥ (६म. ४१सू. ३ऋक्) ।
या ते काकुत् सुकृता या वरिष्ठा यया शश्वत् पिबसि मध्व ऊर्मिम् ।
तया पाहि प्र ते अध्वर्युरस्थात् सं ते वज्रो वर्त्ततामिन्द्र गव्युः ॥ (६म. ४१सू. २ऋक्।)
सुतः सोमो असुतादिन्द्र वस्यानयं श्रेयाञ्चिकितुषे रणाय ।
एतं तितिर्व उपयाहि यज्ञं तेन विश्वास्तविषीरापृणस्व ॥ (६म. ४१सू. ४ऋक्।)
कया नश्चित्र आभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ (२७अ. ३९म. यजुः।)
अहेडमान उपयाहि यज्ञं तुभ्यं पवन्त इन्दवः सुतासः ।
गावो न वज्रिन्स्वमोको अच्छेन्द्रा गहि प्रथमो यज्ञियानाम् ॥ (६म. ४१सू. १ऋक्।)

प्रत्यस्मै प्रजपेन्मन्त्रं* शतवारं दिने दिने ।
मद्वाक्येषु विश्वासो ह्यविश्वासो न चान्यथा ॥
एमेनं† प्रजपेन्मन्त्रं शतवारं दिने दिने ।
स्मृत्यर्थं नान्यथाबुद्धिर्यथार्थं पश्यति द्विजः ॥
ॐयाविधानमन्त्रञ्च जपेद्यद्दिनम्प्रति ।
वाग्देवी मातृका तस्य जिह्वाग्रे वर्त्तते सदा ॥
ॐयामन्त्रेण जुहुयाद्विद्या श्रीस्तत्कुले स्थिता । मं
त्रिमधुश्चाष्टमाहस्रं प्रतिवर्षन्तु फाल्गुने ॥
भवामित्रो‡ जपेन्मन्त्रं शतवारं दिने दिने ।
अविद्या न स्पृशेत्तत्वं विद्यया सह तिष्ठति ॥
अहं मनु§र्जपेन्मन्त्रं शतधा यो दिनम्प्रति ।
त्रिकालज्ञानसिद्धिञ्च सर्व्वथा लभते द्विजः ॥ इति ।

इति मन्दमतिप्रायश्चित्तम् ।

गुरुशुश्रूषा आवश्यकी इत्याह देवलः ।

---

* प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरंगमाय जग्मयेऽपश्चादध्वने नरे ॥ (६म. ४२सू. १ऋक् ।)

† एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।
अमत्रेभिरृजीषिणमिन्द्रं सुतेभिरिन्दुभिः ॥ (६म. ४२सू. २ऋक् ।)

‡ भवामित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः ।
अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥ (१म. १५६सू. १ऋक् ।)

§ अहं मनुरभवं सूर्यश्चाहं कक्षीवाँ ऋषिरस्मि विप्रः ।
अहं कुत्समार्जुनेयं न्यृञ्जेऽहं कविरुशना पश्यता मा ॥ (४म. २६सू. १ऋक् ।)

यथा खननतो भूमेर्नरो निधिमुपाप्नुते* ।
एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥
यथान्नं विषसंयुक्तं विषं वान्नेन संयुतम् ।
तादृशं स्यादशुश्रूषोर्ब्रह्माधीतं न संशयः ॥

नारदः ।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपलभ्यते ॥ इति ।

तथा ।

गुरुं त्वङ्कृत्य हुङ्कृत्य विप्रं निर्जित्य वादतः ।
अरण्ये निर्ज्जने देशे भवति ब्रह्मराक्षसः ॥

तस्य प्रायश्चित्तमाह बौधायनः ।

वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधिस्तथा ।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य क्षमापयेत् ॥ इति ।

अन्येऽपि अध्ययनधर्म्माः पाणिनीयशिक्षादितोऽवगन्तव्याः विस्तरभयान्नात्र प्रदर्शिताः ।

## अथ अध्यापकधर्म्माः ।

तत्र यमः ।

सततं प्रातरुत्थाय दन्तधावनपूर्व्वकम् ।
स्नात्वा हुत्वा स्वशिष्येभ्यः कुर्य्यादध्यापनं नरः ॥

---

* यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति । इति निर्णयसिन्धौ पाठः ।

शिष्यशिक्षाविधिमाह गौतमः ।

अशक्तौ रज्जुवेणुदलाभ्यां तनुभ्यां शिक्षयेदिति ।

मनुः ।

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन ।

अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥

यमः ।

योऽर्थार्थी सन् द्विजोऽध्याप्यात्पठेच्चैवाविधानतः* ।

अनध्याये च तस्माद्दुर्व्वेदविप्लावकं बुधाः ॥

हारीतः ।

भृतकाध्यापनं कृत्वा भृतकाध्ययनं तथा ।

अनुयोगप्रधानेन त्रीन् पक्षांस्तु पिबेदिति ॥

यावकमिति शेषः ।

इति अध्यापकधर्म्माः ।

अथ अनध्याया उच्यन्ते ।

तत्र उशनाः ।

अयने विषुवे चैव शयने बोधने हरेः ।

अनध्यायस्तु कुर्व्वीत मन्वादिषु युगादिषु ॥

अयनं दक्षिणमुत्तरञ्च । विषुवौ तुलामेषौ । शयनी बोधनी च एकादशी ।

---

* द्विजोऽध्याप्यान् पाठयेदविधानतः इति पाठो युक्तः ।

मन्वादयो मात्स्येऽभिहिताः ।

अश्वयुक्शुक्लनवमी कार्त्तिकी द्वादशी सिता ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा आषाढस्यापि पूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ।
मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः ॥

युगादयो विष्णुपुराणेऽभिहिताः । यथा ।

वैशाखमासस्य सिता तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्ष-
त्रयोदशी पञ्चदशी च माघे ॥

याज्ञवल्क्यः ।

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।
उपाकर्म्मणि चोत्सर्गे स्वशाखाश्रोत्रिये मृते ॥
पञ्चदश्यां चतुर्द्दश्यामष्टम्यां राहुसूतके ।
ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥

श्राद्धमत्र एकोद्दिष्टातिरिक्तं बोध्यम् । एकोद्दिष्टे त्र्यहमिति मनूक्तेः ।

तथा ।

सन्ध्यागर्ज्जितनिर्घाते* भूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥
पशुमण्डूकनकुलश्वाहिमार्ज्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये† ॥

अथ तात्कालिका अनध्यायाः ।

श्वक्रोष्टुगर्द्दभोलूकसामवाणार्त्तनिःस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतिताम्तिके ॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते ॥
पांशुप्रवर्षे दिग्दाहे सन्ध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान् विदुः ॥

वाणो वंशः । अमेध्याः सूतिकादयः । स्तनितं गर्ज्जनम्‡ ।

अत्र प्रत्यहं सन्ध्यायां विशेष उक्तः स्मृतिसारे ।

उदयेऽस्तमये चापि मुहूर्त्तत्रयगामि यत् ।

---

* यदान्तरिक्षे बलवान् मारुतो मरुताहतः ।
पतत्यधः स निर्घातो जायते वायुसम्भवः ॥ इत्युक्तलक्षणः ।

† शक्र इन्द्रध्वजः तस्य पाते उच्छ्रये च ।

‡ वर्षातोऽन्यत्र गर्ज्जवृष्टिविद्युतां यौगपद्ये आकालिकः वर्षासु तात्कालिक इति नारायणः, सन्ध्यागर्ज्जे तु हारीतः, सायं सन्ध्यास्तनिते रात्रिः प्रातःसन्ध्यास्तनिते अहोरात्रं रात्रौ विद्युति अपररात्रान्तावधिः "विद्युति नक्तं चापररात्रात्" इति गौतमोक्तेः इति निर्णयसिन्धुः ।

तद्दिनं तदहोरात्रमनध्यायं विदुर्बुधाः ॥
केचिदाहुः क्वचिद्देशे यावत्तद्दिननाड़िकाः ।
तावदेव त्वनध्यायो न तस्मिन्ने दिनान्तरे ॥ इति ।

ब्रह्माण्डपुराणे ।

रात्रौ यामद्वयादर्व्वाग्यदि पश्येत्त्रयोदशीम् ।
प्रदोषः स तु विज्ञेयः सर्व्वस्वाध्यायवर्ज्जितः ॥
षष्ठी च द्वादशी चैव अर्द्धरात्रोननाड़िका ।
प्रदोषे न त्वधीयीत तृतीया नवनाड़िका ॥

अन्यत्रापि ।

चतुर्थी प्रथमे यामे सार्द्धयामे च सप्तमी ।
त्रयोदश्यर्द्धरात्रे चेत्प्रदोषो जायते ध्रुवम् ॥

हारीतोऽपि ।

प्रतिपत्सु चतुर्द्दश्यामष्टम्यां पर्व्वणोर्द्वयोः ।
श्वोऽनध्यायोऽद्य शर्व्वर्य्यां नाधीयीत कदाचन ॥

तथा ।

अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्द्दशी ।
अमावास्योभयं हन्ति प्रतिपद्बुद्धिनाशिनी ॥
अष्टका तु समाख्याता सप्तम्यादिदिनत्रयम् ।
मार्गशीर्षे तथा पौषे माघमासे तथैव च ॥
तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षेषु सूरिभिः ।
शास्त्रं न तत्राधीयीत व्रतमन्यं विवर्ज्जयेत् ॥

तात्कालिकानध्यायनिमित्तानां समवाये विशेषमाह गौतमः ।

वर्षविद्युत्स्तनयित्नुसन्निपाते त्र्यहमिति ।

स्मृत्यन्तरेऽपि ।

विद्युद्गर्जितवृष्टीनां सन्निपातो यदा भवेत् ।
कालवृष्टौ तु तत्कालमकाले तु त्रिरात्रकम् ॥ इति ।

अथ अनध्यायापवादः ।

तत्र मनुः ।

वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रजपेषु च ॥

कौर्मेऽपि ।

नैत्यके नास्त्यनध्यायः सन्ध्योपासन एव च ।
उपाकर्मणि कर्मान्ते होममन्त्रेषु चैव हि ॥
अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ।
न धर्मशास्त्रेष्वन्येषु पर्वस्वेतान् विवर्जयेत् ॥
एष धर्मः समासेन कीर्त्तितो ब्रह्मचारिणाम् ।
ब्रह्मणाभिहितः पूर्व्वमृषीणां भावितात्मनाम् ॥
अधीयीत सदा नित्यं ब्रह्मविद्यां समाहितः ।
सावित्रीं शतरुद्रीयं वेदान्तांश्च विशेषतः ॥
अभ्यसेत्सततं युक्तो भस्मस्नानपरायणः ॥ इति ।

इति श्रीविधानपारिजाते प्रयोगपारिजातोक्तं
ब्रह्मचारिप्रकरणं समाप्तम् ।

अथ ग्रहयज्ञस्वरूपमभिधीयते ।

स च नित्यनैमित्तिककाम्यभेदेन त्रिधा । तत्र अयनविषुवोपरागादिषु नित्यः, गर्भाधानादिसंस्कारकर्म्मसु नैमित्तिकः, विपदपगमसम्पदादिकामेषु काम्यः ।

तत्र नित्यनैमित्तिकयोः प्रतिपदोक्तवस्त्वभावे अनुकल्पानि ग्राह्याणि । काम्ये तु प्रतिनिध्यभावात् प्रतिपदोक्तान्येव वस्तूनि।

तथाच शौनकः ।

ग्रहशान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ।
पुण्येऽहनि शुभे वारे कुर्य्यात्ता च त्रिजन्मसु ॥
अयने विषुवे चैव सोमसूर्य्योपरागयोः ।
ग्रहाणामुग्रचेष्टानामेतां शान्तिं समाचरेत् ॥
नित्योऽयं ग्रहयज्ञः स्यान्नैमित्तिक इतः परम् ।
गर्भाधानादिसंस्कारकर्म्मस्वपि विशेषतः ।
कार्य्यारम्भेषु सर्व्वेषु नववेश्मप्रवेशने ॥

अत्र कार्य्यारम्भेषु इत्यादौ सर्व्वत्र निमित्तसप्तमी ज्ञेया ।

आरोग्यस्नानसमये संक्रान्तौ रोगसम्भवे ।
अभिचारे च यः कुर्य्याद्ग्रहपूजां विधानतः ।
सोऽभीष्टं फलमाप्नोति निर्विघ्नेन न संशयः ॥ इति ।

तथा ।

क्षीयन्ते विपदः क्षिप्रं वर्द्धन्ते सम्पदोऽखिलाः ।
तापादयो विनश्यन्ति सर्व्वाः काम्याः प्रदक्षिणाः ॥ इति ।

अथ इष्टानिष्टप्राप्तिपरिहारोपायभूतग्रहयज्ञविधानम् ।

हेमाद्रौ स्कान्दे ।

गार्ग्यं सुखासनासीनं कौशिकः परिपृच्छति ।
निखिलां ग्रहशान्तिं मे भगवन् वक्तुमर्हसि ॥

गार्ग्य उवाच ।

देवदानवगन्धर्व्वा यक्षराक्षसकिन्नराः ।
पीड्यन्ते ग्रहपीड़ाभिः किं पुनर्भुवि मानवाः ॥
शनैश्चरेण सौदासो नरमांसे नियोजितः ।
राहुणा पीड़ितो राजा नलो भ्रान्तो महीतले ॥
अङ्गारकविरोधेन रामो राष्ट्राद्विवासितः ।
अष्टमेन शशाङ्केन हिरण्यकशिपुर्हतः ॥
रविणा सप्तमस्थेन रावणो विनिपातितः ।
गुरुणा जन्मसंस्थेन मृतो राजा सुयोधनः ॥
पाण्डवा बुधपीड़ायां विकर्म्मणि नियोजिताः ।
षष्ठेनोशनसा युद्धे हिरण्याक्षो निपातितः ॥
एते चान्ये च बहवो ग्रहदोषैश्च पीड़िताः ॥

मात्स्ये ।

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ।
वृष्ट्यायुःपुष्टिकामो वा तथैवाभिचरन् प्रभुः ॥
ग्रहयज्ञास्त्रिधा प्रोक्ताः पुराणश्रुतिकोविदैः ।
प्रथमोऽयुतहोमोऽयं लक्षहोमस्ततः परः ॥

तृतीय: कोटिहोमस्तु सर्व्वकामफलप्रद: ॥
गृहस्योत्तरपूर्व्वेण मण्डपं कारयेद्बुध: ।
रुद्रायतनभूमौ वा चतुरस्रमुदक्प्लवम् ॥
दशहस्तमथाष्टौ वा हस्तान् कुर्य्याद्विधानत: ।
तस्य द्वाराणि चत्वारि कर्त्तव्यानि विचक्षणै: ॥ इति ।

स्कान्दे ।

नवग्रहमखे कुण्डं हस्तमात्रं समं भवेत् ।
चतुरस्रमधोहस्तं योनिवक्त्रं समेखलम् ।
चतुरङ्गुलविस्तारा मेखला तद्वदुच्छ्रिता ॥

मात्स्ये ।

वितस्तिमात्रयोनि: स्यात् षट्सप्ताङ्गुलिविस्तृता ।
गजोष्ठसदृशी तद्वदायता छिद्रसंयुता ॥
मेखलोपरि सर्व्वत्र अश्वत्थदलसन्निभा ।
सा च पश्चिमतो ज्ञेया योनिस्त्वादिति केचन ॥
मानहीनाधिकं कुण्डमनेकभयदं भवेत् ।
तस्माद्योत्तरपूर्व्वेण स्थण्डिलं हस्तमात्रकम् ।
त्रिवप्रं चतुरस्रञ्च वितस्त्युच्छ्रायमन्वितम् ॥

स्थण्डिलं वेदि:, वप्रा मेखला: ।

तदुक्तं मात्स्ये ।

द्विरङ्गुलोच्छ्रितो वप्र: प्रथम: समुदाहृत: ।
त्र्य(द्व्य)ङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ।
द्व्यङ्गुलस्तत्र विस्तार: सर्व्वेषां कथितो बुधै: ॥

स्कान्दे ।

नवग्रहमखे कुर्य्यादृत्विजश्चतुरः शुभान् ।
अथवा चैकमभ्यर्च्य विधिना ब्रह्मणा सह ॥
जन्मभूर्गोत्रमग्निश्च वर्णः स्थानं मुखानि च ।
योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः ॥
उत्पन्नोऽर्कः कलिङ्गेषु यमुनायाञ्च चन्द्रमाः ।
अङ्गारकस्त्ववन्त्यान्तु मगधाख्ये हिमांशुजः ॥
सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा ।
शनैश्चरस्तु सौराष्ट्रे राहुर्बैराटिकापुरे ।
अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः ॥
यस्य यस्य च यद्गोत्रं तत्ते वक्ष्याम्यतः परम् ।
आदित्यः काश्यपो गोत्र आत्रेयश्चन्द्रमा भवेत् ॥
भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः ।
शक्रपूज्योऽङ्गिरोगोत्रः शुक्रो वै भार्गवस्तथा ॥
शनिः काश्यप एवाथ राहुः पैठीनसिस्तथा ।
केतवो जैमिनीयाश्च ग्रहाग्निस्तदनन्तरम् ॥
आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते ।
धूम(भूत)केतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ॥
गुरौ चैव शिखी नाम शुक्रे भवति हार(ट)कः ।
शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥

अथ ग्रहवर्णाः ।

भास्कराङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ ।

सोमपुत्त्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ।
कृष्णं शनैश्चरं विद्याच्चित्रा राहुश्च केतवः॥

अथ ग्रहस्थानानि।

मध्ये तु भास्करं विद्याच्छशिनं पूर्व्वदक्षिणे।
दक्षिणे लोहितं विद्याद्बुधं पूर्व्वोत्तरेण तु॥
उत्तरे तु गुरुं विद्यात्पूर्व्वतो भार्गवं न्यसेत्।
पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे।
पश्चिमोत्तरतः केतुः स्थाप्यो वै शुक्लतण्डुलैः॥

अथ ग्रहधातवः।

ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ।
रजतादयसः सीसात्कांस्यात्कार्य्या ग्रहाः क्रमात्।
स्वैर्वर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा॥

स्कान्दे।

शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ।
प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः॥

प्राङ्मुखावूर्द्धदृष्टी, उदङ्मुखौ वामदृष्टी, प्रत्यङ्मुखः अधोदृष्टिः, दक्षिणतोमुखा दक्षिणदृष्टय इति व्याख्येयम्, आदित्याभिमुखा इत्युक्तत्वात्।

वर्णरूपगुणैर्युक्तान् व्याहृत्यावाहयेत्तु तान्।

मात्स्ये।

पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम्।
नान्दीश्राद्धं विधायाथ वृणुयादृत्विजस्तथा॥

नवग्रहमखे विप्राश्चत्वारो वेदवादिनः ।
अथवा ऋत्विजौ शान्तौ द्वावेव श्रुतिकोविदौ ॥
कार्य्यायुतहोमे तु न प्रयुञ्ज्येत विस्तरे ।
देवानां स्थापनं कुर्य्यान्मण्डपे तु विधानतः ॥
अग्निप्रणयनङ्कृत्वा वेद्यामावाहयेत्सुरान् ।
देवानां तत्र संस्थाप्या विंशतिर्द्वादशाधिका ॥
आदित्याभिमुखाः सर्व्वे साधिप्रत्यधिदेवताः ।
स्थापनीयां मुनिश्रेष्ठ नान्तरेण पराङ्मुखाः ॥

नान्तरेण वह्निर्योगिनः सन्निहिता इति व्याख्येयम्, मध्ये स्थापनस्योक्तत्वात् ।

अग्निं दूतं* दिनेशाय सोमायाप्सु म† इत्यथ ।
स्योना पृथिवि‡ भौमाय इदं विष्णु§र्बुधाय च ॥

---

* अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥ (१म. १२सू. १ऋक् ।)

† अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥ (१म. २३सू. २०ऋक् ।)

‡ स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म्म सप्रथाः अप नः शोशुचदघम् ॥ (३५अ. २१म. यजुः ।)

§ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुले(रे) ।
(५अ. १५म. यजुः ।)

इन्द्रं विश्वाः* सुरेज्याय शुक्रज्योतिः† सिताय च।
प्रजापतेऽथ‡ सौराय आयङ्गौरिति§ राहवे॥
केतवे ब्रह्म जज्ञानं¶ स्वैः स्वैर्मन्त्रैः प्रतिष्ठिताः।
ईश्वरं भास्करे विद्यादुमां विद्यान्निशाकरे॥
स्कन्दमङ्गारके विद्याद्बुधे नारायणं विदुः।
गुरौ वेदनिधिं विद्याच्छुक्रे शक्रो विधीयते॥

वेदनिधिर्ब्रह्मा।

शनैश्चरे यमं विद्याद्राहोः कालस्तथैव च।
चित्रगुप्तोऽधिपः केतोरित्येते ग्रहदेवताः॥

विष्णुधर्म्मोत्तरे।

अतः परं प्रवक्ष्यामि यो देवो यो ग्रहः स्मृतः।
अग्निरर्कः स्मृतः सोमो वरुणः परिकीर्त्तितः॥

---

* इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः।
रथीतमं रथीनां वाजानां सत्पतिं पतिम्॥ (१म. ११सू. १ऋक्।)

† शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च।
शुक्रश्च ऋतपाश्चात्यंहाः॥ (१७अ. ८०म. यजुः।)

‡ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥
(१०म. १२१सू. १०ऋक्।)

§ आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः।
पितरञ्च प्रयन्त्स्वः॥ (३अ. ६म. यजुः।)

¶ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ (१३अ. ३म. यजुः।)

अङ्गारकः कुमारश्च बुधश्च भगवान् हरिः ।
बृहस्पतिः स्मृतः शक्रः शुक्रो देवी च पार्व्वती ॥
प्रजापतिः शनैश्चरो राहुर्न्नयो गणाधिपः ।
विश्वकर्म्मा स्मृतः केतुर्ये ग्रहास्ते सुराः स्मृताः ॥

स्कान्दे ।

वक्ष्ये स्थानानि देवानामीश्वरादि यथाक्रमम् ।
सूर्य्यस्यैवोत्तरे शम्भुमुमां सोमस्य दक्षिणे ॥
स्कन्दमङ्गारकस्यैव दक्षिणस्यां निवेशयेत् ।
सौम्यस्य पश्चिमे विष्णुं विधिं जीवस्य पूर्व्वतः ॥
इन्द्रमैन्द्रां सिताद्विद्यान्मन्दस्याग्रे यमो भवेत् ।
राहोः पूर्व्वोत्तरे कालं सर्व्वभूतभयावहम् ॥
केतोर्नैर्ऋत्यदिग्भागे चित्रगुप्तं निधापयेत् ।
उत्तरे शनिसूर्य्याभ्यां गुरुकेत्वोश्च दक्षिणे ।
गणाधिपं प्रतिष्ठाप्य सर्व्वदेवनमस्कृतम् ॥

अथ मण्डलानि ।

भानुस्तु मण्डलाकारं सोमस्तु चतुरस्रकम् ।
अङ्गारकं त्रिकोणञ्च बुधं बाणाकृतिं तथा ॥
दीर्घचतुरस्रं गुरुं पञ्चास्रं भार्गवं तथा ।
धनुः शस्यं शनिं विद्याद्राहुं सर्पाकृतिं तथा ॥
ध्वजाकाराः केतवश्च* गणेशं तत्र रूपिणम् ।

* वर्त्तुलो भास्करः कार्य्यो ह्यर्द्धचन्द्रो निशाकरः ।
अङ्गारकस्त्रिकोणस्तु बुधश्चापाकृतिस्तथा ॥

स्थापयेच्छुक्लतण्डुलैः ॥ इति ।

पत्रे मण्डलाद्याकारेण स्थापनम् ।

द्वादशाङ्गुलमादित्यं सोमं तु द्विगुणं लिखेत् ।
भृगुं नवाङ्गुलञ्चैव गुरुञ्चैव षडङ्गुलम् ॥
बुधं भूमिसुतं सौरिं चतुस्त्रिद्व्यङ्गुलं तथा ।
सोमसप्ताङ्गुलं राहुं केतुं कुर्य्यात् षडङ्गुलम् ॥

मात्स्ये ।

विनायकं तथा दुर्गां वायुमाकाशमेव च ।
न्यसेत्सम्यग्गणेशादींस्तथैवाश्विकुमारकौ ॥
राहुमन्दर्दिनेशानामुत्तरस्यां यथाक्रमम् ।
राहोः केतोर्दक्षिणे च विन्यसेत्क्रमशः सुधीः ॥

स्कान्दे ।

अतः स्थापनमन्त्रांश्च कथयाम्यनुपूर्व्वशः ।
ईश्वरं त्र्यम्बकं* चेति श्रीश्च ते चेति† पार्व्वतीम् ॥

---

पद्माकृतिर्भृगोः कार्य्यो गुरोरष्टदलं भवेत् ।
सर्पाकृतिः शनिः कार्य्यो राहुस्तु मकराकृतिः ।
खड्गाकृतिस्तथा केतुः ॥ इति संस्कारत वै ग्रहाणामाकृतिभेदो दृश्यते ।

* त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ (३अ. ६०म. यजुः ।)

† श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण सर्व्वलोकं म इषाण ॥ (३१अ. २२म. यजुः ।)

यदक्रन्द इति* क्रन्दं विष्णुं विष्णोरराटतः† ।
आब्रह्मन्निति‡ ब्रह्माणं सजोषेति§ च वासवम् ॥
यमाय त्वेति¶ च यमं कालं कार्षि||रसीति च ।
चित्रावस्विति मन्त्रेण** चित्रगुप्तं निधापयेत् ॥
अग्निरापः क्षितिर्विष्णुरिन्द्रश्चेन्द्री प्रजापतिः ।
सर्पो ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमम् ॥

---

* यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातन्ते अर्वन् ॥ (२९अ. १२म. यजुः ।)

† विष्णोरराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि ।
वैष्णवमसि विष्णवे त्वा ॥ (५अ. २१म. यजुः ।)

‡ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जाय दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमान वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां यो क्षेमो नः कल्पताम् । (२२अ. २२म. यजुः ।)

§ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् ।
जहि शत्रूँ२रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥
उपयाम गृहीतोऽसीन्द्राय त्वा मरुत्वते ।
एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ (७अ. ३७म. यजुः ।)

¶ यमाय त्वा । मखाय त्वा । सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वानक्तु । पृथिव्याः सꣳस्पृशस्पाहि । अर्चिरसि शोचिरसि तपोऽसि । (३७अ. ११म. यजुः ।)

|| कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि ।
समापो अद्भिरग्मत समोषधीभिरोषधीः ॥ (६अ. २८म. यजुः ।)

** चित्रावसो स्वस्ति ते पारमशीय । इति तुल्यपुरुषदानपद्धतौ ।

अग्निं दूतमिति* ह्यग्नेर्वरुणस्य उदुत्तमम्† ।
स्योना पृथिवि‡ मेदिन्या इदं विष्णुः‡ विष्णवे ॥
इन्द्रायेन्दो§ इतीन्द्रस्योत्तानपर्णेण¶ शचीस्थितौ ।
प्रजापतेः|| प्रजेशस्य एष ब्रह्मेति** वै विधिः ।
मन्त्रो नमोऽस्तु सर्पेभ्यः†† सर्पाणां स्थापने मतः ॥

ग्रहध्यानन्तु ।

पद्मासनः पद्मकर इत्यादि शतमेष्टोत्तरं सदा इत्यन्तं मत्स्यपुराणोक्तमत्र द्रष्टव्यम् ।

अत्र देवाधिदेवानां नैवेद्यं कुसुमानि च ।
ग्रहवस्त्रासनं दानं स्थापनञ्चानुपूर्व्वशः ॥

---

* ५४० पृष्ठे ऋगियं प्रदर्शिता ।

† उदुत्तमं वरुणपाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ (१२अ. १२म. यजुः ।)

‡ ५४० पृष्ठे प्रदर्शित मन्त्रद्वयम् ।

§ इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
ऋतस्य योनिमासदम् ॥ (९म. ६४म. २२ऋक् ।)

¶ उत्तानपर्णे सुभगे देवजूते सहस्वति ।
सपत्नीं मे पराधम पतिं मे केवलं कुरु ॥ (१०म. १४५मू. २ऋक् ।)

|| ५४१ पृष्ठे ऋगियं प्रदर्शिता ।

** एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे । (५प्र. २अ. १८. ३म. साम. ।)

†† नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ (१३अ. ६म. यजुः ।)

मात्स्ये ।

प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम् ।
चूतपल्लवसञ्छन्नं फलवस्त्रयुगान्वितम् ॥
पञ्चरत्नसमायुक्तं पञ्चमृत्स्ना(भङ्ग)युतं तथा ।
स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत् ॥
गङ्गाद्याः सरितः सर्व्वाः समुद्रांश्च सरांसि च ।
गजाश्वरथ्यावल्मीकसङ्गमाद्ध्रदगोकुलात् ॥
मृदमानीय विप्रेन्द्र सर्व्वौषधिसमन्विताम् ।
स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्म्मवित् ॥

स्कान्दे ।

दिवाकरकुजाभ्यां हि दापयेद्रक्तचन्दनम् ।
चन्द्रे च भार्गवे चैव सितवर्णं प्रदापयेत् ॥
कुङ्कुमेन तु संयुक्तं (संरक्तं) चन्दनं जीवसौम्ययोः ।
अगुरुं चन्दनं दद्याद्राहुकेत्वर्कजेषु च ॥
ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमाहरेत् ।
रवेः कुन्दरुकं धूपं शशिनस्तु घृताप्लुतम् ॥
भौमे सर्ज्जरसञ्चैव अगुरुश्च बुधे स्मृतः ।
सिह्लकं गुरवे दद्याच्छुक्रे विल्वगिरिं तथा ॥
गुग्गुलुं मन्दचारे तु लाक्षा राहोश्च केतवे ।
उद्दीप्यस्वेति मन्त्रेण दीपं दद्यादतन्द्रितः ॥
गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम् ।
लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकम् ॥

दध्योदनं गुरोर्दद्याच्छुक्राय च घृतौदनम् ।
मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे ॥
राहोर्मांसौदनं दद्यात्केतोश्चित्रौदनं* तथा ।
निवेदयित्वाहुतिभि†र्होमं कुर्य्यादतन्द्रितः ॥
प्रादेशमात्रा अर्कस्य समिधश्चार्कसम्भवाः ।
दधिमध्वाज्यसंयुक्ताः प्रतिदैवञ्च होमयेत् ॥
पालाशीश्चैव सोमाय खादिरीर्लोहिताय च ।
आपामार्गीर्बुधायेति आश्वत्थीश्च बृहस्पतेः ॥
औदुम्बरीश्च शुक्राय मन्दाय च शमीमयीः ।
दूर्वा राहोः कुशान् केतोर्होममन्त्रां‡स्ततः परम् ॥

प्रतिदैवञ्च होमयेदिति सर्व्वत्र योज्यम् । एतेषां देवानां स्वस्वग्रहसमिद्भिरेव होमः ।

आकृष्णेन§ सहस्रांशोरिमं देवा‖स्तथेन्दवे ।

---

* अजाक्षीरेण संसिद्धा यवाश्च तिलतण्डुलाः ।
अजकर्णस्य रक्तेन चित्रार्यवान्नसंज्ञिताः ॥ इति गृह्यदीपिका ।

† निवेद्याहुतिभिः पञ्चाहुति क पुस्तके पाठः । स एव युक्तः, अन्यो दुर्बोधत्वात् ।

‡ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः ॥ (१म. ६सू. ३ऋक् ।)

§ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ (१म. ३५सू. २ऋक् ।)

‖ इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय ।
इममममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा ।
(९अ. ४०म. यजुः ।)

अग्निर्मूर्द्धेति* भौमाय उद्बुध्यस्व† बुधाय च ।
बृहस्पते अति‡ गुरोः शुक्रायायान्नात्§ परिस्रुतः ॥
शनैश्चरस्य मन्त्रोऽयं शन्नो देवी¶रुदाहृतः ।
कया न॥ इति राहोश्च केतुं कृण्वं न** केतवे ॥

विष्णुधर्मोत्तरे तु आकृष्णेनेति** सूर्यस्य इत्यादि समानमुक्ता उक्तम् ।

शन्नो देवीति सौरस्य काण्डात्काण्डेति†† राहवे॥ इति।

मात्स्ये ।

---

* अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति ॥ (८म. ४४सू. १६ऋक् ।)

† उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते संसृजेथामयञ्च ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥ (१५अ. ५४म. यजुः ।)

‡ बृहस्पते अति यदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ (२६अ. ३म. यजुः ।)

§ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियम् विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ।
(१९अ. ७५म. यजुः ।)

¶ शन्नो देवीरभि(भी)ष्टये आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः । (३६अ. १२म. यजुः ।)

॥ कया नश्चित्र आभुव दूती: सदावृधः सखा ।
कया शचिष्ठया वृता ॥ (२७अ. ३९म. यजुः ।)

** ५४७ पृष्ठे प्रदर्शितौ मन्त्रावेतौ ।

†† काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ (१०अ. २०म. यजुः ।)

आवो राजेति* रुद्रस्य बलिं होमं समाचरेत् ।
आपो हि ष्ठे†त्युमायास्तु स्योनेति‡ स्वामिन§स्तथा ॥
विष्णोरिदं विष्णुरिति¶ त्वमित्सेति|| स्वयम्भुवः ।
इन्द्रमिद्देवतातय** इन्द्रस्य जुहुयात्पुनः ॥
तथा यमस्य चायङ्गौरिति†† होमः प्रकीर्त्तितः ।
कालस्य ब्रह्म जज्ञान‖‖मिति मन्त्रः प्रशस्यते ॥
चित्रगुप्तस्य चाज्ञातमिति‡‡ पौराणिका विदुः ।
अग्निं दूतं वृणीमहे§§ इति वह्नेरुदाहृतः ॥
उदुत्तमं वरुणेति¶¶ अपां मन्त्रः प्रकीर्त्तितः ।

---

* आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ (४म. ३सू. १ऋक् ।)

† ५८ पृष्ठे ऋगियं प्रदर्शिता ।

‡ ५४० पृष्ठे मन्त्रोऽयं प्रदर्शितः ।

§ स्वामिन इत्यत्र मदिव्या इति तुलापुरुषदानपद्धतौ पाठः, स एव युक्तः प्रतीयते ।

¶ ५४० पृष्ठे मन्त्रोऽयं प्रदर्शितः ।

|| त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः ।
त्वं विप्रासः समिधान दीदिव आविवासन्ति वेधसः ॥ (८म. ६०सू. ५ऋक् ।)

** इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ (८म. ६०सू. ५ऋक् ।)

†† ५४१ पृष्ठे प्रदर्शितो मन्त्रोऽयम् ।

‡‡ अज्ञात यदनाज्ञातं यज्ञस्य क्रियते मिथः ।
अग्ने तदस्य कल्पय त्वं हि वेत्थ यथातथम् ॥ (२६ब्रा. १प्र. २ख. साम. ।)

§§ ५४० पृष्ठे ऋगियं प्रदर्शिता ।

¶¶ ५४५ पृष्ठे मन्त्रोऽयं प्रदर्शितः ।

भूमिः पृथिव्यन्तरिक्षं* विष्णोः सहस्रशीर्षेति च† ॥
इन्द्रायेन्दो इतीन्द्रस्योत्तानपर्णे शचीस्थितौ ।
प्रजापते प्रजेशस्य आयङ्गौरिति सर्पके ॥
ब्रह्मणो ब्रह्म जज्ञानमिति मन्त्रा उदीरिताः ।
आ तू न इन्द्रं‡ विघ्नेशे दुर्गाया जातवेदसे§ ॥
आनो नियुद्भिर्वायोश्च¶ आदित्प्रत्नस्य|| वै दिवः ।
एषो उषा अपूर्व्येति** अश्विनोर्मन्त्र ईरितः ॥

एवञ्च यत्र ग्रहमन्त्रादौ भेद उक्तस्तत्र तत्तच्छाखापरत्वेन ते ते मन्त्रा द्रष्टव्याः, सर्व्वासु शाखासु ग्रहयज्ञस्योक्तत्वात् । समिधश्च त्रिमध्वक्ता अष्टशतमष्टाविंशतिर्वा होतव्याः ।

---

* पृथिव्यन्तरिक्षं द्यौरापः कनिक्रदत् ।
सिन्धुरापो मरुतो मादयन्तां धर्म्मा ज्योतिः ॥ (३प्र. २अ. १६म. साम. ।)

† सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥ (३१अ. १म. यजुः ।)

‡ आ तू न इन्द्र वृत्रहन्नस्माकमर्धमागहि ।
महान् महीभिरूतिभिः ॥ (३३अ. ६५म. यजुः ।)

§ जातवेदसे सुनवाम सोममरातीयतो यतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ (१म. ९९सू. १ऋक् ।)

¶ आनो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुपयाहि यज्ञम् ।
वायो अस्मिन्त्सवने मादयस्व यूय पात स्वस्तिभिः सदा नः ॥ (२७अ. २८म. यजुः ।)

|| आ दित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।
परो यदिध्यते दिवा ॥ (८म. ६सू. ३०ऋक् ।)

** एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।
स्तुषे वामश्विना बृहत् ॥ (१म. ४६सू. १ऋक् ।)

तदाह याज्ञवल्क्य: ।

एकैकस्य त्वष्टशतमष्टाविंशतिरेव वा ।
होतव्या मधुसर्पिर्भ्यां दध्ना चापि समन्विता: ॥

चिन्तामणौ ।

समिधां लक्षणं वक्ष्ये सङ्ख्यां तासां तथैव च ।
विशीर्णा विदला ह्रस्वा वक्रा: ससुषिरा: कृशा: ।
अतिस्थूलाश्चातिदीर्घा: समिध: कार्य्यनाशना: ॥
विशीर्णायु:क्षयं कुर्य्याद्विदला पुत्त्रनाशनी ।
सुषिरा व्याधिजननी कृशा च रिपुवर्द्धनी ॥
दीर्घा विदेशगमनी स्थूला त्वात्मविनाशनी ।
अकृशा सुसमाऽस्थूला सार्द्रा च सुपलाशिनी ।
प्रादेशमात्राधिकान्यूना: समिध: सर्व्वकर्म्मणि ॥
अर्को नाशयति व्याधिं पलाश: सर्व्वकामद: ।
खादिरश्चार्थलाभाय अपामार्ग: सुदर्शन: ॥
अश्वत्थ: सर्व्वकामाय सौभाग्याय त्वुदुम्बर: ।
शमी शमयते पापं दूर्व्वायुष्यविवर्द्धनी ।
कुशान् धर्म्मार्थकामानां रक्षणं रक्षसां विदु: ॥
अष्टोत्तरन्तु साहस्रं शतमष्टाधिकन्तु वा ।
अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत् ॥ इति ।

मात्स्ये ।

देवानामपि सर्व्वेषामुपांशु परमार्थवित् ।
स्वेन स्वेनैव मन्त्रेण होतव्या: समिध: पृथक् ॥

होतव्यञ्च घृताद्यन्न चरुभक्तादिकं पुनः ।
मन्त्रैर्दशाहुतीर्दद्याद्धोमो व्याहृतिभिः पुनः ॥

अयमर्थः—होमार्थं सम्पादितेन तिलाज्यादिद्रव्येण ग्रहेभ्यः प्रत्येकं दश दशाहुतीर्दद्यात्। अधिदेवतादीनां प्रत्येकं तिस्रस्तिस्र एकैकां वा दद्यात्।

ततो व्याहृतिभिर्भूः स्वाहेत्याद्याभिस्तसृभि*रयुतसंख्यादिक्रमेण जुहुयात्।

उदङ्मुखाः प्राङ्मुखा वा कुर्य्युर्ब्राह्मणपुङ्गवाः ।
मन्त्रवन्तश्च कर्त्तव्याश्चरवः प्रतिदैवतम् ।
हुत्वा तांश्च चरून् सम्यक् ततो होमं समारभेत् ॥

आकृष्णेनेत्यादि सूर्य्यायेत्यादि। मन्त्रवन्त इति। सूर्य्याय त्वा जुष्टं निर्वपामि सोमाय त्वा जुष्टं निर्वपामीत्यादिप्रयोगेण चरवो मन्त्रवन्तः कार्य्या इत्यर्थः। इत्युक्तप्रकारेण होमं कृत्वा तदुत्तरकर्त्तव्यमाह।

होमं कृत्वा यथाशास्त्रं हुनेत्स्विष्टकृतं ततः ।
नवाहुतीस्ततो हुत्वा बलिदानमथाचरेत् ॥
मूर्द्धानमिति मन्त्रेण† दद्यात्पूर्णाहुतिं ततः ।
होमशेषं समाप्याथ आचार्य्योऽथ द्विजैः सह ॥

---

* भूः स्वाहा स्वः स्वाहा भूर्भुवः स्वः स्वाहा एवंरूपाभिः ।

† मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निं ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयंत देवाः ॥
(६म. ७सू. १ऋक् ।)

अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ।
पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखैः ॥
अव्यङ्गावयवैर्ब्रह्मन् हेमस्रग्दामभूषितैः ।
यजमानस्य कर्त्तव्यं चतुर्भिः स्नपनं द्विजैः ॥

अभिषेकमन्त्राः समुद्रज्येष्ठा इत्यादयः* सुरास्त्वामभिषिञ्चन्तु इत्यादयः† पौराणाश्च ग्राह्याः ।

ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः ।
सर्व्वौषधैः सर्व्वगन्धैः स्नापितो विप्रपुङ्गवैः ॥
यजमानः सपत्नीक ऋत्विजस्तान् समाहितः ।
दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥
होमान्ते दक्षिणां दद्याच्छान्त्यर्थं पुष्टिवर्द्धनीम् ।
आदित्याय शुभां धेनुं‡ शङ्खं§ सोमाय दापयेत् ॥

* २३५ पृष्ठे प्रदर्शिता ।

† ७४ पृष्ठे प्रदर्शिताः ।

‡ सूर्य्यादीनां धेनुदानादिमन्त्रा यथाक्रमं प्रदर्श्यन्ते ।
तत्र सूर्य्यस्य—कपिले सर्व्वभूतानां पूजनीयासि रोहिणि ।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥
इत्युच्चार्य्य धेनुं सूर्य्ययागकर्त्रे दद्यात् । एवमुत्तरत्र ।

§ सोमस्य—पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलम् ।
विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे ॥ इति शङ्खम् ।

भौमाय रक्तवृषभं* सोमपुत्राय काञ्चनम्† ।
गुरवे पीतवासांसि‡ शुक्रायाश्वन्तु§ दापयेत् ॥
कृष्णा गौ¶र्मन्दचाराय राहवे त्वायसं|| शुभम् ।
केतवे छागमांसानि** सर्व्वेषामेव काञ्चनम् ॥
यस्तु पीड़ाकरो नित्यं स्वल्पवित्तस्य वा ग्रहः ।
तमेव पूजयेद्भक्त्या दक्षिणाभिः स्वशक्तितः ॥
यथा यज्ञा द्विजास्तद्वद्वेदवेदाङ्गपारगाः ।
तोषयेन्मृदु(मधु)वस्त्रैर्वा तुष्टांस्तान् विसर्ज्जयेत् ॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
यजमानमदाक्षिण्यो नास्ति यज्ञसमो रिपुः ॥

---

* कुजस्य—धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ इति वृषभम् ।

† बुधस्य—हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ इति सुवर्णम् ।

‡ गुरोः—पीतवस्त्रयुग्मं यस्माद्वासुदेवस्य वल्लभम् ।
प्रदानादस्य मे विष्णुः प्रीयतां भक्तवत्सलः ॥ इति पीतवस्त्रम् ।

§ शुक्रस्य—विश्वत्वमश्वरूपेण यस्मादमृतसम्भवः ।
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥ इति अश्वम् ।

¶ शनेः—यस्मात्त्वं पृथिवी देवी धेनुः केशववल्लभा ।
सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ इति कृष्णां धेनुम् ।

|| राहोः—यस्मादायसकर्म्माणि तवाधीनानि सर्व्वदा ।
लाङ्गलायुधादीनि अतः शान्तिं प्रयच्छ मे ॥ इत्यायसम् ।

** केतोः—यस्मात्त्वं सर्व्वयज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ इति छागं दद्यात् ।

अग्निदग्धं यथा भस्म वातोद्धूतं विनश्यति।
दुरितं मन्त्रनिर्दग्धं दानोद्धूतं तथा नृणाम्॥
यथा शस्त्रप्रहाराणां कवचं स्यान्निवारणम्।
एवं दैवोपघातानां शान्तिर्भवति वारणम्॥
यथा समुत्थितं यन्त्रं यन्त्रेण प्रतिहन्यते।
एवं समुत्थितं घोरं शीघ्रं शान्त्या विनश्यति॥
अहिंसकस्य दान्तस्य धर्म्मार्ज्जितधनस्य च।
नित्यञ्च नियमस्थस्य सदा सानुग्रहा ग्रहाः॥
ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः।
पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः॥
ग्रहाणामिदमातिथ्यं कुर्य्यात्संवत्सरादपि।
आरोग्यबलसम्पन्नो जीवेच्च शरदां शतम्॥
एवं समयं निष्पाद्य देवान् सर्व्वान् विसर्ज्जयेत्।
यान्तु देवगणाः सर्व्वे पूजामादाय पार्थिवीम्।
इष्टकामप्रदानार्थं पुनरागमनाय च॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत्।
सर्व्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीय(य्य)ते।
सदैवायुतहोमोऽयं नवग्रहमखः स्मृतः॥

यः प्रतिकूलो ग्रहः स एव तत्तद्दासरे पूज्यः, यस्तु पीड़ाकर-त्वसुक्तत्वात्। राहुकेत्वोः पृथग्वासराभावान्मन्दवार एव ग्राह्यः।

ग्रन्थादीन् मन्दवारे तु पूजयेत्प्रयतो नरः।

इति बौधायनकारिकातः।

तथा ।

विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्म्मसु ।
निर्व्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाद्भुतेषु च ॥
वश्यकर्म्माभिचारादौ तथैवोच्चाटनादिके ।
नवग्रहमखं कृत्वा ततः काम्यं समारभेत् ॥
अन्यथा फलदं पुंसां न काम्यं जायते क्वचित् ।
तस्मादयुतहोमस्य विधानं तु समाचरेत् ॥

इति हेमाद्रिनिबन्धोक्तमयुतहोमविधानम् ।

अथास्य संक्षेपेण प्रयोगः ।

नवग्रहमखस्त्रिविधः अयुतहोमो लक्षहोमः कोटिहोमश्चेति ।

तत्र श्रीकामादिग्रहपीड़ायामुत्पातादौ शान्तिकामोऽभिचरंश्च नवग्रहमखाख्यमयुतहोमं कुर्य्यात् ।

तत्र प्रशस्तेऽहनि सुमुहूर्त्ते सम्भृतसम्भारो यजमानः कृतनित्यक्रियः सुप्रक्षालितपाणिपादः स्वाचान्तोऽमुककामः अयुतहोमेनाहं यक्ष्ये इति सङ्कल्प्य पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धञ्च विधाय ॐ पुण्याहं भवन्तो ब्रुवन्तु इति प्रथमं ब्राह्मणवाचनं कुर्य्यात् । ॐ पुण्याहमिति त्रिः श्रावणं (त्रिः प्रतिवचनम्) । एवं ॐ स्वस्ति भवन्तो ब्रुवन्तु ॐ स्वस्तीति त्रिः श्रावणम् । तत ॐ ऋद्धिं भवन्तो ब्रुवन्तु ॐ ऋध्यतामिति पूर्व्ववत् ।

एवं ब्राह्मणवाचनं विधाय ऋत्विजश्चतुरो वेदवेदाङ्गविदो द्वौ वा वृत्वा स्वगृह्योक्तविधिना मधुपर्केणार्च्चयेत् ।

तत आचार्य्येण यजमानगृहादुत्तरपूर्व्वदेशे प्रागुदक्प्रवणायां भूमावष्टहस्तं मण्डपं चतुर्द्वारं विधिना विधाय तस्य मध्यभागे हस्तमात्रं कुण्डं योनिमेखलासहितं कृत्वा तस्यैशानदेशे ग्रह-देवतास्थापनाय वेदिका भूमिं हस्तविस्तृता वितस्त्युच्छ्राया वप्रद्वयावृता चतुरस्रोदक्प्रवणा कार्य्या । तस्या: प्रथमो वप्रो-द्व्यङ्गुलोच्छ्राय: द्वितीयस्त्र्यङ्गुलोच्छ्राय: द्वावपि द्व्यङ्गुलविस्तारौ कार्य्यौ ।

तत: स कुण्डमध्ये उपलिप्ते सिकतोपकीर्णे स्वगृह्योक्तविधिना भूसंस्कारपूर्व्वकमग्निं प्रतिष्ठाप्य ग्रहवेद्यां द्वात्रिंशत्सुरानावाहयेत् प्रत्येकं स्थापयेच्च । तत्र आवाहनं पुष्पतण्डुलै: । ॐ भूर्भुव: स्व: सूर्य्य इहागच्छ इह तिष्ठेत्यादिप्रयोगेण । ते च सूर्य्यादयो नव प्रधानदेवा रुद्रादयो नव अधिदेवा: अग्न्यादयो नव प्रत्यधि-देवा विनायकादय: पञ्च लोकपाला इति द्वात्रिंशत् । तांश्च पूर्व्वोक्तमण्डलादावावाह्य षोड़शोपचारैर्यथोक्तगन्धपुष्पधूपदीप-नैवेद्यादिभि: सम्पूज्य वेद्या उपरि वितानकं सुशोभितं फलपुष्प-युतं दद्यात् । यस्य ग्रहस्य यो वर्णस्तस्मै तत्तद्वर्णानि वस्त्र-कुसुमानुलेपनादीनि यथोक्तानि गुड़ौदनानि नैवेद्यानि च दद्यात् । उक्तालाभे सर्व्वेभ्य: पायसं वा दद्यात् ।

ततो वेद्यैशान्यामव्रणत्वादिलक्षणोपेतं तीर्थजलपरिपूरितं पञ्चपल्लवादियुतं कुम्भं यवोपरि समन्त्रं निदध्यात् । तत्र वरुणं सम्पूज्य बहिर्दध्यक्षतपुष्पमालाविभूषितं (तं) विधाय गङ्गाद्या आवाहयेत् ।

तत्र मन्त्राः ।

गङ्गाद्याः सरितः सर्व्वाः समुद्राश्च सरांसि च ।

सर्व्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।

आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ इति ।

देवदानवसंवादे इत्यादि प्रसन्नो भव सर्व्वदा इति कलशप्रार्थना च कार्य्या ।

ततोऽन्वाधानं कुर्य्यात् । तत्र आज्यभागान्ते विशेषः आदित्यं सोमं भौमं बुधं बृहस्पतिं शुक्रं शनिं राहुं केतुमिति प्रधानदेवताः, ईश्वरमुमां स्कन्दं विष्णुं ब्रह्माणमिन्द्रं यमं कालं चित्रगुप्तमित्यधिदेवताः, अग्निमपो भूमिं विष्णुमिन्द्रमिन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणमिति प्रत्यधिदेवताः, विनायकं दुर्गां वायुमाकाशमश्विनाविति पञ्च लोकपालांश्च अमुकामुकसंख्याभिरर्कादिसमिद्भिरेकैकया आज्याहुत्या एकैकया चर्व्वाहुत्या तिलाज्याद्युपकल्पितद्रव्येण दशभिर्दशभिराहुतिभिरयुतसंख्याभिश्च व्यस्तसमस्ताभ्याहुतिभिस्तिलाज्याहुतिभिः शेषेण स्विष्टकृतमित्यादि यथाशाखोक्तमन्वाधाय निर्वापकाले प्रतिदैवतं सूर्य्याय त्वा जुष्टं निर्वपामि सोमाय त्वा जुष्टं निर्वपामीत्यादिप्रयोगेण चतुरश्चतुरो मुष्टीन् निर्वपेत् । एवं प्रोक्षणेऽपि सूर्य्याय त्वा जुष्टं (निर्वपामि) प्रोक्षामि इत्यादि प्रयोगो द्रष्टव्यः । प्रक्षालनानन्तरं समं विभज्य इदममुष्मा इति यथादैवतं क्रमेण निर्द्दिशेत् ।

ततः क्रमेण द्वात्रिंशत्स्थालीषु निधापयेत् । यद्वा ग्रहाणां नव स्थाल्यः इतरदेवानामेकेति दश स्थाल्यः, यद्वा सर्व्वेषामेकैव ।

इध्माधानानन्तरं यजमानेन द्रव्यत्यागः कार्य्यः । स च बहु-कर्त्तृके होमे यथाकालं प्रत्याहुतित्यागस्य कर्त्तुमशक्यत्वात् सर्व्व-मेव होम्यद्रव्यजातं मनसा देवताय ध्यात्वा इदं यथादैवतमस्तु न ममेत्येवंरूपः आपस्तम्बश्रौतसूत्रे तु ऋत्विग्भिरपि त्यागः कर्त्तव्य इत्युक्तम् ।

तथाच तत्सूत्रम् ।

सर्पिं राज्ये प्रतीयादध्वर्य्युं कर्त्तारमिति ।

एतद्भाष्यकर्त्रा कपर्द्दिना तथा व्याख्यातञ्च ।

ततो यजमानान्वारब्ध आचार्य्य आघाराज्यभागौ हुत्वा सूर्य्याद्युद्देशेन प्रादेशमात्राः कनिष्ठिकास्थूलास्त्रिमध्यस्था अर्कादि-समिधः आकृष्णेनेत्यादिमन्त्रैर्यथासङ्ख्यं हुत्वा ततोऽन्यूनसंख्याभि-स्तत्तत्समिद्भिरधिदेवताप्रत्यधिदेवताहोमं कुर्य्यात् । यद्वा अधि-देवतादीनां पालाश्य एव समिधो होतव्याः ।

ततः स्रुवेण एकैकामाज्याहुतिं मन्त्रैर्जुहुयात् ।

ततश्चरुणामवदानधर्म्मेण एकैकामाहुतिं जुहुयात् । जाम-दग्नीनां* पञ्चावत्तो भवति ।

ततः सर्व्वेभ्योऽवदाय सोमं राजानमिति† मन्त्रेण स्विष्टकृतं जुहुयात् । एतावदाचार्य्य एव कुर्व्वीत ।

---

* आमदग्नीनामित्यत्र पञ्चावत्तिनामिति श्रौतसूत्रे पाठः ।

† सोमं राजानमवसेऽग्निमन्वारभामहे ।
आदित्यान् विष्णुं सूर्यं ब्रह्माणञ्च बृहस्पतिं स्वाहा ॥ (९अ· २६म· यजुः ।).

ततो होमार्थं कामानुसारेण सर्पिर्यवतिलव्रीह्यादिद्रव्यं सूर्य्यादिमन्त्रैः प्रतिदैवतं दशदशाहुतयश्च ऋत्विग्भिस्तां तां देवतां मनसा ध्यायद्भिरुपांशु प्राङ्मुखैरुदङ्मुखैश्च होतव्याः ।

ततः प्रणवाद्याभिः स्वाहान्ताभिर्व्यस्ताभिः समस्ताभिश्च व्याहृतिभिरयुतसंख्यं होमं कृतपुरश्चरणाः सावधाना यजमानस्य अभीष्टकामाः समृध्यतामिति ध्यायन्तो वाग्यताश्छन्दऋषिदैवतविनियोगज्ञानपूर्व्वकं समिद्धेऽग्नौ दक्षिणं जान्वाच्य* अन्तर्जानुहस्ता यज्ञोपवीतिनः पूर्व्वाह्ण एव प्राङ्मुखा उदङ्मुखा वा कुर्य्युः । होमसंख्या च सम्यक् सावधानैः कार्य्या । यावद्धोमसमाप्तिस्तावत्प्रतिदिनं होमाद्यन्तयोश्चन्दनपुष्पादिभिर्ग्रहदेवताः पूजयेत् ।

ततः शुभे मुहूर्त्ते होमसङ्ख्यां समाप्य चतुर्गृहीतेन द्वादशगृहीतेन वाज्येन फलवस्त्रकुसुमचन्दनाक्षतपञ्चरत्नसुवर्णादियुतां पूर्णाहुतिं मूर्द्धानमिति† मन्त्रेण यजमानान्वारब्ध आचार्य्यो जुहुयात् ।

ततो होमशेषं समाप्य यजमानस्य अभिषेकं कुर्य्यात् । तच्चैवम् । अग्नेः पश्चिमे सकुटुम्बं प्राङ्मुखं पीठोपविष्टं यजमानमुदङ्मुखा आचार्य्यऋत्विजस्तिष्ठन्तः पूर्व्वस्थापितकलसोदकैः समङ्गलगीतवाद्यपल्लवदूर्व्वादिभिरभिषिञ्चेयुः ।

---

* आच्य अन्वक् कृत्वा नमयित्वेत्यर्थः ।

† ५५२ पृष्ठे प्रदर्शितम् ।

तत्र मन्त्राः समुद्रज्येष्ठा इत्यादयः* सुरास्त्वामभिषिञ्चन्तु इत्यादयश्च† पौराणाः।

ततः सर्व्वौषधैः स्नापितो यजमानो माल्यगन्धवस्त्रधरः प्रसन्नचेता आचार्य्यादिभ्यो दक्षिणां दद्यात्।

तत्र सूर्य्याय कपिलां पयस्विनीं धेनुम्।

कपिले सर्व्वभूतानां पूजनीयासि रोहिणि।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे॥

इति मन्त्रेण दद्यात्।

एवं सोमाय शङ्खम्।

पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलम्।
विष्णुना विधृतो यस्मादतः शान्तिं प्रयच्छ मे॥ इति।

भौमाय रक्तवर्णं धुरन्धरं वृषभम्।

धर्म्मस्त्वं वृषरूपेण जगदानन्दकारकः।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे॥ इति।

बुधाय सुवर्णं सुवर्णपरिमितम्।

हिरण्यगर्भगर्भस्थं हेम वीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥ इति।

गुरवे पीतवस्त्रद्वयम्।

पीतं वस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम्।
प्रदानादस्य मे विष्णुस्ततः शान्तिं प्रयच्छतु॥

* ३३५ पृष्ठे प्रदर्शिताः।

† ७५ पृष्ठे प्रदर्शिताः।

शुक्राय श्वेताश्वम् ।

विष्णुस्त्वमश्वरूपेण राजसे पृथिवीतले ।
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥ इति ।

शनये कृष्णां गाम् ।

यस्मात्त्वं पृथिवी सर्व्वा धेनुः केशवव्रल्लभा ।
सर्व्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥ इति ।

राहवे आयसम् ।

यस्मादायसकार्य्याणि तवाधीनानि सर्व्वदा ।
हलार्गलायुधादीनि तस्माच्छान्तिं प्रयच्छ मे ॥ इति ।

केतवे छागम् ।

यस्मात्त्वं सर्व्वयज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥

इति मन्त्रेण दद्यात् ।

एताश्च दक्षिणाः ।

आदित्यस्य दक्षिणा यावता मूल्येन पूर्णा भवति तावन्मूल्यं सुवर्णम् वा* तत्तद्दानसमकालमेव दातव्यम् । न च सुवर्णमन्त्रः पृथक् पठनीयः । अयं मुख्यो दक्षिणापक्षः । अथवा सर्व्वेभ्यः सूर्य्यादिभ्यो दक्षिणामेकैकां गां सुवर्णभूषितां गवामङ्गे† -ष्विति मन्त्रेण दद्यात् । अथवा सर्व्वेभ्यः सुवर्णमेव देयम्, येन

---

* इदानीं तु सुवर्णमूल्यं रजतमेव सर्व्वत्र दक्षिणात्वेन व्यवह्रियते ।

† गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ मत्स्यपुराणम् ।

वा गुर्व्वादितोषस्ताद्दद्यात्। सति सामर्थ्ये शय्यारत्नभूमीरपि दद्यात्।

तत्र क्रमेण मन्त्राः।

यस्मादशून्यं शयनं केशवस्य शिवस्य च।
शय्या ममाप्यशून्यास्तु दत्ता जन्मनि जन्मनि॥

इति शय्यायाः।

यथा रत्नेषु सर्व्वेषु सर्व्वे देवाः प्रकीर्त्तिताः।
तथा शान्तिं प्रयच्छन्तु रत्नदानेन मे सुराः॥

इति रत्नानाम्।

यथा भूमिप्रदानस्य कलां नार्हन्ति षोडशीम्।
दानान्यन्यानि मे शान्तिर्भूमिदानाद्भवेदिह॥ इति भूमेः।

वस्त्रालङ्कारादि च ऋत्विग्भ्यो यथार्हं देयम्।

ततो यजमानोऽग्निं प्रदक्षिणीकृत्य वेदिसमीपे गत्वा देवताः पूजयित्वा नमस्कुर्य्यात्।

तत आचार्य्यः पुष्पाञ्जलिं दत्त्वा "उत्तिष्ठ ब्रह्मणस्पते"* "यान्तु देवगणाः सर्व्वे"† इति मन्त्राभ्यां देवता विसर्ज्जयेत्।

---

* उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे।
उपप्रयन्तु मरुतः सुदानव इन्द्रः प्राशूर्भवा सचा॥
(३४अ. ५६म. यजुः।)

† यान्तु देवगणाः सर्व्वे पूजामादाय पार्थिवीम् (पार्थिवीम्)।
इष्टकामसमृद्ध्यर्थं पुनरागमनाय च॥
(पुष्पाञ्जलिदानपद्धतौ।)

ततो यजमानः प्रतिमाः सोपस्करा मण्डपादि च आचार्य्याय समर्पयेत् ।

ततः सभ्यान् पूजयित्वा आचार्य्यादीन् समापयेत् । प्रतिदैवतञ्च त्रयस्त्रय एकैको वा ब्राह्मणा भोजयितव्याः । भूरिदक्षिणा च देया ।

तत आशिषो गृहीत्वा सर्व्वान् सविनयं विसृज्य सोत्साहः ससुहृद्बान्धवो भुञ्जीत इति ।

यत्र एक एव ग्रहः पूज्यते तत्र अधिप्रत्यधिदेवतयोर्विनायकादीनाञ्च आवाहनादि कार्य्यमाहुतीनामयुतसंख्या च ।

एवं कुर्व्वतः फलमुक्तं मात्स्ये ।

अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्व्वान् कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥

इति हेमाद्रिनिबन्धे शान्तिकाण्डोक्तमयुतहोमविधानं समाप्तम् ।

## अथ लक्षहोमविधानम् ।

कथितोऽयुतहोमोऽयं लक्षहोममतः शृणु ।
सर्व्वकामाप्तये यस्माल्लक्षहोमं विदुर्बुधाः ॥
पितॄणां वल्लभो यस्माद्भुक्तिमुक्तिफलप्रदः ।
अस्माद्ग्रहगुणः प्रोक्तो लक्षहोमः स्वयम्भुवा ॥
आहुतिभिः प्रयत्नेन दक्षिणाभिस्तथैव च ।
द्विहस्तविस्तृतं तद्वच्चतुर्हस्तायतं पुनः ॥
लक्षहोमे भवेत्कुण्डं योनिवक्त्रं त्रिमेखलम् ।

द्विरङ्गुलोच्छ्रिता कार्य्या प्रथमा मेखला बुधैः ॥
त्रिरङ्गुलोच्छ्रिता तद्वद्वितीया समुदाहृता ।
उच्छ्रायविस्तराभ्याञ्च तृतीया चतुरङ्गुला ॥
त्र्य(द्व्य)ङ्गुलस्तत्र विस्तारः पूर्व्वयोरपि शस्यते ।
तस्य चोत्तरपूर्व्वेण वितस्तित्रयसम्मितम् ॥
प्रागुदक्प्रवणं तद्वच्चतुरस्रं समन्ततः ।
विष्कम्भार्द्धोच्छ्रितं प्रोक्तं स्थण्डिलं विश्वकर्म्मणा ॥

विष्कम्भो विस्तारः स्थण्डिलं वेदिः ।

संस्थापनाय देवानां वप्रत्रयसमाहृतम् ।
तस्मिन्नावाहयेद्देवान् पूर्व्ववत्पुष्पतण्डुलैः ।
गरुत्मानधिकस्तत्र सम्पूज्यः श्रियमिच्छता ॥
सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः ।
विषपापहरो नित्यमतः शान्तिं प्रयच्छ मे ॥

अयं गरुड़ावाहनमन्त्रः ।

पूर्व्ववत्कुम्भमामन्त्र्य तद्वद्धोमं समाचरेत् ।
सहस्राणां शतं हुत्वा समित्संख्यादिकं पुनः ॥

पूर्व्ववदेव समिदाज्यचरुतिलाज्यादिहोमं पूर्व्वोक्तैरेव मन्त्रैः कुर्य्यात् । गरुड़मन्त्रस्तु सुपर्णोऽसि गरुत्मानित्यादिरूपः ।

घृतकुम्भं वसोर्धारां पातयेदनलोपरि ।
औदुम्बरीमथार्द्राञ्च ऋज्वीं कोटरवर्ज्जिताम् ॥
बाहुमात्रां स्रुचं कृत्वा ततः स्तम्भद्वयोपरि ।
घृतधारां तया सम्यगग्नेरुपरि पातयेत् ॥

श्रावयेत् सूक्तमाग्नेयं* वैष्णवं† रौद्रं‡मैन्द्रवम्§ ।

---

* आग्नेयं सूक्तं यथा—

ओं अग्निः सप्तिं वाजम्भरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठाम् ।

अग्नी रोदसी विचरत्समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरन्धिम् ॥ १ ॥

अग्नेरप्नसः समिदस्तु भद्राग्निर्मही रोदसी आविवेश ।

अग्निरेकं चोदयत् समत्स्वग्निर्वृत्राणि दयते पुरूणि ॥ २ ॥

अग्निर्हत्यं जरतः कर्णमावाग्निरद्भ्यो निरदहज्जरूथम् ।

अग्निरत्रिं घर्म उरुष्यदन्तरग्निर्नृमेधं प्रजयासृजत्सम् ॥ ३ ॥

अग्निर्दाद्द्रविणं वीरपेशा अग्निरृषिं यः सहस्रा सनोति ।

अग्निर्दिवि हव्यमाततानाग्नेर्धामानि विभृता पुरुत्रा ॥ ४ ॥

अग्निमुक्थैरृषयो विह्वयन्तेऽग्निं नरो यामनि बाधितासः ।

अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परियाति गोनाम् ॥ ५ ॥

अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो विजाताः ।

अग्निर्गान्धर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर्घृत आनिषत्ता ॥ ६ ॥

अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं महामवोचामा सुवृक्तिम् ।

अग्ने प्राव जरितारं यविष्ठाग्ने महि द्रविणमायजस्व ॥ ७ ॥ (१०म. ८०सू. १–७ऋक् ।)

तुलापुरुषदानपद्धतौ एतदेव ऋक्सप्तकमग्निसूक्तत्वेन वाचस्पतिना धृतम् ।

† वैष्णवं सूक्तं विष्णोर्नुकमित्यादिकं ५५पृष्ठे द्रष्टव्यम् ।

‡ रौद्रं रुद्रसूक्तं यथा—

नमस्ते रुद्र मन्यव उतोत इषवे नमः ।

बाहुभ्यामुत ते नमः ॥ (१६अ. १म. यजुः ।)

इत्यादिकं षोडशमन्त्रपर्यन्तम् ।

§ ऐन्दवं सोमसूक्तं यथा—

अषाढं युत्सु पृतनासु पप्रिꣳ स्वर्षामप्सां वृजनस्य गोपाम् ।

भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनुमदेम सोम ॥ २० ॥

सोमो धेनुꣳ सोमो अर्वन्तमाशुꣳ सोमो वीरं कर्मण्यं ददाति ।

सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २१ ॥

महावैश्वानरं सम्यग्ज्येष्ठसाम च* पाठयेत् ।
स्नानञ्च यजमानस्य पूर्व्ववत्स्वस्तिवाचनम् ॥
दातव्या यजमानेन पूर्व्ववद्दक्षिणा पृथक् ।
कामक्रोधविहीनेन ऋत्विग्भ्यः शान्तचेतसा ॥
तदर्द्धं दश वाष्टौ वा लक्षहोमेऽपि ऋत्विजः ।
कर्त्तव्याः शक्तितस्तद्वच्चत्वारो वाप्यमत्सराः ॥
नवग्रहमखात्सर्व्वं लक्षहोमे दशोत्तरम् ।
दद्याच्च मुनिशार्दूल भूषणान्यपि शक्तितः ॥
शयनानि च वस्त्राणि हैमानि कटकानि च ।
कर्णाङ्गुलिपवित्राणि कण्ठसूत्राणि शक्तितः ॥
न कुर्य्याद्दक्षिणाहीनं वित्तशाठ्येन मानवः ।
अदत्त्वा लोभमोहाद्वा† कुलक्षयमवाप्नुयात् ॥

---

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥
देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य ।
मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्र चिकित्सा गविष्टौ ॥ २३ ॥

एतदेव मन्त्रचतुष्टयं वाचस्पतिना सोमयज्ञत्वेन तुलापुरुषदानपद्धतौ धृतम् ।

(१०अ. २०-२१म. यजुः ।)

ज्येष्ठसाम वाचस्पतिकृततुलापुरुषदानपद्धतौ १२०।१२४ पत्रयोर्मुद्रितं, तद्यथाग्नौ तु--

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥

इत्यस्य त्रिः सामकं कार्य्यमिति वाचस्पतिः ।

† अदत्त्वा दक्षिणां मोहादिति क-पुस्तके पाठः ।

अन्नदानं यथाशक्ति दातव्यं भूतिमिच्छता ।
अन्नहीनः क्रतो यस्माद्दुर्भिक्षफलदो भवेत् ॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनश्च ऋत्विजः ।
अदक्षिणोऽपि यष्टारं नास्ति यज्ञसमो रिपुः ॥
न चाप्यल्पधनः कुर्य्याल्लक्षहोमं नरः क्वचित् ।
तस्मात्पीडाकरोऽतीव य एव भवति ग्रहः ॥
तमेव पूजयेद्भक्त्या द्वौ वा त्रीन् वा यथाविधि ।
एकमप्यर्चयेद्भक्त्या ब्राह्मणं यज्ञपारगम् ।
दक्षिणाभिः प्रयत्नेन बहून् वा बहुवित्तवान् ॥
लक्षहोमस्तु कर्त्तव्यो यदा वित्तं भवेद्गृहे ।
यतः सर्व्वानवाप्नोति कुर्व्वन् कामान् विधानतः ॥
पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः ।
यावत्कल्पशतान्यष्टावथ मोक्षमवाप्नुयात् ॥
सकामो यस्त्विमं कुर्य्याल्लक्षहोमं यथाविधि ।
सर्व्वान् कामानवाप्नोति परत्रानन्त्यमश्नुते ॥
पुत्रार्थी लभते पुत्रान् धनार्थी लभते धनम् ।
भार्य्यार्थी लभते भार्य्यां कुमारी च पतिं शुभम् ।
भ्रष्टराज्यस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् ॥
यं यं कामयते कामं तं तमाप्नोति पुष्कलम् ।
निष्कामः कुरुते यस्तु परं ब्रह्माधिगच्छति ॥

इति लक्षहोममूलवाक्यानि ।

तस्तु सुपर्णोऽसि गरुत्मानिति मन्त्रो हेमाद्रौ ज्ञेयः। इन्द्रमिन्द्र-मिति वा।

समिदादिसंख्याव्यतिरेकेण व्यस्तसमस्ताहुतिभिः पूर्व्ववदेव लक्षसंख्या पूरणीया। पूर्णाहुत्यनन्तरमग्नेरुपरि हस्तद्वयविस्तृतामौदुम्बरीं स्रुचं पर्णशाखाविवर्जितां बाहुमात्रां विधाय तथा तदुपरि शृङ्खलाविधृतेन घृतपूरितेन कुम्भेन अधो यवमात्रच्छिद्रेण आज्यं मुञ्चता अग्नेरुपरि वसोर्धारां पातयेत्। तदा (ग्रये) च आग्नेयादीनि सूक्तानि* महादेवाग्नराज्येष्ठसामनी† च श्रावयेत्।

दक्षिणा च अयुतहोमाद्दशगुणा दशधेन्वादिरूपा देया। सूर्य्याद्युद्देशेन दशगुणाः शय्याश्च। अयुतहोमाद्दशगुणानि रत्नानि दशगुणा भूमिश्च देया। मन्त्राश्च त एव। शक्तिमांश्चेद्भूषणशयनासनवस्त्राणि हेमकटकस्वर्णाङ्गुलीयपविन्नकण्ठसूत्रादीन्यपि दद्यात्। अयुतहोमाद्दशगुणब्राह्मणभोजनं कार्य्यम्। विसर्जनादि समानं फलन्तु प्रागेवाभिहितम्।

इति लक्षहोमपद्धतिः समाप्ता।

---

* ५६६ पृष्ठे प्रदर्शितानि।

† ज्येष्ठसाम ५६७ पृष्ठे प्रदर्शितम्।

अथ कोटिहोमविधानम् ।

तत्र मत्स्यपुराणम् ।

अस्मात् शतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा ।
आहुतिभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥
पूर्व्ववद्ग्रहदेवानामावाहनविसर्ज्जने ।
होममन्त्रास्त एवोक्ताः स्नानदाने तथैव च ॥
कुण्डमण्डपवेदीनां विशेषोऽयं निबोध मे ।
कोटिहोमे चतुर्हस्तं चतुरस्रञ्च सर्व्वतः ।
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम् ॥

सर्व्वतश्चतुर्हस्तमिति विस्तारायामखातेषु चतुर्हस्तमित्यर्थः । योनिवक्त्रद्वयोपेतमिति एकेन योनिवक्त्रेण पश्चिमतो युक्तं द्वितीयेन दक्षिणतो युक्तमिति हेमाद्रिणा व्याख्यातम् ।

वेदिश्च कोटिहोमे स्याद्वितस्तीनां चतुष्टयी ।
चतुरस्रा समा तद्वत्त्रिभिर्वप्रैः समावृता ।
वप्रप्रमाणं प्रोक्तं वै वेदिकायास्तथोच्छ्रयः ॥

प्रोक्तं लक्षहोमे इति शेषः ।

तथा षोड़शहस्तः स्यान्मण्डपश्च चतुर्म्मुखः ।
पूर्व्वद्वारे च संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्व्वेदं तथा याम्ये पश्चिमे सामवेदिनम् ।
अथर्व्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्य्या वेदवेदाङ्गवेदिनः ।

एवं द्वादश तान् विप्रान् वस्त्रमाल्यानुलेपनैः ॥

पूर्व्ववत्पूजयेद्भक्त्या सर्व्वाभरणभूषणैः ।

रात्रिसूक्तञ्च* रौद्रञ्च पावमानं† सुमङ्गलम्‡ ॥

पूर्व्वतो बह्वृचः शान्तिं पठेत्तावदुदङ्मुखः ।

शाक्रं§ रौद्रञ्च सौम्यञ्च कौश्माण्डं शान्तिमेव च ॥

---

* रात्रिसूक्तमारात्रि पार्थिवं रज इत्यादिकं १७६।१७७ पृष्ठयोरुक्तम् ।

† पावमानसूक्तं यथा--

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।

इन्द्राय पातवे सुतः ॥ १ ॥

इत्यादिकं षष्टिमन्त्रात्मकं तुलापुरुषदानपद्धतौ १६७ पत्रे मृग्यम् ।

‡ सुमङ्गलसूक्तं यथा—

कनिक्रदज्जनुषं प्रब्रुवाण इयर्त्ति वाचमरितेव नावम् ।

सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत् ॥ १ ॥

मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान् वीरो अस्ता ।

पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥ २ ॥

अवक्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुने ।

मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥ ३ ॥

(२म. ४२सू. १-३ऋक् ।)

§ शाक्रमिन्द्रसूक्तं यथा—

इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः ।

रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ १ ॥

सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।

त्वामभि प्रणोनुमो जेतारमपराजितम् ॥ २ ॥

पूर्व्वीरिन्द्रस्य रातयो न विदस्यन्त्यूतयः ।

यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥ ३ ॥

पठेत्तु दक्षिणे द्वारि याजुर्वैदिक उत्तमम् ।
सौपर्णमथ वैराजमाग्नेयं रौद्रसंहिताम् ॥
ज्येष्ठसाम तथा शान्तिं छन्दोगः पश्चिमे पठेत् ।
शान्तिसूक्तञ्च सौरञ्च तथा शाकुनकं शुभम् ॥
पौष्टिकञ्च महाराजमुत्तरेणाप्यथर्व्ववित् ।
पञ्चभिः सप्तभिर्वापि होमः कार्य्योऽथ पूर्व्ववत् ॥
स्नाने दाने च मन्त्राः स्युस्त एव मुनिसत्तम ।
वसोर्धाराविधानञ्च लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु कोटिहोमं समाचरेत् ।
सर्व्वान् कामानवाप्नोति ततो विष्णुपदं व्रजेत् ॥
यः पठेच्छृणुयाद्वापि ग्रहशान्तित्रयं नरः ।
सर्व्वपापविशुद्धात्मा पदमिन्द्रस्य गच्छति ॥

---

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः ॥ ४ ॥
त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ ५ ॥
तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥ ६ ॥
मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥ ७ ॥
इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ ८ ॥ (१म. ११सू. १-८ऋक् ।)

एतदेव ऋगष्टकं वाचस्पतिना इन्द्रमन्त्रत्वेन धृतम् ।

अश्वमेधसहस्राणि दश चाष्टौ च धर्म्मवित् ।
कृत्वा यत्फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्ब्बुदानि च ।
नश्यन्ति कोटिहोमेन यथावच्छिवभाषितम् ॥
कोटिहोमः प्रकर्त्तव्यो यदा वित्तं भवेद्बहु ।
सर्व्वानर्थानवाप्नोति कुर्व्वन् कामान् विधानतः ॥
पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः ।
यावत्कल्पशतान्यष्टावथ मोक्षमवाप्नुयात् ॥
सकामो यस्त्विमं कुर्य्यात्कोटिहोमं यथाविधि ।
तं स काममवाप्नोति पदञ्चानन्तमश्नुते ॥
पुत्रार्थी लभते पुत्रान्

इत्यादिकं फलं लक्षहोमवज्ज्ञेयम् ।

तथा ।

ग्रहयज्ञत्रयं कुर्य्याद्यस्तु न्यायेन मानवः ।
न तस्य ग्रहपीड़ा स्यान्न च बन्धुजनक्षयः ॥
ग्रहयज्ञत्रयं गेहे लिखितं यस्य तिष्ठति ।
न तत्र पीड़ा बालानां न रोगो न च बन्धनम् ॥
अशेषयज्ञफलदमशेषाघौघनाशनम् ।
कोटिहोमं विदुः प्राज्ञा भुक्तिमुक्तिप्रदायकम् ॥
अश्वमेधफलप्राप्तुर्लक्षहोमं सुरोत्तमाः ।
द्वादशाहसमस्त्वद्भवग्रहमखः स्मृतः ॥

द्वादशाहो यज्ञविशेषस्तत्समस्तत्फलप्रद इत्यर्थः ।

इति कथित इदानीमुत्सवानन्दहेतुः
सकलकलुषहारी देवयज्ञाभिषेकः ।
परिपठति य इत्थं यः शृणोति प्रगल्भा-
दभिभवति स शत्रूनायुरारोग्ययुक्तः ॥

इति मात्स्ये कोटिहोममूलवाक्यानि ।

अथास्य प्रयोगः ।

अत्रापि लक्षहोमवदेव अनुष्ठानम् । यदा शीघ्रं समापयितुमिच्छति तदा उक्ताष्टहोमकर्त्रपेक्षया अधिका अपि यथेष्टं वरीतव्याः ।

अत्रापि गणमाता सहैव त्रयस्त्रिंशद्देवताः पूज्याः । कुण्डवेदिकयोः कोटिहोमे चतुर्हस्तमित्यादिविशेषो द्रष्टव्यः । ग्रहहोमः पूर्ववत् । व्याहृत्याहुतयस्तु कोटिमिता होतव्याः । दक्षिणा तु लक्षहोमाच्छतगुणा सहस्रं धेनवः सहस्रं शय्या इत्यादि । दानमन्त्रास्त एव । यद्वा सहस्रं गाः सुवर्णभूषिताः सोपस्कराः सूर्य्यामुद्दिश्य दद्यात् । तन्मन्त्र उक्त एव । अथवा सर्व्वेभ्यः सुवर्णं दद्यात् । रत्नादिदानञ्च पूर्व्ववत् । ब्राह्मणभोजनमयुतहोमात् सहस्रगुणम् । अन्यत् सर्व्वं लक्षहोमवज्ज्ञेयम ।

इति हेमाद्रिनिबन्धे शान्तिकाण्डोक्तानि अयुतहोम-लक्षहोम-कोटिहोमविधानानि ।

अथ ग्रहयज्ञसाधारणविशेषाः ।

यथा हेमाद्रौ ।

हस्तमाप्यायने कुण्डं तथाच वशकर्म्मणि ।
त्रिमेखलञ्चैकवक्त्रमरत्निविस्तरेण तु ॥
पालाशसमिधः शस्ता मधुगोरोचनान्विताः ।
चन्दनागुरुणा तद्वत्कुङ्कुमेनाभिषेचिताः ॥
होमयेन्मधुसर्पिर्भ्यां बिल्वानि कमलानि च ।
सहस्राणि दशैवोक्तमेतद्देव स्वयम्भुवा ॥
वश्यकर्म्मणि बिल्वानां पद्मानाञ्चैव धर्म्मवित् ।
सुमित्रियान आपः* ओषधय इति होमयेत् ।
न चात्र स्नपनं कार्य्यं न च कुम्भाभिषेचनम् ।
स्नानं सर्व्वौषधैः कृत्वा शुक्लपुष्पाम्बरो गृही ॥
कण्ठसूत्रैः सकटकैरङ्गुलीयैः पवित्रकैः ।
सूक्ष्मवस्त्राणि देयानि शुक्ला गावः सकाञ्चनाः ॥
अवश्यानि वशीकुर्य्यात् सर्व्वशत्रुबलान्यपि ।
अमित्राण्यपि मित्राणि होमोऽयं पापनाशनः ॥
विद्वेषणेऽभिचारे च त्रिकोणं कुण्डमिष्यते ।
द्विमेखलं कोणमुखं हस्तमात्रञ्च सर्व्वतः ॥
होमं कुर्य्युस्त्रयो विप्रा रक्तमाल्यानुलेपनाः ।
निवातलोहितोष्णीषा लोहिताम्बरधारिणः ॥

---

* सुमित्रियान आप ओषधयः सन्तु । (६अ. २२म. यजुः ।)

नरवापसरक्ताज्यपात्रत्रपुसमन्विताः ।
समिधो वामहस्तेन श्येनास्थिलवणैर्युताः ॥
होतव्याः शुक्लकेशैश्च ध्यायद्भिरशिवं रिपोः ।
दुर्मित्रियास्तस्मै सन्तु* तथा हुं फडितीति च ॥
श्येनाभिचारमन्त्रेण क्षुरं सप्ताभिमन्त्रितम् ।
प्रतिरूपं रिपोः कृत्वा क्षुरेण परिकर्त्तयेत् ॥
हृष्टरूपस्य सकलाङ्गान्यग्नौ च विनिक्षिपेत् ।
ग्रहयज्ञविधानात्ते सदैवाभिचरन्नरः ॥
विद्वेषणं तथा कुर्व्वन्नेतदेव समाचरेत् ।
इहैव फलदं पुंसामेतन्नामुत्र शोभनम् ॥
अमुत्र परलोके न शोभनं नरकहेतुरित्यर्थः ।
तस्माच्छान्तिकरं त्वत्र कर्त्तव्यं भूतिमिच्छता ।
ग्रहयज्ञत्रयं कुर्य्याद्यस्त्वकामेन मानवः ।
स विष्णोः पदमाप्नोति पुनरावृत्तिदुर्लभम् ॥
यस्त्विदं शृणुयान्नित्यं श्रावयेद्वापि मानवः ।
न तस्य ग्रहपीड़ा स्यान्न च बन्धुजनक्षयः ॥
ग्रहयज्ञत्रयं गेहे लिखितं यस्य तिष्ठति ।
न पीड़ा तत्र बालानां न रोगो न च बन्धनम् ।
अशेषयज्ञफलदम् ॥ इत्यादि पूर्व्ववत् ।

इति ग्रहयज्ञोपयुक्तविशेषाः ।

---

* दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः । (६ अ. २२म. यजुः ।)

अथ महान्तोऽयुतहोम-लक्षहोम-कोटिहोमा उच्यन्ते ।

हेमाद्रावेव मात्स्ये ।

राज्ञा धर्म्मप्रसक्तेन प्रजानाञ्च हितैषिणा ।
ग्रहयज्ञः सदा कार्य्यो लक्षहोमसमन्वितः ॥
नदीनां सङ्गमे चैव सुराणामग्रतस्तथा ।
सुसमे भूमिभागे च देवताधिष्ठिते नृप ॥
गुरुणा ऋत्विजा चैव सार्द्धं भूमिं परीक्षयेत् ।
खनेद्दै तत्र कुण्डञ्च सुसमं हस्तमात्रकम् ॥
द्विगुणं लक्षहोमे च कोटिहोमे चतुर्गुणम् ।
ऋत्विजो युग्मशः प्रोक्ता अष्टौ ते वेदपारगाः ।
कन्दमूलफलाहारा दधिक्षीराशिनोऽपि वा ॥
वेद्यां निधापयेच्चैव रत्नानि विविधानि च ।
कुण्डवस्त्रपरिधेयाश्च ततोऽग्निश्च समर्चयेत् ॥

ऋत्विग्भिर् ग्रहाः परिधेयाः प्रणीता इत्यर्थः ।

गायत्र्या दशसाहस्रं मा नः स्तोकेति* षड्गुणाः ।
त्रिंशद्ब्रह्मादिमन्त्रैश्च चत्वार्य्येव तु वैष्णवैः ॥
कुशाग्रैर्जुहुयात्पश्च क्रिरिकाभिः(किरिकायां) तु षोडश ।
होतव्या दशसाहस्रा मन्त्रो वै जातवेदसा† ॥

* मा नः स्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ (१६अ. १६म. यजुः ।)

† जातवेदसे सुनवाम सोममित्यादिकेन ६२ पृष्ठे प्रदर्शितेन ।

द्वितीयः स्तवकः।

श्रिया मन्त्रेण होतव्याः सहस्राणि चतुर्दश।
शेषाः पञ्चसहस्रास्तु होतव्यास्त्विन्द्रदैवतैः॥
हुते शतसहस्रे तु पुण्यस्नानं विनिर्द्दिशेत्।
कुम्भैः षोडशसंख्यैश्च सहिरण्यैः सुमङ्गलैः।
स्नापयेद्यजमानन्तु ततः शान्तिर्भविष्यति॥
एवङ्कृते तु यत्किञ्चिद्ग्रहपीडासमुद्भवम्।
तत्सर्व्वं नाशमायाति दत्त्वा वै दक्षिणां नृप।
तस्मात्सर्व्वप्रयत्नेन प्रधाना दक्षिणा स्मृता॥
हस्त्यश्वरथयानानि भूमिवासोयुगानि च।
अनडुह्शतं दद्यादृत्विजाञ्चैव दक्षिणाम्॥
यथाविभवसाध्योऽयं वित्तशाठ्यं न कारयेत्।
मासे पूर्णे समाप्तिस्तु लक्षहोमे भवेदिह॥
लक्षहोमे तु राजेन्द्र विधानम्परिकीर्त्तितम्।
इदानीं कोटिहोमस्य शृणु त्वं कथयाम्यहम्॥
गङ्गातटेऽथ यमुनासरस्वत्योर्नराधिप।
नर्म्मदावेदिकायाञ्च कोटिहोमो विधीयते॥
तत्रापि ऋत्विजः कार्य्या रविनन्दन षोडश।
सर्व्वहोमेषु राजेन्द्र तथा विधिषु पावनीम्॥
ऋत्विगाचार्य्यसंहितो दीक्षां संवत्सरं स्थितः।
चैत्रमासे तु सम्प्राप्ते कार्त्तिके वा विशेषतः॥
प्रारम्भे कर्म्मणां यो वा वत्सरे वत्सरे नृप।
यजमानः पयोभक्षो फलाशी च तथानघः॥

यदि वा व्रीहयो माषास्तिलाश्च सह सर्पिषा ।
पलाशसमिधः शस्ता वसोर्धारा तथोपरि ॥
मासे च प्रथमे दद्याद्दत्विग्भ्यः क्षीरभोजनम् ।
द्वितीये कृशरा देयाः सर्व्वकामार्थसाधनाः ॥
संयावकं तृतीये च देयं वै रविनन्दन ।
चतुर्थे मोदका देया विप्राणाम्प्रीतिमावहेत्* ॥
पञ्चमे दधि भक्तञ्च षष्ठे वै श(स)क्तुभोजनम् ।
अपूपाः सप्तमे देया अष्टमे घृतपूरिकाः ॥
पिष्टौदनञ्च नवमे दशमे यवपिष्टिकाः ।
एकादशे समांसन्तु भोजनं रविनन्दन ॥
द्वादशे त्वथ सम्प्राप्ते मासे रविकुलोद्वह ।
षड्रसं सह भक्ष्यैश्च भोजनं सार्व्वकामिकम् ॥
कृत्वा सुराणां राजेन्द्र पशुघातसमन्वितम् ।
दानानि सर्व्वदेवानां प्रीतये स्वयमाचरेत् ॥
देया द्विजानां राजेन्द्र मासि मासि च दक्षिणा ।
अहतवासःसंवीतैर्द्विजाग्र्यै होमयेदलम् ॥
तस्मिन् सदा स्थितैर्भाव्यं यजमानेन संयुतैः ।
इन्द्राग्न्यादिसुराणाञ्च प्रीणनं सार्व्वकामिकम् ॥
एवङ्कृत्वा विधानेन पूर्णाहुतिः शते शते ।
सहस्रगुणिता देया यावच्छतसहस्रकम् ॥

---

* प्रीतिहेतवे इति पाठः साधीयान् ।

पुरोडाशं ततः प्राश्य देवतीर्थे च ऋत्विजैः।
उक्त्वा सामान्यवाक्यञ्च पुनश्च प्रेषयेद्द्विजान्॥
प्रीणयित्वा सुरान् सर्व्वान् पितॄंश्चैव यथाक्रमम्।
कृत्वा शास्त्रविधानन्तु पिण्डदानं सतर्पणम्।
समाप्तौ तस्य होमस्य विप्राणामथ दक्षिणा॥

देयेति शेषः।

तुलाञ्चैव समाक्लृप्त्वा बद्ध्वा शिक्यद्वयं पुनः।
आत्मानं तोलयेत्तत्र पत्नीञ्चापि द्वितीयके॥
सुवर्णेनैव चात्मानं रजतेन तथा प्रियाम्।
तोलयित्वा ततो राजन् वित्तशाठ्यविवर्ज्जितः॥
दत्त्वा शतसहस्रन्तु शुद्धस्य कनकस्य तु।
सर्व्वस्वं वा ददेत्तत्र राजसूयफलं लभेत्॥
एवं सर्व्वोपघाते तु दैवमानुषकारिते।
इयं शान्तिस्तवाख्याता यां कृत्वा सुकृती भवेत्॥ इति।

अत्र प्रकरणे महायुतहोमोऽप्यस्ति।

खनेद्दै तत्र कुण्डञ्च सुसमं हस्तमात्रकम्।

इत्युपक्रमात्।

स तत्फलमवाप्नोति कृत्वा यज्ञत्रयं नृप॥

इत्यन्ते उपसंहाराच्च।

तत्र लक्षहोमाहुतीनां दशगुणितो भागो यथायथमाहुति-सङ्ख्या च कोटिहोमे शतगुणिता लक्षहोमाहुतय इति।

इति हेमाद्रिनिबन्धे शान्तिकाण्डे महापद्मयज्ञत्रयविधानम्।

## अथ बृहत्पराशरस्मृत्युक्त-महालक्षकोटिहोमविधानम्।

अथातः सम्प्रवक्ष्यामि द्विजेन्द्राः* श्रूयतामयम्।
लक्षहोमविधिः पुण्यः कोटिहोमविधिस्तथा॥
स्वयम्भूर्यमुवाच प्राक् अस्मत्तातपितामहः।
तमिमं सम्प्रवक्ष्यामि श्रूयतां पापनाशनम्॥
ये चे(वे)ह ब्राह्मणाः कार्य्या भूमिर्या यच्च मण्डपम्।
याः समिधो ये च मन्त्रा अन्यत्तत्रैव यद्भवेत्॥
लक्षहोमविधिं विप्राः कथ्यमानं निबोधत।
युष्माश्च ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः॥
नियमव्रतसम्पन्नाः सहिताः पार्थिवेन तु।
नित्यं व्रत(जप)पराश्चैव नियोज्यास्ताद्दशा द्विजाः।
कन्दमूलफलाहारा दधिक्षीराशिनोऽपि वा॥
प्रागवा चोदक्प्लवे देशे† समं स्थण्डिलमेव च‡।
तत्र वेदिं प्रकुर्व्वीत पञ्चाङ्गुल§समुच्छ्रिताम्।
दक्षिणोत्तर आयामे त्रिरत्निः (त्रिंशत्तु) पूर्व्वपश्चिमे॥
कुण्डानि खनितव्यानि अङ्गुलान्येकविंशतिम्।
निधापयेद्धिरण्यानि रत्नानि विविधानि च॥

---

* द्विजेन्द्रा इत्यत्र नरेन्द्रा इति आकरे पाठः।

† प्रागुदक्पूर्व्वदेशेषु इति आकरे पाठः।

‡ समे स्थण्डिल एव वा इति आकरे पाठः।

§ पञ्चाङ्गुलेत्यत्र पञ्चहस्तेति आकरे पाठः।

सिकतोपरि देया च तत्राप्यग्निं समिन्धयेत्।
ग्रहांश्चैव सनक्षत्रान् प्राच्यां दिशि समर्च्चयेत्॥
अवदानविधानेन स्थालीपाकं प्रकल्पयेत्।
आज्यभागाहुतीर्हुत्वा नवाहुत्या तु होमयेत्॥
अग्निं सोमञ्च सूर्य्यञ्च विष्णुञ्चैव प्रजापतिम्।
विश्वेदेवान् महेन्द्रञ्च मित्रं स्विष्टकृतं तथा॥
दधिमधुघृताक्ताश्च(नां) समिधश्चैव याज्ञिकः।
होमयेच्छतसाहस्रं मन्त्रैश्चैव यथाक्रमम्॥
चतुर्विंशतिर्गायत्र्या मा नः स्तोकेति षट् तथा।
त्रिंशद्(विंश)ग्रहादिमन्त्रैश्च चतुरो* विष्णुदैवतैः॥
कुष्माण्डैर्जुहुयात्पञ्च क्रिरिकाभिस्तु† षोडश।
जुहुयाद्दशसाहस्रं जातवेदस इत्यृचा॥
पञ्चसहस्राण्यन्यानि जुहुयादिन्द्रदैवतैः।
हुतं शतसहस्रे तु अभिषेकन्तु कारयेत्॥
पुष्याभिषेकवत्प्रोक्तं‡ तदत्रापि शुभप्रदम्।
अथ षोडशकुम्भैश्च सहिरण्यैः सुमङ्गलैः॥
सर्व्वौषधिसमायुक्तैः सर्व्वरत्नविभूषितैः।
अभिषेकं ततः कुर्य्यात्स्नानमन्त्रैर्यथोदितैः॥

---

* चतुर इत्यत्र चत्वारीति पाकरे पाठः।

† क्रिरिकदैवतैः नमोऽस्तु किरिकेभ्य इति छन्दोगाग्रन्थवचनात् किरिकाणां दैवत्वमव-
ते। विकिरैश्चाय इति पाकरे पाठः।

‡ इष्टाभिषेकं यत्प्रोक्तमित्याकरे पाठः।

समाप्ते तु ततस्तस्मिन् प्रधाना दक्षिणा स्मृता ।
हस्त्यश्वरथयानानि भूमिवस्त्रयुगानि च ॥
अनडुद्गोशतं दद्याः*दृत्विजाञ्चैव दक्षिणाम् ।
वृषांश्चैकादश द्वौ वा दश दद्याश्च धेनवः ॥

धेनवो धेनूरित्यर्थः ।

स्वशक्त्या वा प्रदद्याद्‌गां वित्तशाठ्यं विवर्ज्जयेत् ।
एवङ्कृते च यत्किञ्चिद्‌ग्रहपीड़ासमुद्भवम् ॥
भौममाकाशजं वापि अन्यद्वा यदि जायते ।
तत्सर्व्वं लक्षहोमेन प्रशमं यात्यसंशयम् ॥
शान्तिर्भवति पुष्टिश्च बलं तेजश्च वर्द्धते ।
वृष्टिर्भवति राष्ट्रे च सर्व्वोपद्रवसङ्क्षयः ॥

इति वृहत्पराशरे लक्षहोमविधानम् ।

अथ कोटिहोमविधानम् ।

यथा तत्रैव ।

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः ।
श्रूयतामादरेणायं सर्व्वकामफलप्रदः ॥
सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजो यागकर्म्मणि ।
विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये ।
कार्य्याश्चैव विशेषेण यज्ञयागविधेर्विदः ॥
एकाङ्गविकलो यश्च धनधान्यापहारकः ।
सर्व्वाङ्गविकलो यश्च यजमानं स हिंसति ॥

---

* अनडुहांश गोशतं हेम इत्याकरे पाठः ।

र्हिंसति द्विजस्तोत्यर्थः।

तस्मात्सर्व्वप्रयत्नेन विधिमन्त्रादिविद्विजाः।
कार्य्याश्चैव प्रयत्नेन यज्ञयज्ञस्य सिद्धये॥
यज्ञाः फलन्ति नागाश्च सुराश्चैव नरेश्वराः।
अधीताश्चैव मन्त्राणामष्टोत्तरशतं तथा॥
स एव ऋत्विग्विज्ञेयः सर्व्वकामफलप्रदः।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः॥
एवङ्कृते च यत्किञ्चिद्ग्रहपीडामनुद्भवम्।
तत्सर्व्वं नाशयेत्क्षिप्रं क्षतघ्नः सौहृदं यथा॥
लक्षा(यस्मा)च्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च॥
पूर्व्ववद्ग्रहदेवानामावाहनविसर्ज्जने।
होममन्त्रास्त एवोक्ताः स्नानं दानं तथैव च॥
मण्डपस्य च वेद्याश्च विशेषन्तु निबोधत।
कोटिहोमे चतुर्हस्तं चतुरस्रायतं* पुनः॥
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम्।
द्व्यङ्गुलेनोच्छ्रिता कार्य्या प्रथमा मेखला बुधैः॥
त्र्यङ्गुलेनोच्छ्रिता तद्द्वितीया मेखला स्मृता।
उच्छ्रिता मेखलाद्या तु तृतीया चतुरङ्गुला॥
द्विगुणस्तत्र विस्तारः पूर्व्वयोरेव शस्यते।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता॥

* चतुर्हस्तायतमित्याकरे पाठः।

कूर्म्मपृष्ठोच्छ्रिता मध्ये पार्श्वतश्चाङ्गुलोच्छ्रिता ।
गजोष्ठसदृशी तद्वदायता च्छिद्रसंयुता ॥
एतत्सर्व्वेषु कुण्डेषु योनिलक्षणमुच्यते ।
मेखलोपरि सर्व्वत्र अश्वत्थदलसन्निभा ॥
वेदी च कोटिहोमे स्याद्वितस्तीनां चतुष्टयम्* ।
चतुरस्रा समा तद्वत्त्रिभिर्वप्रैः समावृता ॥
वप्रप्रमाणं पूर्व्वोक्तं वेद्याः कार्य्यस्तथोच्छ्रयः ।
ततः षोड़शहस्तः स्यान्मण्डपश्च चतुर्मुखः ॥
पूर्व्वद्वारे तु संस्थाप्य बह्वृचं वेदपारगम् ।
यजुर्व्वेदं तथा याम्ये पश्चिमे सामवेदिनम् ॥
अथर्व्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः ।
अष्टौ तु होतकाः (होमकाः) कार्य्या वेदवेदाङ्गवेदिनः
एवं द्वादश विप्राणां वस्त्रमाल्यानुलेपनैः ।
पूर्व्ववत्पूजयेद्भक्त्या सर्व्वाभरणभूषितैः ॥
रात्रिसूक्तञ्च† सौरञ्च‡ पावमानं§ सुमङ्गलम्¶ ।
पूर्व्वद्वारे जपेच्छान्तिं पावमानमुदङ्मुखः ॥

---

* मण्डपश्च चतुर्मुख इत्याकरे पाठः ।

† रात्रिसूक्तमारात्रि पार्थिवं रज इत्यादिकं २७६ पृष्ठे प्रदर्शितम् ।

‡ सौरं सूर्य्यमन्त्रम्—उदुत्यं जातवेदसं देवं वहन्ति केतवः । इमे विश्वाय सूर्य्यमित्यादि— यजुर्वेदे मृग्यम् ।

§ स्वादिष्ठया मदिष्ठया इत्यादिकं पावमानसूक्तं ५७२ पृष्ठे किञ्चित्प्रदर्शितम् ।

¶ कनिक्रदज्जनुषमित्यादिकं सुमङ्गलसूक्तं ५७२ पृष्ठे प्रदर्शितम् ।

शाक्रं* रौद्रञ्च† सौम्यञ्च‡ कुष्माण्डं शान्तिमेव च ।
पाठयेद्दक्षिणद्वारे यजुर्व्वेदमनुत्तमम् ॥
सौप(व)र्णमथ वैराजमाग्नेयं§ रौद्र(रुद्र)संहिताम् ।
ज्येष्ठसामञ्च¶ तथा शान्तिं छन्दोगः पश्चिमे पठेत् ॥
सविधानं तथा शान्तिमथर्व्वोत्तरतः पठेत् ।
पञ्चभिः सप्तभिर्वाथ होमः कार्य्यश्च पूर्व्ववत् ॥
स्नानं दानं च मन्त्राः स्युस्त एव द्विजसत्तमाः ।
वसोर्धाराविधानञ्च लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्व्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
यः पठेच्छृणुयाद्वापि ग्रहयागमिमं बुधः ।
सर्व्वपापविशुद्धात्मा पदमिन्द्रस्य गच्छति ॥
अश्वमेधसहस्राणि दश चाष्टौ च धर्म्मवित् ।
कृत्वा यत्फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्व्वुदानि च ।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥

---

* शाक्रमिन्द्रमन्त्र ५०२।५०३ पृष्ठयोः प्रदर्शितम् ।

† रौद्रं रुद्रमन्त्रं ४६६ पृष्ठे प्रदर्शितम ।

‡ सौम्यं सोममन्त्र ४६६।४६७ पृष्ठयोः प्रदर्शितम् ।

§ आग्नेयम् अग्निमन्त्रं ४६६ पृष्ठे प्रदर्शितम् ।

¶ ज्येष्ठसाम ४६७ पृष्ठे प्रदर्शितम् ।

तस्मात्सदा भूपतयो विदध्यु-
र्वृष्टिप्रजासौख्यबलस्य पुष्ट्यै ।
आयुष्यवृद्ध्यै विजयाय कीर्त्यै
लक्षादिहोमग्रहयागमेनम् ॥
इति श्रीवृहत्पराशरे कोटिहोमविधानम् ॥

## अथ प्रकारान्तरेण लक्षहोमकोटिहोमविधानम् ।

हेमाद्रावेव शान्तिकाण्डे देवीपुराणे मनुरुवाच ।
ग्रहपूजा प्रकर्त्तव्या इत्युपक्रम्य—

होमो ग्रहादिपूजायां शतमष्टाधिकं तथा ।
अष्टाविंशतिहोमस्तु यथाप्राप्ति विधीयते ॥

इत्युक्त्वा अभिहितम् ।

लक्षहोमः प्रकर्त्तव्यः सर्व्वपीडानिवारकः ।
गायत्र्या ग्रहमन्त्रैश्च* कुष्माण्डैः† जातवेदसैः‡ ॥

---

* ग्रहमन्त्रैः ५४०।५४१ पृष्ठयोः प्रदर्शितैः ।

† "यद्देवा देवहेडनं" इत्यादिकस्य एकविंशत्यृचस्य प्रथमानुवाकस्य एकैकया ऋचा, तथा "यददीव्यं मृणां" इत्यादिकस्य त्रयोदशर्चस्य द्वितीयानुवाकस्य एकैकयर्चा, "आयुष्टे विश्वतोदधत्" इत्यादिकस्य सप्तदशर्चस्य तृतीयानुवाकस्य ऋग्भिश्च एवंरूपैः कुष्माण्डमन्त्रैः। इति श्रौतपदार्थनिर्व्वाचनम्।

‡ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
इत्यादिकैः सामवेदे मृग्यैः (१म. ९९म १सूक्त)।

ऐन्द्रवारुणवाह्नेयवायुसौम्यै: सवैष्णवै: ।
होमं शतसहस्रन्तु चाष्टोत्कृष्टं* विधीयते ॥
सर्व्वपीड़ाविनाशाय कोटिहोम: शुभावह: ।
यवव्रीहिघृतक्षीरतिलकाङ्गुप्रसाधिता: ।
पङ्कजोशीरविल्वाम्रदला होमे प्रकीर्त्तिता: ॥
सर्व्वशास्त्रार्थकुशलैर्ब्रह्माद्यप्रपूजकै: ।
होम: कार्य्य: सदा विप्रै: सर्व्वशान्तिप्रदायक: ॥
ग्रहकृत्योपसर्गादि ऋतुनाशभयाशुभा:(भम्) ।
यत्नरच:कृता पीड़ा लचहोमात्प्रणश्यति ॥

ब्रह्मोवाच ।

सर्व्वलोकोपकाराय सङ्क्षेपान्न तु विस्तरात् ।
लचहोमं प्रवक्ष्यामि यथा प्रोक्तन्तु शम्भुना ॥
भूमिकम्पे दिशां दाहे ग्रहयुद्ध उपस्थिते ।
केतुसन्दर्शने चैव चादित्यस्य च कम्पने ॥
कृष्णवर्णे तथा सूर्य्ये तथा छिद्रसमन्विते ।
रक्तवृष्टिस्तथा नद्यो विपरीता वहन्ति वै ॥
निर्घातं गगनोद्भूतं वारिमध्ये वह्निश्छला ।
उपसर्गास्तथा लोके राज्ञां तु चयकारका: ॥
यस्य राशौ ग्रहा: पञ्च षष्ठ सप्त सुराधिपा: ।
ग्रहणं चन्द्रसूर्य्यस्य यद्वैर्वाष्टमसंस्थितै: ॥

---

* चाष्टोत्कृष्टमष्टाधिकम् ।

बलिदानं प्रकर्त्तव्यं मातृणां पूजनं हितम् ।
सूर्य्यस्याभ्यर्च्चनं कार्य्यं शिवस्याशुभनाशनम् ।
लक्षहोमं महाहोमं कोटिहोमं पुरोहितम् ॥

महाहोमं महालक्षहोममित्यर्थः ।

गोभूहिरण्यवस्त्रान्ननित्यदानं शुभावहम् ।
पायसं क्षीरदध्याज्यं देयं नैवेद्यमुत्तमम् ।
एकलिङ्गे प्रकर्त्तव्यमथ विप्रगृहेषु च ॥

एकमेव लिङ्गमेकलिङ्गमिति विग्रहः । वृषविनायकादिरहित-मित्यर्थः । तदपि प्रत्यङ्मुखं सिद्धलिङ्गम् ।

सिद्धये वनचर्य्येषु अथवा नृपवेश्मनि ।
ब्राह्मणैः शुचिभिः स्नातैः संयतैर्मन्त्रपारगैः ।
वेदोक्तविधिना कार्य्यं विजयार्थमनुत्तमम् ॥
बाहुमात्रे ततः कुण्डे जङ्घामात्रेऽथवा पुनः ।
होतव्यं सुरराजेन्द्र नान्येषु विधिरीश्वरः(रीदृशः) ॥
अथ ते कथयिष्यामि लक्षहोमस्य यो विधिः ।
शुभे मनोरमे स्थाने देवतायतनेऽथवा ॥
नृपवेश्मनि कर्त्तव्यं कुण्डं सर्व्वार्थसाधकम् ॥
चतुरस्रं तथा निम्नविस्तारं सुरसत्तम ।
सर्व्वेषां शुभदं कुण्डं मेखलासंयुतं भवेत् ॥
षोडशाङ्गुलिविस्तारमुच्छ्राये षोडशाङ्गुलम् ।
चतुरङ्गुलं भवेदाद्यं चतुरस्रस्य कीर्त्तितम् ॥
द्वात्रिंशाङ्गुलविस्तारा दैर्घ्याद्विगुणविस्तरा ।

योनिः कुण्डे प्रकर्त्तव्या नाधिका शस्यते क्वचित् ॥
हस्तमात्रे तथा कुण्डे नित्यहोमो विधीयते ।
लक्षहोमे शुभं ख्यातं चतुर्हस्तं सुराधिप ॥
यवव्रीहिघृतं क्षीरं तिलाः कङ्गुदलानि च ।
चूतस्य सुरराजेन्द्र पालाश्यः समिधस्तथा ॥
दूर्व्वाः कुशाः शमी ज्येष्ठा चौदुम्बर्य्यः शुभावहाः ।
गायत्र्या* त्र्यम्बकेणाथ† शम्भवायेत्यनेन‡ च ॥
जातवेदसमन्त्रेण§ सह इन्द्रेण चैव हि ।
सहस्रशीर्षेण च¶ तथा हिरण्येन ह्यथापि वा ।
रुद्रमन्त्रैस्तथा सौरैः पञ्चरात्रागमोदितैः ॥

हिरण्येन नमो हिरण्यबाहवे इत्यादिना‖ ।

होतव्यं शतमष्टौ तु सहस्रं लक्षसङ्ख्यया ।
पङ्कजोत्पलबिल्वादि होमद्रव्यं शुभावहम् ॥
कम्पनं स्वेदकम्पश्च अश्रुपातः प्रजल्पनम् ।
देवतानां सुराध्यक्ष उत्पाताः भयकारकाः ॥

---

* १४६ पृष्ठे प्रदर्शितया ।

† ६२ पृष्ठे प्रदर्शितेन ।

‡ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च । (१६अ. ४७म. यजुः ।)

§ १४५ पृष्ठे प्रदर्शितेन ।

¶ ७१ पृष्ठे प्रदर्शितेन ।

‖ ११६ पृष्ठे प्रदर्शितेन ।

लक्षहोमं प्रकुर्व्वीत कोटिहोममथापि वा ।
गोदोहं रुद्रभवने महास्नानं शुभावहम् ॥
अन्यथा नरके घोरे जायते राजविभ्रमः ।
दुर्भिक्षं शस्यनाशश्च सुखनाशः सुराधिप ॥
जायते नात्र सन्देहः सत्यं हि मम भाषितम् ।
ये देवास्ते ग्रहाः सर्व्वे ये ग्रहास्ते भुजङ्गमाः ॥
मेघाश्च ते समाख्याता-लोके वृष्टिप्रदायकाः ।
तेषां सम्पूजनान्नित्यं दीर्घायुः पुरुषो भवेत् ॥ इति ।

## अथ गायत्र्या अयुतलक्षादिहोमविधानम् ।

नृसिंहपुराणे ।

दुःस्वप्नदर्शने घोरे ग्रहपीडासु चात्मनः ।
हसन्तीं प्रतिमां दृष्ट्वा चलन्तीञ्च विशेषतः ॥
प्रस्वेदयुक्तां प्रतिमां दृष्ट्वा वा नृपनन्दन ।
तथा महाज्वरग्रस्ते धारां देवस्य मूर्द्धनि ॥
सन्ततां नरसिंहस्य कुर्य्याद्वा कारयेद्द्विजैः ।
होमञ्च भोजनञ्चैव तस्य दोषः प्रशाम्यति ॥
अयने विषुवे चैव चन्द्रसूर्य्यग्रहेऽथवा ।
नरसिंहं समाराध्य लक्षहोमन्तु कारयेत् ।
शान्तिर्भवति राजेन्द्र तस्य तत्स्थानवासिनाम् ॥
अनावृष्टिर्महामारी ज्वरदोषभये तथा ।

तत्क्षणाद्याणमायाति नरसिंहप्रसादतः ॥
नरसिंहं समाराध्य ब्राह्मणैर्वेदपारगैः।
कारयेल्लक्षहोमन्तु ग्रामेशश्च पुराधिपः ॥
दृष्टोपसर्गमरणं प्रजानामात्मनश्च हि।
सम्यगाराधनाच्चैव नरसिंहस्य मन्दिरे ॥
शङ्करायतने वापि कोटिहोमं नराधिपः।
कारयेत्संयतैर्विप्रैः सभोजनसदक्षिणैः।
क्षते तस्मिन् यथोक्ते तु नागच्छति न तं (तद्)भयम् ॥
एवमादिफलोपेतं नरसिंहार्चनं नृप।
कुरु त्वं भूपतेः पुत्र यदि वाञ्छसि सद्गतिम् ॥
अतः परतरं नास्ति स्वर्गमोक्षफलप्रदम्।
दरिद्रैर्दुष्करं कर्त्तुं देवदेवस्य पूजनम् ॥
मत्स्यरण्येषु मूलानि पत्रपुष्पाणि पार्थिव।
तोयं नदीप्रवाहेषु देवः साधारणः स्थितः ॥
मनो नियम्य सम्यग् विष्णोराराधनकर्म्मणि।
भक्त्या प्रपूजयेद्देवं वाञ्छितार्थप्रदायकम्।
मनो नियमितं येन तस्य मुक्तिः करे स्थिता ॥

इत्येतदुक्तं भृगुणोदितन
मया तवेहार्चनमच्युतस्य।
दिने दिने त्वं कुरु विष्णुपूजां
वदस्व चान्यत्कथयामि किन्ते ॥

राजोवाच।

अहो महत्त्वया प्रोक्तं विष्णाराधनजं फलम् ।
मूढास्ते नरशार्दूल ये विष्णुं नार्चयन्ति वै ॥
त्वत्प्रसादाच्छ्रुतो ह्येष नरसिंहार्चनक्रमः ।
विधिवत् पूजयिष्यामि कोटिहोमविधिं वद ॥

मार्कण्डेय उवाच ।

यदर्थश्च पुरा पृष्टः शौनको भृगुणा पुरा ।
यत्तस्मै कथयामास शौनकस्तद्वदामि ते ॥
शौनकन्तु सुखासीनं पर्य्यपृच्छद्बृहस्पतिः ॥

गुरुरुवाच ।

लचहोमस्य या भूमिस्तद्विधिश्च विशेषतः ।
वदस्व मुनिशार्दूल कोटिहोमस्य चैव हि ॥

शौनक उवाच ।

प्रवक्ष्यामि यथावत्ते शृणु देवपुरोहित ।
लचहोमं तथा भूमिं तद्विधिञ्च विशेषतः ॥
यज्ञकर्म्मणि शस्ताया भूमेर्लक्षणमीदृशम् ।
जानुमात्रं खनित्वा तु शोधयेत्तां विशेषतः ॥
वराहहतया तत्र मृदाच्छाद्य प्रलेपयेत् ।
समिकता समा स्निग्धा पूर्व्वप्लवमथोत्तरम् ॥
प्रमाणं बाहुमात्रं तु सर्व्वतः कुण्डलक्षणम् ।
चतुरस्रं चतुर्हस्तं तुल्यसूत्रेण कारयेत् ॥
ऊर्द्ध्वं च मेखलां कुर्य्याच्चतुरस्रां सुविस्तराम् ।
चतुरङ्गुलमात्रं तु उच्छ्रितां सूत्रसूचिताम् ॥

ब्राह्मणान् वेदसम्पन्नान् ब्रह्मकर्म्मसमन्वितान्।
आमन्त्रयेद्यथान्यायं यजमानो विशेषतः॥
ब्रह्मचर्य्यव्रतैर्युक्तास्त्रिरात्रं तैर्हविर्जोषमैः।
अहोरात्रमुपोष्याथ गायत्रीमयुतं जपेत्॥
ते शुक्लवाससः स्नाताः सुगन्धाः पुष्पधारिणः।
निराहाराः सुतपसः सन्तुष्टाः संयतेन्द्रियाः॥
सर्व्वत्र च समात्मान एकाग्रमनसस्तथा।
आरभेयुस्ततो यज्ञं ततो होममतन्द्रिताः॥

अथ यज्ञपूजा।

भूमिमालिख्य चाभ्युक्ष्य पश्चादग्निं निधापयेत्।
गृह्योक्तेनैव विधिना ततो होमं तु कारयेत्॥
आधारावाज्यभागौ च जुहुयात् पूर्व्वमेव तु।
यवधान्यतिलैर्मिश्रां गायत्र्या प्रथमाहुतिम्।
जुहुयादेकचित्तेन स्वाहाकारान्वितं बुधः॥

धान्यं व्रीहिः यवसान्निध्यात्।

गायत्री छन्दसां माता ब्रह्मयोनिः प्रतिष्ठिता।
सविता देवता तस्या विश्वामित्र ऋषिस्तथा॥
ततो व्याहृतिभिः पश्चाज्जुहुयात्तिलादिकम्।
यावत् प्रपूर्य्यते संख्या लक्षं वा कोटिरेव वा॥
तावद्दिने दिने कुर्य्यादच्युतार्च्चनपूर्व्वकम्।
दीनानाथजनेभ्यश्च यजमानः प्रयत्नतः।
तावच्च भोजनं दद्याद्यावद्धोमः समाप्यते॥

विधानं तस्य वक्ष्यामि शृणुष्वैकमना भव ॥
देवागारे नदीतीरे वने वा भवनेऽपि वा ।
पर्व्वते वापि कुर्व्वीत य इच्छेत् क्षेममात्मनः ॥
शुभे नक्षत्रयोगे च वारे सर्व्व(पूर्व्व)गुणान्विते ।
यजमानस्यानुकूले कोटिहोमं समारभेत् (चरेत्) ॥
पूजयित्वा प्रयत्नेन ब्राह्मणं वेदपारगम् ।
वस्त्रैर्विभूषणैश्चैव गन्धमाल्यानुलेपनैः ।
प्रणम्य विधिवत्तस्मा आत्मानं विनिवेदयेत् ॥
त्वं नो गतिः पिता माता त्वं भ्राता त्वं परायणम् ।
त्वत्प्रसादेन विप्रर्षे सर्व्वं मे स्यान्मनोगतम् ॥
आपद्विमोक्षाय च मे कुरु यज्ञमनुत्तमम् ।
कोटिहोमाख्यमतुलं शान्त्यर्थं सार्व्वकामिकम् ॥
पुरोहितस्ततः प्राज्ञः शुक्लाम्बरधरः शुचिः ।
ब्राह्मणैः सहितः पुण्यैः संयतैः सुसमाहितैः* ॥
भूमिभागे समे शुद्धे प्रागुदक्प्रवणे तथा ।
पुण्याहं वाचयेत्पूर्व्वं (कृत्वा)नत्वा विप्रान् सुपूजितान् ।
ततस्तु सह तैः(सहितै)र्विप्रैः सूत्रयेन्मण्डपं शुभम् ॥
उत्तमं शतहस्तं तु तदर्द्धेन तु मध्यमम् ।
जघन्यं तु तदर्द्धेन शक्तिकालाद्यपेक्षया ॥
मध्ये तु मण्डपस्यापि कुण्डं कुर्य्याद्विचक्षणः ।

---

* वेदसंज्ञकैः पुण्यैर्युक्तः समाहितैः इत्याकरे पाठः ।

चतुर्हस्त*प्रमाणेन आयामेन तथैव च ॥
मेखलात्रितयं तस्य द्वादशाङ्गुलविस्तृतम् ।
तत्प्रमाणां तथा योनिं कुर्व्वीत सुसमाहितः ॥
कुण्डस्य पूर्व्वभागे तु वेदिं कुर्य्याद्विचक्षणः ।
चतुर्हस्तां समां चैव हस्तमात्रोच्छ्रितां नृप ॥
स्थानं तत्सर्व्व(भूतानां)देवानां कुर्य्याद्यत्नेन बुद्धिमान् ।
उपलिप्य ततो भूमिं मण्डपस्य समीपतः ॥
विन्यसेत् कलशांस्तत्र जलपूर्णांश्चतुर्दश ।
अश्वत्थप्लक्षचूताद्यैः पल्लवैरुपशोभितान् ॥
वितानमुपरिष्टाच्च मण्डपस्य प्रकल्पयेत् ।
स्थापयेद्दिक्षु सर्व्वासु तोरणानि विचक्षणः ॥
एवं सम्भृतसम्भार(रैः) पुरोधाः सुसमाहितः ।
पुण्याहजयघोषेण होमकर्म्म समारभेत् ॥
स्थापयित्वा सुरान् येषां वक्ष्यमाणानरिन्दम ।
ब्रह्माणं पूर्व्वभागे तु मध्ये देवं जनार्द्दनम् ॥
पश्चिमे तु तथा रुद्रान् वसूनुत्तरतस्तथा ।
ऐशान्याञ्च ग्रहान् सर्व्वानाग्नेय्यां मरुतस्तथा ।
वायुं याम्यां तथैशान्यां लोकपालान् क्रमेण तु ॥
एवं संस्थाप्य विबुधान् यथास्थानं नृपोत्तम ।
पूजयेद्विधिवद्वस्त्रगन्धमाल्यानुलेपनैः ।

* चतुर्हस्तेत्यत्र चतुष्करेति पाठो युक्तः, कर्णाभिप्रायेण ककुभिन्नां कोटौ चतुष्करमपि एकत्वपरे ह्युक्तेः कोटिद्वयेऽपि चतुष्करपरिमितकुण्डस्योक्तत्वात् । इति भविष्यपुराणटीका ।

वेदोक्तमन्त्रैस्तल्लिङ्गैः पुराणोक्तैः पृथक् पृथक् ॥
आदित्या वसवो रुद्रा मरुतो लोकपास्तथा* ।
ब्रह्मा जनार्द्दनश्चैव शूलपाणिर्भगाक्षिहा ॥
अत्र सन्निहिताः सर्व्वे भवन्तु सुखभागिनः ।
पूजां गृह्णन्तु सर्व्वेऽत्र मया भक्त्योपपादिताम् ।
कुर्व्वन्तु च शुभं सर्व्वे यज्ञकर्त्तुः समीहितम्† ॥
एवं सम्पूजयित्वा तान् देवान् यत्नेन शुद्धधीः ।
नैवेद्यैर्विविधैर्भक्ष्यैः फलैर्दीपैः(पत्रैः)स्तथैव च ॥
ततस्तु तैर्द्विजैः सार्द्धं कुण्डस्य विधिपूर्व्वकम् ।
कुर्य्यात् संस्कारकरणं यथोक्तं वेदचिन्तकैः ॥
ततः प्रज्वालयेद्‡दग्निं नाम्नाख्यातं घृतार्चिषम् ।
नियोजयेद्द्विजांस्तत्र शतसंख्यान्नृपोत्तम ।
अलाभे च (तु) बहूनाञ्च यथालाभं नियोजयेत् ॥
विद्यावृद्धान् वयोवृद्धान् गृहस्थान् संयतेन्द्रियान् ।
स्वकर्म्मनिरतान् शुद्धान् ज्ञानशीलान् प्रयत्नतः ॥
चिन्तयेत्तत्र देवेशं पञ्चास्यं नृप पावकम् ।
मुखानि तस्य चत्वारि सप्तजिह्वानि पार्थिव ॥
एकजिह्वमथैकन्तु तत् स्मृतं सर्व्वकामदम् ।
धूमायमाने न हुथा होतव्यं ज्वलितेऽनले ॥

---

* लोकपालास्तथा ग्रहाः इत्याकरे पाठः ।

† यज्ञकर्म्मसमाहिताः इत्याकरे पाठः ।

‡ प्रज्वालयेदित्यत्र समाद्ध्यादित्याकरे पाठः ।

ऋग्भिः पूर्व्वामुखैर्होमो यजुर्भिश्चोत्तरामुखैः।
सामभिः पश्चिमे कार्य्योऽथर्वभिर्दक्षिणामुखैः॥
ऋग्भिरृग्वेदिभिरिति व्याख्येयमेवं परत्रापि बोध्यम्।
आघारावाज्यभागौ च पूर्व्वं हुत्वा विचक्षणः।
परीते* च परिस्तीर्णे कल्पिते च तथासने॥
ब्राह्मणं पूर्व्वमभ्यर्च्य तत् सर्व्वं पश्चात् समारभेत्।
होमो व्याहृतिभिश्चैव सर्व्वस्तत्र विधीयते॥
प्रणवादिभिस्तल्लिङ्गैः स्वाहाकारान्तयोजितैः।
जुहुयात्सर्व्वदेवानां वेद्यां ये चोपकल्पिताः॥
एवं प्रकल्पयेद्विद्वान् (यज्ञं) कोटिहोमाख्यमुत्तमम्।
तिलाः कृष्णा घृताभ्यक्ताः किञ्चिद्यवसमन्विताः।
होतव्याः कोटिहोमे तु समिधश्च पलाशजाः॥
पूर्णे पूर्णे सहस्रे तु दद्यात् पूर्णाहुतिं शुभाम्।
पश्चिमे तन्मुखे राजन् सर्व्वकामार्थसिद्धये॥
पूर्णाहुत्यः समाख्याताः कोटिहोमे नराधिप।
सहस्राणि नृपश्रेष्ठ दश शास्त्रविशारदैः॥
प्रारब्धदिनमारभ्य ब्राह्मणैर्ब्रह्मचारिभिः।
भाव्यं सयजमानैस्तु अथवा सपुरोहितैः॥
क्रोधलोभादयो दोषा वर्ज्जनीयाः प्रयत्नतः।
यजमानेन राजेन्द्र सर्व्वान् कामानभीप्सता॥
इति भविष्योत्तरे कोटिहोमविधानम्।

---

* परीते च इत्यत्र परिस्तीर्य इत्याकारं पाठः।

अत्र ग्रहयज्ञे यजमानेन आचार्य्यादिभ्यः श्रेयःसम्पादनं कार्य्यमित्युक्तं प्रयोगपारिजाते संस्कारकाण्डे ग्रहयज्ञप्रकरणे।
यथा।

आचार्य्यप्रभृतिभ्यश्च ग्रहार्च्चनफलं ततः।
समिदाज्यचरूणाञ्च तिलहोमफलं ततः॥
ब्रह्मत्वे कुम्भपूजायां चार्च्चनस्य फलञ्च यत्।
लोकपाला गणेशाद्यास्तत्र या अङ्गदेवताः॥
तासां जपफले तद्वद्दृष्टश्रीवाज्यसपूर्व्वकम्।
ततस्तेभ्यो यथाशक्ति दातव्या दक्षिणा ततः॥
आचार्य्यादिं जापकेभ्यो ब्रह्मणे चाथ तुष्टये।
आज्यं निरीक्ष्य दत्त्वा च ब्राह्मणान् भोजयेत्ततः॥ इति।

एवं सति साकाङ्क्षाणामन्यतः पूरणमिति न्यायेन परस्पर-समुच्चयेन नवग्रहमखप्रयोगो द्रष्टव्यः।

तोरणपूजा द्वारपूजा स्तम्भप्रतिष्ठादिमूलवाक्यानि शारदा-तिलके द्रष्टव्यानि ग्रन्थविस्तरभयान्नोच्यन्ते।

## अथ शतमुखादिकोटिहोमविधानम्।

भविष्योत्तरे संवरण उवाच।

बहुत्वात्कर्मणां ब्रह्मन् कोटिहोमः सुदुष्करः।
कार्य्ये गुरुलघीयस्त्वात्* पर्व्वकालाद्यपेक्षया॥

---

* कार्य्याद्गुरुतया यज्ञादिब्याकरे पाठः।

कालेन महता चैव ग्रन्थः प्राप्तुं कथञ्चन।
नियमाद्ब्रह्मचर्य्याद्या दुष्करो होति मे मतिः॥
निरोधो ब्राह्मणानाञ्च भूशय्यादिः सुदुष्करः।
एतद्विज्ञाय मे ब्रह्मन् यदि शास्त्रेषु पठ्यते।
कोटिहोमस्य सङ्क्षेपं वद मे ब्रह्मसम्भव॥

शौनक उवाच।

शताननो दशमुखो द्विमुखैकमुखस्तथा।
चतुर्व्विधो महाराज कोटिहोमो विधीयते॥
कार्य्यस्य गुरुतां ज्ञात्वा नैकव्यमथ पर्व्वणः*।
यथा सङ्क्षेपतः कार्य्यः कोटिहोमस्तथा शृणु॥

पर्व्वणश्चन्द्रसूर्य्यग्रहणरूपस्येत्यर्थः।

कृत्वा कुण्डशतं दिव्यं यथोक्तं हस्तसम्मितम्।
एकैकस्मिंस्ततः कुण्डे दश(शतं) विप्रान्नियोजयेत्।
सद्यः पक्षे तु विप्राणां सहस्रं परिकीर्त्तितम्॥

एकैकस्मिन् कुण्डे प्रतिलक्षं दश(शतं) ब्राह्मणा इति कोटिहोमे सहस्रं ब्राह्मणा भवन्तीति प्रचयशिष्टसंख्यानुवादोऽयम्।

एकस्थानप्रणीतेऽग्नौ सर्व्वत्र परिभाविते।
होमं कुर्य्युर्द्विजाः सर्व्वे कुण्डे कुण्डे यथोदितम्॥
यथा कुण्डबहुत्वेऽपि राजसूये महाक्रतौ।
न चैवाग्निबहुत्वं स्यान्न च यज्ञो विभिद्यते।
तथा कुण्डशतेऽप्यत्र हुताशैकं नियोजितं(नियोजयेत्)॥

* नैव कुर्य्यादपर्व्वणः इति भविष्यं पाठः।

घृतार्चिषि अग्नौ।

एक एव भवेद्यत्र: कोटिहोमो न संशय:।

एवं य: क्रियते चिप्रं व्याकुलै: कार्य्यगौरवात्।

शतानन: स विज्ञेय: कोटिहोमो मखोत्तम:॥

अत्र सर्व्वापि इतिकर्त्तव्यता पूर्व्ववत्। कुण्डानां हस्तसम्मितमिति हस्तमात्रता तु घृतार्चिषि नियोजिते इत्युक्तत्वाद्घृतादिशीघ्रदाह्यहोमद्रव्यविषया। तिलादौ तु शतांशस्य लचत्वेन (लचहोमोक्तं कुण्डं कार्य्यम्।

तदुक्तम्।

अयुते त्वथ होतव्ये कुण्डं स्याद्धस्तमात्रकम्।

द्विगुणं लचहोमे तु कोटिहोमे चतुर्गुणम्॥

इति प्राक्। अर्थात् परिमाणमिति कात्यायनपरिभाषोक्ते: स्वतन्त्रस्य ईदृशस्य च लचहोमस्य अविशेषाच्च। अत्र सहस्रब्राह्मणसंख्या ऋत्विङ्मात्रविषया। ऋत्विगाचार्य्यसहित इति पूर्व्वोक्तस्याचार्य्यस्य विशेषाभिधाने बाधकाभावात्। तेन आचार्य्येण एकस्मिन् कुण्डे अग्नौ प्रणीते सति तदग्निमन्येषु कुण्डेषु विहृत्य प्रतिकुण्डं दश दश ऋत्विजो जुहुयुरिति शतमुख:।

अथ दशमुख:।

तत्रैव।

स्वल्पैरहोभि: कार्य्य: स्याद्दर्शाकालादिकेऽपि वा।

तदा दशमुख: कार्य्य: कोटिहोमो महामते(विजानता)

विप्राणां द्वे शते तत्र सुविभज्य नियोजयेत्।
ते च विख्यातशीलाः स्युर्द्दृढ(व्रत)वन्तो जितेन्द्रियाः॥

अत्र पक्षे च एकस्मिन् कुण्डे दशलक्षहोमाः सम्पद्यन्ते।

तत्र।

लक्षार्द्धे त्रिकरं कुण्डं लक्षहोमे चतुष्करम्।
कुण्डं पञ्चकरं प्रोक्तं दशलक्षाहुतौ क्रमात्॥

इति तन्त्रान्तरोक्तं कुण्डं ग्राह्यम्। प्रतिकुण्डमृत्विजां विंशतिः स्थाप्या। अन्यत् सर्व्वं पूर्व्ववत्।

इति भविष्योत्तरे दशमुखः।

अथ द्विमुखः कथ्यते।

यथा तत्रैव।

अथ कुण्डद्वयङ्कृत्वा विभज्य च विभावसुम्।
होमं कुर्य्युर्द्विजा भूयः संस्कृत्य विधिपूर्व्वकम्॥
शतं तत्र नियोज्यं स्याद्विप्राणां प्रविभज्य वै।
यदा मासेऽर्द्धमासे वा* कार्य्यकाल उपस्थिते।
तदा तु द्विमुखः कार्य्यः कोटिहोमो विचक्षणैः॥

अत्र प्रतिकुण्डं पञ्चाशदृत्विजः। भूयः संस्कृत्येत्युक्त्वाद्वितीयकुण्डेऽपि मन्त्रैरग्निं स्थापयेदिति गम्यते। कुण्डन्तु पूर्व्वक्तं तन्त्रान्तरोक्तः।

इति द्विमुखः।

---

* मासे वाथ द्विमासे वा इत्याकरे पाठः।

शारदातिलके तु ।

द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ।
दशलक्षे तु षड्हस्तं कोट्यामष्टकरं स्मृतम् ॥
एकहस्तमितं कुण्डमेकलक्षे विधीयते ।
लक्षाणां दशकं यावत्तावद्धस्तेन वर्द्धयेत् ।
दशहस्तमितं कुण्डं कोटिहोमे विधीयते ॥ इति ।

अथ एकमुखः ।

तत्रैव ।

यदा तु स्वेच्छया यज्ञं यजमानः समापयेत् ।
कालेन महता राजंस्तदा चैकमुखो भवेत् ॥
एककुण्डस्थितो वह्निरेकचित्तैः समाहितैः ।
यथालाभस्थितैर्विप्रैर्ज्ञान(ख्यात)शीलैर्विचक्षणैः ॥

होतव्य इति शेषः ।

न संख्यानियमस्तत्र ब्राह्मणानां नृपोत्तम ।
न कालनियमश्चैव स्वेच्छया यज्ञ उच्यते ॥
आहुत्या कर्त्तुकामस्य चातुर्मास्यादिकर्म्मवत्* ।
सदा प्रसक्तः† कर्त्तव्यो यज्ञोऽयं सार्व्वकालिकः ॥
अयमेकमुखो राजन् कालेन बहुना भवेत् ।
बहुविघ्नस्तु(श्च) कालेन तस्मात्संक्षेपमाचरेत् ॥

---

* आहुत्या सिद्धिकामस्य चातुर्मास्यातुकर्म्मवत् इत्याकरे पाठः ।

† तदप्रसक्तौ इत्याकरे पाठः ।

यतो हि चित्तमायुश्च वित्तञ्चैवास्थिरं* सदा।
अतः सङ्क्षेपतः सर्व्वं धर्म्मकार्य्यं प्रशस्यते॥
ततः समाप्ते यज्ञे तु कारयेत् सुमहोत्सवम्।
शङ्खतूर्य्यनिनादेन वेद(ब्रह्म)घोषरवेण(स्वनेन) च॥
एतत्सर्व्वं शतमुखादिपक्षेऽपि साधारणं बोध्यम्।
ततश्च दक्षयेद्विप्रान् होतृंश्च श्रद्धयान्वितः।
दक्षयेद्दक्षिणाभिस्तोषयेत्।
निष्क्रीय कृपणेनैव मण्डनैर्विविधैरपि(नृप)।
दक्षयेदिति पूर्व्वेणान्वयः।
गोशतञ्चैव दातव्यमश्वानाञ्च शतं तथा।
सहस्रञ्च सुवर्णस्य सर्व्वेषामपि दापयेत्॥
ग्रामैर्गजैरथैरश्वैः पूजयेच्च पुरोहितम्।
दीनान्धकृपणान् सर्व्वान्† वस्त्राद्यैश्चापि पूजयेत्॥
ततश्चावभृथे स्नायात्सघटैः पूर्व्वकल्पितैः।
लक्षहोमोक्तमन्त्रेण सदा विजयकारिणा॥
एवं समापयेद्यस्तु कोटिहोममखं शुभम्।
तस्यारोग्यं वित्तपुत्रराष्ट्रवृद्धिस्तथैव च।
सर्व्वपापक्षयश्चैव जायते नृपसत्तम॥
अनावृष्टिभयञ्चैव उत्पातभयमेव च।
दुर्भिक्षं ग्रहपीड़ा च प्रशमं याति भूतले॥

---

* यतो हि चित्तवित्तायमायुश्चैवास्थिरमित्याकरे पाठः।

† कृपणानाथानिति ख-पुस्तके पाठः।

एतत्पुण्यं पापहरं सर्व्वकामफलप्रदम् ।
सनकाख्येन मुनिना पार्थिवाय निवेदितम् ॥
सर्व्वोपचार*शमनं भवने वने वा
ये कारयन्ति मनुजा नृप कोटिहोमम् ।
भोगानवाप्य मनसोऽभिमतान् प्रकामं
ते यान्ति शक्रसदनं सुविशुद्धसत्त्वाः ॥

अत्र केचिच्चतुरोऽपि कोटिहोमप्रकारान् राजाधिकारानिच्छन्ति। गोशतशताश्वसहस्रसुवर्णग्रामादिदानस्य अन्येन कर्त्तुमशक्यत्वात्। शिष्टास्तु फलवाक्ये मनुजा इति श्रवणात् दानातिरिक्ते राजसमधनस्य ब्राह्मणादेरपि चात्राधिकारः राजदत्तग्रामादिदानस्यापि सम्भवादित्याहुः। न च—ग्रामैर्गजैरथैरश्वैः पूजयेच्च पुरोहितम्—इति वचनाद्राजमात्रस्य अत्राधिकार इति वाच्यम्। पुरोहितशब्दस्य तुलादानवाक्ये गुरुशब्दस्येव आचार्यपरत्वान्न काप्यनुपपत्तिरिति वदन्ति।

इति भविष्योत्तरे शतमुखदशमुखद्विमुखैकमुखकोटिहोमविधानं समाप्तम्।

अथ ग्रहमण्डलकल्पनम्।

विष्णुधर्म्मोत्तरे वज्र उवाच।
एकैकस्येदमुक्तन्ते विधानं ग्रहपूजने।
सर्व्वग्रहाणां यजने(पूजायां) विधानं मम कीर्त्तय ॥

* सर्व्वोपचारेत्यत्र सर्व्वोपसर्गेति आकरे पाठः।

मार्कण्डेय उवाच ।

सर्व्वग्रहाणां यजने मण्डलस्य विधिं शृणु ।
आदावेव नरव्याघ्र यागं वक्ष्याम्यतः परम् ॥
प्रागायतन्तु कर्त्तव्यमादौ रेखाद्वयं नृप ।
तस्योपरि तथा कार्य्यमपरं तूत्तरायतम् ॥
एवङ्कृते यदुत्पन्नं मध्ये तु चतुरस्रकम् ।
तदस्रिभ्यः प्रकर्त्तव्यं तथा रेखाचतुष्टयम् ॥
एवङ्कृते सम्भवति भगणं द्वादशात्मकम् ।
त्रयोदशं तथा तस्य भुवस्थानन्तु मध्यमम् ॥
प्राच्यां दिशि महीनाथ मेषन्तु परिकल्पयेत् ।
राशिस्थानानि सर्व्वाणि राशिवर्णैन रञ्जयेत् ॥
राशिवर्णानथो वक्ष्ये यथावदनुपूर्व्वशः ।
अरुणश्च सितश्चैव हरितः पाटलस्तथा ।
आपाण्डुश्च विचित्रश्च कृष्णश्च कपिलस्तथा ॥
पिङ्गलः कपिलो बभ्रुर्मलिनश्च यथाक्रमम् ।
मेषादीनां विनिर्द्दिष्टा वर्णाः पार्थिवसत्तम ॥
आकाशवर्णङ्कर्त्तव्यं भुवस्थानन्तथैव च ।
भुवस्थाने महीनाथ देवतासप्तकं न्यसेत् ।
मण्डलैः शुक्लवर्णैश्च दिग्विभागं निबोध मे ॥
भुवस्य मण्डलं मध्ये कुबेरस्यैव चोत्तरे ।
मण्डलं गगनस्याथ भागे प्रागुत्तरे भवेत् ॥
प्राग्भागे च तथा राजन्मण्डलं ब्रह्मणः स्मृतम् ।

प्राग्दक्षिणे तथा भागे हिमसूर्द्धां प्रकल्पयेत् ॥
दक्षिणे च तथा भागे याम्यं वै परिकल्पयेत् ।
भार्गवं नैर्ऋते कार्य्यं भुवो भूपाल मण्डलम् ॥
शेषस्य तु तथा कार्य्यमतीच्यां दिशि मण्डलम् ।
दिगधस्तात्तु वा तथा मण्डलं पश्चिमोत्तरे ॥
ग्रहचारवशाद्राजन् यस्मिन्राशौ व्यवस्थितः ।
मण्डलं तस्य कर्त्तव्यं तस्मिन्नेव यथाविधि ॥
न्यासः कार्य्यो ग्रहेन्द्राणां देवताभिः सहानघ ।
आदित्यात्सप्तमे राशौ केतोः कुर्य्यात्तु मण्डलम् ॥
राशौ सवर्णे तद्वर्णं यस्य स्यान्मण्डलं नृप ।
उत्पाद्यः परिधिस्तत्र रङ्गेणान्येन पार्थिव ॥
गन्धचूर्णयुता रङ्गाः कर्त्तव्या भूतिमिच्छता ।
राशिचक्रं समग्रन्तु रेखया परिवारयेत् ॥
नक्षत्राणां ततः कार्य्यो न्यासः पार्थिवसत्तम ।
राशौ राशौ यथास्थानं रेखया परिवारितम् ।
राशौ राशावतो वक्ष्ये नक्षत्राणां समाश्रयम् ॥
अश्विनी भरणी चैव कृत्तिकांशस्तुरीयकम् ।
मेषराशौ विनिर्द्दिष्टं नित्यं पार्थिवसत्तम ॥
पादत्रयं कृत्तिकानां रोहिणी सकला तथा ।
मृगर्क्षस्य तथैवार्द्धं ज्ञेयं वृषसमाश्रयम् ॥
मृगर्क्षार्द्धं तथैवार्द्रा अदितिश्चरणत्रयम् ।
नित्यमेव समुद्दिष्टं मिथुनस्य समाश्रयम् ॥

पादं पुनर्वसोः पुष्यं सार्पं कर्कटकाश्रयम्।
पित्र्यं भाग्य(भग)मथार्य्यम्णः पादं सिंहाश्रयं भवेत्॥
पादत्रयमथार्य्यम्णो हस्तं त्वाष्ट्रदलं तथा।
कन्याराशौ विनिर्द्दिष्टं नित्यं पार्थिवसत्तम॥
चित्रार्द्धञ्च तथा स्वातौ विशाखाचरणत्रयम्।
तुलाराशौ विनिर्द्दिष्टं मुनिभिस्तत्त्वदर्शिभिः॥
विशाखाचरणं मैत्रं शाक्रं वृश्चिकमे स्मृतम्।
मूलमाप्यं तथा पादो वैश्वदेवस्य धन्विभे॥
पादत्रयं वैश्वदेवाद्दाह्मं* वैष्णवमेव च।
धनिष्ठार्द्धञ्च मकरे नित्यमेव प्रकीर्त्तितम्॥
धनिष्ठार्द्धं शतभिषा प्रजस्य चरणत्रयम्।
कुम्भराशौ विनिर्द्दिष्टं सततं पार्थिवोत्तम॥
पादमाजनदं सर्व्वमाहिर्बुध्नं(र्बुध्नं) नराधिप।
पौष्णञ्च कथितं मीने मुनिभिस्तत्त्वदर्शिभिः॥
भचक्रपूजने राजन्नृक्षस्य च पृथक् पृथक्।
राशिचक्रस्य वाह्येन एकैकं तारकं न्यसेत्॥
प्रागुक्तवर्णैर्भूपाल न्यासः कार्य्यो यथाविधि।
ताराचक्रस्य विन्यासो रेखया परिवार्य्यते॥
नक्षत्रदेवतान्यासो वहिः कार्य्यः समन्ततः।
यथा नक्षत्रसामीप्यमृक्षवर्णैः पृथक् पृथक्।

---

* वाह्मम् अभिजितम् इत्यर्थ।

तस्यापि लेखा कर्त्तव्या वृत्ता व्याप्य तु मण्डलम् ॥
लेखावाह्येन विन्यासं दिगीशानान्तु कारयेत् ।
दिशाञ्च पार्थिवश्रेष्ठ यथावदनुपूर्व्वशः ॥
स्वाश्रयर्त्तसमं वर्णं दिगीशानान्तु कारयेत् ।
उत्तरस्यान्तु कर्त्तव्यं धनदस्य तु मण्डलम् ।
रुक्मवर्णं प्रयत्नेन दिशां वर्णमतः शृणु ॥
उत्तरा च भवेच्छुक्ला रक्ता प्राची प्रकीर्त्तिता ।
दक्षिणा पीतवर्णा स्यात्कृष्णा ज्ञेया च पश्चिमा ॥
पद्मवर्णा तथैशानी ताम्रा स्यात्पूर्व्वदक्षिणा ।
पालाशी च विनिर्द्दिष्टा तथा दक्षिणपश्चिमा ।
नीलोत्पलसवर्णा तु वायव्या च प्रकीर्त्तिता ॥
दिङ्मण्डलन्तु तद्विद्वाँल्लेखया परिवेष्टयेत् ।
वृत्तया वेष्टयेद्विद्वाँ(वृत्ताँ)ल्लेखया चतुरस्रया ॥
तन्मध्यं शङ्खपद्माद्यैर्मण्डलैरुपशोभयेत् ।
लेखाविधानं द्विगुणं सर्व्वत्रैव तु कल्पयेत् ॥
मण्डलस्य तु कोणेषु उदकुम्भाव्रवान् दृढ़ान् ।
फलपल्लवसञ्छन्नान् गन्धपुष्पादिचर्च्चितान् ।
चतुरो विन्यसेद्विद्वानित्यमेव विचक्षणः ॥
लेखासु विन्यसेद्राजन् पताकाश्च ध्वजांस्तथा ।
छत्राणि च सवर्णानि महेन्द्राणां पृथक् पृथक् ॥
स्थानन्तु विज्ञाय यथावदत्र
कार्य्यं तथा मण्डलकप्रमाणम् ।

यथा महत्त्वं नृप मण्डलस्य
तथा तथा वृद्धिमुपैति कर्त्ता ॥

इति हेमाद्रौ शान्तिकाण्डे विष्णुधर्म्मोत्तरोक्तं मण्डल-
कल्पनविधानं समाप्तम् ।

इति श्रीविधानपारिजाते ग्रहयज्ञविधानम् ।

## अथ कुण्डलक्षणम् ।

शारदातिलके ।

निर्म्माय मण्डपञ्चेत्थं ततः कुण्डं प्रकल्पयेत् ।
चतुरस्रं विधानोक्तं हस्तमानेन देशिकः ॥
नवानामपि कुण्डानामथोक्तः सम्भवः किल ।
हस्तमानमथो वक्ष्ये मानाद्यङ्गुलभेदतः ॥
वातायनपथं प्राप्य ये भान्ति रविरश्मयः ।
तेषु सूक्ष्मा विसर्पन्तो रेणवस्त्रसरेणवः ॥
त्रसरेणुः स विज्ञेयो ह्यष्टौ ये परमाणवः ।
त्रसरेणव एवाष्टावथ रेणुस्तु* संस्मृतः ॥
तेऽष्टौ बालाग्रकं तेऽष्टौ† लिक्षा यूका तदष्टकम् ।
तदष्टकं यवस्तेऽष्टावङ्गुलं समुदाहृतम् ॥

---

* रथरेणुरिति ग पुस्तके पाठः ।

† तेऽष्टावित्यत्र तान्यष्टाविति पाठो युक्तः, तच्छब्दपरामृष्टस्य नपुंसकत्वात् ।

सा तूत्तमाङ्गुलिः सप्तयवा सैव तु मध्यमा ।
षड्यवा साधमा प्रोक्ता मानाङ्गुलमितीरितम् ॥

सा अष्टयवात्मिका इत्यर्थः ।

विन्यस्तैस्तिर्य्यगष्टाभिर्यवैर्मानाङ्गुलिः स्मृता* ।
कर्त्तु(शिष्य)र्दक्षिणहस्तस्य मध्यमाङ्गुलिमध्यतः ॥
पर्व्वणोरन्तरा दैर्घ्यं मात्राङ्गुलमुदाहृतम् ।
विनाङ्गुष्ठेन शेषाभिर्मुष्टिमङ्गुलिभिः कृतम् ॥
चतुर्धा विभजेदेको भागो मुष्ट्यङ्गुलिः स्मृता ।
यत्किञ्चित्पुरुषायामं विभज्य दशधा पुनः ॥
एकं द्वादशधा भागं कृत्वा तेष्वेकमङ्गुलम् ।
देहलब्धाङ्गुलं नाम जानीयात्तस्य तत् पुनः ॥
उच्छ्रायः प्रतिमायाः स्यान्महामानाङ्गुलाश्रयः ।
महामानाङ्गुलं यत्तन्मात्राङ्गुलमितीरितम् ॥
मानान्तराङ्गुलेनैव प्रतिमाङ्गानि कारयेत् (कल्पयेत्)
प्रासादादींश्च तेनैव कुर्य्यान्मानान्तरेण वा ॥
वेदिकापीठशिविकारथादीनां विधिः पुनः ।
मानान्तराङ्गुलेनैव भवेन्नान्येन केनचित् ॥
यागोपकरणान्येवं कुर्य्यान्मानाङ्गुलेन वै ।
होमाङ्गानि स्रुवादीनि कुण्डं मुष्ट्यङ्गुलाश्रयम् ।
देहलब्धाङ्गुलेनाथ कुण्डादीनि प्रकल्पयेत् ॥
ब्रह्मविष्णुशिवादीनां ये हस्ताः परिकीर्त्तिताः ।

---

* मानान्तराङ्गुलम् इति पञ्चरात्रे पाठः ।

षड्भागाष्टयवैर्मानाङ्गुलैस्तान् प्रयोजयेत्* ॥
यजमानाङ्गुष्ठपर्व्वप्रमाणेनाधिकेन वा ।
प्रासादाराम(वास)वेश्मानि विष्णुहस्तप्रमाणतः ।
तडागारामक्षेत्राणां क्रोशानां शिवहस्ततः ॥
नवानामपि कुण्डानां विधानं स्थानपूर्व्वकम् ।
निर्म्माणं विधिवद्वक्ष्ये साधकानां हितेच्छया ॥
त्रयोदशाङ्गुलं त्यक्त्वा वेदिकायाश्चतुर्द्दिशम् ।
कुण्डानि गणनोक्तानि विदध्याद्विधिवद्गुरुः ॥
पूर्व्वाद्यष्टसु काष्ठासु रम्याकाराण्यनुक्रमात् ।
चतुःकोणं भगाकारं चन्द्रार्द्धञ्च त्रिकोणकम् ।
वृत्तं षडस्रं पद्माभम् अष्टास्रं नामतो विदुः ॥
पुरन्दरेशयोर्म्मध्ये वृत्तं वा चतुरस्रकम्† ।
तदाचार्य्येण निर्द्दिष्टं नवमं कुण्डमुत्तमम् ॥
कुण्डानि चतुरस्राणि वृत्तनानाकृतीनि वा‡ ।
नव पञ्चाथ चैकं वा कर्त्तव्यं लक्षणान्वितम् ॥
यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्म्मणि ।
वेदास्रमर्द्धचन्द्रञ्च वृत्तं पद्मनिभं तथा ॥

---

* तान् परिकल्पयेदिति क पुस्तके पाठः ।

† क्रियासारे च—चतुरस्रं योनिमर्द्धचन्द्रं त्र्यस्रं सुवर्त्तुलम् ।
षडस्रं पद्माकारमष्टास्रं तानि नामतः ।
आचार्य्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोः ॥

‡ सोमशम्भुरपि—कुण्डानि तानि वृत्तानि चतुरस्राणि वा सदा ।

कुर्य्यात्कुण्डानि चत्वारि प्रागादिषु विचक्षणः ।
पञ्चमं कारयेत् कुण्डमीशदिग्गोचरं द्विजः ॥
एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद्बुधः* ।
चतुरस्रं भवेत् कुण्डं वृत्तं कुण्डमथापि वा ॥
हस्तमात्राणि सर्व्वाणि दीक्षासु स्थापनादिषु ।
नित्यहोमे च साहस्रे कुर्य्यात् कुण्डानि सर्व्वदा ॥
द्विहस्तादिककुण्डानां प्रकारस्तूच्यते बुधैः ।
द्विहस्तकुण्डदोःकोटिस्त्रयस्त्रिंशन्मिताङ्गुलिः ॥
यवाः सप्तमिता यूकाश्चतस्रो लिक्षिकास्तथा ।
कोटिबाहू चैकचत्वारिंशदङ्गुलिसम्मितौ ॥
यवा यूकास्तथा लिक्षा वेदसंख्यास्त्रिहस्तके ।
नागवेदाङ्गुलीमानं चतुरस्रं चतुष्करे ॥
अङ्गुलानि त्रिपञ्चाशद्-यवाः पञ्चाथ लिक्षिकाः ।
चतस्रोऽप्यथ विज्ञेयाः पञ्चहस्तोन्मिते बुधैः ॥
षड्हस्ते चाष्टपञ्चाशदङ्गुलानि यवौ तथा ।
यूके लिक्षाश्चतस्रस्तु विज्ञेया गणकोत्तमैः† ॥
त्रिषष्ठ्यङ्गुलसंयुक्ता यवाः स्युः सप्तहस्तके ।
अष्टहस्ते सप्तषड़ङ्गुलानि मुनयो यवाः(ऽपि वा) ॥

---

* एककुण्डपक्षे चतुरस्रं वृत्तं वा तत्कार्य्यं तदुक्तं क्रियासारे—

चतुरस्रं भवेत्कुण्डं वृत्तं कुण्डमथापि वा ।
स्थिरार्च्चने चरार्च्चायां नित्ये हवनकर्म्मणि ॥

† ज्ञेया गणितकोत्तमैः इति घ-पुस्तके पाठः ।

पूर्व्वंकुण्डस्य च:कोटिहस्तरस्येति कल्पना ।
विज्ञेया सर्व्वदा तज्ज्ञैर्द्विहस्तादिविधिस्त्वयम् ॥
कुण्डानां यच्चतुर्विंशो भाग: सोऽङ्गुलसंज्ञक: ।
विभज्यानेन कर्त्तव्या मेखलाकण्ठनाभय:* ॥
इन्द्राग्नियमदिक्कुण्डे योनि: सौम्यमुखी स्मृता ।
योनि: पूर्व्वमुखान्येषु पूर्व्वेशाग्न्यन्तरा भवेत् ॥
नार्पयेत्कुण्डकोणेषु योनिं तान्तु विधानवित् ।
कुण्डानां मध्यदेशे तु कल्पयेत्पङ्कजाकृतिम् ॥
नाभिर्यद्वा कुण्डरूपो मानमस्य निगद्यते ।
मुष्टयरत्न्येकहस्तानां नाभिरुत्सेधतारत:† ॥
नेत्रार्णवाङ्गुलोपेत: कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव नाभिं पृथगुदारधी: ॥
योनिकुण्डे योनिमब्जकुण्डे नाभिं विवर्ज्जयेत् ।
नाभिक्षेत्रं त्रिधा भित्त्वा मध्ये कुर्व्वीत कर्णिकाम् ।
बहिरंशद्वयेनाष्टौ दलानि परिकल्पयेत् ।

---

* महाकपिलपञ्चरात्रे तु स्पष्टमेवोक्तं यथा—

कुण्डषड्भागिका त्वाद्या द्वितीयाष्टांशका स्मृता ।
तृतीया द्वादशांशा स्यात् ॥ इति ।

योगिनीहृदयेऽपि—

मेखला: शृणु मे देवि हस्तादिषु विशेषत: ।
षड्भागाष्टांशसूर्यांशमिता: स्वर्गोपिता: शुभा: ॥ इति ।

† उत्सेधविस्ताराभ्याम् । (राघवभट्ट: ।)

ध्वजायप्राप्तये तिर्य्यगूर्द्धमेकाङ्गुलीयकम्* ॥
निखनेत्सर्व्वकुण्डानां ध्वजायः कीर्त्तितो बुधैः ।
स्थापने सर्व्वकुण्डानां ध्वजायः सर्व्वसिद्धिदः ॥
ध्वजायहीनं यत्कुण्डं प्रोक्तं कर्त्तुरनिष्टकृत्† ।
तस्माद्गुरुः प्रयत्नेन ध्वजायं पूर्व्वमानयेत् ॥
विस्तरेण गुणितदैर्घ्यं कुण्डक्षेत्रफलं भवेत् ।
तत्पृथग्वसुभिर्भक्ते शेषमायो ध्वजादिकः‡ ॥
ध्वजायरहितं कुण्डं स(सु)लक्षणमपि त्यजेत् ।
इत्थं ध्वजायमिच्छन्ति याज्ञिकाः कुण्डकर्म्मणि ॥
अन्ये धूमायमिच्छन्ति दैवज्ञाः कुण्डकर्म्मणि ।
अग्निस्थानं होमकुण्डं शालापाकगृहाणि च ।
धूमे कुर्य्यात्प्रयत्नेन याज्ञिकानां गृहे(हं) तथा ॥
तस्माद्ध्वजायधूमायकुण्डे देये(यं) विचक्षणैः ।
चतुरस्रं चतुःकोष्ठे(कोणं) सूत्रैः कृत्वा यथा पुरा ।
हस्तमानेन तन्मध्ये तावन्निम्नायतं खनेत् ॥
पञ्चभिर्मेखलोच्छ्रायं ज्ञात्वा शेषमधः(मतः) खनेत् ।
पञ्चद्वयमिति ज्ञात्वा यथाऽर्थं च समाचरेत् ॥

---

* यावान् कुण्डस्य विस्तारस्तावानायाम ईरितः ।
तिर्य्यगूर्द्ध्वं ध्वजायाद्यं मध्यमेकाङ्गुलाधिकम् ॥　इति कुण्डमण्डपे पाठः ।

† सर्व्वानिष्टफलप्रदमिति ग-पुस्तके पाठः ।

‡ व्यासे दैर्घ्यंहतेऽष्टाभि र्भक्ते शेषो ध्वजादिकः ।　इति कुण्डमण्डपे पाठः ।

सहस्रद्वितये कुण्डे पञ्चविंशाङ्गुलानि(लेन) च ।
यवौ(वा) यूकात्रयं लिक्षा भूमितः परिकीर्त्तिता ॥
अङ्गुलं भूर्यवौ द्वौ तु त्रयो यूकाश्च लिक्षिकाः ।
द्विसहस्रादिवृद्धौ तु हस्तं(स्ते) संयोजयेत् सुधीः ॥
दशसाहस्रिके होमे चतुस्त्रिंशन्मिताङ्गुलैः ।
अन्तरे त्वनुपातेन योज्यं कुण्डं महर्षिभिः ॥
अन्तरे त्वनुपातेन योज्यं हस्तप्रमाणके ।
कुण्डे त्वयुतहोमोक्ते संयोज्यश्चैवमङ्गुलम्(मण्डलम्) ॥
षड्यवा एकयूकाढ्या लिक्षा अयुतवृद्धितः ।
यावल्लक्षो भवेत्पूर्णस्तावदेवम्प्रकल्पयेत् ॥
कुण्डानां यादृशं रूपं मेखलानाञ्च तादृशम् ।
मेखलाः पञ्च वा तिस्रश्चैका वाथ भवेदिह ॥
उत्तमन्त्विह निर्दिष्टं कुण्डं वै पञ्चमेखलम् ।
त्रिमेखलं भवेन्मध्यं नीचं स्यादेकमेखलम् ॥
षड्बाणाब्धित्रिनेत्रैस्तु मिताः स्युः पञ्चमेखलाः ।
यद्वा मनीषिभिः प्रोक्तमुत्तमं स्यात्त्रिमेखलम् ।
द्विमेखलं भवेन्मध्यं हीनं स्यादेकमेखलम् ॥
प्रथमा द्व्यङ्गुलायामा उन्नता सा नवाङ्गुलैः ।
मध्या तु त्र्यङ्गुला वाह्ये तृतीया तु यमाङ्गुलैः ॥
अङ्गुलैः पञ्चभिर्वेदमितैः स्यान्मेखलाद्वयम् ।
एका षडङ्गुलोत्सेधविस्तारा मेखला मता ।
[illegible] ॥

तस्यास्योपरि वप्रः स्याच्चतुरङ्गुलमुन्नतः ।
अष्टाभिरङ्गुलैः सम्यग्विस्तीर्णस्तु समन्ततः ॥
तस्योपरि पुनः कार्य्यो वप्रः सोऽपि तृतीयकः ।
चतुरङ्गुलविस्तीर्णश्चोन्नतश्च समन्ततः ॥
तयोरभ्यन्तरं(रन्यतरे)णात्र कुण्डं कुर्य्याद्यथारुचि ।
आद्या सत्त्वगुणा प्रोक्ता राजसी च ततः परा ॥
तामसी स्यात्तृतीया च देवा विष्ण्वादयः क्रमात् ।
खाताद्द्वाद्व्यङ्गुलमितः । [illegible]ः कुण्डेष्वयं विधिः ॥
कुण्डे द्विहस्ते तास्ताः स्युस्तर्काब्धिगुणसम्मिताः ।
कुण्डे त्रिहस्ते ता,ज्ञेया मुनिभूतगुणाङ्गुलाः ॥
चतुर्हस्ते तु कुण्डे ता नागतर्कयुगाङ्गुलाः ।
कुण्डे पञ्चकरे नन्दसप्तभूताङ्गुलैः स्मृताः ॥
ताः स्युः कुण्डे ऋतुकरे दिग्वस्वष्टाङ्गुलान्विताः ।
कुण्डे सप्तकरे द्वागनवसप्ताङ्गुला मताः ॥
कुण्डे वसुकरे ताः स्युर्भानुपंक्त्व(पंक्त्य)ष्टकाङ्गुलाः ।
कुण्डे नवकरे विश्वरुद्रनन्दाङ्गुलाः स्मृताः ॥.
दिग्घस्तप्रमिते कुण्डे मनुभानुदशाङ्गुलाः ।
उत्सेधायामतो ज्ञेया मेखला सर्व्वतो बुधैः ॥
एवं तेऽभिहितस्तात मेखलानां सुनिश्चयः ।
होमकृत्पुरतः स्थाप्या दक्षिणे पश्चिमेऽपि वा ॥
मेखलामध्यतो योनिः कुण्डार्द्धांशगविस्तृता ।
उन्नतिर्द्व्यङ्गुलैनास्याः कुण्डोष्ठौ बोधिपत्रवत् ॥

एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत् ॥
कुम्भद्वयसमायुक्तं मध्ये त्वाज्यधृतिस्तथा ।
अग्रेण कुण्डाभिमुखी किञ्चिदुत्सृष्टमेखला ॥
योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् ।
त्रिद्व्येकाङ्गुलिविस्तारः क्रमान्न्यूनाग्रमिष्यते ॥
अब्धिसंख्याङ्गुलोपेतामुच्छ्रायायामतः समाम् ।
वेदिं विधाय तस्मात्तु अन्यनालं विधानवित् ।
शेषं प्रपूरयेदन्तः परिधिस्थापनाय च ॥
अथ मुष्ट्यादिकुण्डानां विनियोगं वदामि ते ।
मुष्टिमात्रं शतार्द्धे स्याच्छते वै रत्निमात्रकम् ।
सहस्रके हस्तमात्रं अयुते तु द्विहस्तकम् ॥
लक्षार्द्धे त्रिकरं कुण्डं लक्षहोमे चतुष्करम् ।
प्रोक्तं पञ्चकरं कुण्डं दशलक्षाहुतिष्वपि ॥
षड्ढस्तं लक्षविंशत्यां कोट्यर्द्धे सप्तहस्तकम् ।
कोटिहोमे दशकरं प्रोक्तं कुण्डं महर्षिभिः ।
दशहस्तात्र हि परं कुण्डमस्ति महीतले ॥
सर्व्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम् ।
पुत्रप्रदं योनिकुण्डमर्द्धेन्द्वाभं शुभप्रदम् ।
शत्रुक्षयकरं त्र्यस्रं वर्त्तुलं शान्तिकर्म्मणि ॥
छेदमारणयोः कुण्डं षड़स्रं पद्मसन्निभम् ।
पुष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम् ॥

ऐन्द्र्यां स्तम्भे चतुष्कोणमग्नौ भोगे भगाकृतिम् ।
चन्द्रार्द्धं मारणे याम्ये नैर्ऋत्यां च त्रिकोणकम् ॥
वारुण्यां शान्तिके वृत्तं षडस्रमुच्चाटनेऽनिले ।
उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रमीरितम् ।
चतुरस्रन्तु सर्व्वेषां केचिदिच्छन्ति तान्त्रिकाः ॥
कुण्डस्य रूपं जानीयात्परमं प्रकृतेर्वपुः ।
प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ।
उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे ॥
कुण्डं तन्त्रोक्तमार्गेण निर्म्मायाथ सलक्षणम् ।
रक्तमृच्छालिपिष्टाभ्यां भूषयेद्दृक्प्रियं यथा ॥
खाताधिके भवेद्रोगी हीने धेनुधनक्षयः ।
वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ॥
मेखलारहिते शोकोऽप्यधिके वित्तसंक्षयः ।
भार्य्याविनाशनं कुण्डं प्रोक्तं योन्या विवर्ज्जितम् ॥
अनेकदोषदं कुण्डं तत्र न्यूनाधिकं यदि ।
तस्मात्सम्यक् परीक्ष्यैवं कर्त्तव्यं शुभमिच्छता ॥
दिग्देशकुण्डनिर्मुक्तो योऽग्निर्लौकिको हि सः ।
तस्माद्दिग्देशकुण्डानि सङ्ग्राह्याण्युक्तलक्षणैः ॥
कुण्डमेवंविधं न स्यात् स्थण्डिलं वा समाचरेत् ।
हस्तमात्रेण तत्कुर्य्याद्धातुभिश्च सुशोभितम् ।
अङ्गुलोच्छ्रयसंयुक्तं चतुरस्रं समन्ततः ॥

इति कुण्डनिर्म्माणविधिः ।

अथ स्थण्डिलम् ।

यथाह वशिष्ठसंहितायाम् ।

अथाग्निकार्य्यं वक्ष्यामि कुण्डे वा स्थण्डिलेऽपि वा ।
स्थण्डिलं वालुकाभिर्वा रक्तमृद्रजसापि वा ॥ इति ।

शुल्वकारिकायाञ्च ।

कुर्य्याच्छतार्द्धेऽङ्गुलिमानमूर्द्धकं
शताहुतौ द्व्यङ्गुलमानमुच्छ्रयम् ।
वेदाङ्गुलार्द्धन्तु सहस्रहोमके
वस्वङ्गुलान्येव तथैव चायुते ॥
लक्षाहुतौ स्थण्डिलकं नृपाङ्गुलं
चोर्द्धं विदध्यात्प्रयुते च विंशतिम् ।
तत्त्वाङ्गुलं कोटिमखे तथोच्छ्रितं
तथार्व्वुदेनाधिकमानमाहुः* ॥

प्रकृतिवद्विकृतिः कर्त्तव्येति न्यायेन प्रकृतिगतधर्म्माणां मेखला-योन्यादीनां स्थण्डिलेऽपि प्राप्तिरस्तीति निश्चितम् ।

अतएव बौधायनेनोक्तम् ।

कुण्डवन्मेखलाङ्कृत्वा योनिङ्कृत्वा ततः परम् ।
बौधायनमतं प्रोक्तं स्थण्डिलं चतुरस्रकम् ॥
कुण्डाभावे तु होमार्थं स्थण्डिलं पीठमेव वा (च) ।
होमार्थे स्थण्डिलं पीठं कार्य्यमित्याह शौनकः ॥ इति ।

* तथार्व्वुदे चाधिकमानमेव इति ग-पुस्तके पाठः ।

अत्र योनिमेखलाभावः यदा द्विहस्तं क्रियते तदा द्विहस्तमार्ग स्यात् । पीठं द्वादशाङ्गुलं लिखेत् पर्कमाने प्रादेशमात्रम् । एवं पीठार्थसिद्धिः स्यात् । पीठश्च स्थण्डिलमानतो श्रेयमुच्छ्राये द्वादशाङ्गुलं कार्य्यम् ।

अथ प्राचीसाधनम् ।

श्रवणस्योदये प्राची प्राची स्यात् कृत्तिकोदये ।
चित्रास्वात्यन्तरे प्राची न प्राची चन्द्रसूर्य्ययोः ॥
रात्रौ संसाधयेत्प्राचीं साधकेन्द्रः प्रमाणतः ।
कृत्तिका श्रवणं पुष्यं चित्रास्वात्योर्यदन्तरम् ।
एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुनः ॥ इति ।
इति प्राचीसाधनविधानम् ।

अथ कुण्डमण्डपविधानम् ।

ईश्वर उवाच ।
अथ मण्डपनिर्म्माणं वक्ष्यामि विधिपूर्व्वकम् ।
यज्वनो यज्ञसम्पत्तिहेतुं सर्व्वफलप्रदम् ॥
नक्षत्रराशिवाराणामानुकूल्ये(मनुकूले) शुभेऽहनि ।
विघ्नराजं समाराध्य कृत्वा पुण्याहवाचनम् ॥

समुद्रगानदीतीरे सङ्गमे वा शिवालये ।
आरामे विष्णुगेहे वा देवखातादिसन्निधौ ॥
गृहस्येशानभागे वा मण्डपं रचयेद्दृढम् ।
तत्र भूमिं परीक्षेत वास्तुज्ञानविशारदः ॥
स्फुटिता च सशल्या च वल्मीका रोहिणी तथा ।
दूरतः परिवर्ज्या भूः कर्त्तुरायुर्धनापहा ॥
स्फुटिता मरणं कुर्य्यादूषरा धननाशिनी ।
सशल्या क्लेशदा नित्यं विषमा शत्रुभीतिदा* ॥
ईशकोणप्लवा सा च कर्त्तुः श्रीदा सुनिश्चितम् ।
पूर्व्वप्लवा वृद्धिकरी बल(वर)दा तूत्तरप्लवा ॥
विद्वेषं मरणं व्याधिं कुर्य्यादग्निप्लवा मही ।
धर्म्मराजप्लवा भूमिर्नित्यं मृत्युभयप्रदा ॥
गृहक्षयकरी सा च भूमिर्या नैर्ऋतप्लवा ।
धनहानिकरी पृथ्वी कीर्त्तिदा वरुणप्लवा ।
वातप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी† ॥
सुरभीणां रतिर्यत्र सवत्सानां (संवत्सरं) वृषैः सह ।

---

* शत्रुतो भयमिति क-पुस्तके पाठः ।

† क्रियासारे तु—श्वेता तु ब्राह्मणी पृथ्वी रक्ता वै क्षत्रिया स्मृता ।
वैश्या पीता तु विज्ञेया कृष्णा शूद्रा प्रकीर्त्तिता ॥
ब्राह्मणी घृतगन्धा स्यात् क्षत्रिया रक्तगन्धिनी ।
वैश्या तिक्ता च विज्ञेया शूद्रा स्यात्कटुका च या ॥
ब्राह्मणी भूः कुशोपेता क्षत्रिया स्याच्छराकुला ।
कुशकाशाकुला वैश्या शूद्रा सर्व्वतृणाकुला ॥ (शेषं परपृष्ठे द्रष्टव्यम्)

सुन्दरीणां रति(गति)र्यत्र पुरुषैः सह सत्तमैः ॥
काश्मीरचन्दनामोदा कर्पूरागुरुगन्धिनी ।
कमलोत्पलगन्धा च जातिचम्पकगन्धिनी ॥
पाटलामल्लिकागन्धा नागकेशरगन्धिनी ।
दधिक्षीराज्यगन्धा च मधिसुरस(मदिरासव)गन्धिनी ॥
सुगन्धिर्ब्रीहिगन्धा च शुभगन्धयुता च या ।
सर्व्वेषामेव वर्णानां भूमिः साधारणा मता ।
श्वेतारक्ता पीतकृष्णा विप्रादीनां प्रशंसते ॥
मधुरा च कषाया च अम्ला च कटुका च या ।
कुशैः शरैस्तथा काशैर्दूर्व्वाभिर्या च सम्भृता ।
प्रशस्ता भूर्मठावासे मण्डपादौ विशेषतः ॥
प्रासादारम्भकाले च मठादौ च विशेषतः (मुनीश्वरैः) ।
शल्योद्धारः प्रकर्त्तव्यो यदीच्छेच्छुभमात्मनः ॥
प्रासादारम्भकाले च यदङ्गं स्पृशते पुमान् ।
वासुदेवे दृढ़ं तत्र शल्यं विद्याद्विचक्षणः ॥
कण्डूयति शिरः पुंसि शिरःशल्यं समुद्दिशेत् ।
शल्यं तत्राखि विज्ञेयं खन्यमाने करत्रये ॥
अग्निदाहश्च रोगश्च धनहानिश्च जायते ।

---

सिता पीता तथा रक्ता कृष्णवर्णसमन्विता ।
स्निग्धा दृढ़ा स्निग्धा भूमिः सर्व्वसुखावहा ॥
शीतस्पर्शोष्णकाले च वह्निस्पर्शा हिमागमे ।
वर्षासु-चोभयस्पर्शा सा शुभा परिकीर्त्तिता ॥

यत्नेनोत्पाटयेच्छल्यं यदीच्छेत्सिद्धिमात्मनः ॥
बाहू कण्डूयमाने तु निर्दिशेल्लोहशृङ्खलाम् ।
हस्तद्वयेन सन्तिष्ठेल्लक्षणं कथितं तव ॥
स्वामिनो मरणं विद्याद्विदेशगमनं तथा ।
तस्मात्सर्वप्रयत्नेन शल्यमुत्पाटयेन्नरः ॥
जङ्घे कण्डूयमाने तु कांस्यशल्यं विनिर्दिशेत् ।
हस्तमात्रेण* सन्तिष्ठेल्लक्षणं कथितं तव ॥
असाध्वी च भवेद्भार्या यशोहानिश्च जायते ।
यत्नेनोत्पाटयेच्छल्यं यदीच्छेच्छुभमात्मनः ॥
हस्तौ(स्तं) कण्डूयमाने तु कङ्कालञ्च विनिर्दिशेत् ।
त्रिहस्तेन च सन्तिष्ठेत्खन्यमाने न चान्यथा ॥
अग्निदाहश्च रोगश्च सशल्ये मरणं तथा (भवेत्) ।
यत्नेनोत्पाटयेच्छल्यं यदीच्छेच्छुभमात्मनः ॥
पृष्ठं कण्डूयमाने तु बहु(बाहु)शल्यं विनिर्दिशेत् ।
हस्तेनैकेन सन्तिष्ठेन्नात्र कार्या विचारणा ।
स्वामिनाशो भवेत्तत्र भार्या वा जायतेऽसती ॥
पादौ कण्डूयमाने तु हस्त(हस्ति)शल्यं विनिर्दिशेत् ।
हस्तत्रितयमानेन† लभ्यते नात्र संशयः ।
गोनाशो राजदण्डश्च शस्यहानिश्च जायते ॥
कुक्षिं कण्डूयमाने तु पाषाणं तत्र निर्दिशेत् ।

---

* हस्तेनैकेन इति शारदातिलकटीकायां पाठः ।

† सार्द्धहस्तेन सन्तिष्ठेन्नात्र कार्या विचारणा । इति ख-पुस्तके पाठः ।

हस्तवि(द्वि)तयमानेन लभ्यते नात्र संशयः ।
भुजङ्गदंशो यत्र स्याच्छल्यं तत्र समुद्धरेत् ॥
जानू कण्डूयमाने तु भस्मशल्यं विनिर्दिशेत् ।
हस्तद्वयेन सन्निष्ठेल्लक्षणं कथितं तव ॥
अग्निदाहो मनस्तापः क्लेशदुःखभयानि च ।
करोत्येवंविधङ्कर्म्म तस्मात्तद्धि समुद्धरेत् ॥
गोशृङ्गं पीतमण्डूकः शङ्खः शुक्तिश्च कच्छपः ।
शम्बूकश्च प्रशस्ताः स्युर्याश्चान्या रत्नजातयः ।
अङ्गारश्च तुषं केशमस्थि शल्यं समुद्धरेत् ॥
खन्यमाने जलं यावच्छल्यदोषो विनश्यति (न विद्यते) ।
दूराद्दूर(दूरनीच)स्थितं वारि खनितुं नैव शक्यते ॥
पञ्चहस्तं प्रखातव्यं शल्यदोषोपशान्तये ।
शल्योद्धारं ततः कृत्वा पूरयेत् सुसमं यथा ॥
इत्थं भूमिं परीक्ष्याथ कुर्य्यात्प्राचीविशोधनम् ।
भानोर्गत्या दिशो ज्ञात्वा कुर्य्यात्कर्म्माणि देशिकः ॥
पांशुवर्षस्यतो यत्र सम्यक् न ज्ञायते ककुप् ।
तत्र शङ्कुं प्रतिष्ठाप्य जानीयाच्छङ्कुदिक्स्थितिम् ॥
तद्वत्यादिपरिज्ञानं शृणु वक्ष्ये यथाविधि ।
सुसमे (कु)भूतले कृत्वा वृत्तं भ्रमणकल्पतः ।
तन्मध्यबिन्दौ शङ्कुं तं स्थापयेद्द्वादशाङ्गुलम् ॥
अथच्छायान्वयवशाद्वृत्ते पूर्व्वापरद्वये ।
पूर्व्वापरद्वये कृत्वा चिह्ने तदभितस्तथा ॥

समभागपरिभ्राम्त्या कृत्वा हस्तद्वयं पुनः ।
तयोः संश्लेषसञ्जातमध्यदक्षोत्तरस्थिते ॥
सन्धिद्वयेऽथ प्राक् प्रत्यक् सूत्रं मध्ये तु विन्यसेत् ।
सूत्रं दक्षोत्तरं तेषामग्रैः(ग्रे) प्राच्यादि कल्पयेत् ॥
एवमाशापरिज्ञानं समाख्यातं यथा स्फुटम् ।
ज्ञात्वैवं मण्डपादीनि कुर्यात्सम्यग्विचक्षणः* ।

---

* पाठकानां बोधवैशद्यार्थम् अन्येऽपि कतिचित् शङ्कुस्थापनप्रकारा दर्श्यन्ते यथा—

क्रियासारे—कृत्वा भूमिं समां तत्र हस्त हस्तमितं समम् ।
द्वादशाङ्गुलमानोच्चं शङ्कुं खदिरनिर्मितम् ॥
अलाभे यज्ञवार्क्षं वा तत्र संस्थापयेत्सुधीः ।
तच्छाया संस्पृशेद्यत्र तन्मध्ये मध्यमं स्मृतम् ॥
तिर्य्यक् प्रसारयेत् सूत्रं मध्ये याम्योत्तरं स्मृतं ।
कोणाः स्युरन्ये चत्वारश्चतुःसूत्रप्रसारणात् ॥ इति ।

महाकपिलपञ्चरात्रे तु विशेषः यथा—
विषुवे तु गते सूर्य्ये शङ्कुमानं समाचरेत् ।
खादिरं विन्यसेच्छङ्कुं द्वादशाङ्गुलविस्तृतम् ॥
निश्चलीकृत्य हस्ताभ्यं गृहीत्वा लोहमुद्गरम् ।
अष्टधा च स्वयं हन्यात्प्रशस्तं क्रमशो लघुम् ॥
हन्यमाने यदा शङ्को हस्तात्पतति मुद्गरम् ।
तदा ताडयितुः शोको जायते दुस्तरो महान् ॥
क्षौमकौशेयकार्पासं प्राणिवालजमेव वा ।
चतुर्यवपरीणाहं सूत्रं शङ्कौ तु वेष्टयेत् ॥
वेष्टमानं यदा सूत्र शङ्कुं मुञ्चति तत्क्षणम् ।
गृहस्य मरणं विद्याच्छिन्ने वै स्वविनाशनम् ॥ इति ।

यदि कुर्य्यादयथादृष्टं विपत्तो नियतं व्रजेत् ॥
ततो संसाधयेत्प्राचीं साधकेन्द्रः प्रमाणतः ।
कृत्तिका श्रवणं पुष्यं चित्रास्वात्योर्यदन्तरम् ॥
एतत्प्राच्या दिशो रूपं युगमाघोदितं पुनः ।

---

मयमाप्युक्तं —

शङ्कुः सारद्रुमैः प्रोक्तस्तलाङ्कं चिबुकान्तकम् ।
समं कृत्वा दिनादौ तु स्थापयेत्समभूतले ॥
शङ्कुद्विगुणमानेन तन्मध्ये वर्तुलं लिखेत् ।
पूर्वापराह्नयोश्छाया यदा तन्मध्यलग्नगा ॥
तद्बिन्दुद्वयगं सूत्रं पूर्वापरदिगिष्यते ।
बिन्दुद्वयान्तरभ्रान्तमत्स्यफलद्वयपुच्छगम् ॥
दक्षिणोत्तरगं सूत्रमध्यं सूत्रद्वयं न्यसेत् ।
तदग्राण्यपरान्तानि सूत्राणि च विनिक्षिपेत् ।
सूत्राणि स्थपतिः प्राक् प्रागुत्तरमुखानि च ॥ इति ।

हयशीर्षपञ्चरात्रेऽपि —

भूमिं तोयसमां कृत्वा दर्पणोदरसन्निभाम् ।
द्वादशाङ्गुलमानेन तत्र वृत्तं भ्रामयेत् ॥
मध्ये तु निश्चलं शङ्कुं स्थाप्य छायां निरीक्षयेत् ।
वृत्तरेखां तु या याति शङ्कुच्छाया प्रकल्पिता ॥
प्रवेशनिर्गमे तस्यां शङ्कुच्छायां निरूपयेत् ।
शङ्कुच्छायाग्रचिह्नाभ्यां प्राक्प्रतीच्योः प्रसाधयेत् ॥
प्राक्प्रतीचीगते सूत्रे उदग्याम्ये च साधयेत् ।
विषुवे विमलेऽर्कांशे शङ्कुना साधयेद्दिशम् ॥
अयनयोरेवमादित्यात्साधयेद्दिशम् ।
प्राचीं वा पुष्यवेधेन चित्रास्वात्यन्तरेण वा ॥ इति ।

कथितं ते महाप्राज्ञ शिल्पिशास्त्रानुसारतः ॥
अथैषां साधनं वक्ष्ये यथोक्तं ब्रह्मणा पुरा ।
नवानां मण्डपानाञ्च वास्तुशास्त्रेण कीर्त्तितम् ।
प्राक्प्रत्यगयनं सूत्रं न्यसेन्मण्डपमानतः ॥
उदग्दक्षिणसूत्रार्थं मत्स्यौ द्वौ परिलेखयेत् ।
प्रागङ्कप्रत्यगङ्के च हस्तं दत्त्वा विचक्षणः ॥
शफरस्य पुच्छचिह्ने मध्यच्छिद्रे (चिह्ने) प्रसारितम् ।
उदग्दक्षिणसूत्रं स्यादुक्तमानप्रमाणतः ॥
क्षेत्रार्द्धमानसूत्रार्द्धदिक्षु चिह्नं समालिखेत् ।
तच्चिह्नन्तु समाश्रित्य प्रतिलोमानुलोमतः ॥
क्षेत्रार्द्धमानसूत्राग्रात् सूत्राणि प्रतिपादयेत् ।
एवं स्यात् सूत्रपातेन चतुरस्रं शुभावहम् ॥
यद्वा सूत्रानुसारेण कर्त्तव्यं चतुरस्रकम् ।
नवानां मण्डपानान्तु निर्म्माणं शास्त्रनोदितम् ॥
श्रेष्ठमध्यमहीनैस्तु मानैर्वच्मि महामते ।
चतुर्विंशतिहस्ताद्यो गह्नरो मण्डपो भवेत् ॥
द्वाविंशत्या भवेद्वचो घर्घरो विंशतिकरैः* ।
सुघोषश्चाष्टदशभिः कलाभिः कामराजकः ॥
मनुसंख्यैः काञ्चनस्तु विरामोऽर्कमितैः करैः ।
हस्तैस्तु दशभिर्घोरो वसुभिस्तु घनो भवेत् ॥

---

* विंशत्या घघरो भवेदिति पाठो युक्तः ।

ज्येष्ठमध्यमहीनैस्तु मानैस्तैस्ते च मण्डपाः ।
यद्वार्कहस्तमारभ्य द्विद्विह्रासा तु ते क्रमात् ॥
अष्टाविंशतिहस्तान्ताः प्रोक्ता वै नवमण्डपाः ।
यद्वोत्तमं मानमाहुर्हस्तैः षोडशकं तथा ॥
चतुर्द्दशमितैर्हस्तैर्मध्यमं परिकीर्त्तितम् ।
हीनं द्वादशहस्तैस्तु मानमुक्तं मनीषिभिः ॥
शृणु वर्णानुपूर्व्येण मण्डपञ्च शुभलक्षणात् ।
हस्तैर्विंशतिभिः कार्य्यो मण्डपस्त्वग्रजन्मनाम् ॥
द्वाष्टभिर्बाहुजातानां विशामर्कमितैः करैः ।
दशभिस्त्र्यवर्णानां वसुभिर्हीनवर्णिनाम् ॥
सर्व्वेषां ब्राह्मणादीनां प्रोक्तं कार्य्यानुसारतः ।
स्थलादकाङ्गुलोच्छ्रायं मण्डपं स्थूलमीरितम् ॥
यावत्करप्रमाणस्तु मण्डपः कर्त्तुमप्सितः ।
तावद्दृढं गृहीत्वा रसनां कुर्य्यात्ताञ्च चतुर्गुणाम् ॥
पुनस्तां त्रिगुणां कृत्वा तदङ्कम्प्यर्कसम्मितान् ।
शङ्कून्निधाय सर्व्वां तां चतुर्दिक्षु प्रसारयेत् ॥
स्तम्भास्तत्र निखातव्याः सुदृढा द्वादशाभितः ।
पञ्चहस्तसमुच्छ्राया लक्षणोक्तफलप्रदाः* ॥

*अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः ।
पञ्चहस्तप्रमाणार्द्धे विस्तृता लक्षणः शुभाः ॥
इति शारदातिलके पाठ

चत्वारो मध्यतो* रोप्या मूर्ध्नि चूडान्विताः शुभाः।
अष्टहस्तसमुच्छ्राया रोप्यास्ते पञ्चमांशकैः ॥
निश्छिद्रा ऋजवः सर्व्वे सारदारुमयाः शुभाः।
यज्ञियवृक्षो वेणुर्वा क्रमुकः स्तम्भकर्म्मणि ॥
अन्ये विशुद्धवृक्षा वा भवेयुर्नान्यभूरुहाः ॥
गृहशल्यः स्वयं शुष्कः कुटिलश्च (स्फुटितश्च) पुरातनः।
असौम्यभूमिजनितः सन्त्याज्यः स्तम्भकर्म्मणि ॥
कटैः सङ्गिश्च सञ्छाद्यः समन्तात्सुतृणैरपि ॥
द्वारवर्ज्जं शुभैर्वंशैर्नारिकेलदलैस्तथा।
भित्तिञ्च परितस्तस्य कुर्य्यादित्याहुरर्थिनः ॥
नियमोऽयं समाख्यातः स्थिरलिङ्गक्रियादिषु।
मण्डपं मण्डयेदार्द्रशाखाभिस्तु विचक्षणः ॥
अथैताः सम्प्रवक्ष्यामि षोडश स्तम्भदेवताः।
ईशान्यादिक्रमेणैव पूजनीयाः प्रयत्नतः ॥
ब्रह्मा विष्णुश्च रुद्रश्च शक्रभानुजनार्द्दनाः।
पितरः सर्पसेनान्यः पृषदश्वो निशापतिः ॥
प्रचेता वसुसौरी च वाक्पतिस्त्वष्टृनन्दनः।
एते देवाः समाख्याताः स्तम्भकर्म्मणि सूरिभिः ॥

---

*मध्यतः मध्ये वेदिकोणेष्वित्यर्थः। तदुक्तं सिद्धान्तशेखरे—

मध्ये स्तम्भचतुष्कं स्यात्तन्मध्ये वेदिका मता। इति।

अन्यत्रापि—वेदिकोणेषु विन्यस्येत् स्तम्भान् वेदस्वरूपकान्। इति।

दिक्षु द्वाराणि चत्वारि विदध्यात्पश्चमांशतः ।
यद्वा द्वाराणि चत्वारि मध्ये वा विदधीत वै ॥
कनीयसि स्याद्विकरं(रे) चतुरङ्गुलहस्तिः ।
मध्यमोत्तमयोर्द्वारं वास्तुशास्त्रे प्रकीर्त्तितम् ॥
चूतपल्लवमालाढ्यं वितानैरुपशोभितम् ।
विचित्रवस्त्रसञ्छन्नं घण्टाभिश्च विराजितम् ॥
सफलैः कदलीस्तम्भैः क्रमुकैर्नारिकेलकैः ।
फलैर्नानाविधैर्भोज्यैर्दर्पणैश्चामरैरपि ।
भूषितं मण्डपं कुर्य्यान्नानापुष्पसुशोभितम् ॥
कलशैर्घण्टिकाभिश्च साधारैः करकैस्तथा ।
अन्यैश्च भूषणैश्चापि भूषयेन्मन्त्रिसत्तमः ॥
आख्यातैः साधनैः क्लृप्तः सरलः सममानकः ।
मनोज्ञो मण्डपो योऽसौ कर्म्मकर्त्तुः शुभावहः ॥
अनुक्तसाधनैः क्लृप्तो यदि वा कुटिलाकृतिः ।
मानाधिकोऽथवा न्यूनो मण्डपः कर्त्तृनाशनः ॥

इति मण्डपनिर्म्माणविधानम् ।

अथ तोरणनिर्म्माणविधानम् ।

द्वारेषु तोरणानि स्युः क्रमात् क्षीरमहीरुहाम्* ।
मण्डपाद्वाह्यदेशे च हस्तमानेन तानि वै ॥

---

*[क्षी]रमहीरुहां वटोदुम्बराश्वत्थप्लक्षाणाम् । वटोदुम्बराश्वत्थप्लक्षाः क्षीरमहीरुहाः स्मृताः ।

देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे ।
विघ्नविध्वंसनार्थञ्च रक्षार्थञ्चाध्वरस्य च ॥
बहुपात्तोरणन्त्वाद्यां यज्ञाङ्गं दक्षिणे मतम् ।
वारुणे बोधिसम्भूतं कौवेर्य्यां वै जटी भवेत् ॥
एकमेषामलाभे स्यात्तदभावे शमीद्रुमः ।
जम्बूखदिरसाराश्च तालो वा तोरणे स्मृताः* ॥
सुशोभनं नाम पूर्व्वं अग्निमीलेति† मन्त्रितम् ।
इषे त्वेति च‡ मन्त्रेण सुभद्राख्यन्तु दक्षिणे ॥
सुकर्म्माख्यन्तु वारुण्यामग्न आयाहि मन्त्रतः§ ।
शन्नो देवीति¶मन्त्रेण सुहोत्रन्तूत्तरे न्यसेत् ॥

---

* सिद्धान्तशेखरे तु—न्यग्रोधतोरणं पूर्व्वं याम्यं चौदुम्बरं मतम् ।
पश्चिमेऽश्वत्थसम्भूतमुत्तरे प्लक्षतोरणम् ।
पूर्व्वं वा प्लक्षसम्भूतं न्यग्रोधश्चोत्तरे मतः ॥ इति ।
सोमशम्भुरपि—प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाः क्रमात् ।
पूर्व्वादितो विधातव्या यद्वाद्यन्तविपर्य्ययः ।
अलाभादेकमेवैषां सर्व्वाशासु निवेशयेत् ॥

† अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ (१म. १सू. १ऋक् ।)

‡ इषे त्वोर्ज्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मणे ।
(१अ. १म. यजुः ।)

§ अग्न आयाहि वीतये गृणानो हव्यदातये ।
निहोता सत्सि बर्हिषि ॥ (६म. १६सू. १०ऋक् ।)

¶ शन्नो देवीरभीष्टये आपो भवन्तु पीतये ।
शंयोरभिस्रवन्तु नः ॥ (३६अ. १२म. यजुः ।)

पश्चिमद्वारमारभ्य तोरणानि निवेशयेत् ।
स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक् ॥
दिगङ्गुलप्रमाणेन तत्परीणाह ईरितः ।
तिर्य्यक्फलकमानं स्यात् स्तम्भानामर्द्धमानतः ॥
तोरणं (ध)घटयित्वैव(मूर्द्धं) मूर्द्धि शूलत्रयं न्यसेत्* ।
ऋजु वै मध्यशृङ्गं स्यात् किञ्चिद्वक्रं तु पक्षयोः ॥
शैवे एवं समाख्यातं वास्तुशास्त्रविशारदैः† ।
एकैकः कलसः स्थाप्यः पूर्व्वादि प्रति तोरणम् ॥
मण्डपे कलसौ द्वौ द्वौ द्वारे द्वारे निवेशयेत् ।
गालितोदकसम्पूर्णा(संस्रावा)वाम्रपल्लवशोभितौ ॥
गन्धपुष्पाम्बरोपेतौ सर्व्वौषधिसमन्वितौ ।
प्रतिकोणं तथैकैकं स्थापयेत्कलसं शुभम् ॥
ध्रुवं धरां वाक्पतिञ्च विघ्नेशं तेषु पूजयेत् ।
मण्डपस्य तु कोणस्थकलसेषु क्रमादमी ॥
अमृतो दुर्ज्जयश्चैव सिद्धार्थो मङ्गलस्तथा ।
पूज्या द्वारस्थकुम्भेषु शक्राद्यास्तम्भमूलगैः ॥
पूर्व्वे ऋग्वेदिनौ विप्रौ पठेतां नियमास्ततः(मः)‡ ।

---

* अतःपरं—मूलं नवाङ्गुलं दैर्घ्यं तृतीयांशेन विस्तृतः ।
शेषाणां द्व्यङ्गुला वृद्धिर्वंशयाङ्गुलवर्द्धितः ॥ इति श्लोक आकरे दृश्यते ।

† वैष्णवे तु विशेषो यथा वास्तुशास्त्रे—
मत्स्यादि शाङ्गांशेन शङ्खचक्रगदाम्बुजम् ।
प्रासादिकमर्थांशेन भवंश्चणां सदाम्बुजम् ॥

‡ तथ्यात् मन्त्रजापकैरिति ख-पुस्तके पाठः ।

श्रीसूक्तं* पावमानञ्च सोमसूक्तं सुमङ्गलम् ॥
ऐन्द्रञ्च† सोमकाध्यायं रक्षोघ्नं देशिकाज्ञया ।
दक्षिणे च यजुर्व्वेदं रुद्राध्यायस्य पाठकौ ॥
तथा पुरुषसूक्तञ्च श्लोकाध्यायं सशुक्रियम् ।
मण्डलब्राह्मणञ्चैव प्रेरितौ गुरुणा पुनः ॥
पश्चिमे सामगौ विप्रौ ब्रूयात्सूक्तजापकौ ।
सूक्तमाङ्गिरसं रुद्रसूक्तं वै त्वपराजितम् ॥
पठेतां तौ महाप्राज्ञौ संदिष्टौ देशिकेन तौ ।
उत्तरे चाथर्व्वविदौ ब्रूयान्मन्त्रजापकौ ॥
देवीञ्च मधुसूक्तञ्च शान्तिकाध्यायमेव च ।
यावत्कर्म्म समाप्येत पठेयुस्ते द्विजोत्तमाः ।
इत्थं चतुर्षु द्वारेषु स्थापयेद्द्वारपालकान् ॥

इति तोरणनिर्म्माणप्रकरणम् ।

## अथ वेदिनिर्म्माणविधानम् ।

ततो मण्डपसूत्रन्तु त्रिगुणं परिकल्पयेत् ।
पूर्व्वादिषु क्रमात्तस्य भागेनैकेन‡ वेदिका ॥

---

* श्रीसूक्तं २६४।२६५ पृष्ठयोरुक्तम् ।

† पावमानसूक्त-सुमङ्गलसूक्त-ऐन्द्रसूक्तानि ५७२।५७३ पृष्ठयोः प्रदर्शितानि ।

‡ मध्यभागेन इति शारदातिलकटीकायां पाठः, फलतस्तस्य नवमभागेन वेदिका तदुक्तं सिद्धान्तशेखरे—नवांशं मण्डपं कृत्वा मध्यभागेन वेदिका । इति राघ

मण्डपस्य नवांशस्तु वेदिका वै स्मृता बुधैः।
तुलापुरुषदानादौ मध्यभागे तु वेदिका॥
शान्तिके पौष्टिके विप्र शिवकोणे प्रशस्यते।
चतुर्थांशोच्छ्रितिस्तस्या राजहस्तोच्छ्रयोऽथवा॥
लक्षणं राजहस्तस्य कथयामि तवानघ।
पञ्चवत्याङ्गुलैर्विप्र दण्डहस्तः स्मृतो बुधैः॥
वेदनेत्राङ्गुलैः प्रोक्तो वंशहस्तो मनीषिभिः।
राजहस्तो विंशसंख्याङ्गुलैः सन्निवदाहृतः॥
स्वामिहस्तो भवेदष्टचन्द्रार्कैरङ्गुलैस्तथा॥
दर्पणोदरसङ्काशा निम्नोन्नतविवर्जिता।
शुभाकारा च या वेदी कर्त्तुः कामफलप्रदा॥
वक्रपार्श्वा क्लिष्टमध्या परुषा हगशोभना।
मानहीनाधिका यासौ कर्त्तुः कामविनाशिनी॥
पक्काभिर्वाप्यपक्काभिरिष्टकाभिर्दृढं यथा।
चतुरस्रा चतुष्कोणा तदभावे मृदापि वा।
एवं हिमाङ्गुलैर्हीना चतुर्विंशद्रजन्मनाम्।
इति तेऽभिहितं तात वेदीलक्षणमद्भुतम्*॥

इति वेदिनिर्म्माणप्रकरणम्।

---

सिद्धान्तशेखरे तु विशेषः—

वेदी चतुर्विधा तत्र चतुरस्रा च पद्मिनी।
श्रीधरी सर्व्वतोभद्रा दीक्षासु स्थापनादिषु॥
चतुरस्रा चतुष्कोणा वेदी सर्व्वफलप्रदा।
महादानादिप्रतिष्ठायां पद्मिनी पद्मसन्निभा॥ (शेषं परपृष्ठे द्रष्टव्यम्।)

## अथ ध्वजारोपणविधानम् ।

अथातः सम्प्रवक्ष्यामि ध्वजारोपणमुत्तमम् ।
यत्कृत्वा पुरुषः सम्यक् समस्तफलमाप्नुयात् ॥
यातुधाना गुह्यकाश्च कुश्माण्डाः खेचरास्तथा ।
चिन्तयन्त्यसुरश्रेष्ठा ध्वजहीनं सुरालयम् ॥
ध्वजेन रहिते ब्रह्मन् मण्डपे तु वृथा भवेत् ।
पूजाहोमादिकं सर्व्वं जपाद्यं यत्कृतं बुधैः ॥
रक्षणेन विना यद्वत्क्षेत्रं नश्यति वीजिनः ।
ध्वजं विना देवगृहं तथा (नश्यति) नश्येत सर्व्वथा ॥
विष्णुपारिषदाः क्रूराः कुश्माण्डास्तु ग्रहाः स्मृताः ।
पूजादिकन्तु गृह्णन्ति देवं दृष्ट्वा न (त्व)रक्षितम् ॥
दृष्ट्वा ध्वजांस्तु देवस्य मण्डपे ज्वलनप्रभान् ।
नश्यन्ति सर्व्वतश्चार्क(सर्व्वे ते चार्क)रश्मिभिर्यथा
ध्वजानां लक्षणं सम्यगुक्तं ते तु यथा तथा ।
मण्डपस्य वहिर्दण्डैर्दशहस्तायतैः सह ।
पूर्व्वाद्यष्टसु काष्ठासु* ध्वजान् संस्थापयेत्क्रमात् ॥
तेषां हस्तद्वयं व्यासो मध्यश्च करसम्मितः ।
व्यासार्द्धं शिखरं पुच्छं हस्तत्रितयमानकम् ॥

राज्ञां स्यात्सर्व्वतोभद्रा चतुर्भद्राभिषेचने ।
विवाहे श्रीधरी वेदी त्रिंशत्स्तम्भसमन्विता ॥ इति ।

* पूर्व्वाद्यष्टहरित्स्वष्टाविति क्रियासारे पाठः ।

मत्स्याभं शिखरं प्रोक्तं पुच्छन्तु स्वास्तिकोपकम् ।
तयोर्मध्यं चतुष्कोणं ध्वजमेवं प्रकल्पयेत् ॥
मातङ्गवस्त्रमहिषसिंहमत्स्यैणवाजिनः ।
वृषभञ्च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत् ॥
अथवा दिग्गजानष्टावैरावतपुरःसरान् ।
ध्वजेषु विलिखेद्रक्तधातुभिश्च सलक्षणान् ।
एवं ध्वजानां कथितं लक्षणञ्च शुभावहम् ॥
प्रतिकाष्ठं पताकास्तु प्रोक्ताः शास्त्रार्थकोविदैः ।
सप्तहस्ताः पताकाः स्युर्विंशत्यङ्गुलविस्तृताः ॥
दशहस्ताः पताकानां दण्डाः पर्वांश(पर्व्वांश)वेशिताः ।
पताका आयुधाकाराः* पुष्पगन्धसमन्विताः ॥
पीतोऽरुणोऽसितो धूम्रः शुक्लो धूम्रसितावुभौ ।
गौरोऽरुणः क्रमादेते वर्णास्तासां प्रकीर्त्तिताः† ॥
अत परं प्रवक्ष्यामि दिक्पालानां मतामते ।
उपचारान् यथाशक्ति मन्त्रावाहनपूर्व्वकम्‡ ॥

* आयुधाढ्याश्च इति पाठान्तरम् ।

† पीतो रक्तोऽथ कृष्णः शकलनृमहृशः धूम्रधूम्रौ सिताभः

‡ शुक्लो धूम्रौ विचित्रौ ध्वज इति कथितौ पालकानां महेन्द्रात् ।  इति कुण्डप्रदीपः ।

दिक्पालानामायुधानि वाहनानि वर्णाश्च यथा कल्पद्रुमे —

आदिन्द्रः करिवाहनः कुलिशभृत्पाणिः पिशङ्गद्युतिः

आग्नेयो मेषवाहनोऽग्निः(शिखि)कपिः कमण्डलुधरो रक्तद्युतिः ।

याम्यो दण्डकरो यमश्च महिषारूढोऽञ्जनाभस्तथा

नैर्ऋत्यः करवालभृत्खरगतिः सिन्दूरवर्णोऽसित ॥

एहि सर्व्वामराध्यक्ष गन्धर्व्वाद्यैः परिष्टुत ।
रक्षाध्वरं नो भगवन् पूर्व्वस्यां दिशि ते नमः ॥
एवमावाह्य गन्धाद्यैः परिपूज्य ततो गुरुः ।
पताकां पीतवर्णाभां आशुः शिशानमन्त्रतः* ।
त्रातारमितिमन्त्रेण† ध्वजं तत्रैव विन्यसेत् ॥
एहि पावक लोकेश सिद्धसाध्यगणैः सह ।
अध्वरं रक्ष सततमाग्नेय्यां दिशि ते नमः ॥
अग्निं दूतं‡ समुच्चार्य्य पताकां तत्र विन्यसेत् ।
त्वन्नो अग्न ऋचा§ भूपो ध्वजं तत्रैव रोपयेत् ॥
एहि वैवस्वत धर्म्म प्राणाशुभनिवारक ।
शिवाय पाहि यज्ञं नो नमस्ते भगवन्विभो ॥
कृष्णवर्णां पताकाञ्च आयं गौरितिमन्त्रतः¶ ।

---

वारुण्यां झषगो हिमद्युतिरपां नाथश्च पाशान्वितो
वायव्यां मृगवाहनोऽङ्कुशकरो वायुः शुकाभः स्मृतः ।
कौबेर्य्यां नरवाहनो दिशि गदापाणिर्विचित्रप्रभा
रौद्र्यां सद्वृषवाहनः शशिनिभः स्याच्छूलभृच्छङ्करः ।
हंसस्थोऽरुणकः कमण्डलुकरः शक्रेशयोरन्तरा-
ऽनन्तोऽपांपतिरक्षसोर्घनमिभस्तस्याधिरूढोऽरिभृत् ॥

* आशुः शिशानः -- मन्त्रोऽयं ११८ पृष्ठे प्रदर्शितः ।

† १४२ पृष्ठे प्रदर्शितः ।

‡ अग्निं दूतं वृणीमहे, अग्निं दूतं पुरोदधे—इति मन्त्रद्वयं २४५ पृष्ठे प्रदर्शितम्

§ त्वन्नो अग्ने इत्यादिको मन्त्रः ७४ पृष्ठे प्रदर्शितः ।

¶ आयं गौः पृश्निरक्रमीदसदन् मातरं पुरः ।
पितरञ्च प्रयन्त्स्वः ॥ (३अ. ६म. यजुः ।)

दक्षिणस्यां ध्वजं दद्यात् सुगन्धु(सुगन्ध)मनुनाथ तु॥
एहि रक्षोगणैः सार्द्धं निर्ऋतेश ममाध्वरम्।
पाहि प्रेतपिशाचेभ्यो लोकनाथ नमोऽस्तु ते॥
पताकां श्वेतवर्णाभामसुन्वन्तेतिमन्त्रतः*।
दद्याद्ध्वजञ्च तत्रैव एष ते निर्ऋतेति च†॥
एहि वारिचराधीश गन्धर्व्वादिपरिष्टुत।
प्रतीच्यामध्वरं मेऽद्य पाहि तुभ्यं नमो नमः॥
पताकां शुकपिच्छाभामिमं मे वरुणेति‡ च।
ध्वजं सम्पूज्य वै दद्यात् तत्त्वायामीति मन्त्रतः§॥
एह्येहि त्वं जगत्प्राण सिद्धसङ्घैर्ममाध्वरम्।
वायव्यां पाहि सुप्रीतो नमस्तुभ्यं पुनः पुनः॥
पताकां धूम्रसङ्काशां प्रदद्यात्प्राणदाश्चेति¶।

* असुन्वन्तमयजमानं -मन्त्रोऽय १८२ पृष्ठे प्रदर्शितः।

† एष ते निर्ऋते भागस्तं जुषस्व स्वाहा। अग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा। यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा। विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा। मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहा। सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा।

‡ इमं मे वरुण श्रुधी हवमद्या च मृडय।
त्वामवस्युराचके॥ (२१अ. १म. यजुः।)

§ मन्त्रोऽयं ६८ पृष्ठे प्रदर्शितः।

¶ प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदाः।
अन्यांस्ते अस्मत्तपन्तु हेतयः।
पावको अस्मभ्यं शिवो भव॥ (१७अ. १५म. यजुः।)

वायो ये ते(ति)* ध्वजं चाथ न्यसेत्तत्र विधानवित् ॥
एहि सोम सुराध्यक्ष नक्षत्रैः पितृभिः सह ।
गृहाण पूजां भगवन् पाहि यज्ञं नमोऽस्तु ते ॥
आप्यायस्वेति मन्त्रेण† पताकां धवलां न्यसेत् ।
सोमो राजेति मन्त्रेण‡ ध्वजं दद्यात्तथोत्तरे ॥
एहि विश्वेश्वर विभो गणैः सार्द्धं ममाध्वरे ।
यज्ञसिद्ध्यै गृहाणेमां सपर्य्यां भवते नमः ॥
पताकां शुभ्रवर्णाभां तमीशानेति मन्त्रतः§ ।
तत्रैव च ध्वजं दद्यादभि त्वेति ऋचा द्विजः¶ ॥
एह्यनन्त महासत्त्व नागकन्यापरिष्टुत ।
रक्षाध्वरं ममेशान यक्षोरगगणैः सह ॥

---

* वायो ये ते सहस्रिणो रथासस्तेभिरागहि ।
नियुत्वान् सोमपीतये ॥ (२७अ. ३२म. यजुः ।)

† आप्यायस्वेत्ययं मन्त्रः ६८ पृष्ठे प्रदर्शितः ।

‡ सोमो राजा प्रथमो ब्रह्मजायां पुनः प्रायच्छदहृणीयमानः ।
अन्वर्तिता वरुणो मित्र आसीदग्निर्होता हस्तगृह्या निनाय ॥ (

§ तमीशानेति मन्त्रोऽयं ६२ पृष्ठे प्रदर्शितः ।

¶ अभि त्वेति पूर्व्वप्रतीका बहवो मन्त्रा ऋग्वेदे दृश्यन्ते यजुषि चैकः स यथा—
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ (२७अ. ३५म. यजुः ।)
ऋग्वेदीयमन्त्राणां बहुत्वादेक एव प्रदर्श्यते यथा—
अभि त्वा देवः सविताभि सोमो अवीवृतत् ।
अभि त्वा विश्वा भूतान्यभीवर्त्तो यथाससि ॥ (१०म. १७४सू. ३ऋक् ।)

पताकां गौरवर्णाभां नमोऽस्तु सर्पमन्त्रतः* ।
पश्चिमनैर्ऋतयोर्मध्ये चित्रो वोऽस्त्विति† च ध्वजम् ॥
एहि ब्रह्मन् सुरश्रेष्ठ लोकनाथ शिखामणे ।
विघ्नाध्वरं नो भगवन् पाहि तुभ्यं नमोऽस्तु ते‡ ॥
पताकामरुणां तत्र दद्याद्ब्रह्मेति मन्त्रतः § ।
ईशानपूर्व्वयोर्मध्ये पञ्चवर्णध्वजं तथा ॥
इन्द्रस्य वृष्णो मन्त्रेण दद्याज्जलदसन्निभम् ।
किङ्किणीजालसंयुक्तं मण्डपोपरि मध्यतः ॥
त्रिहस्तविस्तृतं कुर्य्याद्दशहस्तायतं पुनः ।
एवं ध्वजविधिः प्रोक्तः समासेन मयानघ ॥

इति ध्वजपताकानिर्म्माणप्रकरणम् ।

## अथ योनिमेखलाप्रकरणम् ।

तिष्ठासारसङ्ग्रहे ।

(पञ्च) त्रिद्वेकमेखलोच्छ्रायं मात्वा शेषं खनेदिति ।

---

* नमोऽस्त्विति मन्त्रोऽस्य २२२ पृष्ठे उक्तः ।

† चित्रो वोऽस्तु यामायत्र ऊती सुदानवः ।
मरुतो अहिभानवः ॥ (१म. १७२सू. १ऋक् ।)

‡ नमोऽस्तु ते इत्यत्र नमो नमः इति पाठो युक्तः, तुभ्यमित्यनेन पौनरुक्त्यापत्तेः ।

§ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ (१३अ. ३म. यजुः ।)

|| इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्द्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ (१०म. १०३सू. ९ऋक् ।)।

विश्वकर्माप्याह ।

व्यासः खातः परः प्रोक्तो निम्नं तिथ्यङ्गुलेन तु ।

उन्नताद्या नवाङ्गुलैरिति ॥

स एवाह द्विमेखलापक्षे ।

व्यासः खातः परः प्रोक्तः खातं सप्तदशैव तु ।

उन्नताद्याः सप्ताङ्गुलैरिति ॥

एकमेखलापक्षे खातमष्टादशाङ्गुलैरिति । उन्नताद्याः षडङ्गुलैरिति च ।

अथ पञ्चमेखलापक्षः ।

तन्मानमुक्तं लक्षणसङ्ग्रहे ।

मेखलाः पञ्च वा कार्याः षट्पञ्चाब्धित्रिपक्षकैः । इति ।

सिद्धान्तशेखरेऽपि ।

षड्बाणाब्धिवह्निनेत्रैर्मिताः स्युरिति ।

अथ त्रिमेखलापक्षः ।

वेदाग्निनयनाङ्गुलैरिति ।

अथ द्विमेखलापक्षः ।

पिङ्गलामते ।

कुण्डषष्ठांशेन कुण्डाष्टमांशेन वा ।

एकमेखलापक्षे हेमाद्रौ ।

कुण्डानां यादृशं रूपं मेखलानाञ्च तादृशम् ।

मेखलाः पञ्च वा तिस्रो वैका वाथ भवेदिह ॥

उत्तमं त्विह निर्दिष्टं कुण्डं वै पञ्चमेखलम् ।

त्रिमेखलं भवेन्मध्यं हीनं स्यादेकमेखलम् ॥

ारदातिलकेऽपि ।

खातादेकाङ्गुलं त्यक्त्वा मेखलानां स्थितिर्भवेत् ।

द्व्यङ्गुलः कुण्डकण्ठः स्यान्मेखलाखातमध्यतः ॥

मेखलैकाथवा तिस्रः कुर्य्यात्* कुण्डे प्रयत्नतः ।

कुण्डानामाकृतिर्याद्दक्ताद्दक्स्वे मेखलाकृतिः ॥

ाथ रामवाजपेयी ।

षट्पञ्चवेदगुणपक्षलवैस्तु पञ्च

स्युर्मेखला इतर एष च पञ्च दृष्टः ।

तुङ्गादिमाङ्गुलवतस्तदिषूलवोन-

तुङ्गाः परा प्रथम विस्तृतिसम्मितोच्चाः ॥

ातिलकामारसङ्ग्रहेऽपि ।

(पञ्च)त्रिद्व्येकमेखलोच्छ्रायं ज्ञात्वा प्रथमधः खनेत् । इति ।

ात्तु शारदातिलके ।

यावान् कुण्डस्य विस्तारः खननं तावदीरितम् ।

मेखलया सहेति बोद्धव्यम् ।

प्रथ योनिलक्षणम् ।

यदा पञ्च तदा त्वेवं षट्पञ्चाब्धित्रिपक्षकैः ।

अङ्गुलैः पञ्च कार्य्याः स्युरुन्नता विस्तृताश्च ताः ॥

कण्ठाद्विमाङ्गुला तुङ्गा पूर्व्वा पृथुषडङ्गुला ।

चतुर्द्व्यभवेत्तु द्विपर्व्वतुल्याः पराः पराः (परापराः) ॥

---

* कुर्य्याद्विंश्च काय्यां इति पाठः साधीयान् ।

मेखलामध्यतो योनि: कुण्डत्रंशेन विस्तृता ।
कुण्डार्द्धेनोन्नता: सर्व्वा: संस्थाप्या मेखलोपरि ॥
दशाङ्गुलाथवा योनिर्दीर्घोच्चा कुण्डपश्चिमे ।
सप्ताङ्गुला च विस्तीर्णा कर्त्तव्याश्वत्थपत्रवत् ॥
एकाङ्गुलप्रमाणेन पृथूच्चा योनिमेखला ।
अन्तर्विलोन्नता कुण्डप्रविष्टैकाङ्गुलाधरा ॥
कूर्म्मपृष्ठोन्नता मध्ये पार्श्वयोश्चाङ्गुलोच्छ्रया ।
गजोष्ठसदृशी तद्वदायता छिद्रसंयुता ॥
योनिमध्यगतं लिङ्गं तुङ्गं पृथुकराङ्गुलम् ॥
घृतपिण्डद्वितयं तस्या: पार्श्वयो: कुम्भकुम्भवत् ।
एकाङ्गुलन्तु योन्यग्रं कुर्य्याद्दीर्घमधोमुखम् ।
एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्द्धयेत् ॥
यवद्वयप्रमाणेन योन्यग्रमपि वर्द्धयेत् ।
तस्माद्द्वारेऽस्य(वाराग्र) नासाभं योनिमध्ये मुखं स्मृतम् ॥
एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुला: ।
योन्या: पश्चिमतो नालमायामे चतुरङ्गुलम् ॥
त्रिद्व्येकाङ्गुलविस्तार: क्रमा(दूनाग्र)न्नालाग्रमिष्यते ।
अब्धिसंख्याङ्गुलोपेतामुच्छ्रायायामत: समाम् ॥
वेदिं विधाय तस्यान्तु न्यस्तनालं विधानवित् ।
शेषं प्रपूरयेदन्त: परिधिस्थापनाय च ॥
नाभि: पद्मामाविशेत्कुण्डमध्ये
तत्तत्कुण्डाकारिक्रमोत्तमा वा ।

कुण्डार्कांशस्तुङ्गताश्च द्विनिघ्ना
स व्यासः स्याद्विमतौ कल्पनीयः ॥
नाभिक्षेत्रं त्रिधा भित्त्वा मध्ये कुर्वीत कर्णिकाम् ।
बहिरंशद्वयेनाष्टौ दलान्युपरि कल्पयेत्* ॥
इति योनिमेखलाप्रकरणम् ।

अथ पात्रलक्षणम् ।

तत्र स्रुग्लक्षणम् ।

श्रीपर्णीशिंशपाशोकखादिराम्रपलाशजाः ।
वैकङ्कतशमीशालश्रीखण्डाश्वत्थवृक्षजाः ॥
षड्विंशदङ्गुला दीर्घा स्रुग्योश्चा च षडङ्गुला ।
विंशत्यङ्गुलको दण्डः स्मृतस्तस्याश्च वर्त्तुलः ॥
विस्तारे द्व्यङ्गुला प्रोक्ता परिणाहे षडङ्गुला ।
तन्मूलं कलशाकारं रामवेदाङ्गुलैर्मितम् ॥
त्यक्त्वा वेदाङ्गुलै(ङ्गुलं)र्मूलं द्व्यङ्गुलं स्रुच आस्यम् ।
दण्डाग्रेऽष्टाङ्गुला वेदिर्द्व्यङ्गुला वेदिमेखला ॥
वेदिकार्द्धस्थिता वेदिपीठी च चतुरङ्गुला ।
द्विपदाङ्गुलं स्मृतं खातं वर्त्तुलं चतुरङ्गुलम् ॥
पृष्ठे मृगपदाकारं कर्णिकासहितं बहिः ।
द्व(त्र)यङ्गुलो वेदितः कण्ठो वेदित्रिभागविस्तरः ।

* दलानि परिकल्पयेदिति ख-पुस्तके पाठः ।

कण्ठात्सप्ताङ्गुलं नालं द्व्यङ्गुलं पृथुलञ्च तत् ।
कनिष्ठिकापरीणाहमाज्यनिर्गमनं छिद्रम् (छि तत्) ॥
इति स्रुग्लक्षणम् ।

अथ स्रुवलक्षणम् ।
यज्ञा स्रुगया स्रुवस्तज्ज्ञो*हस्तिकोऽङ्गुष्ठगण्डिक(का)म् ।
अवटं गोपदाकारं कर्षपूरितपुष्करम् ॥
मूलाग्रगण्डिकाक्रान्तो दण्डो नालाकृतिः शुभः ।
अवटं गजकुम्भाभं सूक्ष्मं दण्डेन वा युतम् ॥
इति स्रुवलक्षणम् ।

---

* यज्ञा स्रुगया स्रुवस्तज्ज्ञ इत्यनेन स्रुक्स्रुवयोरेकद्रव्योपादानकत्वं निर्णीयते, दृश्यते च बहुषु ग्रन्थेषु वैपरीत्यम् (भिन्नोपादानकत्वम्) एतयोः । एवञ्चात्र सन्देहे यथासम्भवं तन्निरसनाय अन्यान्यपि तल्लक्षणानि प्रदर्श्यन्ते यथा —

खादिरेण स्रुवः कार्यः पालाशी तु जुहूर्भवेत् ।
त्वक्प्रदेशे बिले स्यातामन्यैर्वा यज्ञियैर्द्रुमैः ॥
तदभावे पलाशस्य पर्णाभ्यां हूयते हविः ।
पलाशपर्णाभावे तु पर्णैर्वा पिप्पलाद्भवैः ॥
स्रुग्लक्षणम्—आयामं पञ्चधा कृत्वा चतुर्धा वा यतो द्वयोः ।
उपान्त्यः पार्श्वमित्युक्तो हविराश्रयभागतः ॥
उपान्त्यभागे विस्तारः स्वदैर्घ्येण समो भवेत् ।
संग्रन्थ्याकृतिरुद्दिष्टो बिलमत्र च वर्तुलम् ॥
षडङ्गुलं बाहुमात्रा तदर्द्धेन च निम्नता ।
अरत्निमाने दण्डस्य तत्समानं बिलं स्मृतम् ॥

वशिष्ठसंहितायाञ्च कुण्डलक्षणमीरितम् ।
गृहस्येशानभागे च मण्डपं कारयेद्बुधः ।
षड्द्वादशाष्टभिर्हस्तैः* षोडशैर्वा समन्ततः ॥

---

विस्तारार्द्धेन निम्नं स्यादन्यभागेऽथ निर्णयः ।
भागेऽग्निभं भवेद्ग्रीवा दैर्घ्यार्द्धेन च विस्तृता ॥
तस्या मुखं हंसमुखं हस्त्योष्ठमुखमिव वा ।
विलान्तप्रणालिका तावदर्धमायामकल्पनः ॥
कर्णौ समुच्छ्रितौ ग्रीवापार्श्वयोर्थादितौ तथा ।
विलस्य वृत्तं पद्मं स्यादथ दण्डस्य लक्षणम् ॥
चतुर्विंशत्त्रयो द्वौ वा भागौ दण्डदैर्घ्यतः ।
तस्य मूलं भवेत् स्थूलः परिणाहो नवाङ्गुलः ॥
अन्तं पञ्चाङ्गुलः स्थूलो यत्नतो वर्तुलो भवेत् ।
दण्ड एव स्रुचां काकपुच्छत्वं समुदीरितम् ॥
यज्ञाङ्गभूत स्रुचः कार्य्या इति बौधायनोऽब्रवीत् ।
शास्त्रान्तरात् विशेषं निर्णयान्नरमत्र यत् ॥
प्रादेशमात्रतापि स्याद्दैर्घ्यमानमतादितः ।
दण्डो भागत्रयेण स्यात्पात्रं भागत्रयेण च ॥
ऊर्ध्वमेकेन भागेन ग्रीवा चेति यथांशतः ।
स्रुचः सह स्रुवेण स्युर्हस्तात्वा यथापि वा ॥

स्रुचनन्तु स्रुवमेवमाह—

षडङ्गुलमितश्छिद्रः स्रुवस्त्वङ्गुलवृद्धवान् ।
अङ्गुष्ठपर्वणो यद्वा वृत्तं तस्याग्रपुष्करम् ॥
आयामं पञ्चधा कृत्वा त्रिभागं दण्डमेव च ।
द्विभागं पुष्करं प्रोक्तं दर्व्यां लक्षणमुत्तमम् ॥

* दशद्वादशभिर्हस्तैरिति ग-पुस्तके पाठः ।

चतुर्द्वारसमायुक्तं तोरणाद्यैरलङ्कृतम् ।
कुण्डं तन्मध्यभागे तु कारयेच्चतुरस्रकम् ॥
वितस्तिद्वयखातं यत्कुण्डं तच्चतुरङ्गुलम् ।
विप्राणां क्षत्रियाणां तदङ्गुलत्रयसंयुतम् ।
वैश्यानां द्व्यङ्गुलाधिक्यं शूद्राणां हस्तमात्रकम् ॥
प्रथमा मेखला तत्र द्वादशाङ्गुलविस्तृता ।
चतुर्भिरङ्गुलैस्तस्याश्चोन्नतिश्च समन्ततः ॥
तस्याश्चोपरि वप्रः स्याच्चतुरङ्गुलमुन्नतः ।
अष्टाभिरङ्गुलैः सम्यग्विस्तीर्णस्तु समन्ततः ॥
तस्योपरि पुनः कार्यो वप्रः सोऽपि तृतीयकः ॥
चतुरङ्गुलविस्तीर्णश्चोन्नतश्च तथाविधः ॥
योनिस्तु पश्चिमे भागे प्राङ्मुखी मध्यसंस्थिता ।
षडङ्गुलैश्च विस्तीर्णा चायता द्वादशाङ्गुलैः ।
पृष्ठोन्नता गजोष्ठी(व) च सच्छिद्रा मध्यमोन्नता ॥
कण्ठोष्ठं यवमात्रं स्यात्कुण्डे चरकमात्रके ।
कण्ठो यत्नेन कर्त्तव्यो भुक्तिमुक्तिफलेप्सुभिः ॥
नाभिरप्यथवा कुण्डमेकमेखलकं भवेत् ।
एवं लक्षणसंयुक्तं कुण्डमिष्टार्थसिद्धिदम् ॥
अनेकदोषदं कुण्डं यत्न्यूनाधिकं यदि ।
तस्मात्सम्यक् परीक्ष्यैव कर्त्तव्यं शुभमिच्छता ॥
इषुमात्रं स्थण्डिलं वा सङ्क्षिप्ते होमकर्मणि ।
कुर्व्वीत विधिवत्प्राज्ञो होमं तत्र च कारयेत् ॥

अथ आयाः।

ध्वजो धूम्रश्च सिंहश्च श्वानश्च वृषभस्तथा।
खरो गजश्च काकश्च अष्टावायाः प्रकीर्त्तिताः॥

इति श्रीसारसङ्ग्रहे कुण्डमण्डपादिलक्षणं समाप्तम्।

अथ पूर्णाहुतिविधानम्।

प्रयोगपारिजाते आश्वलायनकारिका।

आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत् स्रुचम्।
तया चाज्याहुतिः कार्य्या सा पूर्णाहुतिरिष्यते।
स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः॥ इति।

शौनकस्तु।

आयाश्चेत्यादिभिः*र्हुत्वा समुद्रादूर्म्मिसूक्ततः।
सन्तताज्यधारां तां पूर्णाहुतिमथाचरेत्॥ इति।

ऋग्विधाने तु।

समुद्रादूर्म्मिसूक्तेन† संयतात्मा जितेन्द्रियः।
विज्योतिषेति‡ ज्वलयेत् पूर्णाहुत्या हुताशनम्॥

---

* आयाश्चेति पूर्वप्रतीकः क्वचिदपि मन्त्रो नोपलभ्यते, अथ आ यस्मिन्नित्यादिभिरिति पाठे बहवो मन्त्रा दृश्यन्ते, तेषु एक एव प्रदर्श्यते। यथा—

आ यस्ते सर्पिरासुतेऽग्ने शमस्ति धायसे।
ऐषु द्युम्नमुत श्रव आ चित्तं मर्त्येषु धाः॥ (५म. ७सू. ९ऋक्।)

† ६१ पृष्ठे प्रदर्शितेन।

‡ विज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे॥ (५म. २सू. ९ऋक्।)

अत्र इतिकर्त्तव्यतामाह सङ्ग्रहकारः ।

एवं यथोचितं शक्त्या हुत्वा पूर्णाहुतिं चरेत् ।
घृतेनापूर्य स्रुगर्त्तमूर्द्ध्वबल्कस्रुचि स्रुवम् ॥
निधायाधोमुखं न्यस्येत् स्रुवाग्रे कुसुमाक्षतम् ।
पश्चाद्वामपुरोदक्षकराभ्यां शङ्खमुद्रया ॥
गृहीत्वा स्रुक्स्रुवौ मन्त्री स्रुवाग्रन्यस्तलोचनः ।
ऋजुकायः प्रसन्नात्मा समपादः समुत्थितः ॥
स्थिरधीर्जुहुयादग्नौ यवप्रमितधारया ।
पूर्णाहुतिरियं प्रोक्ता सर्व्वकर्म्मप्रपूरणी ॥

इति पूर्णाहुतिविधानम् ।

हरेः प्रसादमासाद्य ग्रहयज्ञो निरूपितः ।
ग्राहग्रस्तद्विपेन्द्रस्य मोचकस्तेन तुष्यतु ॥
मनोरथाभिवर्षिण्या विदुषामनुकम्पया ।
विधानपारिजातेऽत्र द्वितीयः स्तवकोऽभवत् ॥
अहो अस्य निबन्धस्य महिमा किमु वर्ण्यते ।
यतः श्रीमदनन्तोऽस्य हरिः कारयिता मया ॥
सन्ति ग्रन्थसहस्राणि देशे देशे महान्त्यपि ।
कोऽप्यस्य महिमा येनोऽभिगर्जयति सर्व्वतः ॥

इति श्रीविधानपारिजाते श्रीमन्नागदेवभट्टसूनुना
श्रीमदनन्तभट्टेन विरचिते निबन्धे
द्वितीयः स्तवकः समाप्तः ।

## तृतीयः स्तवकः।

ॐ गणेशाय नमः।

वन्दे वन्द्यतमं विष्णुं सत्यज्ञानस्वरूपिणम्।
ब्रह्मादिवन्द्यपादाब्ज(चरणं)मनन्तं विघ्ननाशनम्॥

अथेदानीं तृतीयस्तवकः प्रारभ्यते। तत्रादौ गृहस्थसम्बन्धीनि विधानानि निरूप्यन्ते।

तत्रादौ तावद्गुरुशान्तिविधानम्।

तथाच शौनकीये।

बुद्धिशीलगुणोपेतां कन्यकामन्यगोत्रजाम्।
आत्मनोऽवरवर्षाञ्च विवहेद्विधिपूर्व्वकम्॥
कन्योद्वहनकाले तु आ(सा)नुकूल्यं गुरोर्न चेत्।
ब्राह्मणस्योपनायेऽपि(नयने) गुरोर्विधिरुदाहृतः॥
सु(सौ)वर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत्।
ऐशान्ये धान्यराशौ च कुम्भं तत्र निधापयेत्॥
मदनं मधुपुष्पाणि पत्रपालाशसर्षपान्।
मांसी गुडूच्यपामार्गविडङ्गीशङ्खिनीवचाः॥
सहदेवी विष्णुक्रान्ता सर्व्वौषधिशतावरीः।
तत्वाग्रभागपर्य्यन्तं स्वस्वशाखोक्तमन्त्रतः॥
अष्टोत्तरफलेऽभ्यर्च्य पीतपुष्पाक्षतादिभिः।
देवपूजोत्तरे काले ततः कुम्भाभिमन्त्रणम्॥

अश्वत्थसमिधाभ्यर्च्च पायसं सर्पिरन्वितम्।
यवव्रीहितिलान् साज्यान् मन्त्रेणैव बृहस्पतेः।
अष्टोत्तरशतं सर्व्वं हुत्वा शेषं समापयेत्॥
दारपुत्रसमेतस्य त्वभिषेकं समाचरेत्।
कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रकैः*॥
प्रतिमां कुम्भं वस्त्रञ्च आचार्य्याय प्रदापयेत्।
ब्राह्मणान् भोजयेत्पश्चाच्छुभदः स्याद्बृहस्पतिः॥

राशिफलमुक्तं ज्योतिःशास्त्रे।

नष्टात्मजा धनवती सुभगा कुशीला
पुत्रान्विता हृतधवा सुभगा विपुत्रा।
स्वामिप्रिया विकलपुत्रधना धनाढ्या
वन्ध्या भवेत् सुरगुरौ पुरुषश्च नारी†॥ इति।

अथास्य प्रयोगः।

गुरुर्द्विपञ्चसप्तायनवस्थः शुभदः स्मृतः।
पूजया दिक्त्रिषष्ठाद्यो नार्काष्टादिगतः शुभः॥ इति।

एवं शुभाशुभं निरीक्ष्य अशुभत्वे शान्तिं विदधीत।

तद्यथा।

विवाहोपनयनाभ्यां प्राक् शुभे दिने संभृतसंभारो यजमान पीठोपविष्टः प्राणानायम्य देशादिकं स्मृत्वा संस्कार्य्यमात्मदक्षिण भागे उपवेश्य अस्य कुमारस्य अमुकस्थानस्थितबृहस्पतिजनित

* ११९ पृष्ठे प्रदर्शितैः।

† पुरुषश्च नारीत्यत्र जनमोऽशिवकृत् इति निर्णयसिन्धौ पाठः।

विकृतफलनिवृत्तिद्वारा आयुरारोग्यादिसिद्धये द्विजत्वाधिकारत्वसिद्धये च बृहस्पतिशान्तिं करिष्ये इति सङ्कल्प्य ।

कन्यापक्षे तु ।

अस्याः कन्याया अमुकराशिस्थितगुरुजन्यसर्व्वारिष्टनिरासद्वारा पुत्राद्यभिवृद्धिपूर्व्वकं जीवपतित्वप्राप्त्यर्थं विवाहाधिकारसिद्ध्यर्थञ्च बृहस्पतिशान्तिं करिष्ये इति सङ्कल्प्य स्वस्तिवाचनं कृत्वा स्थण्डिलोपलेपाद्याज्यभागान्तं कर्म्म कृत्वा गुरुं पूजयेत् । तद्यथा ।

स्थण्डिलेशानभागे दीर्घचतुरस्रं मण्डलं कृत्वा तत्र तण्डुलपुञ्जादौ सुवर्णनिर्म्मितं बृहस्पतिं बृहस्पते अतीति मन्त्रेण* प्रतिष्ठाप्य पञ्चामृतादिदानपूर्व्वकं पूजयित्वा तदुत्तरभागे कुम्भं स्थापयित्वा तत्र मदनमधुपुष्पाद्यौषधानि प्रक्षिप्य जलेनापूर्य्य वात आवात्वित्यस्य वातायनतुला वायुर्गायत्री वायुनियोजने विनियोग इति कथ्याद्युल्लेखपूर्व्वकं वात आवातु मन्त्रेण† सप्त वायून् नियोजयेत् । समुद्रादूर्म्मिरित्यस्य वामदेव आपस्त्रिष्टुप् सिन्धुनियोजने विनियोगः । समुद्रादूर्म्मिमन्त्रेण‡

* बृहस्पते अति यदर्य्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥
उपयामगृहीतोऽसि बृहस्पतये त्वा ।
एष ते योनिर्बृहस्पतये त्वा ॥ (२६अ १म यजुः ।)

† वात आवातु भेषजं शम्भु मयोभु नो हृदे ।
प्र ण आयूंषि तारिषत् ॥ (१०म. १८६सू. १ऋक् ।)

‡ ६१ पृष्ठे प्रदर्शितम् ।

सप्त सिन्धूनियोजयेत्। स्योना पृथिवीत्यस्य मेधातिथिर्भूमि-र्गायत्री मृत्क्षेपे विनियोगः। स्योना पृथिवीति मन्त्रेण* मृदः सप्त विनिक्षिपेत्।

गोरोचनं पञ्चरत्नं पञ्चपल्लवचस्तथा।
नदी उभयतोयानां† वालुकाश्च विनिक्षिपेत्॥

अथ कुम्भे वरुणमावाह्य संपूज्य च गङ्गे च यमुने चैव‡ इत्यादि मन्त्रजातेन गङ्गाद्यावाहनं कार्य्यम्।

ततो देवदानवसंवादे इत्यादि मन्त्रेण§ कलशप्रार्थना

---

* स्योना पृथिवि भवानृक्षरा निवेशनी।
यच्छानः शर्म्म सप्रथाः॥ (५अ. २१म. यजुः।)

† नद्या उभयतीराणामित्येव पाठः साधीयान्।

‡ गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्म्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥

§ देवदानवसंवादे मथ्यमाने महोदधौ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥
त्वत्तोये सर्व्वतीर्थानि देवाः सर्व्वे त्वयि स्थिताः।
शिवः स्वयं त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः॥
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः।
त्वयि तिष्ठन्ति कलस यतः कामफलप्रदाः॥
त्वत्प्रसादादिमं यज्ञं कर्त्तुमीहे जलोद्भव।
सान्निध्यं कुरु मे देव प्रसन्नो भव सर्व्वदा॥ इति।
कलसस्य मुखे ब्रह्मा ग्रीवायाञ्च महेश्वरः।
मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः स्थिताः॥
शिवास्तु देवताः सर्व्वा वेष्टयन्ति चतुर्द्दिशम्।
पृथिव्यां सर्व्वतीर्थानि कलसे निवसन्ति हि॥

कार्य्यौ। अथ बृहस्पतिमन्त्रजपशान्तिसूक्तपाठार्थमेकं ब्राह्मणं वृणुयात्। अथवा आचार्य्य एव कुर्य्यात् (करोति)। तद्यथा कलशं संस्पृशन् बृहस्पतिमन्त्रं शतवारं जपेत्। आ नो भद्रादि शान्तिसूक्तानि च *।

अथ होमः कार्य्यः। आज्यप्लुताभिरश्वत्थसमिद्भिः अष्टोत्तरशतसंख्यका आहुतीर्हुत्वा तथैवाज्येन सघृतपायसेन घृतप्लुतैर्यवव्रीहितिलैश्च जुहुयात्। एवमष्टोत्तरशतसंख्यां पूरयित्वा बृहस्पतेरुत्तरपूजनं कृत्वा स्विष्टकृदादिहोमशेषं समाप्य चाभिषेकं सकुटुम्बस्य यजमानस्य कुर्व्वीत।

ततो होमावसाने तु अभिषेकन्तु कारयेत्।
दारपुत्रसमेतस्य यजमानस्य कल्पवित्॥

इति [illegible]नात्। तत्र मन्त्राः समुद्रज्येष्ठा इत्येवमादयः†।

गुरुकलशोदकं पात्रा[illegible]रे गृहीत्वा मन्त्रान्ते तेनाभिषिञ्चेत्। अन्येऽपि मन्त्राः—इन्द्र आशाम्‡। शान्तुरशोते। इदमापोऽथ

---

[illegible]: शान्तिश्च पुष्टिश्च प्रीतिश्च मतिरेव च।
ऋग्वेदश्च यजुर्वेदः सामवेदस्तथैव च।
अथर्व्ववेदसहिताः सर्व्वे कलशसंस्थिताः॥ इति च।

* आ नो भद्रा इति—ऋगियं ७१ पृष्ठे प्रदर्शिता, अप्रदर्शिताश्च ऋग्वेदीयप्रथममण्डलस्य ८९ सूक्ते मृग्याः।

† समुद्रेत्यादिकाः ऋचः ११२ पृष्ठे प्रदर्शिताः।

‡ इन्द्र आशामिति मन्त्रोऽयं ६२ पृष्ठे प्रदर्शितः।

मन्त्रेण* एना वोऽग्निमृचा† तथा। या ओषधी‡ रश्वावती§ कुश्माण्डै¶श्चाभिषेचयेत्॥ अपाघम्‖। स्वस्ति नो मिमीतामिति** सप्त ऋचः। स्वस्तिदा विशस्पतिः††। अश्विनोरसनं रथम्‡‡। यावती द्यावापृथिवी§§। यद्देवाः¶¶।

---

* इदमाप इति मन्त्रोऽयं ६२ पृष्ठे प्रदर्शितः।

† एना वो अग्निं नमसोर्जो नपातमाहुवे।
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम्॥ (१५अ. ३२म. यजुः।)

‡ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः।
तासामसि त्वमुत्तमा अरं कामाय शꣳहृदे॥ (१२अ. ९२म. यजुः।)
या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु।
बृहस्पतिप्रसूता अस्यै सन्दत्त वीर्य्यम्॥ (१२अ. ९३म. यजुः।)

§ अश्वावतीꣳ सोमावतीमूर्ज्जयन्तीमुदोजसम्।
आवित्सि सर्व्वा ओषधीरस्मा अरिष्टतातये॥ (१२अ. ८१म. यजुः।)

¶ कुश्माण्डमन्त्राः ५८६ पृष्ठे प्रदर्शिताः।

‖ अपाघमप किल्बिषमपकृत्यामपो रपः।
अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव॥ (३५अ. ११म. यजुः।)

** स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना॥ इत्यादिकाः।
(५म. ५१सू. ११ऋक्।)

†† स्वस्तिदा विश इति ऋगियं ६२ पृष्ठे प्रदर्शिता।

‡‡ अश्विनोरसनं रथमनश्वं वाजिनीवतोः। तेनाहं भूरि चाकन॥
(१म. १२०सू. १०ऋक्।)

§§ यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे।
तावन्तमिन्द्र ते ग्रहमूर्ज्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम्॥ (३८अ. २६म. यजुः।)

¶¶ यद्देवा देवहेडनं देवासश्चकृमा वयम्।
अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः॥ (२०अ. १४म. यजुः।)

यदि दिवा* । यदि जाग्रत्† । यद्ग्रामे‡ ।

यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ।

ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु ते सदा (सर्व्वदा) ॥

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ।

तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते (मे) ॥

भगं ते वरुणो राजा भगं सूर्य्यो बृहस्पतिः ।

भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥

सुरास्त्वामभिषिञ्चन्तु इत्यादयश्च§ ।

एवमभिषिक्तो यजमानो वस्त्रादिभिराचार्य्यं पूजयेत् । पूजान्ते अर्घ्यं दद्यात् । तत्र मन्त्रो यथा ।

गम्भीर जीवरूपाङ्ग देवेज्य सुमते प्रभो ।

नमस्ते वाक्पते शान्त गृहाणार्घ्यं बृहस्पते ॥

ततः प्रार्थना कार्य्या ।

नमस्तेऽङ्गिरसां नाथ वाक्पतेऽथ बृहस्पते ।

क्रूरग्रहैः पीड्यमानानमृताय भजस्व नः ॥

---

* यदि दिवा यदि नक्तमेनांऽसि चकृमा वयम् ।
वायुर्मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः ॥ (२०अ. १५म. यजुः ।)

† यदि जाग्रद्यदि स्वप्न एनांऽसि चकृमा वयम् ।
सूर्य्यो मा तस्मादेनसो विश्वान् मुञ्चत्वंहसः ॥ (२०अ. १६म. यजुः ।)

‡ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यच्छूद्रे यदर्य्ये यदेनश्चकृमा वयम् ।
यदेकस्याधिधर्म्मणि तस्यावयजनमसि स्वाहा ॥ (२०अ. १७म. यजुः ।)

§ ७५ पृष्ठे प्रदर्शिताः ।

जीवो बृहस्पतिः सूरिराचार्य्यो गुरुरङ्गिराः ।
वाचस्पतिर्देवमन्त्री शुभं कुर्य्याः सदा मम ॥ इति ।

अथ प्रतिमादानम् ।

देशादि संकीर्त्य मया कृतया अनया बृहस्पतिशान्त्या सकलमनोरथसिद्धये कृतं बृहस्पतिपूजनं होमोऽभिषेकश्च तस्य श्रेयसो यथावस्थायि प्रतिष्ठासिद्ध्यर्थमिमां बृहस्पतिप्रतिमां सुवर्णदक्षिणासहितां सोपस्कारां तुभ्यमहं सम्प्रददे न ममेत्यभिधाय आचार्य्याय प्रयच्छेत् ।

एतत्कर्म्माङ्गत्वेन अपरान् ब्राह्मणानपि भोजयेत् । यथाशक्ति तेभ्यो दक्षिणां दद्यात् । तदाशिषश्च गृह्णीयात् । एवङ्कृते सर्व्वारिष्टशान्तिर्भवतीत्याह शौनकः ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते ब्राह्मणजातेर्विवाहोपनयनयोर्दुष्टस्थानस्थितबृहस्पतिशान्तिविधानं समाप्तम् ।

रमालालितपादाब्जं रामं रघुकुलोद्वहम् ।
गुणतो देशतश्चैव कालतोऽनन्तमाश्रये ॥

अथ विवाहोपनयनयोर्दुष्टस्थानस्थितादित्यशान्तिविधानम् ।

यदाह शौनकीये ।

ब्राह्मणस्योपनयने नानुकूल्ये भवेद्रविः ।
तस्य शान्तिं प्रवक्ष्यामि उक्ताश्चैव महर्षिभिः ॥
उपनयनात् पूर्व्वंद्युः कृत्वा पुण्याहवाचनम् ।
गृहस्येशानदिग्भागे गोमयेनोपलेपयेत् ॥

कुम्भमेकं तथा वस्त्रे पद्ममष्टदलं लिखेत् ।
सुवर्णेन रविं कृत्वा द्विभुजं पद्मधारिणम् ॥
कृत्वाज्यभागपर्य्यन्तं तन्त्रं कृत्वा तु पूर्व्ववत् ।
स्वशाखोक्तविधानेन आचार्य्यो होममाचरेत् ॥
आकृष्णेनेति मन्त्रेण* समिदाज्यचरुं हुनेत् ।
अष्टोत्तरसहस्रं वा अष्टोत्तरशतन्तु वा ॥
यवव्रीहींश्च हुत्वाथ होमशेषं समापयेत् ।
दारपुत्रसमेतन्तु ऋत्विक् तमभिषेचयेत् ॥
कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रकैः† ।
ऋत्विग्भ्यो दक्षिणां दद्यादन्येभ्यश्च स्वशक्तितः ॥
प्रतिमां वस्त्रं कुम्भञ्च आचार्य्याय प्रदापयेत् ।
एवं यः कुरुते शान्तिं तस्य (सर्व्व)दोषो विनश्यति ॥
कन्याविवाहकालेऽपि दुष्टः पूज्यस्तथैव (च) सः ।
एवं यो यो ग्रहो दुष्टस्तत्तच्छान्तिं समाचरेत् ॥ इति ।

इति दुष्टस्थानस्थितादित्यशान्तिविधानम् ।

अथ गोदानव्रतविधानम् ।

आश्वलायनकारिकायाम् ।

गोदानं चौलवत्कार्य्यं षोड़शेऽब्दे तदुच्यते ।
अक्लोपवेशनं नास्ति श्मश्रूणामुन्दनं‡ भवेत् ॥

---

* ११ पृष्ठे प्रदर्शितम् ।

† ११२ पृष्ठे प्रदर्शितैः ।

‡ उन्दनमित्यत्र वापनमित्याकरे पाठः ।

अदितिः श्मश्रूणि वपत्वाप उन्दन्तु वर्चसे ।
पिञ्जूलादिविधानञ्च श्मश्रुपक्षे भवेदिह ॥
निर्म्मार्ज्जने विशेषोऽयं श्मश्रूणीति शिरो मुखम् ।
शासनेनापि तस्यायं विशेषः प्रैष उच्यते ॥
केशश्मश्रुलोमनखान्युदक्संस्थानि कुर्व्विति ।
स्नात्वा च वाग्यतस्तिष्ठन्नहःशेषं नयेदथ ॥
आदित्येऽस्तमिते वाचं विसृजेतान्तिके गुरोः ।
अहं* वरं ददामीति दद्याद्गोमिथुनं ततः ॥
श्वः पूर्व्ववद्व्रतादेशः संवत्सरमिदं चरेत् ।
व्रतेष्वेतेषु सर्व्वेषु प्रसिद्धं केशधारणम् ॥ इति ।
अन्यः सर्व्वोऽपि विशेषः स्वस्वशाखासूत्रतोऽवगन्तव्यः ।

इति गोदानव्रतविधानम् ।

## अथ समावर्त्तनविधानम् ।

तत्र याज्ञवल्क्यः ।

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।
गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ॥
व्रतपक्षेऽपि शब्दार्थमारभ्याध्ययने कृते ।
विद्यान्ते गुरुमाहाहं क(कि)मर्थं करवाणि ते ॥

---

* गुरोरित्यत्र गुरवेिति, अहमित्यत्र उक्तेति च आकरे पाठः ।

यमर्थमाह तं ज्ञात्वा ततोऽनुज्ञामवाप्य च।
आचार्य्याशात्मना चैव मन्वादीन्युपकल्पयेत्॥

स्मृत्यन्तरेऽपि।

अधीत्य (पठित्वा) चतुरो वेदांस्त्रीन् द्वौ वैकमथापि वा।
तोषयेद्दक्षिणाभिस्तु गुरुं भक्त्या विचक्षणः॥
धनं पित्रा(पुत्रा)दिवन्धुभ्यः समाहृत्याथ वा परात्।
राजभ्यो वा गुरुं भक्त्या तोषयेत् साधको व्रती॥ इति।

सङ्ग्रहेऽपि।

आहरिष्यामि कं तेऽर्थं भवतो वचनादिह।
त्वयोक्तं हि करिष्यामि कृतार्थः स्यां गृहे त्विति॥
तेनोक्तश्च तथा कृत्वा स्नानं शिष्यः समाचरेत्।
अलमर्थेन मे वत्स त्वद्गुणैरस्मि तोषितः।
गृहाय त्वनुजानामीत्यनुज्ञातोऽपि वा चरेत्॥ इति।

अत्र गुरवे दातव्यो वरो मनुना दर्शितः।

अपूर्व्वं गुरवे किञ्चिदुपकुर्व्वीत धर्म्मवित्।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्व्वर्थमाहरेत्॥
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहयं ततः†।
धान्यं वासांसि शाकं वा गुरवे प्रीतिमावहन्॥ इति।

अयं वरो गुरुप्रीत्यर्थो न तु विद्याविक्रयार्थः। वेदाचरस्य मूल्यासम्भवात्।

---

* गृहं गच्छानुजानामीति संग्रहे पाठः।

† छत्रोपानहमन्तत इति मनुसंहितायां पाठः।

तथाच छन्दोगश्रुतिः ।

यद्यस्मा इलामद्भिः* परिगृहीतां धनस्य पूर्णां दद्यादेत-

देव† ततो भूय इति ।

तापनीयश्रुतिरपि ।

सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते । इति ।

हारीतस्मृतिरपि ।

एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।

पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा त्वनृणी भवेत् ॥ इति ।

एतस्य काल उक्तः श्रीधरीये ।

वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणी-

गोविन्देषु शशाङ्कभानुगुरुविच्छुक्रांशहोरादिषु ।

रिक्तां पर्व्व तथाष्टमीं प्रतिपदं मेषञ्च कीटं हरिं

हित्वा शुद्धियुतेऽष्टमेऽह्नि विमले कुर्य्यात्समावर्त्तनम्‡ ॥ इति ।

---

* इला पृथ्वी ।

† एतद्विद्याग्रहणम् ।

‡ मदनरत्ने नारदोऽपि—

अर्द्धोत्तरायणे जीवशुक्रयोर्दृश्यमानयोः ।

द्विजातीनां गुरोर्गेहात्रिवृत्तानां यतात्मनाम् ॥

मित्रोत्तरादितीज्यान्त्यहरीन्दुरविधातृषु ।

मेषवर्ज्जेन्दुसार्थ्यशुक्रवारलग्नांशकेषु च ॥

अथवा वीजनक्षत्रवारलग्नांशकेष्वपि ।

प्रतिपत्पर्व्वरिक्ताख्या अष्टमीञ्च दिनत्रयम् ।

हित्वान्यदिवसे कार्य्यं समावर्त्तनमङ्गलम् (मज्जनम्) ॥ इति ।

विट्‌धवारः*।

ज्योतिषेऽपि।

> भौमभानुजयोर्वारे नक्षत्रे च प्रतोदिते।
>
> चन्द्रताराविशुद्धौ च समावर्त्तनमिष्यते॥

एवं मुहूर्त्तादिशुद्धिं विज्ञाय स्वस्वशाखोक्तविधिना समावर्त्तनविधिरनुष्ठातव्यः।

एतत्समावर्त्तविधानं शौचादिधर्मलोपप्रायश्चित्ताचरणेन शुद्धः कुर्य्यात्। शुचिना कर्म्म कर्त्तव्यमिति वचनात्।

तथाचाह बौधायनः।

> शौचाचमनसन्ध्यावन्दनदर्भभिक्षाग्निकार्य्यरहितत्वशूद्रादि-स्पर्शन-कौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनत्याग-दिवास्वाप-छत्रधारण-पादुकाद्यारोहण-वनमालाधारणो-द्वर्त्तनानुलेपनाञ्जनजलक्रीड़ाद्यूतनृत्यगीतवाद्याद्यभिरति-पार्षण्डादिसम्भाषण-पर्य्युषितभोजनादि-ब्रह्मचारि-व्रत-लोपादि-सकलदोषपरिहारार्थं ब्रह्मचारी कृच्छ्रत्रयं चरेत्।
>
> महाव्याहृतिहोमञ्च कुर्य्यात्।

प्रथमं व्यस्तसमस्ताभिर्व्याहृतिभिर्यनस्त्र आज्याहुतीर्हुत्वा ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा। ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा। ॐ सुवरादित्याय च दिवे च महते च स्वाहा। ॐ भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च

---

* एका विट्‌शब्दो बौधवारस्य पर्यायः इति शुद्धिदीपिका।

दिग्भ्यश्च महते च स्वाहा। ॐ पाहि नो अग्न एनसे स्वाहा। ॐ पाहि नो अग्ने विश्ववेदसे स्वाहा। ॐ यज्ञं पाहि विभावसो स्वाहा। ॐ सर्व्वं पाहि शतक्रतो स्वाहा (१०म, ५अनु, तैत्तिरीयारण्यकम्)।

ॐ पुनरूर्ज्जा निवर्त्तस्व पुनरग्न इषायुषा। पुनर्नः पाह्यꣳहसः स्वाहा। (१२अ, ८म, यजुः।)

ॐ यज्ञं पाह्यꣳहसः स्वाहा। ॐ सह रय्या निवर्त्तस्वाग्ने पिन्वस्व धारया। विश्वप्स्न्या विश्वतस्परि स्वाहा। (१२अ, १०म, यजुः।)

"पुनर्व्याहृतिभिर्हुने"दिति वचनात् पुनरपि होमः कार्य्यः। यत्तु मनुनोक्तम्।

वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्॥ इति।

तदबुद्धिविषयमिति द्रष्टव्यम्।

धर्म्मलोपबाहुल्ये प्रायश्चित्तमुक्तम् ऋग्विधाने।

तं वो धिया जपेन्मन्त्रं* लक्षञ्चैव शिवालये।
ब्रह्मचारिणो धर्म्मस्य न्यूनश्चेत्पूर्ण(मेति च)तामियात्॥ इति।

समावर्त्तनोत्तरं पूर्व्वमृतानां त्रिरात्रमाशौचं कार्य्यम्।

आदिष्टी नोदकं कुर्य्यादाव्रतस्य समापनात्।
समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत्॥

---

* तं वो धियेति मन्त्रोऽयं ५०८ पृष्ठे प्रदर्शितः।

इति मनूक्तेः। आदिष्टी ब्रह्मचारीति विज्ञानेश्वरः। अगमे त्वा-शौचं नास्त्येव।

इति ब्रह्मचारिधर्म्मलोपे प्रायश्चित्तम्।

अथ स्नातकधर्म्मनिरूपणम्।

तत्र शौनकः।

समावृत्तमिमं यस्मिन् पूजयिष्यन्ति बान्धवाः।

मधुपर्कप्रदानाद्यैस्तद्गृहे तां निशां वसेत्॥ इति।

कात्यायनगृह्येऽपि स्नातकस्य मधुपर्कपूजा उक्ता।

तथाच तत्सूत्रम्।

षडर्घ्या भवन्ति आचार्य्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति।

स्मृत्यन्तरे तु विशेष उक्तः।

स्नात्वैवं विधिना काले मासमात्रमपि द्विजः।

अनाश्रमी न तिष्ठेत सुस्थः प्रयतवान्॥

निःस्वो रोगार्द्दितो भीतस्तापत्रोऽन्यैश्च कारणैः।

स्नातकः प्रयतो वह्निं न त्यजेदिति वै श्रुतिः॥

नित्यदा ब्रह्मचारी स्यात् पञ्चयज्ञपरायणः।

आपो तीर्थरतो वा स्यात् स्नातको लौल्यवर्ज्जितः॥

श्राद्धे निमन्त्रितो गच्छंस्कुर्य्यात् षट्कर्म्म च (कर्म्माणि षट्)द्विजः।

येन केनाप्युपायेन ब्रह्मचर्य्यां न लोपयेत्॥

अकृत्वा जुहुयात्प्रातर्मन्त्रस्तत्काम्यमेव च ।

कुर्य्यादुयज्ञान् विधिप्रोक्तान् स्नातको न तु यज्ञभाक् ॥ इति ।

अत्र वह्निं न त्यजेदित्युक्तत्वात् अकृत्वा जुहुयात्प्रातरित्युक्तत्वाच्च प्रातःकाले सन्ध्यावन्दनानन्तरमग्निकार्य्यं कृत्वा अकृत्वा हुत्वा सायंकालेऽप्यग्निकार्य्यं कर्त्तव्यमिति सूचितम् ।

स्नातकस्य अग्निकार्य्यविधिर्बौधायनेन किञ्चिदुक्तः ।

स एष ओपनयनात्, उपनयनात्प्रभृति व्याहृतिभिः षड्भिरेव (हुय) हुत्वा आ समावर्त्तनात्समावर्त्तनप्रभृति आज्येन हुय आ पाणिग्रहणात्पाणिग्रहणप्रभृति व्रीहिभिर्यवैर्वा तेनैकेनाहुतीर्जुहोति इति ।

अकृत्तहोममन्त्रास्तैत्तिरीयारण्यके पठिताः । यथा—

ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तञ्चैनश्चकृम तस्यावजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्सुषुप्ताश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा । यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेडनम् । अरा वायो नो अभिदुच्छुनाय ते तस्मिन्तदेनो वसवो निधेतन स्वाहा ॥ इति । (१०प्र,६०अनु,तैत्तिरीयारण्यके)

अथ स्नातकेन वैश्वदेवं कर्त्तव्यमित्याह शौनकः ।

वैश्वदेवं गृहस्थस्य प्रातरारभ्यणं भवेत् ।

स्नातकेनापि तत्कार्य्यं पृथक् पाको गृहे यदि ॥ इति ।

अन्येऽपि तद्धर्माः कूर्म्मपुराणे दर्शिताः । यथा—

यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम् ।

छत्रञ्चोष्णीषमाले च* पादुके वाप्युपानहौ ॥

रौक्मे च कुण्डले वेणुं† कृत्तकेशनखः शुचिः ।

स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न धारयेत् ॥

शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः ।

न जीर्णमलवद्वासा भवेत्तु विभवे सति ।

न रक्तमुल्वणञ्चान्यधृतं वासो न कन्यिकाम् ॥ इति ।

धारयेदिति शेषः ।

मनुरपि ।

उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।

उपवीतमलङ्कारं स्रजं करकमेव च ॥

न च्छिन्द्यान्नखलोमानि दन्तैर्नोत्पाटयेन्नखान् ।

न मृल्लोष्टञ्च मृद्नीयान्न च्छिन्द्यात् करजैस्तृणम् ॥ इति ।

स्मृत्यन्तरे तु ।

स्नातः समुद्वहेत्कन्यां प्रव्रजेद्वा तदिच्छुकः ।

---

* छत्रं चोष्णीषममलमित्याकरे पाठः ।

†. वेणुमित्यत्र वेदमित्याकरे पाठः । दर्भमुष्टिमिति तदर्थः । वेदमित्यनन्तरं बिभयादित्यूह्यम् ।

वनस्थो वा भवेद्विप्रः सुखस्थो विधिना शुचिः ॥
अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः ।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते* हि सः ॥ इति ।

अथ विवाहार्थं काम्यजप उक्तः कल्पविधाने ।

सुषुमं प्रजपेत्सूक्तं†मथ सम्यक् शिवालये ।
अयुतन्तु जपेत्कन्यां षण्मासाँल्लभते नरः ॥ इति ।

सकुलमिति नकुलं ब्रूयात्कपालमिति कपालं मणिधनुरिति इन्द्रधनुरित्यादि स्नातकविशेषनियमाः स्वस्वसूत्रादेरवगन्तव्याः ।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
स्नातकधर्म्मविधानं समाप्तम् ।

## अथ च्छुरिकाबन्धः ।

ज्योतिर्निबन्धे ।

छुरिकाबन्धनं वक्ष्ये नृपाणां प्राक्करग्रहात् ।
विवाहोक्तेषु मासेषु शुक्लपक्षेऽप्यनस्तगे ॥
जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते ।
मौञ्जीबन्धर्क्षतिथिषु कुजवर्ज्जितवासरे ॥

---

* प्रायश्चित्ती सन् ईयते इत्यर्थः इति प्रायश्चित्ततत्त्वम् ।

† प्रजापतिः स्त्रियां यश इत्यादीनि असौ मे कामः समृध्यतामित्यन्तानि पञ्चविंशति-वाक्यानि सुषुमसूक्तत्वेन संस्काररत्नमालायां धृतानि ।

संग्रहे तु ।

शूद्राणां राजपुत्राणां मौञ्ज्यभावेऽस्त्रबन्धनम् ।
मौञ्जीबन्धोक्ततिथ्यादौ कार्य्यं भौमदिनं विना ॥ इति ।

इत्यस्त्रबन्धनविधिः ।

अथेदानीं सार्थवेदाध्ययनवता ब्रह्मचर्य्येण अपाकृतर्षृणस्य स्नातकस्य देवपितृऋणापाकरणस्य कर्त्तव्यत्वात्तदधिकारप्रापको विवाहोऽभिधीयते ।

श्रूयते चैवं तैत्तिरीयके ।

जायमानो ह वै ब्राह्मणस्त्रिभिरृणवान् जायते । ब्रह्म-चर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी चेति ।

अत्र मनुः ।

गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम् ॥
वेदानधीत्य यत्नेन पाठतो ज्ञानतस्तथा ।
समावर्त्तनपूर्व्वन्तु लक्षण्यां स्त्रियमुद्वहेत् ॥ इति ।

स्मृत्यन्तरेऽपि ।

जपे होमे तथा दाने स्वाध्याये वा रतः सदा ।
नासौ तत्फलमाप्नोति आश्रमेण वहिष्कृतः ॥ इति ।

अत्र प्राधान्येन प्रथमं तावत्कुलं परीक्षणीयम् ।

तथाचाश्वलायनकारिकाव्यख्याम्।

कुलमग्रे परीक्षेत ये मातृतः पितृतश्चेति यथोक्तं पुरस्तादिति। अन्वायवचने समग्रेषु वधूवरगुणेषु सत्स्वपि दुष्कुलत्वं त्याज्यमिति कथयितुं परीक्षोपायमाह। ये मातृत इति। मातृतः पञ्चमे विद्यादिमन्तः पुरुषा ये च पितृतः पञ्च विद्यातपःसच्चरितवन्तो यत्र विद्यन्ते तादृशं कुलमिति यथा पुरस्तादुक्तं ये ये कर्मण्युक्ता अस्माभिरिति शेषः। एवं दशपुरुषयुतं कुलमित्युक्तं भवति।

अत्र भगवाञ्छौनकः।

लब्धाभ्यनुज्ञो गुरुतो द्विजो लक्षणसंयुताम्।
शुचिशीलगुणोपेतां कन्यकामन्यगोत्रजाम्।
आत्मनोऽवरवर्णाञ्च विवहेद्विधिपूर्वकम्॥ इति।

मनुरपि।

उत्तमैरुत्तमो नित्यं सम्बन्धानाचरेत्सह।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत्॥

उत्तमानाह स एव।

विशुद्धाः कर्मभिश्चैव श्रुतिस्मृतिनिदर्शितैः।
अविप्लुतब्रह्मचर्या महाकुलस(मुद्भवाः)मन्विताः॥
सन्तुष्टाः सज्जनहिताः साधवः समदर्शिनः।
लोभरागद्वेषामर्षमानमोहविवर्जिताः।
अक्रोधनाः सुप्रसादाः कार्य्याः सम्बन्धिनस्तथा॥

वर्ज्या यथा।

ये स्तेनाः पिशुनाः क्लीवा ये वा नास्तिकवृत्तयः।

विकर्म्मणा च जीवन्तो विज्ञाताः क्षपणास्तथा ॥
प्रबद्धवैराः शूद्रैर्ये राजकिल्बिषिणस्तथा।
ब्रह्मस्वादाननिष्ठाश्च कदर्थ्याश्च विगर्हिताः ॥
अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवास्तथा।
पतिघ्नाश्च सुवासिन्यस्ता यत्नेन विवर्ज्जयेत् ॥
महान्त्यपि समृद्धानि गोऽजाविधनधान्यतः।
स्त्रीसम्बन्धे दशैतानि कुलानि परिवर्ज्जयेत् ॥

यमोऽपि।

चतुर्दश कुलानीमान्यविवाह्यानि निर्द्दिशेत्।
अनार्य्यं ब्राह्मणानामुल्लिखाश्चैव वर्ज्जयेत् ॥
अत्युच्चकमतिह्रस्वमतिवर्णञ्च वर्ज्जयेत्।
हीनाङ्गमधिकाङ्गञ्च आमयावि कुलञ्च यत्।
श्वि(श्वि)त्रिकुष्ठिकुलादीनां कुर्य्याद्विपरिवर्ज्जनम् ॥
सदा कामिकुलं वर्ज्ज्यं रोमशानाञ्च यत्कुलम्।
अपस्मारिकुलं यच्च यच्च पाण्डुकुलं भवेत् ॥

हीनाङ्गादिकुलवर्ज्जनं तथाविधापत्यशङ्कया।

मातुलान् भजते पुत्रः कन्यका भजते पितॄन्।
यथाशीला भवेत् माता तच्छीला नृप कन्यका ॥

इति भारतवचनात्।

विष्णुः।

अश्वं पित्रा परीक्षेत मात्रा कन्यां परीक्षयेत्।
दृष्ट्वा भूमिं परीक्षेत आचारेण कुलं तथा ॥ इति।

कुलापकर्षकारणमाह मनुः ।

शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्यारम्भोपसेवया ॥
अयाज्ययाजनैश्चैव नास्ति(स्ति)क्येन च कर्मणा ।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥ इति ।

मन्त्रतो वेदैः । इत्थमादौ कुलं परीक्ष्य कन्यालक्षणानि परीक्षितव्यानि । अपरीक्ष्य विवाहे दोषश्रवणात् ।

तदुक्तं बौधायनेन ।

वर्जयेत्सर्वथा भूषारशुभा लक्षणैश्च याः ।
भर्तुरायुर्हरन्त्येता बालस्वादपरीक्षिताः ॥ इति ।

आश्वलायनगृह्यमपि ।

बुद्धिरूपशीललक्षणसम्पन्नामरोगामुपयच्छेतेति ।

आपस्तम्बगृह्योऽपि ।

यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिरिति ।

तानि च लक्षणानि बाह्यान्तरभेदेन द्विधा भिद्यन्ते ।

तत्र बाह्यानाह शातातपः ।

हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् ।
तादृशीं वरयेत्कन्यां गृहस्थः सुखमेधते ॥

नारदोऽपि ।

मृगाक्षी मृगकुक्षा च मृगग्रीवा मृगोदरी ।
तथा हंसगतिर्नारी राजपत्नी भविष्यति ॥
मृदुभाषा च या नारी मृदुपाद(पाणि)तलाङ्गुलिः ।

तथा कुमुदवर्णाभा राजपत्नी भविष्यति ॥

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।

तनुलोमकेश(दन्तां)दशनां मृदङ्गीमुद्वहेत् स्त्रियम् ॥

यस्या अङ्गेषु अङ्गुल्यादिष्वपि वैगुण्यं नास्ति सा अव्यङ्गाङ्गी तामुद्वहेदिति सर्व्वत्रान्वयः ।

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।

नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम्* ॥

नर्क्ष(न च)वृक्षनदीनाम्नीं नान्त्य(न च)पर्व्वतनामिकाम् ।

न पक्ष्यहिप्रेष्यनाम्नीं नच भीषणनामिकाम् ॥

कपिला रक्ततण्डुलवर्णा पिङ्गला अग्निवर्णा वाचाला बहुनिन्द्यवादिनी ।

विष्णुपुराणेऽपि ।

न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।

न घर्घरस्वरां क्षामां तथा काकस्वरां न च ॥ इति ।

काशीखण्डेऽपि ।

सदा गृही सुखं भुंक्ते स्त्री लक्षणवती यदि ।

अतः सुखसमृद्ध्यर्थमादौ लक्षणमीक्षयेत् ॥

आपादतलमारभ्य यावन्मौलिरुहं क्रमात् ।

शुभाशुभानि वक्ष्यामि लक्षणानि तु मे शृणु ॥

स्त्रीणां पादतलं स्निग्धं मांसलं मृदुलं (शुभं) समम् ।

अस्वेदमुष्णमरुणं बहुभोगोचितं स्मृतम् ॥

---

* वाचालां नातिपिङ्गलामिति क पुस्तके पाठः ।

रूक्षं विवर्णं परुषं खण्डितं प्रतिबिम्बितम् ।
शूर्पाकारं विशुष्कञ्च दुःखदौर्भाग्यसूचकम् ॥
चक्रस्वस्तिकशङ्खाब्जध्वजमीनातपत्रवत् ।
यस्याः पादतले रेखा सा भवेत्क्षितिपाङ्गना ॥
उन्नतो मांसलोऽङ्गुष्ठो वर्त्तुलो बहुभोगदः ।
वक्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः ॥
परस्परसमारूढाः पादाङ्गुल्यो भवन्ति चेत् ।
हत्वा बहूनपि पतीन् परप्रेष्या तदा भवेत् ॥
यस्याः पथि समायान्त्या रजो भूमेः समुच्चरेत् ।
सा पांशुला प्रजायेत कुलत्रयविनाशनी ॥
यस्याः कनिष्ठिका भूमिं न गच्छन्त्याः परिस्पृशेत् ।
सा निहत्य पतिं योषा द्वितीयं कुरुते पतिम् ॥
अनामिका च मध्या च यस्या भूमिं न संस्पृशेत् ।
पतिद्वयं निहन्त्याद्या द्वितीया च पतित्रयम् ॥
प्रदेशिनी भवेद्यस्या अङ्गुष्ठादतिरेकिणी ।
कन्यैव कुलटा सा स्यादेष एव विनिश्चयः ॥
रोमहीने तथा स्निग्धे यज्जङ्घे क्रमवर्त्तुले ।
सा राजपत्नी भवति विशिरे सुमनोहरे ॥
वृत्तं पिशितसम्पन्नं जानुयुग्मं प्रशस्यते ।
निर्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् ॥
विशिरैः करभाकारैरूरुभिर्मसृणैर्घनैः ।
सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः ॥

वैधव्यं रोमशैर्युक्तं दौर्भाग्यं चिपिटैरपि ।
मध्यच्छिद्रैर्महादुःखं दारिद्र्यं कठिनत्वचैः ॥
नितम्बबिम्बो नारीणामुन्नतो मांसलः पृथुः ।
महाभोगाय सम्भोन्नस्तदन्योऽशर्म्मणे मतः ॥
शुभः कमठपृष्ठाभो गजस्कन्धोपमो भगः ।
वामोन्नतस्तु कन्याजः पुत्रजो दक्षिणोन्नतः ॥
वस्तिः प्रशस्ता विपुला मृद्वी स्तोकसमुन्नता ।
रोमशा च शिराला च रेखाङ्का नैव शोभना ॥
गम्भीरा दक्षिणावर्त्ता नाभिः स्यात् सुखसम्पदे ।
वामावर्त्ता च निर्म्मांसा महावैधव्यसूचिका ॥
सूते सुतान् बहुनारी पृथुकुक्षिः सुखास्पदम् ।
क्षितीशं जनयेत्पुत्रं मण्डूकाकारकुक्षिणा ॥
उन्नतेन वलीभाजा सावर्त्तेनापि कुक्षिणा ।
वन्ध्या प्रव्रजिता दासी क्रमाद्योषा भवेदिह ॥
समैः समांसैर्मृदुभिर्योषिन्मग्नास्थिभिः शुभैः ।
पार्श्वैः सौभाग्यसुखयोर्निधानं स्यादसंशयम् ॥
यस्या दृश्यशिरे पार्श्वे उन्नते रोमसंयुते ।
निरपत्या च दुःशीला सा भवेद्दुःखभागिनी ॥
उदरेणातितुच्छेन विशिरेण मृदुत्वचा ।
योषिद्भवति भोगाढ्या नित्यं मिष्टान्नसेविनी ॥
कुम्भाकारं दरिद्रायाः जठरञ्च मृदङ्गवत् ।
कुष्माण्डाभं यवाभञ्च दुष्पूरं जायते स्त्रियाः ॥

सुविशालोदरी नारी निरपत्या च दुर्भगा ।
प्रलम्बजठरा हन्ति श्वशुरं चापि देवरम् ॥
मध्ये क्षामा च सुभगा भोगाढ्या सवलित्रया ।
ऋज्वी तन्वी च रोमाली यस्याः सा शर्मनर्मभाक् ॥
निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् ।
ऐश्वर्यमथ वैधव्यं प्रियमेव च सा (भवेत्) लभेत् ॥
विस्तीर्णहृदया योषा पुंश्चली निर्दया तथा ।
उद्भिन्नरोमहृदया पतिं हन्ति सुनिश्चितम् ॥
घनौ वृत्तौ दृढौ पीनौ समौ शस्तौ पयोधरौ ।
स्थूलाग्रौ विरलौ शुष्कौ वामोरूणां न शर्मदौ ॥
दक्षिणोन्नतवक्षोजा पुत्रिणी(ल)ग्रणीर्मता ।
वामोन्नतकुचा सूते कन्यां सौभाग्यशालिनीम् ॥
पीवराभ्याञ्च जत्रुभ्यां धनधान्यनिधिर्वधूः ।
श्लथाभ्याञ्च निमग्नाभ्यां विषमाभ्यां दरिद्रिणी ॥
आवद्धावनतौ स्कन्धावदीर्घावक्रशौ शुभौ ।
वक्रौ स्थूलौ च रोमाढ्यौ प्रेष्यवैधव्यसूचकौ ॥
कक्षौ सुसूक्ष्मरोमाणौ तुङ्गौ स्निग्धौ च मांसलौ ।
शस्तौ न शस्तौ गम्भीरौ शिरालौ स्वेदमेदुरौ ॥
अम्भोजमुकुलाकारं साङ्गुष्ठाङ्गुलि सम्मुखम् ।
हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥
मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् ।
प्रशस्तं पल्परेखाढ्यमल्परेखं शुभप्रदम् ॥

विधवा बहुरेखेण हिरेखेण दरिद्रिणी ।
भिक्षुकी सुषिराङ्गेन नारी करतलेन वै ॥
विलोम विशिरं शस्तं पाणिपृष्ठं समुन्नतम् ।
वैधव्यहेतू रोमाढ्यं निर्मांसं वायुमत्त्यजेत् ॥
मत्स्येन सुभगा नारी स्वस्तिकेन च सुप्रजा ।
पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम् ॥
अङ्गुष्ठमूलान्निर्गत्य रेखा याति कनिष्ठिकाम् ।
यस्याः सा पतिहन्त्री स्याद्दूरतस्तां त्यजेत्सुधीः ॥
शुभदः करजोऽङ्गुष्ठो वृत्तो वृत्तनखो मृदुः ।
अङ्गुल्यश्च सुपर्व्वाणो दीर्घवृत्ताः क्रमात्कृशाः ॥
अतिह्रस्वाः कृशा वक्रा विरला रोगहेतुकाः ।
दुःखायाङ्गुलयः स्त्रीणां बहुपर्व्वसमन्विताः ॥
अरुणाः सशिखास्तुङ्गाः करजाः सुदृशः शुभाः ।
नखेषु बिन्दवः श्वेताः प्रायः स्युः स्वैरिणीस्त्रियाः ॥
पुरुषा अपि जायन्ते दुःखिनः पुष्पितैर्नखैः ।
अन्तर्निमग्नवंशास्थि पृष्ठं स्यान्मांसलं शुभम् ॥
पृष्ठेन रोमयुक्तेन वैधव्यं लभते ध्रुवम् ।
भुग्नेनावनतेनापि सशिरेणापि दुःखि(ता)नी ॥
ऋज्वी कृकाटिका श्रेष्ठा समांसा च समुन्नता ।
मांसलो वर्त्तुलः कण्ठः प्रशस्तश्चतुरङ्गुलः ॥
स्थूलग्रीवा च विधवा वक्रग्रीवा च किङ्करी ।
चिबुकं द्व्यङ्गुलं शस्तं वृत्तं पीनं सुकोमलम् ॥

स्थूलं द्विधा विभक्तञ्च आयतं रोमशं त्यजेत् ।
शस्तौ कपोलौ वामाक्ष्याः पीनौ वृत्तौ समुन्नतौ ॥
रोमशौ परुषौ निम्नौ निर्मांसौ (परिवर्ज्जयेत्) च विगर्हितौ ।
समं समांसं सुस्निग्धं स्वामोदं वर्त्तुलं सुखम् ॥
त्वविलष्टवदनच्छायं धन्यानामिह जायते ।
कृशः प्रलम्बः स्फुटितो रूक्षो दौर्भाग्यसूचकः ॥
श्यावः स्थूलोऽधरोष्ठः स्याद्वैधव्यकलहप्रदः ।
मसृणो मत्तकाशिन्या उत्तरोष्ठः शुभो मतः ॥
गोक्षीरसन्निभा दन्ताः प्रशस्तास्तालु कोमलम् ।
सितं तालुनि वैधव्यं पीते प्रव्रजिता भवेत् ॥
ललनालोचने शस्ते रक्तान्ते कृष्णतारके ।
गोक्षीरवर्णविशदे सुस्निग्धे कृष्णपक्ष्मणी ॥
उन्नताक्षी न दीर्घायुर्वृत्ताक्षी कुलटा भवेत् ।
पुंश्चली वामकाणाक्षी वन्ध्या दक्षिणकाक्षिका ॥
भ्रुवौ सुवर्त्तुले धन्ये कृष्णस्निग्धे सुसंहते ।
प्रशस्ते मृदुरोमाणौ सुभ्रुवः कार्मुकाकृती ॥
समवृत्तपुटा नासा लघुच्छिद्रा शुभावहा ।
स्थूला सा मध्यनम्रा च न प्रशस्ता समुन्नता ॥
लम्बकर्णौ शुभावर्त्तौ शुभदौ च सुखप्रदौ ।
शष्कुलीरहितौ निन्द्यौ शिरालौ कुटिलाकृती ॥
भालः शिराविरहितो (निर्लोमो) निम्नलोऽर्द्धेन्दुसन्निभः ।
अनिम्नस्त्र्यङ्गुलो नार्य्याः सौभाग्यारोग्यकारणम् ॥

सीमन्तः सरलः शस्तो मौलिः शस्तः समुन्नतः ।
गजकुम्भनिभो वृत्तः सौभाग्यैश्वर्य्यसूचकः ॥
स्थूलमूर्द्धा च विधवा दीर्घशीर्षा च बन्धकी ।
विशालेनापि शिरसा भवेद्दौर्भाग्यभाजनम् ॥
केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः ।
किञ्चिदाकुञ्चिताग्राश्च कुटिलाश्चातिशोभनाः ॥
भ्रुवोरन्तर्ललाटे च मशको राज्यसूचकः ।
वामे कपोले मशकः शोणो मिष्टान्नदः स्त्रियाः ॥
तिलकं लाञ्छनञ्चापि हृदि सौभाग्यकारणम् ।
यस्या दक्षिणवक्षोजे शोणे तिलकलाञ्छने ।
वामे च यस्याः कन्याश्च पुत्रान् सूते यथाक्रमम् ॥ इति ।

नारदीयसंहितायामपि ।

पूर्णचन्द्रमुखी कन्या बालसूर्य्यसमप्रभा ।
विशालनेत्रा रक्तोष्ठी सा कन्या लभते सुखम् ॥
अङ्कुशं कुलिशं चक्रं यस्याः पाणितले भवेत् ।
पुत्रं प्रसूयते नारी नरेन्द्रं लभते सुखम् ॥
यस्याः पाणितले रेखा प्राकारं तोरणं तथा ।
अपि दासकुले जाता राजपत्नी भविष्यति ॥
यस्याश्च कुञ्चिताः केशा मुखञ्च परिमण्डलम् ।
नाभिश्च दक्षिणावर्त्ता सा नारी प्रियभाक् सदा ॥
दीर्घाङ्गुला च या नारी दीर्घकेशा च या भवेत् ।
दीर्घमायुरवाप्नोति धनधान्य(सुता)समन्वितम् ॥

कृष्णा श्यामा च या नारी गौरवर्णा च सुप्रभा ।
स्निग्धाङ्गी स्निग्धनयना सा कन्या लभते सुखम् ॥

तथा ।

पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा ।
चतस्रो जातयः स्त्रीणां पद्मिनी चोत्तमावधिः ॥
नीलोत्पलदलश्यामा (फुल्ल)स्निग्धचम्पकसुप्रभा ।
वर्णद्वयेन संयुक्ता सा कन्या पद्मिनी भवेत् ॥
स्निग्धचम्पकगात्रा या नीलोत्पलदलप्रभा ।
सुग(न्धा)न्धी च विशालाक्षी निद्राभोजनदुर्लभा ॥
पूर्वोक्तलक्षणैर्युक्ता सा कन्या पद्मिनी भवेत्* ।
गीतवाद्ययुता चित्रविद्या परभृतस्वना† ॥
क्षाममध्या स्निग्धनेत्रा स्वल्पाहारा च चित्रिणी ।
चलद्गात्रा क्रोधपरा व्यग्रकारी च शङ्खिनी ॥
विशालकर्णा स्वल्पाक्षी स्थूलदेहा श्लथस्तनी ।
बह्वाशी बहुनेत्रा च क्रोधशीला च हस्तिनी ॥
उत्तमा पद्मिनी प्रोक्ता मध्यमा चित्रिणी तथा ।
शङ्खिनी त्वधमा प्रोक्ता हस्तिनी त्वधमाधमा ॥

इति कन्यालक्षणानि ।

---

* चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे
सुरतपयसि यस्याः सौरभं दिव्यमङ्गे ।
इत्यादिकञ्च पद्मिनीलक्षणं सामुद्रकादौ मृग्यम् ।

† चित्रविद्या या कोकिलस्वना इति ख-पुस्तके पाठः ।

अथ अनभ्यस्तवृतफलम् ।

तथाच वशिष्ठसंहितायाम् ।

सुरेशताराजनिता ध्वनाग्रजं
द्विदैवताराजनिता च देवरम् ।
नैर्ऋत्यभोद्भूतसुतः सुता वा
चित्राद्यवश्यं श्वशुरं निहन्ति ॥

अथ विवाहः ।

आश्वलायनगृह्यपरिशिष्टे ।

सलक्षणो* वरो लक्षणवतीं कन्यां यवीयसीमसपिण्डा-
मसगोत्रजामविरुद्धसम्बन्धामुपयच्छेत ।

पितृतः सप्तपुरुषं सापिण्ड्यं मातृतः पञ्चपुरुषम् । भृगवङ्गि-रसस्य प्रवरार्द्धाधिकर्षियोगे सगोत्राः । एकर्षियोगे इतरेतरं दम्पत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धो यथा । भार्य्या-स्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति । केचिन्मातृगोत्रजां निषे-धन्ति तदपत्यमसगोत्रं स्यादिति ।

याज्ञवल्क्योऽपि ।

अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ इति ।

अस्यायमर्थः । या दानेनोपभोगेन वा पुरुषान्तरपूर्व्विका न भवति सा अनन्यपूर्व्विका । अनेन पुनर्भ्वो व्यावर्त्त्यन्ते ।

*सुलक्षण इत्यत्र लक्षण इत्यपरः पाठः ।

तास्वोक्ताः काश्यपेन ।

सप्त पौनर्भवाः कन्या वर्ज्जनीयाः कुलाधमाः ।
वाचा दत्ता मनोदत्ता क्कतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतिका ।
अग्निं परिगता या च पुनर्भूप्रभवा च या ।
इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

बौधायनसूत्रेऽपि ।

वाचा दत्ता मनोदत्ता अग्निं परिगता सप्तमपदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न धर्म्मं विन्देत । इति ।

वरचक्षुर्मनसोराह्लादकरी कान्ता । समान एकः पिण्डो यस्याः सा सपिण्डा तादृशी न भवतीत्यसपिण्डा । सपिण्डता च सप्तपुरुषावसायिनी तत्रैकः पिण्डदाता त्रयः पिण्डभाजः पितृपितामहप्रपितामहाः त्रयो लेपभाजः वृद्धप्रपितामहादयः । यथाच मात्स्ये ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्* ॥

---

* मार्कण्डेयेऽपि—

पिता पितामहश्चैव तथैव प्रपितामहः ।
पिण्डसम्बन्धिनस्त्वेते विज्ञेयाः पुरुषास्त्रयः ॥
लेपसम्बन्धिनश्चान्ये पितामहपितामहात् ।
प्रभृत्युक्तास्त्रयस्तेषां यजमानस्तु सप्तमः ।
इत्येष मुनिभिः प्रोक्तः सम्बन्धः साप्तपौरुषः ॥

एतदुक्तं भवति। सप्तानां पुरुषाणामेकपिण्डक्रियानुप्रवेशः सापिण्ड्ये हेतुः। तथाच देवदत्तस्यैकस्य स्वकीयैः पित्रादिभिः षड्भिः तथा पुत्रादिभिः षड्भिः सह सापिण्ड्यम्। नन्वेवं सति भ्रातृपितृव्यादिभिः सह सापिण्ड्यं न स्यात् परिगणितेषु अनन्तर्भावात्। मैवम्। उद्देश्य देवतैक्येन क्रियैक्यस्यात्र विवक्षितत्वात्। तथाच। देवदत्तकर्तृकपिण्डक्रियायां ये देवतात्वेनानुप्रविशन्ति तेषां मध्ये यः कोऽपि भ्रातृपितृव्य-मातुलादि*कर्तृकपिण्डक्रियायामप्यनुप्रविशतीति अस्ति तस्य तैः सह सापिण्ड्यमिति। तद्भार्य्याणामपि भर्तृकर्तृक-पिण्डदानक्रियायां सहाधिकारित्वात्† सापिण्ड्यमिति। तदिदं नि(र्वा)वापसापिण्ड्यम्। अपरे पुनरवयवसापिण्ड्य-माहुः। तथाहि। समान एकः पिण्डो देहावयवो येषां ते सपिण्डास्तेषां भावः सापिण्ड्यम्। तत्र पुत्रस्य साक्षात्पितृ-देहावयवान्वयेन पित्रा सह सापिण्ड्यम् तथा पितामहादिभि-रपि पितृद्वारेण तच्छरीरावयवान्वयात्। तथा मातृष्वसृ-मातुलादिभिरपि मातामहदेहावयवान्वयात्। तथा पितृव्य-पितृष्वस्रादिभिरपि पितामहदेहावयवान्वयात्। तथा पत्या सह एकशरीरारम्भकतया स्त्रियाः। एवं भ्रातृभार्य्याणा-मपि एकशरीरावयवारब्धैः स्वस्वपतिभिः सह एकशरीरा-रम्भकत्वेन। एवञ्च साक्षात्परम्परया वा एकशरीरावयवा-

---

* आदिपदेन मातुलभागिनेयादयस्तद्भार्य्यादयश्च गृह्यन्ते।

† सहकर्तृकत्वादिति ख पुस्तके पाठः।

न्यायेन सापिण्ड्यं योजनीयम्। उक्तं द्विविधसापिण्ड्यं यस्यां नास्ति सेयमसपिण्डा।

नन्वेवं सति न क्वाप्युद्वाहः सम्भवति सर्व्वत्र सापिण्ड्यस्य कथञ्चिद्योजयितुं शक्यत्वात्। विधातृशरीरावयवानुवृत्ते-र्दुष्परिहरत्वात्। बहु स्यां प्रजायेय इति श्रुतेरिति चेत् सत्यम्। अविशेषेण प्राप्तस्य सापिण्ड्यस्य सप्तसु पञ्चसु च पुरुषेषु संकुचितत्वेन अत ऊर्द्ध्वं सापिण्ड्यनिवृत्तिः "पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा" इति याज्ञवल्क्योक्तेः मातृपक्षे पञ्चमात्पुरुषात् पितृपक्षे सप्तमात्पुरुषादूर्द्ध्वं सापिण्ड्यं निवर्त्तते इत्यध्याहृत्य योज-नीयम्। एवं सापिण्ड्ये सप्तसु पञ्चसु च पुरुषेषु सङ्कोचिते एतस्मादूर्द्ध्वं सापिण्ड्यस्य नानुवृत्तिरिति निष्कर्षः।

पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा।
सपिण्डता निवर्त्तेत सर्व्ववर्णेष्वयं विधिः॥

इति देवलयाज्ञवल्क्योक्तेः। एवं मनुगौतमपराशरवचनान्यपि एवमेव योज्यानि।

यत्तु विष्णुपुराणे।

पञ्चमीं मातृपक्षे तु पितृपक्षे तु सप्तमीम्।
गृहस्थ उद्वहेत् कन्यां न्यायेन विधिना नृप॥

इति पराशरवचनं तत्सप्तमीं पञ्चमीमतीत्य इत्यध्याहृत्य व्याख्ये-यम्*। अन्यथा याज्ञवल्क्यादिनानास्मृतिविरोधः स्यात्।

---

* अध्याहृत्य व्याख्येयमित्यत्र अध्याहारार्थमिति ख-पुस्तके पाठः।

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।

क्रियापरा अपि हि ते* विज्ञेयाः शूद्रतां गताः ॥

इति मरीचिस्मृतिविरोधाच्च ।

बृहद्विष्णुरपि ।

पञ्चमात्सप्तमाद्वा यः कन्यकामुद्वहेद्द्विजः ।

गुरुतल्पी स विज्ञेयः सगोत्रामपि चोद्वहन् ॥ इति ।

अनेनैतदुक्तं भवति पितृपक्षे कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां सप्तमादूर्द्ध्वं वधूवरयोर्विवाहो नैव दुष्यति । तथा मातृपक्षे कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां वधूवरयोर्माता चेत्पञ्चमी न भवति तदा विवाहो नैव दुष्यतीति ।

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।

पञ्चमी चेत्तयोर्माता सापिण्ड्यं तन्निवर्त्तते† ॥

---

* ते च सन्तानिनः सर्व्वे इति उद्वाहतत्त्वे पाठः ।

† यतः सन्तानभेदः स कूटस्थो मूलपुरुष इति यावत् । तमारभ्य वध्वा वरस्य वा तातः पिता यदि सप्तमो भवेत्तयोर्वधूवरयोर्माता कूटस्थाद्यदि पञ्चमी भवेत्तदा सापिण्ड्यं निवृत्तं भवतीत्यर्थः । तदयं निर्गलितोऽर्थः । पितृद्वारकसापिण्ड्यविचारे सप्तमादूर्द्ध्वं सापिण्ड्यनिवृत्तिः । मातृद्वारकसापिण्ड्यविचारे तु पञ्चमादूर्द्ध्वमिति । संग्रहीतोऽयमर्थो विश्वरूपनिबन्धे —

एवमुक्तप्रकारेण सप्तमात्पितृतस्तथा ।

ऊर्द्ध्वमेव विवाहः स्यात् पञ्चमान्मातृतस्तथा ॥

सन्तानो भिद्यते यस्मात् पूर्व्वस्मादुभयत्र च ।

तमादायैव गणयेद्वरं यावच्च कन्यकाम् ॥

अत्रोदाहरणं यथा । कूटस्थो मूलपुरुषो देवदत्तः । १ । तत्पुत्रो ब्रह्मदत्तः । २ । तत्पुत्रो विष्णुदत्तः । ३ । तत्पुत्रः शिवदत्तः । ४ । तत्पुत्रो मित्रदत्तः । ५ । तत्पुत्रो इन्द्रदत्तः । ६ । तत्पुत्रो यज्ञदत्तः । ७ । तत्पुत्रः श्रीदत्तोऽष्टम इति पितृद्वारकं सापिण्ड्यं वरविषये । (परपृष्ठे)

इति स्मरणात्।

ननु असपिण्डामिति न वक्तव्यम् असमानार्षगोत्रजामित्यनेनैव तादृशविवाहनिषेधसिद्धेः। सत्यम्। तथापि या अत्यसपिण्डा भवति सैव उद्वाहकर्म्मणि प्रशस्तेति वक्तुं तथा निर्द्देशः।

तथाच मनुः।

असपिण्डा च या मातुरसगोत्रा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने॥

या पितुरसगोत्रा चेति चकारादसपिण्डा सा दारकर्म्मणि प्रशस्ता इत्यस्यार्थः। नन्वत्र मातृग्रहणं व्यर्थं पितृगोत्रसापिण्ड्यनिषेधेनैव मातृगोत्रसापिण्ड्यनिषेधसिद्धेः। तस्याः पृथक्पिण्डगोत्रयोरभावात्।

एकत्वं या गता भर्त्तुः पिण्डे गोत्रे च सूतके।
स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे॥

इति वचनादिति चेत्, मैवम्। गान्धर्व्वादिविवाहेषु कन्याप्रदानाभावेन पितृगोत्रसापिण्ड्ययोरनिवृत्तेः।

तथाच मार्कण्डेयपुराणम्।

ब्राह्मादिषु विवाहेषु या तूढा कन्यका भवेत्।
भर्त्तुर्गोत्रेण कर्त्तव्या तस्याः पिण्डोदकक्रिया।

---

मूलपुरुषो देवदत्त एव। १। तत्पुत्रो मातृदत्तः। २। तत्पुत्रो यज्ञदत्तः। ३। तत्पुत्रो भानुदत्तः। ४। तत्कन्या श्रीदेवी। ५। तत्कन्या श्रीदत्तभक्ता। ६। इति मातृद्वारकसापिण्ड्यं वधूविषये। अथ अष्टमः श्रीदत्तः षष्ठीं श्रीदत्तभक्तामुद्वहेत्। मूलपुरुषमारभ्य मध्ये कन्यासन्तानावपि एवमेव ज्ञेयम्। इति संस्काररत्नमाला।

गान्धर्व्वादिविवाहेषु पितृगोत्रेण धर्म्मवित्॥ इति।

एवञ्च सति गान्धर्व्वादिविवाहे सप्तमपद(प्रक्रमे)क्रमपि पितृगोत्र-सापिण्ड्यानिवृत्तिर्भवतीति द्रष्टव्यम्।

गान्धर्व्वादिविवाहेऽपि होम उक्त आश्वलायनगृह्यपरिशिष्टे।

गान्धर्व्वासुरपैशाचा विवाहाश्च सराक्षसाः।
पूर्व्वं परिणयस्तेषां पश्चाद्धोमो विधीयते॥ इति।

यथा दुष्मन्तेन राज्ञा शकुन्तलायां गान्धर्व्वेण परिणीतायां कण्वेन प्रवासात् प्रतिनिवृत्य पश्चाद्धोमः कृतः। एतेन मातुलसुता-विवाहविषये विवादोऽपि परास्तः।

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च।
समानप्रवराञ्चैव द्विजश्चान्द्रायणं चरेत्॥

इति शातातपवचनम्।

पैतृष्वसेयीं भगिनीं स्वस्रीयां मातुरेव च।
मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत्॥

इति मनुवचनम्। पितृपत्न्यः सर्व्वा मातरस्तद्भ्रातरो मातुला-स्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयभागिनेय्यादीनि इति सुमन्तुप्रभृतिवचनानि च न विरुद्धानि स्युः तेषां गान्धर्व्वादि-विवाहविवाहितकन्याविषयत्वात्। तत्र गोत्रसापिण्ड्ययो-रनिवृत्तेः।

अत्र प्रमाणं श्रुतिर्यथा।

ॐ आयाहीन्द्र पथिभिरीळितेभि-
र्यज्ञमिमं नो भागधेयं जुषस्व।

इमां जुहुर्मातुलस्येव योषा
भागस्ते पैतृष्वसेयी वपामिव ॥

अस्यार्थः। हे इन्द्र पथिभिरीलितैभिः सुतैर्भागैर्नोऽस्माकम् इमं यज्ञमायाहि आगत्य च अस्माभिर्दीयमानमिमं भागधेयं जुषस्व। एते यजमानास्तृप्तामाज्यादीनां संस्कृतां वपां त्वामुद्दिश्य जुहु-त्युत्सृष्टवन्तः। ओ हाक् त्यागे इति धातो रूपम्। तत्र दृष्टान्त-द्वयम्। यथा मातुलस्य योषा कन्या दौहित्रस्य भागः भज-नीया परिणेतुं योग्येत्यर्थः। यथा वा पैतृष्वसेयी पौत्रस्य भागः। तथायं तव भागो वपाख्य इति। एवं सिद्धानुवाद-स्यापि विधिकल्पकत्वम् प्रमाणान्तरेण तद्विधानात्।

शतपथब्राह्मणमपि।

तस्माद् समानादेकपुरुषादत्ता चाद्यश्च जायते उत हि तृतीये पुरुषे संगच्छावहै चतुर्थे संगच्छावहै इति ध्यान-काण्डे अष्टमाध्याये समाम्नातम्।

अस्यार्थः। समानादेकस्मात् पुरुषात् अत्ता भोक्ता अद्यो भोग्यः अद् भक्षणे इति धातोस्तृणि यति च पदद्वयं सिद्धम्। तौ द्वा उत्पद्य चैवं मिथः सङ्कल्पयतः कूटस्थमारभ्य तृतीये चतुर्थे वा संगच्छावहै विवहावहै इति। यद्यप्ययमर्थवादः तथापि मानान्तरविरोधाभावात् स्वार्थे प्रमाणम्। विरुद्धवचनानां मातृसपिण्डविषयत्वस्योपवर्णितत्वात्। तस्मादविरुद्धार्थवादेन अनिन्दितत्वात् तृतीये संगच्छावहा इत्य(त्र)स्य अपूर्व्वार्थत्वेन मातुलसुतां विवहेदिति विधिः कल्प्यते। तस्मात् श्रुत्यनु-

गृहीतोऽयं विवाहः। ऋग्वेदे यमयमीसंवादोऽपि पञ्चार्थे प्रमाणं यथा।

यमस्य मा यम्यं काम आगन्
समाने योनौ सहशेय्याय।
जायेव पत्ये तन्वं रिरिच्यां
वि चिद्वृहेव रथ्येव चक्रा॥

(१०म, १०सू, ७ऋक्।)

यमस्य तव कामोऽभिलाषो मा मां प्रति आगन् आगच्छतु। ममोपरि तव यमस्य सम्भोगेच्छा जायतामित्यर्थः। किमर्थं समाने योनावेकस्मिन् स्थाने शय्याख्ये सहशेय्याय सहशयनार्थम्। तदनन्तरं पूर्णमनोरथा सती जायेव पत्ये यथा भार्य्या पत्युरर्थाय परया प्रीत्या विश्वस्ता सती रतिकामा स्वशरीरं प्रकाशयति एवं तन्वमात्मीयं शरीरं रिरिच्यां विविच्यां त्वदर्थं प्रकाशयेयमित्यर्थः। चिदिति पादपूरणे विवृहेव वृह उद्यमने। धर्म्मार्थकामान् विविधमुद्यच्छाव:। तत्र दृष्टान्तः। रथ्येव चक्रा रथस्यावयवभूते चक्रे यथा रथमुद्यच्छतस्तद्वत्।

षट्त्रिंशन्मते तु स्पष्टमेवोक्तं यथा।

तृतीयां पितृतः कन्यां तृतीयां मातृतस्तथा।
विवाहयेन्मनुः प्राह पाराशर्य्योऽङ्गिरा यमः* ॥

---

* केचिदयं विवाहोऽनुकल्पत्वेन स्मृतिषूक्त इत्याहुः। तथाहि नारदः—
मातृतः पञ्चमादूर्द्ध्वं पितृतः सप्तमात्तथा।
गृहस्थ उद्वहेत्कन्यामन्यथा गुरुतल्पगः॥ (परपृष्ठं)

यस्तु देशानुरू(पे)प्येण कुलमार्गेण वोद्वहेत् ।

नित्यं स व्यवहार्य्यः स्याद्वेदाच्चैतत्प्रदृश्यते ॥

स्मृतिचन्द्रिकाप्रयोगपारिजातापरार्कादयोऽप्येवं मेनिरे। चतु-र्विंशतिमतेऽप्येवमेवास्ति ।

पैठीनसिरपि ।

पञ्चमीं मातृतः परिहरेत् सप्तमीं पितृतः। त्रीन् मातृतः पञ्च पितृतो वेति । वेदाच्चैतत् प्रदृश्यते इति ।

तेन स्वाध्वं तेऽवत त उ नो अधिवोचत ।

मा नः पथः पित्र्यान्मानवादधिदूरं नैष्ट परावतः ॥

(८म, ३०सू, ३ऋक् ।)

इत्यादिको वेदः। पित्र्यात् पितुरागतात् पथो दूरं नोऽस्मान् मा नैष्ट मापनयत इति देवान् प्रति प्रार्थना ।

---

इति मुख्यपञ्चमुक्त्वा स एवाह—

समावर्त्य सवर्णान्तु लक्षण्यां स्त्रियमुद्वहेत् ।
कुले महति सम्भूतां लक्षणैश्च समन्विताम् ॥
ब्राह्मेण तु विवाहेन शीलरूपसमन्विताम् ।
पञ्चमीं सप्तमीञ्चैव मातृतः पितृतस्तथा ॥
दशभिः पुरुषैः ख्यातां श्रोत्रियाणां महाकुलात् ।
उद्वहेत्सप्तमादूर्द्ध्वं तदभावे तु सप्तमीम् ॥
पञ्चमीं तदभावे तु पितृपक्षेऽप्ययं विधिः ।
सप्तमीञ्च तथा षष्ठीं पञ्चमीञ्च तथैव च ॥
एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ।
तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।
विवाहयेन्मनुः प्राह पाराशर्य्योऽङ्गिरा यमः ॥ इति ।

वेदाश्चेति चकारेण मन्वादिवचनानि समुच्चीयन्ते ।

तथाच मनुः ।

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥ इति ।

शातातपोऽपि ।

मातृष्वसृसुतां केचित्पितृष्वसृसुतां तथा ।
विवहन्ति क्वचिद्देशे सङ्कोचापि सपिण्डताम् ॥

बृहस्पतिश्च ।

उद्वाह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
सापिण्ड्यमपि सङ्कोच्य प्रत्यक्षश्रुतिदर्शनात् ॥

आयाहीन्द्र इत्यादिका श्रुतिः पूर्व्वमुक्तैव । तस्मान् मातुलकन्या-परिणयोऽसपिण्डाया असम्भवे चतुर्थ्यादिपरिणयश्च प्रागुक्तश्रुति-स्मृत्युपष्टब्धदाक्षिणात्यशिष्टाचारात् कर्त्तव्याविति माधवाचार्य्या आहुः । इदञ्च यस्मिन् देशे अविगीतं तत्रैव कार्य्यं नान्यत्र । तथाप्ययं मातुलकन्याविवाहो यद्देशेऽविगीतस्तद्दे(श्ये)शीयैरेव कार्य्यः ।

तदुक्तं नृसिंहचर्य्यायां बौधायनेन ।

पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः । यानि दक्षिणतस्तान्यनुव्याख्यास्यामो यथा दक्षिणदेशे अनुपनीतेन भार्य्यया च सह भोजनं पर्य्युषितभोजनं मातुलसुतायाः पितृष्वसृसुतायाः परिणयश्च । तथा उत्तरदेशे सिन्धु-पारगमनम् . उभयतोदद्भिर्व्यवहार ऊर्णाविक्रय आयुध-

विक्रयः* समुद्रयानञ्च। मध्यदेशे द्विजाः कर्म्मकराः शिल्पिनश्च। पूर्व्वदेशे द्विजा मत्स्यादाः स्त्रियो व्यभिचारिण्यो रजस्वलाश्च स्पृश्या इत्यादयः स्वस्वदेशे धर्म्मा अन्यत्र अधर्म्मा इति। तत्रेतर इतरस्मिन् कुर्व्वन् दुष्यतीति†।

---

सायुधीयकमिति संस्काररत्नमालायां पाठः।

इतरो दाक्षिणात्य इतरस्मिन्नुत्तरदेशे मातुलसम्बन्धं कुर्व्वन् दुष्यति न स्वदेशे। तथेतर-उदीच्य इतरस्मिन् दक्षिणदेशे ऊर्णाविक्रयसीधुपानादिकं कुर्व्वन् दुष्यति न स्वदेशे। कुतः देशप्रामाण्यात् देशनिबन्धनत्वादाचारप्रामाण्यस्येत्यर्थः।

बृहस्पतिरपि—

उद्वाह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः।
मत्स्यादाश्च नराः पूर्व्वं व्यभिचाररताः स्त्रियः॥
उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः।
खशजातायपि गृह्णन्ति भ्रातृभार्य्यामभर्त्तृकाम्।
सर्व्वदेशेष्वनाचारो दृश्यतात्मकुलचर्व्वणम्॥

देवलोऽपि—

यस्मिन्देशे तनाचारो न्यायदृष्टः सुकल्पितः।
स तस्मिन्नेव कर्त्तव्यो नान्यदेशे स ईरितः॥
यस्मिन्देशे पुरे ग्रामे त्रैविद्ये नगरेऽपि वा।
यो यत्र विहितो धर्म्मस्तं धर्म्मं न विचारयेत्॥ इति।

ननु शिष्टाचारप्रामाण्ये स्वदुहितृविवाहोऽपि प्रसज्येत प्रजापतेराचरणात्। तथाच श्रुतिः—

प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत्। इति।

नैवं न देवचरितं चरेदिति वचनात्।

अतएव बौधायनः—

अनुष्ठितन्तु यद्देवैर्मुनिभिर्यदनुष्ठितम्।
नानुष्ठेयं मनुष्यैस्तदुक्तं धर्म्ममाचरेत्॥ इति।

केचिदिदं कलौ निषिद्धं "गोत्रान्मातृसपिण्डाच्च विवाहो गोवध-स्तथा" इति माधवोदाहृतब्रह्मपुराणवचनादित्याहुः। तदेतदपरे न क्षमन्ते। तस्य माध्यन्दिनविषयत्वात्।

तथाच सत्याषाढ़वचनम्।

मातृगोत्रसापिण्ड्यवर्ज्जनं माध्यन्दिनीयानामेव तेषामेव एतादृशाचारोपलब्धेर्न क्षुद्रोपद्रव इति।

विश्वरूपनिबन्धे अन्योऽपि विशेष उक्तः। यथा।

कूटस्थमारभ्य पितुश्च मातु-
र्विवाहसापिण्ड्यमतः परस्तात्।
षष्ठेऽष्टमे वापि भवेद्विवाहो
निर्वाप्य(प)सापिण्ड्यमिह प्रशस्तम्।
स्यात्सप्तमे वाप्यथ पञ्चमे वा
यद्योभयत्रापि च पञ्चमे वा॥ इति।

स्मृत्यर्णवे तु।

कन्या चतुर्थी च वरश्च पञ्चमी
वरश्चतुर्थी न तु पञ्चमीं वहेत्।
पित्रो वहेत्पञ्चमषष्ठयोर्वा
कन्या तृतीयापि तथा चतुर्थी॥

पराशरोऽपि।

चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा।
पाराशर्य्यमते* षष्ठीं पञ्चमो न तु पञ्चमीम्॥ इति।

---

* पराशरमते इति संस्काररत्नमालायां पाठः।

अन्यत्रापि बौधायनः ।

धात्रीपुत्रीं धात्रीभगिनीम् इष्टपुत्रीमिष्टभगिनीमिष्ट-मातुलसुतां ज्येष्ठभ्रातृभार्य्याभगिनीं स्वभार्य्यासहोदरा-मिष्टपितृष्वसृभगिनीमिष्टमातृष्वसृभगिनीं* पितृव्यपत्नी-भगिनीं स्नुषाभगिनीं सपत्नीमातृभगिनीं सपत्नीमातृ-भगिनीकन्यां परवाग्दत्तां सम्बन्धिगोभगिनीं सम्बन्धि-कन्याञ्च नोद्वहेत् ।

वंशक्षयो भवेत्तस्य वंशवृद्धिर्न जायते ।
सपिण्डगोत्रां श्यालोढ्वा गुरुतल्पव्रतं चरेत् ॥
तां मातृवत्पालयेच्च गर्भस्तज्जोऽन्यतां व्रजेत् ।
अज्ञानाच्चैन्द्रवैः शुध्येद्गर्भस्तज्जस्तु काश्यपः ॥ इति ।

दत्तके विशेषमाह गौतमः ।

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी मातुर्गोत्रत्वं पालकस्य च ॥ इति ।

जनकपक्षे सप्तमी जननीपक्षे पञ्चमीत्यर्थः ।

पालकपक्षे तु पैठिनसिः ।

त्रीन् मातृतः पञ्च पितृतः पुरुषानतीत्य उद्वहेदिति ।

एवं प्रसक्तमुक्त्वा प्रकृतमनुस्रियते । यवीयसीमिति वयसा वपुषा च न्यूनामित्यर्थः । अरोगिणीमचिकित्स्यराजयक्ष्मादिरोग-रहिताम् । भ्रातृमतीम् ज्येष्ठः कनिष्ठो वा भ्राता विद्यते यस्याः सा भ्रातृमती ताम्, अनेन पुत्रिकाकरणशङ्का व्युदस्यते ।

---

* इष्टपितृभगिनीमिष्टमातृभगिनीमिति संस्काररत्नमालायां पाठः ।

अतएव मनुः।

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता*।

नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया॥ इति।

यत्र तु नैव तदाशङ्का तामभ्रातृकामुपयच्छेत। अतं दुहितृमते दत्त्वा उपयच्छेदिति कात्यायनगृह्यसूत्रात्।

मनुरपि।

अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकाम्।

यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्॥ इति।

अस्याश्च पुत्रिकाया गान्धर्व्वादिविवाह इव पित्रादिभिः सह सापिण्ड्यसगोत्रत्वानिवृत्तिः।

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम्।

कुर्व्वीत पुत्रिकापुत्र एवमाह प्रजापतिः॥

इति लोगाक्षिस्मरणात्। अतः कारणादभ्रातृमतीमुपयच्छे(त)दिति। असमानार्षगोत्रजामिति समाने आर्षगोत्रे यस्य तज्जाता या न भवति सा असमानार्षगोत्रजा तामसमानप्रवरजामसमानगोत्रजाञ्च। ऋषेरिदमार्षं प्रवरः गोत्रप्रवर्त्तकस्य मुनेर्व्यावर्त्तको मुनिगण इत्यर्थः। यथा गोत्रप्रवर्त्तकस्य भरद्वाजस्य व्यावर्त्तकावङ्गिरोबृहस्पती। अतएव आङ्गिरसबार्हस्पत्य-

---

* यस्याः पिता पुत्रिकाकरणाभिप्रायवानिति न ज्ञायेत तां नोपयच्छेत्। न विज्ञायेत वा पितेत्युक्तवचनेन सह सम्प्रतिपत्तिं विनापि पितुः सङ्कल्पमात्रात् कन्या पुत्रिका भवतीति गम्यते। अतएव गौतमः। अभिसन्धिमात्रात् पुत्रिकेत्येकेषां तत्संशयान्नोपयच्छेदभ्रातृकामिति अभिसन्धिः सङ्कल्पः।

भारद्वाजगोत्रमिति प्रयुज्यते। एवमन्यत्राप्युदाहार्य्यम्। गोत्रन्तु वंशपरम्पराप्रसिद्धम्। यस्या वध्वा येन वरेण सह प्रवरैक्यं गोत्रैक्यं वा नास्ति सा तेन विवाह्या।

क्वचिद्गोत्रभेदेऽपि प्रवरैक्यमस्ति। तद्यथा वाधूलमौनमौकादीनां भिन्नगोत्राणां भार्गववैतहव्यसावेतसेति प्रवरस्य ऐक्यात्तत्र विवाहप्रसक्तौ तद्व्यवच्छेदाय असमानार्षगोत्रजामित्युक्तम्। क्वचित्तु प्रवरभेदेऽपि गोत्रैक्यमस्ति। तद्यथा हारि(री)तानाम् आङ्गिरसाम्बरीषयौवनाश्वेति मान्धात्रम्बरीषयौवनाश्वेति च। अत्र आङ्गिरसमान्धातृप्रवरभेदेऽपि यौवनाश्वगोत्रमेकम्। अतस्तत्र विवाहो मा भूदिति असमानगोत्रग्रहणम्।

अत्र विशेषमाह प्रवरसूत्रकारः।

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्त्तते।
तावत्समानगोत्रत्वं भृगुमङ्गिरसं विना* ॥

---

*अन्यत्र भृग्वङ्गिरसां गणादिति निर्णयसिन्धौ प्रवरदर्पणे च पाठः।

स्मृत्यर्थसारे तु—

त्रि(त्री)यमाणतया वापि सत्तया वानुवर्त्तनम्।
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥

भृग्वङ्गिरोगणेषु विशेषमाह स्मृत्यन्तरे—

(पञ्चार्षे) पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥

शेषेषु भिन्नगोत्रेषु एकोऽपि समानः प्रवरो विवाहं वारयेदित्यर्थः। इति निर्णयसिन्धुः।

भृग्वङ्गिरोगणस्थेऽपि जमदग्नौ च गौतमे।
भरद्वाजे मिश्रो श्लोकः पाणिग्राहं निवारयेत्॥

यथा।

वशिष्ठौ द्वौ च विज्ञेयौ ब्रह्मपुत्रोऽथ शापतः।
मित्रावरुणिरित्येव वाशिष्ठो विग्रहान्तरात्॥
ब्रह्मात्मजाच्छक्तिपराशरव्यासशुकादयः।
भयो (विवेक)विशेषस्त्वनयोर्द्वितीयात् कुण्डिनादयः॥

अतएव भिन्नगोत्रत्वाद्भिन्नशरीरत्वाच्च वशिष्ठवाशिष्ठगणयोर्विवाह इति। जामदग्न्यविश्वामित्राणां देवरातवर्ज्जं सर्व्वत्र विवाहः एवमत्रिविश्वामित्राणां धनञ्जयवर्ज्जं सर्व्वत्र विवाह इति। गोत्रप्रवर्त्तकाश्च प्राधान्येन अष्टौ मुनयः। अगस्त्याष्टमाः सप्त ऋषयः।

तथाच बौधायनः।

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः।
अत्रिर्वशिष्ठः कश्यप इत्येते सप्त ऋषयः॥

एषां सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते इति। इदञ्च प्रवरेष्वेकर्ष्यनुप्रवेशस्योपलक्षकमिति मन्तव्यम्। अन्यथा केवलभार्गवेषु आष्टिषेणादिषु केवलाङ्गिरसेषु हारीतादिषु विश्वामित्रादिमूलऋषिष्वप्येवं व्याप्तिः। तदपत्याभावात्।

प्रवरसङ्ग्रहकारस्तु अष्टादशगणानाह। ते यथा।

जामदग्न्यो वीतहव्यो वैण्यो गृत्समदाश्रयः।
वाध्र्यश्वो गौतमश्चैव भरद्वाजः कपिस्तथा॥

हारीतो मौद्गल्यकण्वौ विरूपो विष्णुवृद्धकः ।
अत्रिर्विश्वामित्रकौत्सौ वशिष्ठः कश्यपाह्वयः ।
अगस्त्यश्चेति मुनयो ह्यष्टादशगणाः स्मृताः ॥

तत्र जामदग्न्यो विविच्यते ।

जामदग्न्यश्च वत्सश्च श्रीवत्सश्च्यवनाह्वयः ।
आप्नवानौर्व्वसावर्णिजीवन्तो देवरातकः ॥
वीतशायनशाखाख्यो वैरोहित्यो वटाह्वयः ।
मन्युः प्राचीनयोग्यः स्यादार्ष्टिषेणस्त्वनूपकः ॥
एतानि भार्गवाख्यानि दश सप्तोत्तराणि च ।
जामदग्न्यगणे त्वस्मिन्न विवाहः परस्परम् ॥

वीतहव्यः ।

वीतहव्यो यास्कमौनमौकवाधूलसंज्ञकाः ।
सावेतसः षडेतानि भार्गवाख्यान्वयो गणः(णे) ।
वीतहव्यस्य चान्योऽन्यं न कार्य्यं पाणिपीडनम् ॥

वैण्यः ।

वैण्यः पार्थश्च गोत्रे द्वे भवतो भार्गवाह्वयः ।
एष वैण्यगणस्तत्र मान्योऽन्यं वै करग्रहः ॥

गृत्समदः ।

उभगोदौ(वै) गृत्समदः शौनको भार्गवाह्वयः ।
गणे गृत्समदे चास्मिन्नान्योऽन्यं पाणिपीडनम् ॥

वाध्र्यश्वः ।

वाध्र्यश्वो मित्रयुश्चैव उभौ भार्गवनामकौ ।

वाध्र्यश्वस्य गणस्तस्मिनुद्वाहो न परस्परम् ॥
जामदग्न्यादयः पञ्च गणा भृगुगणाः स्मृताः ।
तथाप्येषां गणानान्तु विवाहः स्यात्परस्परम् ॥

गौतमः ।

गौतमोऽपास्य औतथ्यः कक्षीवानौशिजस्तथा ।
बृहदुक्थो वामदेवो गोत्रनामानि सप्त च ।
गौतमस्य गणस्तस्मिन् विवाहो न परस्परम् ॥

भरद्वाजः ।

भरद्वाजः कुशद्व्याग्निवेश्योऽत्रेयमतः कतः ।
शैशिरः पणिशृङ्गौ च चन्द्रनस्य बृहस्पतिः ॥
सर्व्वस्तस्य: कपिमतिवर्चसो गार्ग्यसैनकौ ।
भरद्वाजगणाः सप्तदश गोत्रमिति स्मृतम् ।
अस्मिन् परस्परं कार्य्यं न कन्यापाणिपीड़नम् ॥

कपिः ।

कपिश्च महदुक्तीय उदीयस्तौणि केवलम् ।
अयं कपिगणोऽन्योन्यमस्मिन्न हि कारयः ॥

हारीतः ।

हारीतो यौवनाश्वश्च मान्धातः कुत्सनामकः ।
पिङ्गलः शङ्खदर्भौ च भीमश्च गजनामकः ॥
अम्बरीषो दशैतानि हारीतस्य गणः स्मृतः ।
अस्मिन् परस्परं पाणिग्रहणं न शुभं मतम्* ॥

---

* शुभं मतमित्यत्र शुभावर्हमिति च पुस्तके पाठः ।

मौद्गल्यः ।

मौद्गल्यतार्क्ष्यभार्म्यश्वास्त्रीणि गोत्राण्यमूनि हि ।
मौद्गल्यस्य गणस्तस्मिन्न मिथः पाणिपीड़नम् ॥

काण्वः ।

काण्वोऽजपीठ इत्येते गोत्रे काण्वगणः स्मृतः ।
अस्मिन् परस्परं पाणिग्रहणं न हि (नैव) शोभनम् ॥

विरूपः ।

विरूपोऽष्टादंष्ट्रिनामा पृषदश्वश्च मौद्गलः ।
चत्वारीमानि गोत्राणि विरूपस्य गणः स्मृतः ।
परस्परं विवाहोऽस्मिन्न विधेय इतीरितम् ॥

विष्णुवृद्धः ।

विष्णुवृद्धः पौरकुत्सस्त्रसदस्युः कतस्तथा ।
मद्रणो भद्रणाख्यश्च बादरायणसंज्ञकः ॥
साकत्य(ल्य)काण्वोपमित्यौ गविः सात्यकितालुकौ ।
निचुन्दश्चेति गोत्राणि त्रयोदशमितानि च ॥
विष्णुवृद्धगणस्तस्मिन्न विवाहः परस्परम् ।
गौतमादिगणा अष्टौ ये तथाङ्गिरसां गणाः ।
तथाप्येषां गणानान्तु विवाहः स्यात्परस्परम् ॥

अत्रिः ।

तदेतद्गोत्रनवकमत्रिश्चाप्यर्चनानसः ।
श्यावाश्वो वापरश्चास्य गविष्ठिरधनञ्जयौ ॥
सुमङ्गलोऽतिथिर्वीजवापश्चात्रिगणो ह्ययम् ।

आत्रेयाख्यो विवाहोऽस्मिन्न विधेयो मिथोऽशुभः ॥

विश्वामित्रः ।

विश्वामित्रो देवरातो मधुस्तन्तुश्च चौलकिः ।
बालकिश्चकितोलूको याज्ञवल्क्यश्च नारदः ॥
बृहदग्निः कालयवो वमनो बहुलोहितौ ।
शालङ्कायन (धा)चायर्ण्यौ कामकायनपूरणौ ॥
शिलादनोऽग्निदेवश्च दमनः कौशिकोऽष्टकः ।
आज्यो माधुच्छन्दसश्च देवश्रवधनञ्जयौ ॥
शुङ्गः कतः शैशिरश्च वारिधायोऽघमर्षणः ।
सूनुः पनश्च धूम्राख्यो जठरश्चैव हव्यकः ॥
अष्टात्रिंशच्च गोत्राणि विश्वामित्रगणः स्मृतः ।
एतस्मिन्नपि चान्योऽन्यं न कुर्यात्पाणिपीडनम् ॥

वशिष्ठः ।

वशिष्ठं इन्द्रप्रमदो भरद्वाजस्तु सङ्कृतिः ।
कौण्डन्यः पूतिमाषश्च गौरीविन्तः पराशरः ॥
मैत्रावरुणिशक्ती द्वौ उपमन्युर्गणस्तथा ।
एकादश वशिष्ठस्य गोत्राण्यस्मिन्न दोषकृः ॥

कश्यपः ।

कश्यपो रैभरैभौ च शाण्डिल्यो देवलोऽसितः ।
सङ्कृतिः पूतिमाषश्चावत्सारो नैध्रुवो दश ।
गोत्राणि काश्यपगणस्तत्रान्योऽन्यं न दोषकृः ॥

अगस्त्यः ।

त्रीण्यगस्त्यो वीत(इध्मो)वाहो दार्व्यच्युत इति स्मृतः ।
एषोऽगस्त्यगणस्तस्मिन्न विवाहः परस्परम् ॥
जमदग्निगणस्यापि विश्वामित्रगणस्य च ।
न देवरातगोत्रेण विवाहः स्यात्परस्परम् ॥
भरद्वाजगणस्यापि विश्वामित्रगणस्य च ।
कतशैशिरशुङ्गैश्च न विवाहः परस्परम् ॥
काश्यपेयगणस्यापि वासिष्ठस्य गणस्य च ।
सङ्कृतिपूतिमाषाभ्यां नान्योऽन्यं पाणिपीडनम् ॥
आत्रेयस्य गणस्यापि विश्वामित्रगणस्य च ।
धनञ्जयाख्यगोत्रेण नान्योऽन्यं पाणिपीडनम् ॥
भारद्वाजगणस्यापि तथा कपिगणस्य च ।
विवाहो न विधेयः स्यादन्योऽन्यस्य कदाचन ॥
मौद्गल्यस्य गणस्यापि विरूपस्य गणस्य च ।
परस्परं न कुर्वीत पाणिग्रहणसत्क्रियाम् ॥
आनष्टयोराकुलयः खा(स्वा)नयो राजवारयः ।
सराखाहा(ही)नजाश्चैव बाहवस्तदनन्तरम् ॥
तथाग्रामुनयः प्रोक्ताः सौरम्भ्या राजसेवकाः ।
खाचियुम्माश्च(स्वायुजिह्वाश्च)लोगाक्षिस्तथैव शरदम्बकाः
एते त्रयोदश प्रातर्वशिष्ठा निशि काश्यपाः ।
गायत्रीयोनिसम्बन्धावत्रीतस्य प्रवर्तकाः ।
अहर्वशिष्ठतां रात्रौ काश्यपत्वमपि स्वयम् ॥

तेषां गोत्रद्वयं मुक्त्वा वशिष्ठं काश्यपं तथा ।
सर्व्वत्रापि विवाह्याः स्युरिति वेदविदो विदुः ॥

यत्तु स्मृत्यन्तरे ।

सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृत् ॥ इति ।

तत् स्वगोत्राभावविषयम् ।

यतः (ततः) ।

गुरोः सगोत्रप्रवरा नोद्वाह्या क्षत्रवैश्ययोः ।
स्वगोत्राद्यनभिज्ञैश्च विप्रैराचार्य्यगोत्रजा ॥

इति विशेषस्मरणम् ।

तथा ।

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाह्यः शुङ्गशैशिरयोस्तथा ॥
असम्भवात्तबन्धूनामाचार्य्यप्रवराः स्मृताः ।
पक्षे चास्मिन् विवाहोऽपि सगोत्रैः सह नेष्यते ॥ इति ।

अथ ये सगोत्रप्रवरां कन्यामुद्वहेयुस्तेषां निष्कृतिरुक्ता प्रयोगपारिजाते । सगोत्रां समानप्रवरां कामतः परिणीय तस्यां प्रजामुत्पाद्य गुरुतल्पगव्रतं चरेत् । प्रजाश्च चण्डालेषु निक्षिपेत् । अकामतस्तप्तकृच्छ्रम् । प्रजाया भरद्वाजगोत्रान्तर्भावः । प्रजानुत्पादे चान्द्रायणं विवाहमात्रे कृच्छ्रं चरेत् । सर्व्वत्र व्रतान्ते अष्टोत्तरशतं मिन्दाहोमः* परित्यक्तापि तां जननीवद्बिभृयादिति ।

* मिन्दाहोमप्रकारः ७१० पत्रे प्रदर्शयिष्यते ।

अत्र विज्ञानेश्वरे विशेष उक्तः।

अज्ञानाद्यदि चोद्वाहः प्रायश्चित्तं तथैव च।
सगोत्रप्रवरायाश्च ततः सङ्ग्रहणे विधिः॥

षट्त्रिंशन्मते च।

समानप्रवरां मातृसगोत्रां मातृनामिकाम्।
परिणीय सपिण्डां वा प्रायश्चित्तीयते द्विजः॥
प्रायश्चित्तं वदन्त्यत्र युगधर्मव्यवस्थया।
मोहोद्वाहे तु दम्पत्योरेकं चान्द्रायणं स्मृतम्॥
द्वैगुण्यं ज्ञानतस्तस्य परिणीतौ विधीयते।
कन्यादातुर्भवेत्कृच्छ्रं ज्ञानतो द्विगुणं भवेत्।
व्रतस्य करणाशक्तौ प्रत्याम्नायं समाचरेत्॥
चीर्णव्रतां दुहितरं पिता चीर्णव्रतः शुचिः।
भारद्वाजेषु विप्रेषु काश्यपेष्वथवा क्षिपेत्॥
दुहितृत्वेन संगृह्य भारद्वाजोऽथ काश्यपः।
घृतकुम्भस्य गर्भे च तामादध्याद्विधानतः॥
जातकर्माह्वया*न्नप्राशनं चौलमेव च।
विधाय मधुपर्कञ्च मन्त्रमात्रेण मन्त्रवित्॥
मुहूर्त्ते विप्रकथिते शुचिं तामप्यलङ्कृताम्।
संस्कर्तार्थयमानाय पत्ये तु प्रतिपादयेत्॥
वैवाहिकानथो मन्त्रानशेषानप्यतन्द्रितः।
स्वगृह्योक्तक्रमेणैव पठेद्धृतवधूकरः॥

---

* आह्वयो नामकरणम्।

चतुर्थीकर्मपर्यन्तं विधिमेवं समाप्य तु ।
कृताशीर्वचनो विप्रैर्दक्षिणाभिः सुतोषयेत् ॥
प्रणम्य विसृजेदेनान् पश्चाद्भोजयते ततः ।
कृत्वेत्थं पुनरुद्वाहं न किल्बिषमवाप्नुयात् ॥
अन्यथा कुरुते यस्तु सङ्गं स नराधमः ।
व्रजेत्स पितृभिः सार्द्धं नरकानेकविंशतिम् ॥
मातृनाम्नीविवाहे तु विशेषोऽत्राभिधीयते ।
परित्यज्यैव तामास्याः पुनरुद्वाहमाचरेत् ॥
नैवं विवोढुरेनः स्यादित्येवं मुनयो विदुः ।
त्रिरात्रं ब्रह्मचर्यं स्यात्पुनरुद्वाहकर्मणि ॥
सगोत्रापरिणीतौ तु परित्यागो विधीयते ।

सगोत्राशब्दस्तु समानप्रवराया उपलक्षकः, न समानप्रवरामित्युपक्रमवाक्यात् । एवञ्च मातृसमाननाम्नीविवाहे पुनरुद्वाहमात्रं न तत्परित्याग इति गम्यते । इतरत्र तु ज्ञानाज्जातमप्यपत्यं चाण्डालकेषु विनिक्षिपेत् ।

रक्षित्वा जननीवत्तां गुरुतल्पव्रतं चरेत् ।
मोहाज्जातमपत्यन्तु काश्यपत्वं प्रपद्यते ।
ऐन्द्रवद्यतः शुध्येन्मिन्दाहुत्या च तत्पिता ॥ इति ।

दुहितृत्वेनेति । भारद्वाजाय काश्यपाय वा इमाममुकनाम्नीं कन्यां दुहितृत्वेन तुभ्यमहं सम्प्रददे इत्युक्त्वा दद्यादित्यर्थः । घृतकुम्भस्य गर्भे इत्यत्र सामीप्ये सप्तमी तादृशकुम्भसम्भवे तु अधिकरणत्वमेव । प्रत्याम्नायमिति । अच्छे गामेकिकां दद्या-

त्तिस्रश्चान्द्रायणे तु ताः। इति स्मृत्युक्तमित्यर्थः। ऐन्दवद्वयत-श्चान्द्रायणद्वयादित्यर्थः। मिन्दाहुत्येत्यत्र जातावेकवचनं मिन्दा-हुतिद्वयेनेत्यर्थः।

तन्मन्त्रस्तु।

यन्म आत्मनो मिन्दाभूत् पुनरग्निश्चक्षुरदात्।
मिन्दा च मे अमिन्दा च मे तन्म उभयव्रतमित्याहुतिद्वयम्॥

तथाच त्रिकाण्डमण्डनः।

परिणीतसगोत्रायामज्ञानाज्जनितः शिशुः।
काश्यपो न तु चाण्डालः पितुः कृच्छ्रत्रयं स्मृतम्*।
मिन्दाहुती द्वे जुहुयाद्व्रतान्ते दीप्तपावके†॥ इति।

पुनरुद्वाहे नोत्तरायणादिकालनियमः। सार्व्वकालिकमेके विवाहमित्याश्वलायनसूत्रात्। अस्य वचनस्येदृशस्थल एव चरितार्थत्वादिति।

अथेदानीं प्रवरज्ञानार्थं प्रवराध्यायः प्रस्तूयते।

सर्व्वे समानगोत्राः स्युरिति गार्ग्यगारिः कथं ह्याप्रीसूक्तानि भवेयुः कथं प्रयाजा इति। १।

अपि नानागोत्राः स्युरिति शौनकस्तन्त्राणां व्यापित्वात्।२।

गृहपतिगोत्रान्वया विशेषाः। ३।

---

* कृच्छ्राब्दपादस्त इति संस्काररत्नमालायां पाठः।

† अन्यत्रापि—सगोत्रायां प्रजां जातां चाण्डालेषु विनिक्षिपेत्।
गुरुतल्पव्रतङ्कृत्वा तां त्यजेज्जननीमिव।
उद्वाह्याज्ञानतस्तुल्यगोत्रां चान्द्रायणं चरेत्॥

तस्य राजिमनुराजिः सर्व्वेषां प्रवरास्तावन्तरन् भावाप-धर्म्मित्वादिति। ४।

जामदग्न्या वत्सास्तेषां पञ्चार्षेयो भार्गवच्यावनाप्नवानौर्व्व-जामदग्न्येति*। वत्सश्रोवत्सयोश्च तथैव। आर्ष्टिषेणानां भार्गव-च्यावनाप्नवानौर्व्वार्ष्टिषेणेति। विदानां भार्गवच्यावनाप्नवानौर्व्व-विदेति। यास्कवाधूलमौनमौकशार्कराक्षिसार्ष्टिसावर्णिशालङ्कायनजैमिनिदैवन्त्यायनानां भार्गववैतहव्यसावतसेति। शैता-(न्या)नां भार्गववै(श्रै)न्यपार्थेति। मित्रयुवां भार्गवदैवोदासवाध्र्यश्वेति त्रिप्रवरं वा। शुनकानां गृत्समदेति त्रिप्रवरं वा भार्गव-शौनकगार्त्समदेति। गौतमानामाङ्गिरसायास्यगौतमेति। उ(त)-थ्यानामाङ्गिरसौ(त)चथ्यगौतमेति। रहूगणानामाङ्गिरसराहूगण्यगौतमेति†। वामदेवानामाङ्गिरसवामदेव्यगौतमेति। बृह-दुक्थानामाङ्गिरसवार्हदुक्थगौतमेति। पृषदश्वानामाङ्गिरस-पार्षदश्ववैरूपेति। अष्टादंष्ट्रं हैके ब्रुवते। यतोत्याङ्गिरसमष्टा-दंष्ट्रपौरकुत्सत्रासदस्यवेति‡। ऋक्षाणामाङ्गिरसवार्हस्पत्यभार-द्वाजवान्दनमातवचसेति। कक्षीवतामाङ्गिरसौ(त)चथ्यगौतमौ-शिजकाक्षीवतेति। दीर्घतमसामाङ्गिरसौ(त)चथ्यदैर्घतमसेति। भारद्वाजाग्निवेश्यानामाङ्गिरसवार्हस्पत्यभारद्वाजेति। मुद्गलाना-

* अतः परम् अथ ह अजामदग्न्यानां भार्गवच्यावनाप्नवानेति इत्यधिकं मुद्राकरे दृश्यते।

† सौमराजकानामाङ्गिरससौमराज्यगौतमेति अधिकोऽत्र आकरे दृश्यते।

‡ अष्टादंष्ट्रपार्षदश्ववैरूपेति आकरे पाठः।

माङ्गिरसभार्म्यश्वमौद्गल्येति । तार्क्ष्यं हैके ब्रुवते । अतीत्याङ्गिरसं तार्क्ष्यभार्म्यश्वमौद्गल्येति । विष्णुवृद्धानामाङ्गिरसपौरुकुत्स्यत्रासदस्यवेति । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजगार्गशैन्येति आङ्गिरसशैन्यगार्ग्येति वा । हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति । मान्धातारं हैके ब्रुवते । अतीत्याङ्गिरसं मान्धात्राम्बरीषयौवनाश्वेति ।* सङ्कृतिपूतिमाषतण्डि(श)शाम्बु-शैव(भैम)गवानामाङ्गिरस-गौरिवीत-साङ्कृत्येति । (शाक्त्यो वा मूलं) शांक्त्यगौरिवीतसाङ्कृत्येति । कण्वानामाङ्गिरसाजमीढ(ह्न)काण्वेति । घोरमुहैके ब्रुवते । अवकृष्याजमीढमाङ्गिरसघौरकाण्वेति । कपीनामाङ्गिरसाम(हय्य)हीयवौरुक्षयसेति ।

अथ शौङ्गशैशिरयः । तत्र ये द्विप्रवाचना* भरद्वाजाः (शौ)शुङ्गाः कताः शैशिरयः । तेषामुभयतः प्रवृणीतैकमितरतो द्वावितरतः । द्वौ वेतरतस्त्रीनितरतः । न हि चतुर्णां प्रवरोऽस्ति न पञ्चानामतिप्रवरणम् । आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कीलेति† ।

कपी प्रसिद्धावुदिताविह द्वौ
स्वतन्त्र एकोऽस्त्यपरोऽस्वतन्त्रः ।
तत्र स्वतन्त्रस्य कपेर्विवाहं
मिथो भरद्वाजकुलेन चाहुः ॥

* ऋषिद्वयव्यपदेश्याः ।

† कात्यात्कीलेत्यत्र शुङ्गभारद्वाजेति ख-पुस्तके पाठः ।

अथ अत्रीणामात्रेयार्चनानसश्यावाश्वेति । गविष्ठिराणामात्रेयगाविष्ठिरपौर्वातिथेति*। चिकित गालव कालव मनुतन्तु कुशिकानां वैश्वामित्रदेवरातौदलेति । श्रौमत(श्रौतमत)कामकायनानां वैश्वामित्रदैवश्रवसदैवोदासेति†। धनञ्जयानां वैश्वामित्रमाधुच्छन्दसधानञ्जयेति । अजानां वैश्वामित्रमाधुच्छन्दसाज्येति‡। पूरणवारिधापयन्तानां वैश्वामित्रदेवरातपौरणेति । कतानां वैश्वामित्रकात्यात्कीलेति । अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । रेणूनां वैश्वामित्रगाथिनरैणवेति§। शालङ्कायन-शा(ल)लाक्ष लोहिताक्ष लोहितजह्नूनां वैश्वामित्र माधुच्छन्दस धानञ्जयेति । वैश्वामित्र शालङ्कायन-कौशिकेति वा । कश्यपानां काश्यपावत्सारासितेति । निध्रुवाणां काश्यपावत्सारनैध्रुवेति । रेभाणां काश्यपावत्साररैभ्येति । शाण्डिल्यानां काश्यपावत्सारदेवलेति । शाण्डिल्यासितदैवलेति वा । वासिष्ठेति वसिष्ठानां येऽन्य उपमन्युपराशरकुण्डिनेभ्यः¶। उपमन्यूनां वासिष्ठभरद्वसिन्द्रप्रमदेति । पराशराणां वासिष्ठशाक्त्यपाराशर्येति । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति । अगस्तीनामागस्त्यदार्ढ्यच्युतेध्मवाहेति । सोमवाहानामागस्त्यदार्ढ्यच्युत-

* गविष्ठिराणामात्रेयार्चनानसगाविष्ठिरेति प्रवरमञ्जर्यां पाठः ।

† दैवोदासेत्यत्र दैवतरसेति आकरे पाठः ।

‡ अतःपरं रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति, अष्टकानां वैश्वामित्रमाधुच्छन्दसाष्टकेति च आकरे पाठो दृश्यते ।

§ वेणूनां वैश्वामित्रगाथिनवैणवेति आकरे अधिकः पाठः ।

¶ उपमन्युपराशरकुण्डिनातिरिक्ता वासिष्ठा एकार्षेयाः ।

सौमवाहेति। दर्भवाहानामागस्त्यदार्ढ्यच्युतदार्भवाहेति। साम्भवा(हानां)हनानामागस्त्यदार्ढ्यच्युतसाम्भ(वाहे)वाहनेति। यम्नवाहानामागस्त्यदार्ढ्यच्युत(य)याम्नवाहेति।

पुरोहितप्रवरो राज्ञाम्। अथ यदि सार्षं* प्रवृणीरन् मानवैलपौरूरवसेति† प्रश्नाणि तान्यदक्षिणानि। तेषां मर्त्यो ज्योतिष्टोमः (पु)पुष्यशमनीयः सहस्रदक्षिणः अन्यो वा प्रज्ञातदक्षिणः दक्षिणावता (पु)पुष्यशमनीये भवेति विज्ञायते स एव हेतुः प्रकृतिभावे।

भृगूनां न विवाहोऽस्ति चतुर्णामादितो मिथः।
शुनादयस्त्रयस्तेषां विवाहो मिथ इष्यते॥
यस्यां वै गौतमादीनां विवाहो नेष्यते मिथः।
दीर्घतमास्तथौतथ्यः कक्षीवां(श्चैव गोत्रजाः)श्चौशिजस्तथा।
भरद्वाजाग्निवेश्यर्क्षाः शौङ्गाः कात्याश्च शैशिराः।
एते समानगोत्राः स्युर्गर्गानिके वदन्ति वै॥

पृषदश्वा मुद्गला विष्णुवृद्धा
कण्वोऽगस्त्यो हरितः सङ्कृतिश्च।
यस्त्वेषां मिथ इष्टो विवाहः
सर्व्वैरन्यैर्जामदग्न्यादिभिश्च॥

---

* सार्षं सहार्षेयमित्यर्थः। अत्र सार्ष्टमिति पाकरे पाठः।

† क्षत्रियाणामार्षविधाः केषाञ्चिन्मन्त्रकृतां न सन्ति केषाञ्चित् सन्ति। येषां सन्ति आत्मीयमेव ते प्रवृणीरन्, येषां तु न सन्ति ते पुरोहितप्रवरान् प्रवृणीरन्निति—पक्षद्वयमुपन्य पुरोहितप्रवरानेव सर्व्वे क्षत्रियाः प्रवृणीरन्निति सिद्धान्तमाह। (प्रवरमञ्जरी।)

द्व्यार्षेयाणां त्र्यार्षेयसन्निपाते न विवाहः । †त्र्यार्षेयाणां पञ्चा-
र्षेयसन्निपाते न विवाहः* ।

एते समानगोत्राः स्युर्विश्वामित्रोऽनुवर्त्तते ।
अत्रयश्च वशिष्ठाश्च काश्यपाश्च पृथक् पृथक् ॥
जमदग्निर्गौतमश्च भरद्वाजोऽत्रयस्तथा ।
विश्वामित्रः कश्यपश्च वशिष्ठोऽगस्तिरष्टमः ॥
एषामष्टानामृषीणां† यदपत्यं तद्गोत्रमुच्यते ।

इति प्रवराध्यायः कन्यालक्षणानि च ।

अथ वरलक्षणान्युच्यन्ते ।

तत्र आश्वलायनसूत्रम् ।

बुद्धिमते कन्यां प्रयच्छेदिति ।

---

* अत्र त्र्यार्षेयाणां द्व्यार्षेयसन्निपाते न विवाहः पञ्चार्षेयाणां त्र्यार्षेयसन्निपाते न विवाह-इति पाठो युक्तः ।

द्व्यार्षेयसन्निपातान्न त्र्यार्षेयाणां करग्रहः ।
त्र्यार्षेयसन्निपातान्न पञ्चार्षेयकरग्रहः ।
भृग्वङ्गिरोगणेष्वेवं प्रवरैकोऽपि वारयेत् ॥

(इत्यभिनवमाधवीयवचनात् ।)

† बौधायनोऽपि—

अविच्छिन्नमनन्तरं गोत्रकर्तारोऽष्टौ मुनयः स्मृताः ।
जमदग्निप्रभृतयो न भृग्वङ्गिरसौ तथा ॥
तेषां मध्ये तथाष्टानां यच्चापत्यमृषित्वभाक् ।
तदस्य गोत्रमुदितं तदर्थं पाणिनेर्वचः ॥

स्मृतिचन्द्रिकायां तु ।

ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सम्पदः क्रमाः* ।
कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम् ॥ इति ।

अत्र कुलग्रहणं कुलस्य प्राधान्यप्रतिपादनपरं न तु इतरगुणनिषेधनपरम् ।

अतएव यमः ।

कुलञ्च शीलञ्च वयश्च रूपं
विद्याञ्च वित्तञ्च सनाथताञ्च† ।
एतान् गुणान् सप्त परीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥ इति ।

लैङ्गेऽपि ।

दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने ।
कन्या त्वधीतवेदाय विधिना ब्रह्मचारिणे‡ ॥ इति ।

---

* सपदक्रमा इति संस्काररत्नमालायां पाठः ।

† नाथशब्देन पोषकाः पित्रादय उच्यन्ते ।

‡ ब्रह्मवैवर्त्तेऽपि—

वराय गुणहीनाय वृद्धायाज्ञानिने तथा ।
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च ॥
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च ।
पङ्गुलायाङ्गहीनाय चान्धाय बधिराय च ॥
जडाय चैव मूकाय क्लीवायात्यन्तपापिने ।
ब्रह्महत्यां लभेत्सोऽपि यः स्वकन्यां प्रयच्छति ॥
शान्ताय गुणिने चैव यूने च विदुषेऽपि च ।
वैष्णवाय सुतां दत्त्वा दशवापीफलं लभेत् ॥ (परपृष्ठे)

अथ ब्रह्मचारिग्रहणम् अस्खलितब्रह्मचर्य्येणैव प्रथमविवाहः कार्य्य इत्येतत्परम्। ब्रह्मचर्य्यस्खलने तु नैर्ऋत्यं पशुमालभ्य कन्यामुद्वहेत्।

अतएव याज्ञवल्क्यः।

अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत्। इति।

सामुद्रिकलक्षणपरीक्षायाः प्रागायुः परीक्षणीयमित्युक्तं सङ्ग्रहे।

पूर्व्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत्।
आयुर्हीननराणां (च) हि लक्षणैः किम्प्रयोजनम्॥
वामभागे तु नारीणां दक्षिणे पुरुषस्य च।
निर्द्दिष्टं लक्षणं तेषां सामुद्रवचनं यथा॥
रेखाः पञ्च ललाटे तु स्त्रिया वा पुरुषस्य च।
शतवर्षाणि जीवेच्च ऐश्वर्य्यञ्चाधिगच्छति॥
चतसृभिः*रशीतिः स्यात्तिसृभिः सप्ततिर्भवेत्।
द्वाभ्यां षष्टिर्विनिर्द्दिष्टा चत्वारिंशत्तथैकया।
अरेखेण ललाटेन त्रिंशदायुर्भवेदिति॥

इत्यादिग्रन्थेन आयुःपरीक्षां कृत्वा अङ्गपरीक्षां कुर्य्यात्।

---

यः कन्यापालनङ्कृत्वा करोति यदि विक्रयम्।
विपद्य धर्म्मोभिन कुम्भीपाकं स गच्छति॥
कन्यामूल्यं पुरीषञ्च तच्च भक्षति पातकी।
कृमिभिर्दंश्यते काकैर्यावदिन्द्राश्चतुर्दश॥
तदन्ते व्याधयोनौ स लभेज्जन्म सुनिश्चितम्।
विक्रीणाति मांसभारं वहत्येव दिवानिशम्॥

*चतसृभिस्तिसृभिरिति रेखाभिरिति शेषः।

अथ सामुद्रकलक्षणम् ।

तत्र पादादिकेशान्तं द्रष्टव्यम् । तथाहि ।

शूर्पाकारविरूक्षपाण्डुरनखौ वक्रौ शिरासन्ततौ
संशुष्कौ विरलाङ्गुली च चरणौ दारिद्र्यदुःखप्रदौ ।
मार्गायोत्(कलिकौ)कटकौ कषायसदृशौ वंशस्य विच्छित्तिदौ
ब्रह्मघ्नौ परिदग्धमृद्युतितलौ पीतावगम्यारतौ ॥ इति ।

अथ अङ्गुष्ठलक्षणम् ।

अङ्गुष्ठौ पृथुलौ येषां ते नरा भाग्यवर्जिताः ।
कृशावतिकृशाङ्गुष्ठास्ते नरा ध्यानशालिनः ॥
चिपिटैर्विकृतैर्भग्नैरङ्गुष्ठैरतिनिन्दिताः ।
यस्य प्रदेशिनी दीर्घा अङ्गुष्ठं समतिक्रमेत् ॥
स्त्रीभोगं लभते नित्यं पुरुषो नात्र संशयः ।
कनिष्ठायान्तु दीर्घायां सुवर्णस्य तु भागिनः ॥
विकृतैः स्फुटितैः स्थूलैर्नखैर्दारिद्र्यभागिनः ।
बहु(न्धु)हत्यां प्रकुर्वन्ति पुरुषा हरितैर्नखैः ।
सूक्ष्मैरुपचितैस्ताम्रैर्नखैर्भूपतयो मताः ॥

जङ्घालक्षणमाह मिहिरः ।

प्रविरलतनुरोमवृत्तजङ्घा
द्विरदकरप्रतिमैर्वरोरुभिश्च ।
उपचितसमजानवश्च भूपा
धनरहिताः श्वशृगालतुल्यजङ्घाः ॥

अथ बाहुलक्षणम् ।

विपुलावत्युच्छायौ सुश्लिष्टौ तौ च हतं(स)वन्तौ ॥
करिकरसदृशकृपावाजानुलम्बिनौ च समौ पीनौ।
बाहू पृथ्वीशानामधमानां रोमशौ ह्रस्वौ ॥

अथ ललाटलक्षणम्।

त्रिशूलं पट्टिशं वापि ललाटे यस्य दृश्यते।
श्रीवत्सस्वस्तिकाद्यं वा स भोगैश्वर्य्यवान् भवेत् ॥

अथ शिरोलक्षणम्।

घटमूर्द्धा ध्यानरुचिर्द्विमस्तकः पापकृद्धनैस्त्यक्तः।
निम्नं शिरश्च महतां बहुनिम्नमनर्थाय भवति ॥

अथ केशलक्षणम्।

एककूपजैः स्निग्धैररूक्षैराकुञ्चितैरभिन्नाग्रैः।
मृदुभिर्न चातिबहुभिः केशैः सुखभाज इन्द्रो वा ॥ इति।

अथ सर्व्वगात्रलक्षणम्।

यद्यच्छात्रं (रूक्षं) परुषं मांसहीनं शिरावनद्धम्।
तत्तदनिष्टं प्रोक्तं विपरीतमतः शुभं सर्व्वम् ॥

स्कान्दे काशीखण्डेऽपि।

आनीय कुङ्कुमारक्तं सूत्रञ्च त्रिगुणीकृतम्।
स्पृष्ट्वा शिवो गणाध्यक्षमूर्द्ध्वीभूतमुदङ्मुखः।
मुनिः परिममौ बालमापादतलमस्तकम् ॥
तिर्य्यगूर्द्ध्वं समो मानै योऽष्टोत्तरशताङ्गुलः।
स भवेत् पृथिवीपालस्तत्समो वा न संशयः
अत्र तिर्य्यक्प्रमाणं प्रसारिताभ्यां बाहुभ्यां द्रष्टव्यम्।

अन्यत्रापि ।

पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ।
सप्तरक्तं त्रिगम्भीरं त्रिविस्तीर्णं प्रशस्यते ॥
ग्रीवा प्रजननं पृष्ठं जङ्घे चैव च ह्रस्वके ।
ह्रस्वानि यस्य चत्वारि पूजां प्राप्नोति नित्यशः ॥
सूक्ष्माण्यङ्गुलिपर्व्वाणि दन्तकेशनखत्वचः ।
पञ्चसूक्ष्माणि येषां स्युस्ते नरा दीर्घजीविनः ॥
कक्षः कुक्षिश्च वक्षश्च घ्राणस्कन्धललाटिकाः ।
एतत्सर्व्वं विनिर्द्दिष्टमुन्नतं सुप्रशस्तकम् ॥
नेत्रान्तं करपादश्च अधरोष्ठश्च तालुकम् ।
जिह्वा नखाश्च ते सप्त रक्तवर्णाः शुभावहाः ।
स्वरेण सत्त्वनाभिभ्यां त्रिगम्भीरं प्रशस्यते ॥

सत्त्वमाशय इत्यर्थः ।

ललाटकटिवक्षोभिस्त्रिविस्तीर्णं प्रशस्यते ।
उरोविशालो धनधान्यभोगी
शिरोविशालो नृपपुङ्गवः स्यात् ।
कटौ विशालो बहुपुत्रभोगी
विशालपादस्तु धनी सुखी स्यात् ॥

तथा ।

चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् ।
त्वचः स्नेहेन शय्या स्यात्पादस्नेहेन वाहनम् ॥
कमठीपृष्ठकठिनावकर्म्मकारणौ करौ ।

राज्यभोगाय सम्प्रोक्तौ पादौ चाध्वनि कोमलौ ॥
दीर्घलिङ्गेन दारिद्र्यं पृथुलिङ्गेन निर्धनम्।
कृशलिङ्गेन सौभाग्यं ह्रस्वलिङ्गेन भूपतिः॥
कनिष्ठाङ्गुलिदेशे तु रेखा गच्छति मध्य(मा)गा।
तर्ज्जनीं व्याप्य तिष्ठे(त)त्तु शतजीवी भवेन्नरः॥
अनामिकापर्व्वमतिक्रमेत चेत्
कनिष्ठिका वर्षशतञ्च जीवति।
समे त्वशीतिर्विषमे तु सप्ततिः
पर्व्वाङ्गहीने खलु षष्टिमादिशेत्॥
अङ्गुष्ठोदरमध्यस्थो यवो यस्य विराजते।
उत्पन्नभाग्यभोगी स्यात् स नरः सुखभाग्भवेत्॥
रेखाभिर्बहुभिः क्लेशमल्पाभिर्धनहीनताम्।
रक्ताभिर्धनमाप्नोति कृष्णाभिर्दुःखभाग्भवेत्॥
अतिमेधोऽतिकीर्त्तिश्च विजयी च सुखी तथा।
अतिस्निग्धा च दृष्टिः स्यात् स नरोऽल्पायुषो भवेत्॥
अङ्कुशं (कलशं) कुण्डलं चक्रं यस्य पादतले भवेत्।
तस्य राज्यं विनिर्दिष्टं शीघ्रमेव न संशयः॥
धारिका मूत्रवि यस्य दक्षिणावर्त्तिनी (यदि) भवेत्।
गन्धश्च मीनमधुनोर्यदि वीर्य्ये तदा नृपः॥
तथा रेखाफलमपि।
मत्स्ये शतं विजानीयाच्चक्रे तु सहस्रकम्।
पद्मे कोटिं विजानीयाच्छङ्खे कोटिसहस्रकम्॥

अतिक्रान्तमतिश्वेतमतिरक्तं तथैव च ।

इत्थंवर्णो नरो रोगी सागरस्य वचो यथा ॥ इति ।

याज्ञवल्क्योऽपि ।

एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।

यत्नात्परीक्ष्यः पुंस्त्वे तु* युवा धीमान् जनप्रियः ॥ इति ।

पुंस्त्वपरीक्षोपायमाह नारदः ।

यस्याप्सु प्लवते बीजं ह्रादि मूत्रञ्च फेनिलम् ।

पुमान् स्याल्लक्षणैरेभिर्विपरीतस्तु (विपरीते तु) षण्ढकः ॥

बीजं वीर्य्यं रेत इति वा पाठः । ह्रादि ध्वनिमत् ।

परीक्षाकारणमपि स एवाह ।

अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।

क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति ॥

कन्यानर्हानाह कात्यायनः ।

उन्मत्ताः पतिताश्चैव कुष्ठिषण्ढ(स्व)सगोत्रजाः ।

चक्षुःश्रोत्रविहीनाश्च तथापस्मारदूषिताः ॥

अवेद्याश्चैव दूरस्था मोक्षमार्गानुसारिणः ।

शूरा निवृत्ताश्चैतेभ्यो न देया कन्यका बुधैः ॥ इति ।

अन्यत्रापि ।

अत्यासन्नेऽतिदू(रे च)रस्थे सत्याढ्ये चातिदुर्लभे ।

वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते ॥

---

* यत्नात् परीक्षितः पुंस्त्वे इति च पुस्तके पाठः ।

पाराशरे ।

कन्यां (यच्छति) ददाति वृद्धाय नीचाय धनलिप्सया ।
कुरूपाय कुशीलाय स प्रेतो जायते नरः ॥

यस्तु दारिद्र्यादिना कन्यां शुल्केन ददाति तस्य प्रायश्चित्तमुक्त-
मृग्विधाने ।

महस्वरोमवर्गं च लक्षचेद्विष्णुमन्दिरे ।
कन्याविक्रयदोषस्तु प्रणश्यति न संशयः ॥ इति ।

अथ परिवेत्त्रादिनिर्णय उच्यते ।

तत्र मनुः ।

परिवित्तिः परिवेत्ता यया च परिविन्दति* ।
ते सर्व्वे नरकं यान्ति दातृयाजकपञ्चमाः ॥

तेषां लक्षणान्यपि स एवाह ।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥

अग्रजे अनूढे अकृताग्निहोत्रे च स्थिते सतीत्यर्थः ।

तथाच मनुः ।

अग्रजे ब्रह्मचर्य्यस्थे योऽनुजो दारसङ्ग्रहम् ।
कुरुते परिवेत्ता स परिवित्तिस्तु पूर्व्वजः ॥

गर्गोऽत्र विशेषमाह ।

---

* परिविन्दति इत्यत्र परिविद्यते इति मनुसंहितायां पाठः ।

सोदर्य्ये तिष्ठति ज्येष्ठे न कुर्य्याद्दारसङ्ग्रहम् ।
आवसथ्यं तथाधानं पतितस्तु तदा भवेत्* ॥

यत्तु हारीतः ।

सोदराणान्तु सर्व्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया ॥

इत्याह । तदाज्ञाविषयम् ।

अग्रजस्तु यदानग्निरादध्यादनुजः कथम् ।
अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि ॥

इति वृद्धवशिष्ठोक्तेः ।

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा ॥

इति सुमन्तूक्तेश्च । अत्र आधानग्रहणादनुज्ञायामपि न विवाहः । इदं सोदरपरं सोदर्य्याभावे न दोषः ।

तथाच शातातपः ।

पितृव्यपुत्रान् सापत्नान् परनारीसुतांस्तथा ।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

सापत्ना अन्यमातृजाः । परनारीसुताः(क्षेत्रजादयः) दत्तकादयः ।

कार्ष्णाजिनिस्तु ।

उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीव एव च ।
राजयक्ष्मामयावी च न (योग्यः) न्याय्यः स्यात्प्रतीक्षितुम् ॥

कन्याविषये गर्गः ।

---

* पतितस्त्वन्यथा भवेत् इति घ पुस्तके पाठः ।

एकमातृप्रसूतानां पुत्रीणां परिवेदने।

दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नमातृषु॥ इति।

एकमातृप्रसूतानामपि क्वचिदपवादमाह वृद्धमनुः।

विवाहानधिकारी स्याज्ज्येष्ठकन्या यदि स्थिता।

तदनुज्ञां विना वापि कनिष्ठामुद्वहेत्तदा॥

कालप्रतीक्षणं तस्या रजोऽदृष्टं न तिष्ठति॥

कात्यायनोऽपि।

देशान्तरस्थ*क्लीवैकवृषणांश्च† सहोदरान्‡।

वेश्या(निष्ठां)विष्टांश्च पतित(तांश्च)शूद्रतुल्याति§रोगिणः।

जड¶मूकान्धबधिरकुब्जवामन(खञ्ज)कुण्ठकान्|| ॥

---

वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः।

महानद्यन्तरं यत्र तद्देशान्तरमुच्यते।

दशरात्रेण या वार्त्ता यत्र न श्रूयतेऽथवा॥ इति बृहन्मनुः।

बृहस्पतिस्तु —

देशान्तरं वदन्त्येके षष्टियोजनमायतम्।

चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च॥

† एकवृषण एकाण्डः पशुविशेष इति रत्नाकरः।

‡ वृषणानुसहोदरानिति निर्णयसिन्धौ उद्वाहतत्त्वे च पाठः, स एव साधीयान्।

§ शूद्रतुल्यानाह मनुः —

गोरक्षकान् वाणिजिकांस्तथा कारुकुशीलवान्।

प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्॥ इति।

¶ जडो विकलान्तःकरणः हिताहितावधारणाक्षम इति यावत् इति मिताक्षरा।

|| कुण्ठकानित्यत्र षण्ढकानिति पाठः भग्नपादानिति तदर्थः। संस्काररत्नमाला। कुण्ठकान् सर्वक्रियालसान् कुण्ठो मन्दः क्रियासु य इत्यमरोक्तेः।

अतिह्वत्तानभार्य्यांश्च* क्रमिसक्तान्नृपस्य च ।
धनवृद्धिप्रसक्तांश्च कामतः कारिणं†स्तथा ।
कुलटो‡न्मत्तचौरां(रोगां)श्च परिविन्दन्न दुष्यति ॥ इति ।

मदनपारिजाते देशान्तरस्थितस्य विशेष उक्तो वशिष्ठेन ।

अष्टौ दश द्वादश वर्षाणि§ ज्येष्ठभ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति ।

अनिविष्टमकृतविवाहमित्यर्थः । तत्र पुनः पुनः श्रूयमाणे द्वादशवर्षाणि । कदाचिच्छ्रूयमाणे दश । नदीपर्व्वतचौराद्याकुलदेशस्थेऽश्रूयमाणे चाष्टौ वर्षाणीति ।

गर्गस्तु ।

प्रोषितन्तु प्रतीक्षेत वर्षत्रयमपि त्वरन् ।
प्रोषितं यद्यशृण्वानस्तदाब्दान्तेण¶ समाचरेत् ।
आगते तु पुनस्तस्मिन् पादं तच्छुद्धये चरेत् ॥

---

* अभार्य्यान् शास्त्रनिषिद्धभार्य्यासम्बन्धान् नैष्ठिकब्रह्मचारिवानप्रस्थभिक्षुस्वरूपान् ।

† कामतः कारिणः श्रौतस्मार्त्तनिरपेक्षस्वच्छन्दव्यवहारिणः ।

‡ कुलं परकुलम् अटति इति कुलटः परकुलाटनशीलः दत्तक इति यावत् इति नारायणमहामहोपाध्यायाः ।

§ धर्म्मार्थमर्थार्थं वा देशान्तरगतस्य ज्येष्ठस्य द्वादशवर्षप्रतीक्षा ।

तथाच स्मृतिः—

द्वादशैव तु वर्षाणि ज्यायान् धर्म्मार्थयोर्गतः ।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः ॥

¶ यद्यशृण्वानमब्दादिति समाचरेदित्युद्वाहतत्त्वे पाठः, अशृण्वानमश्रूयमाणमिति परिशिष्टप्रकाशकारः, अशृण्वान इति रत्नाकरः, प्रोषितस्य वार्त्तामशृण्वन् वर्षं प्रतीक्षा परिणयनं कुर्य्यादिति तदर्थः ।

पादं कृच्छ्रपादम्।

पाराशरे तु विशेष उक्तः।

द्वौ कृच्छ्रौ परिवित्तेस्तु दत्तायाः कृच्छ्र एव तु।

कृच्छ्रातिकृच्छ्रं दातुः स्याद्धोता चान्द्रायणं चरेत्॥

अत्र परिवित्तिशब्दः परिवेत्तुपलक्षकः।

कृच्छ्रौ द्वौ परिवेत्तुर्वै परिवित्तेस्तथैव च।

इति यमस्मृतेः।

प्रायश्चित्ताचरणानन्तरं परिवेत्तुः कर्त्तव्यमुक्तं वशिष्ठेन।

परिवेत्ता दाता च कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै तां दत्त्वा पुनर्निर्विशेत् अन्यामुद्वहेत् तां नैवोपयच्छेतेति।

कनिष्ठापतिस्तु तस्मै ज्येष्ठाय तां निवेद्य तेनानुज्ञातां तामुद्वहेन्न तु त्यजेदित्यर्थः। अयमेव न्यायो ज्येष्ठकनिष्ठयोराधानव्युत्क्रमे भगिन्योर्विवाहव्युत्क्रमे चानुसन्धेयः।

अतएव गौतमः।

परिवित्तिपरिवेत्तृपर्य्याहितपर्य्याधायाणामग्रेदिधीषुपतीनां संवत्सरं प्राकृतं ब्रह्मचर्य्यमिति।

अग्रेदिधीषुपत्यादौ विशेषो वशिष्ठेनोक्तः।

कृच्छ्रं द्वादशरात्रं चरित्वा अग्रेदिधीषुपतिर्निर्विशेत् तां चोपयच्छेत। दिधीषुपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै तां दत्त्वा पुनर्निर्विशेदिति।

अग्रेदिधीष्वादेर्लक्षणं देवलेनोक्तम्।

ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा।

या साग्रेदिधीषुर्ज्ञेया पूर्व्वा तु दिधीषुः स्मृता ॥ इति ।
अग्रेदिधीषुपतिर्द्वादशरात्रं कृच्छ्रं प्राजापत्यं चरित्वा ज्येष्ठाया-मन्येनोढ़ायां पश्चात्तामेवोद्वहेत्। दिधीषुपतिस्तु कृच्छ्रातिकृच्छ्रौ चरित्वा स्वोढ़ां ज्येष्ठां तस्मै कनीयस्याः पूर्व्ववोढ्रे दत्त्वा अन्या-मुद्वहेदिति मिताक्षरा कल्पतरुश्च* ।

इति परिवेत्रादिनिर्णयः ।

अथेदानीमेवंलक्षणलक्षितयोर्वधूवरयोर्विवाहकालप्रमाणम् ।

तत्र नारदः ।

युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीड़नम् ।
तत्तु पुंसामयुग्मेऽब्दे व्यत्यये नाशनं† तयोः‡ ॥

शौनकः ।

कुलशीलवयोवृत्तरूपाढ्यां नग्निकां शुभाम् ।
विधिना चोद्वहेत्कन्यां (सर्व्व)धर्म्मकामार्थसिद्धये ॥
सप्ताब्दात्कन्यकानाम्नी शैशवी स्याच्छुभान्विता ।
तामष्टादशवर्षेण वरेण विवहेत्पुमान् ॥

---

* व्याख्यान्तरमपि स्मृत्यर्थसारे—कनिष्ठापतिर्द्वादशरात्रं कृत्वा तां स्वोढ़ामेव ज्येष्ठो-द्वाहे जाते उद्वहेत्। ज्येष्ठापतिस्तु कृच्छ्रातिकृच्छ्रौ कृत्वा स्वोढ़ां कनिष्ठापतये समर्पयित्वा पुन-रेव विवाहविधिना तदनुज्ञातां तां ज्येष्ठामेव उद्वहेदिति ।

† पुंसां युग्मेऽब्दे स्त्रीणामयुग्मेऽब्दे इत्येवंरूपे व्यत्यये ।

‡ स्मृत्यन्तरे च—

गर्भाधानाज्जन्मतो वा पञ्चमाब्दात्परं शुभम् ।
कुमारीवरणं दानं मेखलाबन्धनं तथा ॥ इति ।

याष्टवर्षा भवेद्गौरी पुत्रपौत्रप्रवर्द्धनी।
पञ्चविंशतिवर्षीयस्तां कन्यामुद्वहेद्द्विजः॥
रोहिणी नववर्षा स्याद्धनधान्यविवर्द्धनी।
तामुद्वहेत* मतिमान् त्रिंशद्वर्षवरेण तु॥
अर्द्धं दशाब्दाद् या कन्या प्राग्रजोदर्शनात्तु सा।
गान्धारी स्यात्तमुद्वाह्य चिरं जीवितुमिच्छता†॥
प्रयच्छेन्नग्निकां कन्यामृतुकालभयादिह।
ऋतुमत्यां तु तिष्ठन्त्यां दोषः पितरमृच्छति॥ इति।

नग्निकालक्षणं यथा स्मृतिभास्करे।

यावन्न लज्जां जानाति कन्या पुरुषसन्निधौ।
योन्यादीन्नावगूहे(ह्ये)त तावद्भवति नग्निका॥

सङ्ग्रहे तु।

यावच्चेलं न गृह्णाति यावत्क्रीडति पांशुभिः।
यावद्दोषं न जानाति तावद्भवति नग्निका॥ इति।

संवर्त्तस्तु।

अष्टवर्षा भवेद्गौरी नवमे नग्निका भवेत्।
दशमे कन्यका प्रोक्ता द्वादशे वृषली मता॥ इति।

इदं नग्निकालक्षणमौपचारिकं रोहिणीति वा पाठः। तस्मात् पूर्व्वं पूर्व्वं श्रेय इति केचित्। अन्ये तु कन्यारजसस्य महायाससाध्यत्वादुत्तरोत्तरं श्रेयः षोड़शीपर्य्यायवदित्याहुः।

---

* उद्वहेत उद्वाहयेदिति अन्तर्भूतण्यर्थः, वर्त्तमाने तृतीयानुपपत्तेः।

† जीवितुमिच्छता इति घ-पुस्तके पाठः।

तथाच मरीचिः ।

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवन्तु रजस्वलाम् ॥

प्राप्नोतीति शेषः ।

इति विधानपारिजाते वधूवरविवाहकालनिरूपणम् ।

अथेदानीम् एकमातृजादीनां विवाहकालनिर्णयः प्रस्तूयते ।

प्रयोगपारिजाते गर्गः ।

एकमातृप्रसूतानामेकस्मिन् वासरे यदि* ।
विवाहं नैव कुर्व्वीत हती त्वेको विनश्यति ॥

नारदः ।

एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्य्यान्मातृभेदे समाचरेत् ॥

स्मृत्यन्तरे ।

विवाहस्त्वेकजन्यानामेकस्मिन्नुदये कुले ।
नाग्नं करोत्येकवर्षे स्यादेका विधवा तयोः ॥

उदयो लग्नमित्यर्थः ।

अस्य देशव्यवस्था उच्यते ।

एकोदरीकरतलग्रहणं यदि स्या-
देकोदरस्थवरयोः कुलनाशनञ्च ।

* एकस्मिन्नेव वासरे इति घ-पुस्तके पाठः ।

एकाब्दिके तु विधवा भवतीह कन्या
मध्यन्तरे तु शुभदं प्रथमेतरोधे ॥ इति ।

अन्यच्च ।

भ्रातृयुग्मे स्वसृयुग्मे भ्रातृस्वसृयुगे तथा* ।
न जातु मङ्गलं कुर्य्यादेकस्मिन् मण्डपेऽहनि ॥
एकस्मिन् वासरे प्राप्ते न कुर्य्याद्दयमजातयोः ।
क्षौरञ्चैव विवाहञ्च मौञ्जीबन्धनमेव च ॥

यत्तु† नारदः ।

पुत्त्रीपरिणयादूर्द्धं यावद्दिनचतुष्टयम् ।
पुत्त्रान्तरस्य कुर्व्वीत नोद्वाहमिति सूरयः ॥

तद्भिन्नमातृविषयम् ।

विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्व्वर्षैस्तत्रैका विधवा भवेत् ॥

इति वराहसंहितायां विशेषोक्तेः ।

तथा ।

नैवैकजन्मनोः पुंसोरेकजन्ये तु कन्यके ।
नैवं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम् ॥
एकजन्ये तु कन्ये द्वे पुत्त्रयोर्नैकजन्ययोः ।
न पुत्त्रीद्वयमेकस्मै प्रदद्याच्च कदाचन ॥ इति ।

इदञ्च भिन्नमातृकयोः पुत्त्रयोः पुत्त्र्योर्वा एकस्य विवाहोप-

---

* भ्रातृस्वसोश्च युग्मके इति संस्कारत्नमालायां पाठः ।

† यत्तु प्रत्यब्दं मङ्गले तु इति संस्कारत्नमालायां पाठः ।

नयनानन्तरं दिनचतुष्टयमतिक्रम्य अन्यस्य विवाहोपनयने कुर्य्यादिति तात्पर्य्यम् ।

एकोदरप्रसूतानान्तु विशेष उच्यते संहितासारावल्याम् ।

न मण्डनान्मुण्डनमूर्द्धमिष्टं
न पुत्त्रयो(र्मु)र्मण्डनमेकवर्षे ।
न पुंविवाहोर्द्ध्वमृतुत्रयेऽपि
विवाहकार्य्यं दुहितुश्च कुर्य्यात् ॥

तथा ।

न मण्डनाच्चापि हि मुण्डनञ्च
गोत्रैकतायां यदि नाब्दभेदः ।

गोत्रैकत्वञ्च सापिण्ड्ये सति द्रष्टव्यम् ।

तथाच वृद्धवशिष्ठः । नारदोऽपि ।

पुत्त्रोद्वाहात्परं पुत्त्रीविवाहो न ऋतुत्रये ।
न तयोर्व्रतमुद्वाहान् मण्डनादपि मुण्डनम्* ।
नैकस्मिन् वत्सरे कार्य्यौ गेहोद्वाहौ कथञ्चन ॥

गेहशब्दस्तदारम्भतत्प्रवेशयोरुपलक्षकः ।

तथाच ज्योतिषे ।

एकोदरभ्रातृविवाहकृत्यं स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयः समूचुर्न मुण्डनं मण्डनतोऽपि कार्य्यम् ॥

---

* न कार्य्यं व्रतमुद्वाहान् मङ्गले नान्यमङ्गलम् । इति संस्काररत्नमालायां पाठः । मङ्गलं विवाहादि, अमङ्गलं श्राद्धादि ।

क्वचिदपवादमाह मदनरत्ने ।

ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ।
तदा ह्येकोदरस्यापि विवाहस्तु* प्रशस्यते ॥

सायनीये चान्योऽपि विशेषः ।

एकस्मिन्शोभने ह्यस्ते ह्यशुभं नैव कारयेत् ।
यदि कुर्य्यात्प्रमादेन तत्र स्यादशुभं ध्रुवम् ॥

अब्दभेदे प्रतिप्रसवोऽपि तत्रैव ।

फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्व्वीत नर्तुत्रयविलङ्घनम्† ॥

संहिताप्रदीपे ।

ऊर्द्धं विवाहात्तु सुतस्य नैव
कार्य्यो विवाहो दुहितुः समार्द्धम् ।
अप्राप्य कन्यां श्वशुरालयञ्च
वधूप्रवेशात्स्वगृहं न चादौ ॥

ज्योतिर्निबन्धे कात्यायनः ।

कुले ऋतुत्रयादर्व्वाक् मण्डनान्न तु मुण्डनम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्य्यान्मङ्गलत्रयम् ॥

प्रवेशनिर्गमादिलक्षणमाह गर्गः ।

---

* अत्र तुशब्देन विवाहभिन्नमेकोदरविषयं मङ्गलद्वयमब्दभेदेऽपि न भवति [illegible]
इति गोपीनाथः ।

† ऋतुत्रयविलङ्घनमिति क पुस्तके पाठः ।

पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु (मङ्गलम्)मण्डनम् ।
चौलं मुण्डनमेवोक्तं वर्ज्जयेन्मण्डनात्परम् ॥
मौञ्जी चोभयतः कार्य्या यतो मौञ्जी न मुण्डनम्* ।
अभिन्ने वत्सरेऽपि स्यादब्दभेदन्तु कारयेत् ।
अभेदे तु विनाशः स्यान्न कुर्य्यादेकमण्डपे ॥

मदनरत्ने वशिष्ठोऽपि ।

द्विशोभनं त्वेकगृहेऽपि नेष्टं शुभन्तु पश्चान्नवभिर्दिनैस्तु ।
आवश्यकं शोभनमुत्सवो वा द्वारेऽथवाचार्य्यविभेदतो वा ॥

चतुर्थदिनादर्व्वाग्विषये वशिष्ठः ।

एकलग्ने द्विलग्ने वा द्वे गृहे यत्र शोभने ।
तयोरेको विनष्टः स्याद्वर्त्तते न यथास्थितम् ॥

द्वे शोभने द्वौ विवाहौ ।

तथा ।

एकोदरप्रसूतानां नाग्निकार्य्यद्वयं भवेत् ।
भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीत् ॥
कुर्व्वन्ति मुनयः केचिदेकस्मिन्† वत्सरे लघु ।
गुरु वा लघु वा कार्य्यं प्राप्तं नैमित्तिकन्तु यत् ॥

अष्टटे तु ज्योतिर्णवे ।

एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः ।

---

* मौञ्ज्यां मुण्डनमङ्गं न प्रधानमिति चौलो न मुण्डनमित्याशयः ।

† एकस्मिन्नित्यत्र अन्यस्मिन्निति निर्णयसिन्धौ पाठः ।

नवान्तरे चैकदिने केऽप्याहुः सङ्कटे च शुभम्* ॥

कश्यपः ।

मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि वा ।
पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत् ॥

वराहमिहिरश्च ।

उद्वाह्य पुत्रीं न पिता विदध्यात्
पुत्रान्तरस्योद्वहनं कदापि ।
यावच्चतुर्थं दिनमत्र पूर्वं
समाप्य चान्योद्वहनं विदध्यात् ॥

तथा ।

विवाहमध्ये यदि चेत्क्षयाह-
स्तत्र स्वमुख्याः पितरो न यान्ति ।
कृते विवाहे परतस्तु कुर्या-
च्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम् ॥

मासिकानि तु वृद्ध्यर्थं पूर्वमेव कार्य्याणीत्याह मेधातिथिः ।

प्रेतकर्म्माण्यनिर्वर्त्त्य चरेन्नाभ्युदयक्रियाम् ।

---

* ज्योतिर्विवरणे तु चातिसङ्कटे एकोदरयोरप्येकाहे कर्त्तव्यतोक्ता—

न प्रतिषिद्धं तत्र सन्मार्गे सङ्कटे भवति ।
एकोदरसम्भवयोरेकाहे भिन्नमण्डपे कार्य्ये ॥

यमयोश्च विशेषः कृत्यसारे—

एकस्मिन् वत्सरे चैव वासरे मण्डपे तथा ।
कर्त्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमजातयोः ॥ इति ।

आचतुर्थात्ततः पुंसि पञ्चमे शुभदं भवेत्* ॥

अतिसङ्कटे तु ।

जन्मं विवाहाच्छुभदो नरस्य
नारीविवाहो न ऋतुत्रयं स्यात् ।
नारीविवाहात्तदहेऽपि शस्तं
नरस्य पाणिग्रहमाहुरार्याः ॥ ०

तथा सङ्ग्रहे ।

सङ्कटे समनुप्राप्ते सूतके समुपागते ।
कुष्माण्डीभिर्घृतं हुत्वा गाञ्च दद्यात्पयस्विनीम् ।
चूडोपनयनोद्वाह प्रतिष्ठादिकमाचरेत् ॥

अथ वैधव्ययोगे शान्तिमाह मार्कण्डेयपुराणे ।

बाल्यवैधव्ययोगे तु† कुम्भद्रुप्रतिमादिभिः‡ ।

---

स्मृत्यन्तरेऽपि—प्रेतश्राद्धानि सर्व्वाणि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्व्वीत कर्त्तुं नान्दीमुखं द्विजः ॥

वृद्धिं विनापकर्षे दोषमाह उशनाः—
वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ।
स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥ इति ।

† बाल्यवैधव्ययोगानाह मकरन्दे गुणाकरः—
त्यक्ता धवेनोष्णकरेऽस्तसंस्थे बाल्येऽपि भौमे विधवा प्रदिष्टा ।
पापग्रहालोकनवर्गयाते कन्यैव वन्ध्या भवतीति सूती ॥

अन्यत्रापि—लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे ।
कन्या भर्त्तुर्विनाशाय भर्त्ता कन्याविनाशदः ॥ इति ।

‡ कुम्भ इत्युपलक्षणं तेन मन्यस्यापि ग्राह्या, द्रुमः स चाश्वत्थ एव मान्यः, प्रतिमा विष्णुप्रतिमा सा च शिरोभुजाद्यवयवयुता सौवर्णी न शालग्रामशिला । इति गोपीनाथः ।

ज्ञात्वा लग्नं रहः पश्चात् कन्योद्वाहोति (मन्यते) चापरे ॥

कुम्भविवाहविधिस्तु सूर्य्यारुणसंवादे ।

विवाहात्पूर्व्वदिवसे चन्द्रताराबलान्विते ।

विवाहर्क्षं (होरे) च मध्यन्या* कुम्भेन सह चोद्वहेत् ॥

पिता सङ्कल्पवाचा च विवाहविधिपूर्व्वकम् ।

सूत्रेणावेष्टयेत् पश्चाद्गन्धतन्तुविधानतः ।

कुङ्कुमालङ्कृतं देहं तयोरेकान्तमन्दिरे ॥

प्रार्थयेत्तु ततः कुम्भं मन्त्रेणानेन मानवः ।

वरुणाङ्ग(समुद्भूत)स्वरूपाय† सर्व्वजीवसमाश्रय ॥

पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ।

देहि विष्णो वरं देव कन्यां पालय दुःखतः ॥

ततोऽलङ्कारवस्त्राभ्यां वराय प्रतिपादयेत् ।

अथ कुम्भं विनिःसार्य्य प्रभञ्ज्य सलिलाशये ।

ततोऽभिषेचनं कुर्य्यात्पञ्चपल्लववारिभिः ॥ इति ।

## अथ विष्णुमूर्त्तिदानम् ।

सुवर्णस्सुवर्णेन वित्तशक्त्याथवा पुनः‡ ।

निर्म्मितां रुचिरां शङ्खगदाचक्राब्जसंयुताम् ॥

---

* विवाहोक्त तथा लग्न इति निर्णयसिन्धौ पाठः ।

† स्वरूपायेति मन्त्रोधमपट स्वरूपम् भवतं प्राप्नोतीति पञ्चाश्यम् । स्वरूपस्त्वमिति मुहूर्त्तचिन्तामणिटीकायां पाठः ।

‡ यथाशक्तिसमन्वितमिति च पुस्तके पाठः ।

सर्व्वलक्षणसंपूर्णां पीतवासोद्वयान्विताम् ।
सदक्षिणाञ्च तां दद्याद्ब्राह्मणायाथ मन्त्रतः* ॥
यन्मया प्राचि जनुषि घ्न(न्त्या)त्वा पतिसमागमम् ।
विषोपविषशस्त्राद्यैर्हतो वातिविरक्तया ॥
प्राप्नुवत्या (प्राप्यमाणं) महाघोरं यशःसौख्यधनापहम् ।
वैधव्याद्यतिदुःखौघघाताय सुखलब्धये ॥
बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् ।
सौवर्णीमर्पितां भक्त्या तुभ्यं सम्प्रददे द्विज ॥
अनघाद्याहमस्मीति त्रिवारं प्रजपेत् (मनुं) ततः ।
एवमस्त्विति तस्योक्तिं† गृहीत्वा स्वगृहं विशेत् ।
ततो वैवाहिकं कुर्य्याद्विधिं दाता मृगीदृशः‡ ॥

इति विधानपारिजाते विवाहोपनयनोपयोगि-
निर्णयविधानम् ।

---

* इमं मन्त्रमुदीरयन् इति निर्णयसिन्धौ पाठः ।

† तस्योक्तिमित्यत्र विप्राशीरिति मुहूर्त्तचिन्तामणौ पाठ. ।

‡ ननु पुनर्भूर्दोषिपूरुढ़ा इत्यमरोक्तेर्विः परिणीतायाः कन्यायाः पुनर्भूत्वेन महादोषः सम्भवतीत्याशङ्क्य समाधत्ते ।

स्वर्णाम्बुपिप्पलानाञ्च प्रतिमा विष्णुरूपिणी ।
तया सह विवाहे च पुनर्भूत्वं न जायते ॥

इति विधानखण्डम् ।

अथ गुरौ सिंहस्थे अतिचारादिस्थे च
कार्य्याकार्य्यविधानम् ।

प्रयोगपारिजाते श्रीपतिः ।

यदि गुरुरतिचारी जीवसंवत्सरान्ते
भवति च अधिमासे सिंहसंस्थे च जीवे ।
अनुगतरविराशौ गौचरे निर्जिते वा
उपनयनमनिष्टं यत्नयात्राविवाहः ॥ इति ।

सिंहस्थे विशेषमाह लल्लः ।

गुरुर्मघायां पुरुषं निहन्ति
भगे स्त्रियं हन्ति वदन्ति गर्गाः ।
सिंहस्य चान्त्योत्तरपादसंस्थ-
स्तथा च जीवस्य सुतं निहन्ति ॥

अथ देशव्यवस्था ।

तथाचागस्त्यः ।

सिंहस्थिते देवगुरौ विवाहं
नेच्छन्ति यात्रां मुनयो व्रतञ्च ।
कलिङ्गवङ्गेष्वथ मागधेषु
दोषः प्रयुक्तो न तथान्यदेशे ॥

गौतमोऽपि ।

कण्ठीरवस्थे धिषणे विवाहं
कुर्य्यान्न यात्रां व्रतबन्धदीक्षाम् ।

गोदावरीमुत्तरतो हि दोषा

गोदावरीदक्षिणतो न सन्ति ॥

काण्ठीरवः सिंहः । गोदावरीमारभ्येति शेषः* ।

देवलस्तु ।

व्रतबन्धं प्रतिष्ठां विवाहं मन्दिरप्रवेशञ्च ।

यात्राञ्च याम्यदेशे कुर्य्यादार्य्ये न (सिंहस्थे) सिंहांशे† ॥

आर्य्ये बृहस्पतिः ।

अथ गुरुशुक्रास्तमयनिर्णयः ।

तत्र श्रीलल्लः ।

अस्तमिते भृगुतनये नारी म्रियते बृहस्पतौ पुरुषः ।

दम्पत्योः सहमरणं पाणिग्रहणोदिते केतौ ॥

अत्र विशेषमाह अगस्त्यः ।

एको मूढो भवेदन्यः स्वोच्चमित्रांशगो यदि ।

स्वराशिमूर्त्तिगश्चैव मूढदोषो विनश्यति ॥

मूर्त्तिगो लग्नग इत्यर्थः ।

बृहस्पतिस्तु ।

---

* ज्योतिर्निबन्धेऽपि ।

सिंहे गुरौ सिंहनवांशकोर्के गोदावरीदक्षिणकूलजातैः ।

उद्वाहकालात्ययदोषभीतैः कार्यो विवाहो यवनो ब्रवीति ॥

† सिंहांशे ऽत्र नवांशकमेव सिंहांशो बोध्यः । अतएव सिंहेऽपि भगदैवत्ये गुरौ पुत्रवती भवेदित्युक्तम् । भगदैवत्यप्रथमपादस्य सिंहांशत्वेन परित्याज्यत्वात् तदतिरिक्तं भगदैवत्यं ग्राह्यम् ।

यद्येकस्यापि मूढ़त्वे शुभकर्म्म न दोषकृत्।
द्वयोर्मूढ़त्वमेवोक्तं दोषदं गुरुशुक्रयोः ॥
द्विजन्मादिशुभे कार्य्ये शुक्रमौढ्यं न दोषदम्।
त्रैवर्णिकानामेवोक्तं दोषदं गुरुशुक्रयोः ॥
क्षत्रियाणां विशेषेण भृत्यानां राजसेविनाम्।
मौढ्यदोषं न पश्येत दीक्षाणामेव कारयेत् ॥
पाति(नि)पातिषु कार्य्येषु राज्ञां तत्कर्म्मकारिणाम्।
विवाहादीनि कार्य्याणि मौढ्येऽपि गुरुशुक्रयोः ॥
शान्तिं कृत्वा तयोस्तद्वच्छुक्रदेवेन्द्रमन्त्रिणोः।
होमैर्दानैर्जपैर्वापि तयोर्वादितमन्त्रकैः ॥ इति।

तयोः समसप्तके निषेध उच्यते बृहस्पतिना।

यदा जीवसितौ वक्रे(क्रौ) परस्परनिरीक्षितौ।
सप्तमस्थौ तदा दोषो मूढ़त्वादतिरिच्यते ॥

अस्य देशभेदेन व्यवस्था चोक्ता सङ्ग्रहे।

समदृष्टिर्गुरोः शुक्रे नर्म्मदोत्तरतो भवेत्।
नर्म्मदायाम्यभागे तु समदृष्टिर्न दुष्यति ॥ इति।

तयोर्बाल्यवृद्धत्वे निषेध उक्तस्तत्रैव।

बालः शुक्रो हरेत्कन्यां क्षीणः (वृद्धः) शुक्रः पतिं हरेत्।
बालो बृहस्पतिः पुंसां क्षीणः स्त्रीणां न शोभनः ॥ इति।

तद्दिनसंख्यामाह नारदः।

पश्चात्प्रागुदितः शुक्रो दशत्रिदिवसं शिशुः।
वृद्धः पञ्चदिनं पक्षं गुरुः पक्षन्तु सर्व्वतः ॥

लल्लोऽपि ।

पश्चादभ्युदितो बालो दशाहं प्राग्दिनत्रयम् ।
पक्षं वृद्धस्तु पूर्व्वेण पश्चाहं पश्चिमे स्थितः* ॥

तथा ।

उपरागनिवृत्तौ तु यावत् स्याद्दिनसप्तकम् ।
रवौन्द्वोर्दृष्टिपाते च क्रूरग्रहयुते च भे॰॥
अग्न्याधानं विवाहादि मङ्गलं न समाचरेत् ।
तथोदयास्ते माङ्गल्ये दिनानां नवकं त्यजेत् ।
खण्डग्रहे ग्रहदिने तथा पूर्व्वापरं दिनम् ॥ इति ।

नारदः ।

कन्यकावरयोः सर्व्वे ग्रहाः शोभनतां गताः ।
यदि तत्रैव कर्त्तव्यो विवाहः शुभमिच्छता ॥

गर्गः ।

स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
द्वयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण निश्चितम् ॥ इति ।

बृहस्पतिस्तु ।

पुंसो भानुस्त्रिषष्ठाये शनिभौमौ च शोभनौ ।
अन्यत्र शान्तिमेतेषां कृत्वा कर्म्म समाचरेत् ॥

---

पक्षं वृद्धस्तु पूर्व्वेण दशाहं पश्चिमेन तु ।
प्रत्यग्बालो दशाहन्तु पूर्व्वे च दिनत्रयम् ॥
इति मदनरत्ने पाठः ।

विवाहे बलमावश्यं दम्पत्योर्गुरुसूर्य्ययोः ।
न चेत्पूजां प्रकुर्व्वीत दुष्फलप्रदयोस्तयोः ॥ इति ।
गुर्व्वादित्यशान्ती स्तवकारम्भे एव उक्ते । अन्येषां दुष्टग्रहाणाञ्च नवग्रहमखोक्तप्रकारेण शान्तिः कार्य्या इति ।

अथ अष्टादश कूटा उच्यन्ते ।

तत्र वृहस्पतिः ।

विवाहसमये काले सुखासीनं शुचिं द्विजम् ।
दैवज्ञं भक्तितो गत्वा संपूज्यादौ यथाबलम् ।
उडुनी नामनी चोक्ता संपृच्छेत्तत्तदेव तम् ॥
दिनं गणञ्च माहेन्द्रं स्त्रीदैर्घ्यं योनिरेव च ।
राशिराश्यधिपौ वश्यं रज्जुर्वेधश्च ते दश ॥
पुनश्च भूतलिङ्गे च जातिगोत्रखगास्तथा ।
योगिन्यासौ च दैवञ्च पुनरष्टौ विशेषतः ।
पुनश्चश्वर्णकूटञ्च माहेन्द्रञ्च ततः परम् ॥

गर्गः ।

माहेन्द्रं गणकूटञ्च दिनकूटञ्च योनिजम् ।
स्त्रीदीर्घं रज्जुकूटञ्च वश्यं वर्णाख्यकूटकम् ॥
राशिराश्यधिपाख्ये च वेधो नाड्याख्यकूटकम् ।
भूतलिङ्गाख्यकूटञ्च जात्याख्यं पक्षिकूटकम् ।
योगिनीगोत्रकूटञ्च कूटान्यष्टादशैव तु ॥

एतेषां प्रत्येकं लक्षणानि ज्योतिःशास्त्रतोऽवगन्तव्यानि ग्रन्थगौरवभयान्न लिख्यन्ते ।

अथ एकराशिनक्षत्रनिर्णयः ।

तत्र गर्गः ।

एकराशौ हि नक्षत्रे पौरुषी प्रथमा भवेत् ।
अतीव शोभना प्रोक्ता स्त्रीतारा चेद्विनश्यति ॥
भवनद्वययुक्तर्क्षे पूर्व्वं पुंसां शुभावहम् ।
पश्चाद्भागगतं स्त्रीणामन्यथा चेद्विनाशकृत् ॥

तथा । नक्षत्रमेकं यदि भिन्नराशि-
स्तदा विवाहे च तयोर्विनाशः* ।
पुंनामपूर्व्वं शुभदं विवाहे
पुत्रादिसम्पत्तिविवृद्धिकारि ॥

अत्र वर्ज्यनक्षत्राणि यथा ।

एकराशौ द्विनक्षत्रे कृत्तिका यस्य तारका ।
धनिष्ठा शततारा च पुष्याश्लेषञ्च वर्जयेत् ॥

एकनक्षत्रयोगे भृगुः ।

रोहिण्यार्द्रामघेन्द्राग्नीतिष्यश्रवणपौष्णभम् ।
उत्तराप्रोष्ठपाच्चैव नक्षत्रैक्येऽपि शोभनाः ॥

अन्यच्च ।

अजैकपान्मित्रवसुद्विदैव-
प्रभञ्जनान्त्यार्कभुजङ्गमानि ।
मुकुन्दजीवान्तकभानि नूनं
शुभानि योषिद्वरजन्मभैक्ये ॥

* न दम्पती तत्र सुखं लभेतामिति ज्योतिरर्णवे पाठः ।

एवञ्च सति भरणी रोहिणी चार्द्रा पुष्या ऽश्लेषा मघा हस्तः स्वाती विशाखा अनुराधा श्रवणं धनिष्ठा पूर्वभाद्रपदा उत्तरभाद्रपदा रेवती चेति पञ्चदशनक्षत्रेषु स्त्रीपुंनक्षत्रैक्येऽपि शुभमिति भावः ।

अत्रापि विशेष उक्तः सङ्ग्रहे ।

दम्पत्योरेकनक्षत्रे भिन्नपादे शुभावहम् ।

दम्पत्योरेकपादे तु वर्षान्ते मरणं ध्रुवम् ॥ इति ।

भूबाणनन्दचन्द्राश्च रसदिग्व्यक्तिशैलजाः ।

वेदा वसुशिवादित्या घातचन्द्रो यथाक्रमम् ॥

यात्रायां युद्धकार्येषु घातचन्द्रं विवर्जयेत् ।

विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने ।

घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत् ॥

एवं ज्योतिःशास्त्रोक्तप्रकारेण अष्टादशकूटान् ज्ञात्वा आभ्यन्तरलक्षणार्थं शकुनं पश्येत् ।

तथाचोक्तं सङ्ग्रहे ।

मनोऽनुकूले प्रथमं प्रविष्टे

लब्ध्वा तु पश्चादथ सम्पदश्च

ततो निमित्ते शकुनादिनिश्चयं

सञ्चिन्त्य पश्चादर उद्वहेत्ताम् ॥ इति ।

तस्मादाभ्यन्तरलक्षणज्ञानार्थं निमित्तं पश्येत् ।

तदुक्तमाश्वलायनगृह्ये ।

दुर्ज्ञेयानि लक्षणानीत्यष्टौ पिण्डान् कृत्वा ऋतमग्रे प्रथमं

स्नते सस्यम्प्रतिष्ठितम्। यदियं कुमार्य्यभिजानाति तदियमिह प्रतिपद्यताम्। यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति। क्षेत्राच्चेदुभयतःशस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्यात्। गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विनी अविदासिनो ह्रदात्सर्व्वसम्पन्ना देवनात्कितवी चतुष्पथाद्विप्रव्राजिनी ईरिणादधन्या श्मशानात्पतिघ्नीति।

उभयतःशस्यादिति। यस्मिन् क्षेत्रे प्रतिवत्सरं द्विवारं (शस्यं) धान्यमुत्पद्यते तदुभयतःशस्यं तस्मादित्यर्थः। अविदासिनः अशोष्यात्। दीव्यन्ति यत्र तद्देवनं द्यूतस्थानं तस्मात्। चतुर्णां पथां समाहारश्चतुष्पथं तस्मात्। ईरिणमूषरप्रदेशस्तस्मात्। श्मशानं प्रसिद्धम्। एतेभ्यः स्थानेभ्यो मृदः पृथगुपादाय पृथक् पृथक् पिण्डान् कृत्वा नामभिरङ्कयित्वा शुद्धपात्रे निक्षिप्य गन्धपुष्पैरभ्यर्च्य यदियमित्यनेन मन्त्रेणाभिमन्त्र्य वरो वा तदीयो वा स्वाभीष्टदेवतां ध्यात्वा एषामेकं गृहाणेति कुमारीं ब्रूयात्। यदि सा क्षेत्रादाहृतं पिण्डं प्रतिगृह्णीयात् तदाऽस्याः प्रजा अन्नवती भविष्यतीति विद्यात्। एवं गोष्ठादिपिण्डादौ ज्ञेयम्। तथाच आद्येषु चतुर्षु पिण्डेषु शुभफलम्। अन्त्येषु चतुर्षु अशुभमिति।

पुराणेषु शकुनं दृष्ट्वा वा पाणिग्रहः कार्य्य इति।

तथाचोक्तं प्रयोगपारिजाते शिवराघवसंवादे।

श्रीराम उवाच।

पुराणं वीक्ष्य विधिना यत्फलं लभते नरः ।
किं किं पुराणं वीक्ष्यं स्यादर्च्चनीयं तथैव किम् ॥
प्रशस्तः कीदृशः श्लोको ह्यप्रशस्तश्च कीदृशः ।
कीदृशेषु च कार्य्येषु कीदृशः पूजकस्तथा ॥
पूजा च कीदृशी तत्र कार्य्या निर्णयदर्शने ।
इति रामस्य वचनं श्रुत्वा प्राह सदाशिवः ॥
पुराणपूजनार्हस्तु स्वशाखाध्ययने रतः ।
मीमांसातत्त्वविज्ञानः श्रोत्रियो वेदपारगः ॥
शतरुद्रि(द्री)यजापी च साग्निश्चिन्तितवाचकः ।
यजुर्व्वेदी विशेषेण पूजयेत्पुस्तकं सुधीः ॥
श्रीतालपत्रलिखितं देवलिप्यन्वितं शुभम् ।
वज्राग्रप्रतिपच्चन्द्रयुगपत्प्रणवाक्षरम् ॥
प्रागूर्द्ध्वरेखयोस्तस्य रेखयोरग्रपूजिता* ।
रेखैका तु भवेदेव मकारस्तस्य पार्श्वतः ॥
शिरोभागमुपक्रम्य सकोणाधःप्रलम्बिनी ।
षकारः स हि विज्ञेयः पट्टिका दक्षरेखया ॥
वामे षड्वक्रबिन्दू द्वाविकार इति कीर्त्तितः ।
तस्य वामशिरोभागलम्बिन्या ई उदाहृतः ॥
सर्व्वाक्षरे शिरोरेखा षव्यक्ता प्रणवं विना ।
एवमन्यानि वर्णानि षक्षराणीति वै विदुः ॥
लिप्यानयैव लिखितं पुराणन्तु प्रशस्यते ।

---

* प्रागूर्द्ध्वं रेखयोः प्राक्ते प्रणवस्तापयोज्जिका इति पद्मपुराणे पाठः

ब्राह्मञ्च वैश्वर्वञ्चैव चादित्यं नारदं तथा ॥
मार्कण्डेयमथाग्नेयं कौर्म्मं वामनमेव च ।
गारुडं (लि)लैङ्गमाख्यानं(तं) तथा भागवतं स्मृतम् ॥
वाराहं ब्रह्मवैवर्त्तं शकुनेषु प्रशस्यते ।
विमुच्य पुस्तके रज्जुं पीठे (पट्टे) निधिप्य संस्कृते ॥
धौतवस्त्रधरः स्नात्वा कुशहस्तो द्विजोत्तमः* ।
आदावावाहनमभ्यर्च्य कृत्वा सङ्कल्पमेव च ॥
चतुर्भुजाञ्चसूत्रञ्च पार्श्वं पुस्तकमेव च ।
धारयन्तीं सितां ध्यायेत्प्रसन्नास्यां सरस्वतीम् ॥
गोक्षीरसदृशाकारं त्रिनेत्रं वृषवाहनम् ।
प्रसन्नवदनं शान्तं शुक्लाम्बरधरं चरम् ॥
हरिञ्च देवदेवेशं स्तूयमानं पुराणकैः ।
ध्यात्वैवं पूजकः सम्यगादौ पूजां समारभेत् ॥
आपो वा इति मन्त्रेण कलशस्याभिमन्त्रणम् ।
तज्जलन्तु गृहीत्वाथ पूजाद्रव्याण्यथाभ्यसेत् ॥
तत्त्वज्ञमेति मन्त्रेण प्रशस्य(स्त) प्रणवेन तु ।
आत्मानं सर्व्वपापानि तत आवाहयेदिति ॥
यद्वागिति मन्त्रेणैव भारतीषोडशार्चनम् ।
पुरुषसूक्तेन वा कुर्य्यात् पुस्तके षोडशार्चनम्† ॥

---

* रुचिरक्षौमनोऽम्बरः इति पद्मपुराणे पाठः ।

† गायत्र्या वा समर्चयेदिति पद्मपुराणे पाठः ।

वत्सरान्तादथारभ्य पञ्चवर्षादधः शुभाम् * ।
अनूढां वाऽनृतुमतीं कन्यां यत्नेन पूजयेत् ।
गन्धपुष्पाक्षतैर्धूपदीपताम्बूलभूषणैः ॥
पाठयेदथ वै मन्त्रं पूजकः कन्यकामिमाम् ।
सत्यं ब्रूहि प्रियं ब्रूहि भगवति सरस्वति ॥
नमस्ते नमस्त इति गायत्र्या च क्रमार्थया ।
गायत्र्यनुक्रमार्थास्तु दूर्वागुच्छन्तु कामयेत् ॥
सन्निधौ पुस्तकस्या(य)धः सदस्य परमे(मि)त्यृचा ।
दूर्वागुच्छत्रयं दद्यात्तस्या हस्ते विचक्षणः ॥
सा क्षिपेत्पुस्तके सन्धौ शलाकाचयमत्र तु ।
विसृज्य तां ततो दद्यात्पुष्पाञ्जलिमतन्द्रितः ॥
आदाय पुस्तकं नत्वा देवीं ध्यायेत्समाहितः ।
विहङ्गैः प्रेक्षणं कुर्य्याद्देवेभ्यो नम इत्यथ ॥
पञ्चर्यौसंख्यमः श्लोकः कार्य्यसंसिद्धिसूचकः ।
पूर्व्वपत्रे समाप्तिः स्याच्छ्लोकस्य यदि राघव ।
पत्रान्तरे पठेच्छ्लोकं विविच्यार्थमुदीरयेत् ॥
शनैः शनैः पठेत्प्राज्ञो व्याख्यायाच्च शनैः शनैः ।
त्वरेह तु न कर्त्तव्या दुष्यति त्वरया च गौः ॥
निश्चित्य पाठं श्लोकस्य निश्चित्यार्थञ्च मानवे ।
यथार्थमेव वक्तव्यं विविच्य† रघुनन्दन ॥

---

* पञ्चमाद्वत्सरादूर्द्धं दशवर्षादधः शुभामिति पद्मपुराणे पाठः ।

† प्रतीपं तत्र वक्तव्यं विविच्य इति पद्मपुराणे पाठः ।

यदि युक्तमयुक्तं वा श्लोकमर्थं पठेदसौ ।
पुस्तकस्थस्य हित्वैव पृच्छकः स द्विजोत्तमः ॥
तत्तथैव हि विज्ञेयं विसंवादो न शस्यते ।
दैवागतो हि स श्लोको दैवं हि बलवत्तरम् ॥
उपश्रुतिषु यद्दृष्टं नापराधो द्विजस्य तु ।
विस्मयस्तत्र कर्त्तव्यो दैवस्य कुटिला गतिः ॥
पत्रद्वयविपर्य्यासे पत्रे वोत्तरचारिणि* ।
तमादेशं तिरस्कृत्य द्वितीयस्तु पठेदथ ।
ततस्तृतीयपाठः स्यात्ततः कार्य्यं विवेचनम् ॥
अविसर्गान्तपूर्व्वार्द्धस्तवर्गेतरपञ्चमः ।
स्तुति(लिङ्गवर्ज्जितः)लिङ्गिर्जितः श्लोकः शकुनेषु प्रशस्यते ॥
अध्यायानां समाप्तिश्च वृथा पत्रं वृथा लिपिः ।
उक्तानुकथनञ्चैव यूपस्तम्भं (ह्यपस्तुतं) तथैव च ॥
दग्धपत्रं (न लिखितं) नष्टलिपिः सन्दिग्धाक्षरमेव च ।
एतानि शकुने नित्यं वर्ज्जनीयानि पण्डितैः ॥
प्रश्नो हि द्विविधो ज्ञेयो दीप्तशान्तप्रकार(प्रभेद)तः ।
दीप्तं हि द्विविधं ज्ञेयं हितस्थितिविनाशयोः ॥
शान्तं हि द्विविधं ज्ञेयं (शान्तस्य) उत्पत्तिस्थितिसूचितः ।
तत्र शान्तं प्रशस्तं स्यात्सूचितं पूर्व्वलक्षणैः ॥
यथोक्तं यादृशं योग्यं विचार्य्यं तादृशं बुधैः ।
स्तुति(श्रुति)वैराग्यपरयोः कार्य्यनाशः प्रकीर्त्तितः ॥

---

* पत्रान्यद्विपर्य्यासे पत्रे वोत्पत्रवारिणि इति पद्मपुराणे पाठः ।

विसर्गान्ते तु पूर्व्वोक्तं व्ययायासौ भविष्यतः ।
सङ्कल्पितफलाभावो ह्यध्यायस्य समापने ॥
काण्डादेस्तु समाप्तौ तु स्यात्तत्कार्य्यस्य नाशनम् ।
पुराणस्य समाप्तौ तु तद्देशस्य विपर्य्ययः ।
च्युते पुस्तकपाते वा भाष्टतं मस्तकादिके ॥
वक्तावमाननं याति ततः शकुननाशनम् ।
पूर्व्वस्य दिवसस्याथ रात्रौ पूजां विधाय च ।
प्रातःकाले परेद्युश्च शकुने रघुनन्दन ॥
प्रश्नानामीक्षणं* कार्य्यं सद्यःकालमथापि वा ।
सर्व्वेषु तु पुराणेषु स्कान्दमत्र प्रशस्यते ॥
वैष्णवं केचिदिच्छन्ति रामायणमथापरे ।
स्तुत्या(मत्या)दिसर्व्वदोषाणां वैष्णवे नैव दोषता ॥
स्कान्दे रामायणे चैव दोषत्वमपि चाष्यतः ।
किन्तु पूजयितुं शक्यं वैष्णवं सर्व्वदैव तत्† ॥
सदाचारविहीनेन पूजितं यदि तत्(फलं) भवेत् ।
तदा त्वशुभमायाति शकुनेनैव शुध्यति‡ ॥ इति ।
विष्णादिपुराणं पूर्व्वोक्तविधिना संपूज्य शकुनमवलोक्य
रेव मनः सन्तोषं नयेत्तदेवं कार्य्यं निश्चिनुयात् ।
इति श्रीविधानपारिजाते पुराणशकुनविधानं समाप्तम् ।

---

* पद्मानिरीक्षणमिति पद्मपुराणे पाठः ।

† नैव केनचित् इति च-पुस्तके पाठः ।

‡ शकुनं नैव सिध्यति इति पद्मपुराणे पाठः ।

## अथ विवाहकालविधानम् ।

तत्र आश्वलायनगृह्यसूत्रम् ।

उदगयने आपूर्यमाणपक्षे कल्याणे* नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः । सार्वकालिकमेके विवाहम्†मिति ।

कात्यायनगृह्यमपि ।

विवाह उदगयने आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्त्रिषु त्रिषूत्तरादिषु‡ स्वातौ मृगशिरसि रोहिण्यां वेति ।

श्रीधरीयेऽपि ।

अर्के कर्कटकन्यकाघटधनुर्युक्ते भृगौ मन्त्रिणि
स्फीतज्योतिषि शीतरोचिषि नलोद्रेका(?)वरिक्ते तिथौ ।
रोहिण्युत्तररेवतीपितृमरुन्मित्रेन्दुहस्तान्तरे
ज्याराकार्किजवासरादिरहिते वैवाहकर्मारभेत् ॥

---

* कल्याणं ज्योतिःशास्त्राविरोधीति इत्युक्तम् ।

† ज्योतिर्निबन्धेऽपि—

सार्वकालिकमिच्छन्ति विवाहं शौनकादयः ।

एतच्च सार्वकालिकत्वमासुराद्यधर्म्यविवाहविषयमिति केचित् । आसन्नर्तुकालकन्याविषयमित्यन्ये ।

‡ उत्तरफल्गुनीहस्तचित्रा इति कौचित्, उत्तराषाढाश्रवणधनिष्ठा इति कौचित्, उत्तरभाद्रपदारेवत्यश्विन्य इति च कौचित् इति हरिहरः ।

नारदस्तु ।

माघफाल्गुनवैशाखज्यैष्ठमासाः शुभावहाः ।
मध्यमौ कार्त्तिको मार्गशीर्षको निन्दिताः परे* ॥
न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ।
विवाहो देवतानाञ्च प्रतिष्ठा चोपनायनम् ॥
अप्रबुद्धे हृषीकेशे यावत्तावन्न मङ्गलम् ।
उत्सवे वासुदेवस्य दिवसे नान्यमङ्गलम् ॥

आद्यगर्भस्य ज्यैष्ठमासो निषिद्ध इति श्रीपतिराह ।

जन्ममासि न तु जन्मभे तथा
नैव जन्मदिवसे च कारयेत् ।
आद्यगर्भदुहितुः सुतस्य वा
ज्यैष्ठमासि न तु जातु मङ्गलम् ॥

रत्नकोशेऽपि ।

जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् ।
ज्यैष्ठमास्याद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि ॥
विवाहे चोपनयने जन्ममासं विवर्जयेत् ।
विशेषाज्जन्मपक्षन्तु वशिष्ठाद्यैरुदाहृतम् ॥

नारदस्तु ।

न जन्ममासे जन्मर्क्षे न जन्मदिवसे न च ।
आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः ॥

---

* कार्त्तिको मार्गशीर्षश्च मध्यमावितरेऽधमाः, इति संस्काररत्नमालायां पाठः ।

तथा।

न जन्मभे जन्मगृहे दिने वा
कुर्य्याद्विवाहं न च जन्ममासे।
ज्येष्ठर्त्तजे ज्येष्ठसुताङ्गनानां
मिथो विशेषाच्च तु शुक्रमासे॥

शुक्रमासो ज्येष्ठमासः शुक्रश्च शुचिश्च ग्रैष्मावृतू इति श्रुतेः। ज्येष्ठे शुक इत्यमरोक्तेश्च।

तथा।

चन्द्रताराबलैर्युक्ते काले पार्थिवयज्ञो यदि।
शुभलग्ने शुभैर्युक्ते तदा शुद्धिं विनिर्द्दिशेत्॥

शुक्लपक्षे चन्द्रप्राधान्यमाह श्रीपतिः।

शुक्ले पक्षे शीतरश्मिर्बलीया-
न्न प्राधान्यं तारकायास्तु तत्र।
यस्मात्पुंसि विद्यमाने(ऽपि) हि पत्यौ
न स्वातन्त्र्यं योषितः क्वापि दृष्टम्॥

कृष्णपक्षे ताराप्राधान्यं स एवाह।

न खलु बहुलपक्षे शीतरश्मिप्रभावः
क्षयितमिति हि तारावीर्य्यमत्र प्रधानम्।
अतिविकलशरीरे प्रेयसि प्रोषिते वा
भवति हि खलु भर्त्तुः सर्व्वकार्य्येषु योषा॥ इति।

नारदः।

अकालजा भवेयुश्चेद्विद्युन्नीहारवृष्टयः।

प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि ।
दोषाय मङ्गले नूनमदोषाय च कालजाः ॥ इति ।

तथा ।

पौषादि चतुरो मासान् (प्रोक्ता) ज्ञेया वृष्टिरकालजा ।

सत्योऽपि ।

निर्घाते*भूमिचलने ग्रहयुद्धे तमोद्गमे ।
सप्तमे पञ्चदिवसमन्यथैकदिनं (तथा) त्यजेत् ।
दुःस्वप्ने दुर्निमित्तादौ न कदाचिच्छुभं भवेत् ॥ इति ।

तथा ।

भूकम्पादेर्न दोषोऽस्ति वृष्ट्याद्ये जाते सति ।
ततः पूर्वोक्तदोष इति ज्योतिर्विदो विदुः ॥

अन्यत्रापि ।

त्याज्याः सूर्यस्य संक्रान्तौ पूर्वतः परतस्तथा ।
विवाहादिषु कार्येषु नाड्यः षोडश षोडश ॥ इति ।

विषुवतोरयनयोर्दिनत्रयं
हरिपदेषु षडशीतिमुखेषु ।
पूर्वतोऽपि परतोऽपि संक्रमा-
न्नाडिकाश्च खलु षोडशेति च ॥

---

* यदान्तरिक्षे पवनात् मारुतो मरुताहतः ।
पतत्यधः स निर्घातो जायते वायुसम्भवः ॥

इत्युत्पलचर्ये ।

विषुवती तुलामेषौ अयने मकरकर्कटौ हरिपदानि वृषसिंह-वृश्चिककुम्भाः षडशीतिमुखाः मिथुनकन्याधनुर्मीनाः। अन्य-दुपयुक्तं तिथिवारनक्षत्रयोगकरणलग्नादि ज्योतिःशास्त्रतोऽव-गन्तव्यम्।

इति श्रीमदनन्तभट्टविरचिते विधानपारिजाते
विवाहकालनिर्णयः।

अथेदानीं लग्नविचारानन्तरं कन्यादानस्य कर्त्तव्यत्वात्
तत्कर्त्तृनिर्णयो निरूप्यते।

तत्र नारदः।

पिता दद्यात् स्वयं कन्यां भ्राता वानुमते पितुः।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा॥
माता त्वभावे सर्व्वेषां प्रकृतौ यदि वर्त्तते।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः।
यदा तु नैव कश्चित् स्यात् कन्या राजानमाव्रजेत्॥

प्रकृतिस्थत्वं सर्व्वविशेषणम्।

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः परः।

इति याज्ञवल्क्योक्तेः। प्रकृतिस्थ उन्मादादिदोषरहित इत्यर्थः।
दातरि कन्यादानाभावात् कन्यादानायक्तौ व्याघ्रपादाचार्य्य-माह।

द्रव्येण चानसात्कृत्य परकायान्तु कन्यकाम्।
धर्म्मेण विधिना कन्यां दत्वाथ सदृशे वरे।
द्विगुणं फलमाप्नोति कन्यादाने यदीरितम्॥ इति।

सदृशवरलक्षणमाह नारदः।

सवर्णमनुरूपञ्च कुलशीलबल(वयः)श्रुतैः।
सहधर्म्मं चरेयातां पुत्रांश्चोत्पादयेति च॥

सवर्णं वरं प्राप्येत्यध्याहृत्य चान्वेतव्यम्। एतच्च चसति रजोदर्शने द्रष्टव्यम्।

यतः कात्यायनिः।

माता चैव पिता चैव ज्येष्ठभ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥ इति।

मरीचिस्तु।

यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः।
असम्भाष्यो ह्यपांक्तेयः स विप्रो वृषलीपतिः॥

वृषलीपतिलक्षणमुक्तं हारीतेन।

पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता*।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः॥

अथ प्रायश्चित्तपूर्व्वकं विवाहमाह शौनकः।

कन्यामृतुमतीं शुद्धां कृत्वा निष्कृतिमात्म(वान्)नः।
तया च कारयित्वा तामुद्वहेदात्मसंस्थधीः॥

---

* असंस्कृता अविवाहिता।

पिता ऋतूनतीतांस्तु गणयेद्दादितः सुधीः ।
दानावधि गृहे यस्तां रक्षेत रजोवतीम् ॥
दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि ।
दातव्यैकापि निःस्वेन दाने तस्या यथाविधि ॥
दद्याद्वा ब्राह्मणेभ्यश्च मतिनिस्वः सदक्षिणम् ।
तस्यातीतर्तुसंख्येषु वराय प्रतिपादयेत् ॥
उपोष्यान्यदिने* कन्या रात्रौ पीत्वा गवां पयः ।
अदृष्टरजसे दद्यात्कन्यायै रत्नभूषणम् ।
तामुद्वहन् वरश्चापि कुष्माण्डैर्जुहुयाद्धविः ॥
इति श्रीविधानपारिजाते कन्यादातृरजस्वलादाननिर्णयः ।

अथ विवाहभेदाः ।

तत्र मनुः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमो मतः ॥ इति ।
एतेषां लक्षणमुक्तं याज्ञवल्क्येन ।
ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥
यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोयुगम् ।
चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥

---

* अन्यदिने इत्यत्र चिह्निनमिति संस्काररत्नमालायां पाठः ।

इत्युक्त्वा चरतां धर्म्मं सह या दीयतेऽर्च्चिते।
स कायः पावयेत्तज्जः षड्वंश्यान् सममात्मना॥
आसुरो द्रविणादानाद्गान्धर्व्वः समयान्मिथः।
राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात्॥ इति।

अयं भावः—एतेष्वष्टसु विवाहेषु आद्यौ द्वौ ब्राह्मणानामेव तेषां केवलं प्रतिग्रहाल्लिप्स्यसंयोगात्। गान्धर्व्वराक्षसौ क्षत्रियाणामेव पुराणे तथादर्शनाद्युद्धसंयोगाच्च। आसुरो वैश्यानां तेषां (द्रव्य)-द्रविणसंयोगात्। अन्ये त्रयोऽनियताः।

तत्र पैशाचो निन्दितः। तथाच वृद्धमनुः।

चत्वारो ब्राह्मणस्याद्याः प्रशस्ता गान्धर्व्वराक्षसौ।
क्षत्रियस्यासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः॥ इति।

नन्वासुरवदार्षो विवाहोऽपि क्रयक्रीतत्वाल्लिप्स्य इति चेत् न। गोमिथुनस्य शुल्करूपत्वाभावात्। शुल्कं नाम देशकालानुरोधेन कन्यामूल्यतया परिकल्पितं द्रव्यम्। न तस्य सर्व्वदा इयत्तास्ति तस्य न्यूनाधिकभावदर्शनात्। गोमिथुनन्तु सदा एकरूपमेव अतो न विक्रयदोषोऽप्यस्तीति भावः।

तथाच मनुः।

आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत्।
अल्पो वापि महान् वापि विक्रयस्तावदेव न॥
गान्धर्व्वादिविवाहेषु पुनर्वैवाहिको विधिः।
कर्त्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकः॥ इति।

समर्थेन वेदशाखाभिज्ञेन। अकृते तु होमे न भार्य्यापतिभावः।

तदुक्तं वशिष्ठबौधायनाभ्याम् ।

बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ इति ।

कृते तु होमे प्रायश्चित्तमाह त्रिकाण्डमण्डनः ।

अधर्म्येषु विवाहेषु ताम्बूलमनुमोदनम् ।
वाहनं भोजनञ्चैव वर्ज्जयेत्सर्व्वथा द्विजः ॥
आसुरे तूपवासः स्यात्प्राजापत्ये च त्रिरात्रकम् ।
राक्षसे चैव पैशाचे कार्य्यं चान्द्रायणं तथा ॥

इति निन्द्यविवाहेषु वरस्य प्रायश्चित्तमुक्तम् ।

प्रशस्तविवाहचतुष्टयेऽपि तारतम्यमाह बौधायनः ।

तेषां चत्वारः पूर्व्वे ब्राह्मणस्य तेष्वपि पूर्व्वः पूर्व्वः श्रेयान् इतरेषामुत्तरोत्तरः पापीयान् इति ।

इति विधानपारिजाते विवाहभेदाः ।

अथेदानीमुक्तविवाहेषु ब्राह्मविवाहाङ्गभूतं
वाग्दानविधानं प्रस्तूयते ।

तदुक्तमाश्वलायनगृह्यपरिशिष्टे ।

कन्यां परिवेक्ष्यमाणो द्वौ चतुरोऽष्टौ वा वरपितुराप्तान् प्रशस्ताकारकर्म्मणो वृषरा ऋजवः सन्तु पन्था इति प्रहिणुयात्ते च तावतीभिः पुरन्ध्रीभिः सहिता मङ्गलगीततूर्य्याभ्यां सुशकुनपूर्व्वकं कन्यागृहमेत्य शमी पीठासने

प्राङ्मुखासीनाया दातृभ्रातिबान्धवोपेतायाः कन्यायाः पाणौ फलं (निधाय) प्रदाय (कन्यावरणकाले) कल्याणि काले वृणीरन्नासीनाः प्रत्यङ्मुखा वशिष्ठगोत्रोद्भवाय अमुष्य प्रपौत्राय अमुष्य पौत्राय अमुष्य पुत्राय श्रुतशीलनाम्ने वराय वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां भार्य्यात्वाय वृणीमहे इति ब्रूयुः। अथ दाता भार्य्याभ्रातिबन्धुसमेतो यथोक्तमनूद्य वृणीध्वमिति ब्रूयात्। एवं त्रिः प्रयुज्य दाता प्रदास्यामीति चोच्चैस्त्रिर्ब्रूयात्। अथ ब्राह्मणा उक्तस्वस्त्ययनाः शिवा आपः सन्तु सौमनस्यमस्तु अक्षतञ्चारिष्टं चास्तु दीर्घमायुः श्रेयः शान्तिः पुष्टिस्तुष्टिश्चास्तु इत्युक्ते तद्वः सत्यमस्त्विति त्रिरनूच्य(द्य) समानीव आकूतिः प्रसुग्मन्ता धियसानस्य सक्षणीत्येताः* पठेयुः। पुरन्ध्र्यः कन्यायै कल्याणान् कुलधर्म्माचारान् कुर्य्युः।

अत्र तिथ्यादिकमाह श्रीधरीये नारदः।

पञ्चाङ्गशुद्धदिवसे चन्द्रताराबलान्विते।
विवाहभस्योदये वा कन्यावरणमाचरेत्॥
भूषणैः फलताम्बूलैर्गन्धपुष्पाक्षतादिभिः।
शुक्लाम्बरैर्गीतवाद्यैर्विप्राशीर्वचनैः सह॥

---

प्रसुग्मन्ता धियसानस्य सक्षणि वरेभिर्वराँ अभिषु प्रसीदतः।
अस्माकमिन्द्र उभयं जुजोषति यत् सौम्यस्यान्धसो बुबोधति॥ (१०म. ३२सू. १ऋक्।)

गच्छेच्च कन्यकागेहं वरः प्रणयपूर्व्वकम् ।
तदा कुर्य्यात्पिता तस्याः प्रदानं प्रीतिपूर्व्वकम् ॥
कुलशीलवयोरूप-वृत्तविद्यायुताय च ।
वराय रूपसंयुक्तां कन्यां दद्याद्यवीयसीम् ॥
संपूज्य प्रार्थयित्वा च शचीं देवीं गुणाश्रयाम् ।
त्रैलोक्यवल्लभां दिव्यां गन्धमाल्याम्बरान्विताम् ॥
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।
एवंविधां कुमारी सा पूजान्ते प्रार्थयेदि(ति)दम् ॥
देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।
विवाहं भाग्यमारोग्यं पुत्रलाभञ्च देहि मे ॥

इति विधानपारिजाते वाग्दानविधानम् ।

अथैतदुपयुक्तमुच्यते ।

वाग्दाने जाते वरो यदि देशान्तरं गच्छेत्तदाह नारदः ।

प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद्वरम् ॥ इति ।

प्रतिगृह्य वाचा स्वीकृत्येत्यर्थः । त्रीनृतून् वत्सरान् ।

आर्षविवाहे तु विशेषमाह स एव ।

प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं यतः ।
धार्य्या सा वर्षमेकन्तु देयान्यस्मै(विधानतः) ततः परम् ॥

कात्यायनोऽपि ।

वरेभ्योऽपि दत्तायामनूढायान्तु तत्र वै ।
पुरागतश्च सर्व्वेषां लभते यदिमां सुताम् ।

अभ्यागच्छेत्तथोढ़ायां दत्तं पूर्ववरो हरेत्॥ इति।

अयं भावः। कन्या पूर्व्वं यस्मै प्रतिश्रुता तस्यामन्येनानूढ़ायां स एव तां लभेत अन्येनोढ़ायान्तु पूर्व्वदत्तं शुल्कमात्रं हरेन्न कन्यामिति।

वशिष्ठस्तु।

अद्भिर्वाचा दत्तायां म्रियेतादौ वरो यदि।

न च तौ दम्पती स्यातां कुमारी पितुरेव सा॥ इति।

यत्तु पराशरः।

नष्टे प्रव्रजिते क्लीवे मृते च पतिते पतौ।

पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥ इति।

तद्वाग्दत्ताविषयम्।

यमोऽपि।

वरयित्वा तु यः कश्चित्प्रणश्येत्पुरुषो यदा।

ऋत्वागमांस्त्रीनतीत्य कन्यान्यं वरयेद्वरम्॥ इति।

यत्तु याज्ञवल्क्येनोक्तम्।

सकृत्प्रदीयते कन्या हरंस्तां चौरदण्डभाक्। इति।

तददुष्टवराभिप्रायम्।

दत्त्वा कान्ताय यः कन्यां वराय न ददाति ताम्।

अदुष्टस्येदृशो राज्ञा स दण्ड्यश्चौरदण्डवत्॥

इति नारदोक्तेः।

अव्यङ्गेऽपतितेऽक्लीवे दशदोषविवर्ज्जिते।

इमां कन्यां प्रदास्यामि देवाग्निद्विजसन्निधौ॥

इति दानसमये तथैव प्रतिश्रुतत्वाच्च। वरस्य दुष्टत्वे तु।

दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्।

इति याज्ञवल्क्यवचनम्। यस्मै पूर्व्वं वाचा दत्ता ततोऽन्यश्चेत् कुलशीलादितः प्रशस्ततरो वरो लभ्येत तदा तस्मै देया न पूर्व्वस्मै इत्येतत्परम्।

इति वाग्दानोपयुक्तविधानम्।

अथ प्रतिकूलविधानम्।

विधानमालायाम्।

कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य कस्यचित्।
तदा न मङ्गलं कुर्य्यान्नारीवैधव्यभीतितः॥

मेधातिथिनिबन्धे।

वधूवरार्थं घटिते सुनिश्चये
वरस्य गेहे त्वथ कन्यकायाः।
मृत्युर्यदि स्यान्मनुजस्य कस्यचि-
त्तदा न कार्य्यं खलु जातु मङ्गलम्॥
अत्र मङ्गलशब्देन विवाहश्चेष्यते बुधैः।

स्मृतिचन्द्रिकायाम्।

कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः।
तदा न मङ्गलं कार्य्यं नारीवैधव्यदं ध्रुवम्॥

भृगुसंहितायाम्।

वाग्दानानन्तरं यस्य कुलयो: कस्यचिन्मृति: ।
तदोद्वाहो नैव कार्य्य: स्वपक्षक्षयदो यत: ॥

वृद्धशौनक: ।

वरवध्वो: पिता माता पितृव्यश्च सहोदर:* ।
एतेषां प्रतिकूलञ्च महाविघ्नकरं(प्रदं) भवेत् ॥
पिता मातामहश्चैव तथैव प्रपितामह: ।
पितामहस्य वै भ्राता तत्सुतो वा तथा स्त्रिय: ॥
एभिरेव विपन्नैश्च प्रतिकूलं बुधै: स्मृतम् ।
अन्यैरपि विपन्नैश्च केचिद्दूरतुर्ने तद्भवेत् ॥

माण्डव्य: ।

वाग्दानानन्तरं माता पिता भ्राता विपद्यते ।
विवाहो नैव कर्त्तव्य: स्ववंशक्षितिमिच्छता ॥

सङ्कटादौ तु मेधातिथि: ।

वाग्दानानन्तरं यस्य कुलयो: कस्यचिन्मृति: ।
तदा संवत्सरादूर्द्धं विवाह: शुभदो भवेत् ॥

स्मृतिरत्नावल्याम् ।

अनद्विवार्षिके प्रेते न तस्य प्रतिकूलता ।
शान्ति: स्याच्छुभदा नृणां कुष्माण्डगणहोमत: ॥
पितुरब्दमशौचं स्यात् षण्मासान् मातुरेव च ।
तदर्द्धं भ्रातुरेव स्यात्तदर्द्धं भ्रातृपुत्रयो: ॥
अन्येषाञ्च सपिण्डानामाशौचं माससम्मितम् ।

---

* पितृव्यस्तस्य सोदर इति क-पुस्तके पाठ: ।

तदन्ते शान्तिकं क्वत्वा ततो लग्नं विधीयते ॥

ज्योतिःप्रकाशे ।

प्रतिकूलेऽपि कर्त्तव्यो विवाहो मासमेत्तरा ।
शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत् पुनः ॥

स्मृत्यन्तरे ।

प्रतिकूलेऽपि कर्त्तव्यं लग्नं यावहतुत्रयम् ।
प्रतिकूलेऽपि केऽप्याहुः कर्त्तव्यं बहुविप्लवे ॥
प्रतिकूले सपिण्डस्य मासमेकं विवर्ज्जयेत् ।
विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥

ज्योतिःसागरे ।

दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये ।
प्रौढ़ायामपि कन्यायां नातिकूलं प्रतीयते ॥

मेधातिथिनिबन्धे तु ।

पुरुषत्रयपर्य्यन्तं प्रातिकूल्यं स्वगोत्रिणाम् ।
प्रवेशान्निर्गमो यद्वत्तथा मण्डनमुण्डने ॥
प्रेतकर्म्माण्यनिर्वर्त्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं ततः पुंसि पञ्चमे तु शुभं भवेत् ॥

स्मृत्यन्तरे तु ।

दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च ।
दुर्द्दानवर्त्तिनश्चैव प्रातिकूल्यं न विद्यते ॥
सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिं क्वत्वा गणेशस्य पूजनं शुभदं भवेत् ॥

अकृत्वा शान्तिकं यस्तु निषेधे सति दारुणे ।
यः करोति शुभं पूर्व्वाद्विघ्नस्तस्य पदे पदे ॥
दम्पत्योः पितरौ भ्राता सोपनीतः सहोदरः ।
पितृव्यस्तात्तृश्चैव पितामहपितामहौ ॥
पितृव्यस्त्री सुतो भ्राता भगिनी वा विवाहिता ।
कृते वाङ्निश्चये पश्चादेषां मध्ये तु मानवः ।
मृतो भवति यः कश्चित्प्रतिकूलं तदुच्यते ॥
प्रतिकूले तु संजाते विवाहं नैव कारयेत् ।
नारी वैधव्यमाप्नोति ह्यन्यथा कारयेद्यदि ।
अतो दोषविनाशाय शान्तिं कुर्य्याद्विचक्षणः ॥
पुण्येऽह्नि विप्रकथिते कृत्वा पुण्याहवाचनम् ।
पूजयेत्प्रयतो देवान् यथाशक्ति हिरण्मयान् ।
लक्ष्मीं हरिं शिवां शम्भुं मृत्युञ्चैव विशेषतः ॥
श्रीसूक्तेन* श्रियं विष्णुमिदं विष्णुरिति† ऋचा ।
गौरीर्मिमायेति‡ शिवां त्र्यम्बकेन§ महेश्वरम् ॥

---

* हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥
इत्यादिकेन २६४।२६५ पृष्ठयोरुक्तेन ।

† इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांशुरे ॥ इत्यादिकेन ऋक्त्रयेण ।

‡ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ (१म. १६४सू. ४१ऋक् ।)

§ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्वारुकमिव बन्धनात् मृत्योर्मुक्षीय मामृतात् ॥ (३अ. ६०म. यजुः ।)

परं मृत्योऽनु मन्त्रेण* मृत्युं संपूजयेत्ततः ।
वासश्च गन्धपुष्पाद्यानुपचारान् प्रकल्पयेत् ॥
अथाज्यभागपर्य्यन्तमुपलेपादिपूर्व्वकम् ।
दूर्व्वातिलाज्यचरुणा जुहुयादष्टोत्तरं शतम् ।
मृत्युर्नश्यतु सौख्यायुर्दम्पत्योर्वर्द्धतामिति ॥
ततो व्याहृतिभिर्हुत्वा घृतेन च विचक्षणः ।
स्विष्टकृच्चापि होतव्या प्रायश्चित्ताहुतिस्तथा ॥
एवं समाप्य होमन्तु दद्याद्विप्राय दक्षिणाम् ।
गां हिरण्यञ्च वासांसि दत्त्वा दोषात्प्रमुच्यते ॥
ऐश्वर्य्यकीर्त्तिजननं पुत्रपौत्रविवर्द्धनम् ।
सर्व्वमृत्युमतिक्रम्य परमायुरवाप्नुयात् ॥

इति गर्गोक्तप्रतिकूलशान्तिविधानम् ।

अन्यच्चापि ।

पितृमातृस्त्रिया भ्रातृपुत्राणामन्ततः क्रमात् ।
वर्षार्द्धार्द्धार्द्धमुल्लङ्घ्य विवाहादि विधीयते ॥
प्रतिकूलक्रियायाश्च वर्षेऽन्यस्मिन् कारयेत् ।
निमित्तशकुनैः प्रश्नैः कर्त्तव्य इति केचन ॥
प्रतिकूलं न कर्त्तव्यं निषेधः प्रतिकूलतः ।
कन्यान्यत्र प्रदातव्या पाराशरवचो यथा ॥

---

* परं मृत्यो अनुपरेहि पन्थां यस्ते अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ (ऋ. ७अ. ६अ

वाङ्निश्चये कृते पश्चात्पितरौ
तयोस्तत्प्रतिकूलं स्याद्यद्येषां
कृते वाङ्निश्चये वध्वा वरस्य वा
अमङ्गल्यं न सेव्यं स्यात्तयोरायुः
दम्पत्योः पितरौ भ्राता ह्युपनीतः
पितृव्यस्तत्सुतश्चैव पितामहश्च तद्वधू
एतेषां यदि चेत्कश्चिन्मृतो भवति मान
न तदा मङ्गलं कार्यं नारीवैधव्यशङ्कया ॥
कृते वाङ्निश्चये पुंसां मरणं यस्य कस्यचित्
तं वंशं वर्जमानश्चेद्विवाहः शौनको न तु ॥
प्रेतकार्यमनिर्वर्त्य चातुर्थं भवेत्तदा ।
पञ्चमे तु भवेत्पुंसि ततः शुभतरं भवेत् ॥
तस्मिन् वरे न दातव्या यस्य प्राङ्निश्चयो भवेत् ।
प्रतिकूलं न कर्त्तव्यं मातृके पैतृके तथा ॥

कृते निश्चये वाग्दानमङ्गलेऽपि यदि चयो दिव्यभौमान्तरिक्षो-त्पातास्तदा शान्तिकं गृह्यसूत्रोक्तञ्च कृत्वा यमं पूजये-न्मङ्गलं चाभिराह ।

वाङ्निश्चये कृते वरमरणे तु वसिष्ठः ।

अद्भिर्वाचा च दत्तायां म्रियेतादौ वरो यदि ।
न च मन्त्रोपनीता सा कुमारी पितुरेव च ॥

न मन्त्रोपनीता मन्त्रेर्न विवाहिता ।

